

# विशिष्टाद्वैतकोशः


सम्पादकः प्रकाशकश्च

डा. चक्रवर्तिराघवन्

M.A. (Sanskrit & Hindi) M.Phil., Ph.D.

उपन्यासकः

विशिष्टाद्वैतवेदान्तविभागः

राष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

तिरुपतिः



डी.टी. स्वामी पब्लिकेशन्स्

तिरुपतिः

२००१



# विशिष्टाद्वैतकोशः

सम्पादकः प्रकाशकश्च
डा. चक्रवर्तिराघवन्
M.A. (Sanskrit & Hindi) M.Phil., Ph.D.
उपन्यासकः
विशिष्टाद्वैतवेदान्तविभागः
राष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
तिरुपतिः

डी.टी. स्वामी पब्लिकेशन्स्
तिरुपतिः
२००१

*Edited and published by*

**Dr. Chakravarthy Raghavan**

Copies : 1,000



Price : 375/-



*This book is published with the financial assistance of Tirumala-Tirupati Devasthanams under their Scheme*

**"AID TO PUBLISH RELIGIOUS BOOKS"**

Copies can be had from

**C. Kalyani**
113, G.S. Mada Street,
Tirupati - 517 501.

Laser Typesetting at
**Annapurna Graphics,**
53/3, R.S. Gardens,
Tirupati - 517 507.
☎ : 35006

Printed at

# उपयुक्तग्रन्थपट्टिका।

| | |
|---|---|
| १. अग्निरहस्योपनिषत् | ... अग्नि. |
| २. अच्युतशतकम् | ... अच्यु. |
| ३. अतिमानुषस्तवः | ... अति. |
| ४. अधिकरणसारावलिः | ... अधि. |
| ५. अभीतिस्तवः | ... अभी. |
| ६. अष्टभुजाष्टकम् | ... अष्ट. |
| ७. अष्टश्लोकी | ... अश्लो. |
| ८. आगमप्रामाण्यम् | ... आ. |
| ९. आचार्यगुणादर्शः | ... आचार्य. |
| १०. ईशावास्योपनिषत् | ... ई. |
| (कूरनारायणभाष्यम्) | ... ई (कू.) |
| (परिशिष्टे) "ईडु" | ... ई. |
| ११. कठोपनिषत् | ... क. |
| १२. केनोपनिषत् | ... के. |
| १३. कौषीतक्युपनिषत् | ... कौ. |
| १४. गद्यभाष्यम् | ... गद्य. |
| १५. गरुडदण्डकः | ... गरुड. |
| १६. गरुडपञ्चाशत् | ... गरु. |
| १७. गीताभाष्यम् | ... गी. |
| १८. गीतार्थसंग्रहरक्षा | ... गीसं. |
| १९. गोपालविंशतिः | ... गो. |
| २०. चण्डमारुतः | ... च. |
| २१. छान्दोग्योपनिषत् | ... छा. |
| २२. तत्त्वटीका | ... त. |
| २३. तात्पर्यचन्द्रिका | ... ता. |
| २४. तैत्तिरीयोपनिषत् | ... तै. |
| २५. दयाशतकम् | ... दया. |
| २६. दशावतारस्तोत्रम् | ... दशा. |
| २७. देहलीशस्तुतिः | ... देह. |
| २८. निक्षेपरक्षा | ... नि. |
| २९. नीतिमाला | ... नी. नीति. |
| ३०. (न्यायतत्त्वम् | ... न्यात.) |
| ३१. न्यायपरिशुद्धिः | ... न्याप. |
| ३२. न्यायसिद्धाञ्जनम् | ... न्यासि. |
| ३३. न्यायसिद्धाञ्जनटीका (श्रीरङ्गरामानुजकृता) | ... न्यासिटी. |
| ३४. न्यासतिलकः | ... न्याति. |
| ३५. न्यासविंशतिः | ... न्यावि. |
| ३६. न्यासविद्यादर्पणः | ... न्याद. |
| ३७. पदयोजना (अधिकरणसारावलीव्याख्या) | .. पद. |
| ३८. परमार्थस्तुतिः | ... प. |
| ३९. पादुकासहस्रम् | ... पा. |
| ४०. पाञ्चरात्ररक्षा | ... पाञ्च. |
| ४१. प्रश्नोपनिषत् | ... प्र. |
| ४२. बृहदारण्यकोपनिषत् | ... बृ. |
| ४३. भगवद्ध्यानसोपानम् | ... भ. |
| ४४. भागवतम् | ... भा. |
| ४५. भावप्रकाशिका | ... भाव. |
| ४६. भूस्तुतिः | ... भू. |
| ४७. मन्त्रिकोपनिषत् | ... म. |
| ४८. माण्डूक्योपनिषत् | ... मा. |
| (कूरनारायणभाष्यम्) | ... मा (कू). |
| (रङ्गरामानुजभाष्यम्) | ... मा (रं). |

४९. मुण्डकोपनिषत् ... मु.

५०. यतीन्द्रमतदीपिका ... य.

५१. यथोक्तकारिस्तोत्रम् ... यथो.

५२. यादवाभ्युदयः ... या.

५३. रघुवीरगद्यम् ... रघु.

५४. रत्नपेटिका (न्यायसिद्धाञ्जनव्याख्या) .. रत्न.

५५. रामायणम् ... रा.

५६. वरदराजपञ्चाशत् ... व.

५७. वरदराजस्तवः ... वर.

५८. वादावलिः ... वा.

५९. विष्णुपुराणम् ... वि.

६०. वेदान्तकौस्तुभः ... वेकौ.

६१. वेदान्तसारः ... वेसा.

६२. वेदार्थसङ्ग्रहः ... वेसं.

६३. वैकुण्ठस्तवः ... वै.

६४. शतदूषणी ... श.

६५. शरणागतिदीपिका ... शर.

६६. श्रीतत्त्वसिद्धाञ्जनम् ... श्रीत.

६७. श्रीभाष्यम् ... श्री.

६८. श्रीसूक्तभाष्यम् ... श्रीसू.

६९. श्रीस्तवः ... श्रीस्त.

७०. श्रीस्तुतिः ... श्रीस्तु.

७१. श्रुतप्रकाशिका ... श्रु.

७२. श्वेताश्वतरोपनिषत् ... श्वे.

७३. षोडशायुधस्तोत्रम् ... षो.

७४. सच्चरित्ररक्षा ... सच्च.

७५. सर्वार्थसिद्धिः ... सर्वा.

७६. सर्वार्थसिद्धिः (व्याख्या आनन्ददायिनी) .. सर्वा (आ.)

७७. सहस्रनामभाष्यम् ... सह.

७८. सिद्धित्रयम् ... सि.

७९. सुदर्शनाष्टकम् ... सु.

८०. सुन्दरबाहुस्तवः ... सुन्दर.

८१. सुबालोपनिषत् ... सुबा.

८२. स्तोत्ररत्नम् ... स्तो.

८३. हयग्रीवस्तोत्रम् ... हय.

84. ஈடு ... ஈ.

85. சில்லரைரஹஸ்யம் ... சி.

86. ஜீயர் அரும்பதம் ... ஜீ.

87. தத்வத்ரய சுளகம் ... தசு.

88. தத்வநவநீதம் ... தந.

89. தத்வபதவீ ... தப.

90. தத்வமாத்ருகை ... த. தமா.

91. தத்வரத்நவளி ... தர.

92. தத்வஸந்தேஸம் ... தஸ.

93. தேசிகப்ரபந்தம் ... தே.

94. பரமபதஸோபானம் ... ப.

95. பிள்ளையந்தாதி ... பி.

96. முநிவாஹனபோகம் ... மு.

97. ரஹஸ்யத்ரயஸாரம் ... ர.

98. ரஹஸ்யசிகாமணி ... ரசி.

99. ரஹஸ்யத்ரயசுளகம் ... ரசு

100. ரஹஸ்யநவநீதம் ... ரந.

101. ரஹஸ்யபதவீ ... ரப.

102. ரஹஸ்ய ரத்நவளீ ஹ்ருதயம் ... ரரஹ்.

103. ரஹஸ்ய ஸந்தேச விவரணம் ... ரஸவி.

104. விரோதபரிஹாரம் ... வி.

105. ஸம்ப்ரதாயபரிசுத்தி .. ஸம்.

106. ஸாரஸங்கிரஹம் ... ஸாஸ.

107. ஸாரஸாரம் ... ஸாஸா

|| श्रीः ||

|| श्रीमते रामानुजाय नमः ||

|| श्रीमते निगमान्तमहादेशिकाय नमः ||

# विशिष्टाद्वैतकोशः

## अ

**अ** - अ इति भगवतो नारायणस्य प्रथमाभिधानम् । श्रु. रक्षकवाचि प्रणवप्रथमाक्षरं सन्नियोगशिष्टन्यायेन लक्ष्मीमपि गमयति । परमात्मवाचीदं पदं देवतान्तरव्यावृत्तसर्वातिशायिस्वतन्त्र-निरूपकत्वात् लक्ष्मीमपि गमयति । श्रीत. निषेधे । रत्न. [रक्षकः सर्वेश्वरः । 'अव रक्षणे' इति धातोः कर्तरि क्विपि विच्प्रत्यये वा कृते "लोपो व्योर्वलि" इति धातुवकारलोपे "वेरपृक्तस्ये"ति प्रत्ययवकारलोपे अ इति रूपं सिद्ध्यतिार.]

**अंशः** - अवयवः । सर्वा. पद. एकदेशः । अति. एकवस्त्वेकदेशः । अधि. तन्न्यूनत्वे सति तत्सदृशत्वं तदंशत्वम् । छा. विशिष्टवस्त्वेकदेशः । वे. संकल्पः । भा.

**अंशत्वम्** - अनुप्रविष्टत्वम् । न्यासि. विशिष्टवस्त्वेकदेशत्वम् । नीति.

**अंशी** - अवयवी । सर्वा.

**अंशुः** - सूर्यः । 'अथांशुः स्यान्मयूखे सवितर्यपि' इति दर्पणः । रा.

**अंशुधानम्** - नगरविशेषः । रा.

**अंशुमान्** - अतिशायने मतुप् । अतिशयितप्रकाशयुक्तो रविः । असमञ्जनृपपुत्रः । रा.

**अंहः** - दुरितम् । वै.

**अः** - सर्वजगदेककारणभूतः सर्वरक्षकः नारायणः । न्याद. भगवान्नारायणः । श्रु. सर्वलोकेश्वरो हरिः । न्यासि. विष्णुः । पा. रत्न. श्रीसू. "अकारेणोच्यते विष्णुः" "अकारो विष्णुवाचकः" इति श्रुतिस्मृती । वेकौ.

[**अकम्** - दुःखम् । ई.]

**अकम्पनीयत्वम्** - अप्रामाण्यज्ञानाना-स्कन्दितत्वम् । वा.

**अकर्ता** - अनुपकर्ता । रा. कर्मफलाभिकसन्धिपूर्वककर्तृत्वरहितः । श्वे. गुणाश्रयप्रवृत्तीनां अनाश्रयभूतः स्वतश्च तन्मूलप्रवृत्त्यनर्हः । ता. प्राचीनकर्मानुरूप-प्रवृत्तबुद्ध्यधीनकर्मरहितः । भा.

**अकर्म** - अननुष्ठानम् । गी. अकर्मणीत्यत्र कर्मशब्दः क्रियावाची, नञत्र तदभावपर इति भावः । ता. कर्मयोगासन्नज्ञानम् । गीसं. कर्मेतरत् आत्मज्ञानम् । गी. ज्ञाननिष्ठा । गी.

**अकर्मवश्यत्वम्** - कर्मकृतसुखदुःख-भाक्त्वाभावः । श्रु.

**अकलः** - निरवयवः । श्वे.

**अकलुषात्मानः** - सद्धैर्यहृदयाः । रा.

**अकल्पनाय** - मुक्तये । कल्पनं ज्ञानैकाकारेष्वात्मसु देवमनुष्यादिकल्पनम्, भेद इति यावत्, तदभावाय मुक्तये । भा.

**अकल्पितम्** - परमार्थः । च.

**अकामः** - कामशून्यः । बृ. फलान्तर-कामनारहितः । मु.

**अकामचारत्वम्** - असत्यसङ्कल्पत्वम् । श्री. अनाविर्भूतगुणाष्टकत्वम् । श्रु.

**अकामयत** - समकल्पयत् । बृ. संकल्पं कृतवान् । बृ.

**अकामयमानः** - वीतरागः । बृ.

**अकामहतः** - निवृत्ताविद्यत्वात् समस्तसांसारिकभोगानुपहतः । श्रु. समस्तसांसारिकभोगानुपहतः । तै.

**अकामाः** - विष्णुकामाः । रा.

**अकामात्मा** - फलाभिसन्धिरहितः । भा.

**अकायम्** - सर्वशरीरकमपि कर्मशरीररहितम् । ई. सर्वशरीरकमपि कर्मकृतहेयशरीररहितम् । ई (कू).

[**अकारणम्** - कार्यभूताः षोडश विकाराः। ई].

**अकारः** - 'अ' इत्या (?) क्रियते प्रतिपाद्यत इति । मा (कू. 3.1.)

**अकात्स्न्र्यम्** - अपरिपूर्णता । श्री.

**अकार्यम्** - ज्ञातुमशक्यं कार्यम् । रा (सु. 48. 5).

**अकालकाल्यम्** - कालकृतपरिणाम-रहितम् । श.

**अकालकाल्यत्वम्** - कालाधीनविकार राहित्यम् । रत्न.

**अकालग्रहः** - अप्राप्तकाले ग्रहणम् । सर्वा.

**अकिञ्चनः** - अनन्यसाधनः । स्तो. भक्तिनिष्पादने सामर्थ्यशून्यः । नि.

**अकिञ्चनगोचरम्** - निष्कामगोचरम् । न विद्यते किञ्चन येषां ते अकिञ्चनाः तेषां गोचरः । भा.

**अकुतोभयः** - मोक्षः । नि.

**अकुतोभयाः** - अविद्यमानं कुतोऽपि भयं येषां ते । रा.

**अकुशलम्** - अनिष्टफलम् (कर्म) । गी.

**अकुहः** - अकृत्रिमः । रा.

**अकृतः** - नित्यः । श्रु.त. नित्यः परमपुरुषः । "नास्त्यकृतः कृतेन" । त.

[**अकृतम्** - नित्यम् । छा.]

**अकृतकम्** - जनस्तपस्सत्यलोकाः । ई.

**अकृतबुद्धित्वम्** - अनिष्पन्नयथाव-स्थितबुद्धित्वम् । गी.

**अकृतात्मभिः** - अजितात्मभिः । अजितेन्द्रियैः । भ.

**अकृतात्मा** - अवशीकृतान्तःकरणः । रा.

**अकृतात्मानः** - असंस्कृतमनसः । गी. अप्रतिष्ठितधृतयः । रा.

**अकृताभ्यागमः** - अहेतुकफलप्राप्तिः । वे. कृतेनाभ्यागमः; तस्याभावः; सुकृतादिकमन्तरेणैव सुखाद्यागमः । रत्न. अकृतेनैवाभ्यागमः हेतुभूतसुकृतादिक-मन्तरेणैव सुखाद्यागमः । रत्न. स्वेनाकृतस्य कर्मणः फलोपभोगः । श.

**अकृत्रिमः** - क्रियया निर्वृत्तः कृत्रिमः तदन्यः । स्तो.

**अकृतेन** - अयत्नेन। प्र.
**अकृत्यकरणम्** -स्ववर्णाश्रमादिनिषिद्धानुष्ठानम्। गद्य.
**अकृत्स्नः** - अपूर्णः। श्रु. बृ. अपूर्णस्वरूपः। असत्कल्प इति यावत्। बृ. एकांशहीनः। बृ.
**अकृष्टपच्यम्** - फलमूलादिकम्। भा.
**अकृष्टपच्यसिद्धिः** - कश्चन सिद्धिविशेषः। वि.
**अक्रतुः** - कर्मकृतोत्कर्षापकर्षशून्यः। क. काम्यकर्मादिरहितः। क.
**अक्रतुम्** - कर्मलेप(श)शून्यम्। श्वे. सर्वकर्मबन्धशून्यम्। तै.
**अक्रूरः** - गजपरिजिहीर्षया करस्थैरप्यायुधैर्ग्राहमपि झटित्यकृतवान्। सह. [भगवतः श्रीकृष्णस्यान्तरङ्गभूतो यादवविशेषः। या.]
**अक्रोधः** - परपीडाफलचित्तविकाररहितत्वम्। गी.
**अक्लिष्टकारी** - अक्लिष्टं कस्यापि दुःखरहितं यथा भवति तथा कर्तुं शीलमस्त्यस्येति। रा.
**अक्षम्** - इन्द्रियम्। अधि.
**अक्षतम्** - जातरूपं अक्षततण्डुलं हरिद्रामिश्रम्। रा.
**अक्षयः** - षड्भावविकारशून्यः। रा.
**अक्षयम्** - अपक्षयरहितम्। वि. क्षयानर्हम्। वि.
**अक्षय्यः** - निर्विकारः। रा.
**अक्षय्यम्** - चिरोपभोग्यम्। 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्'। त.
**अक्षरः** - अंशतोपि सृष्टिसंहार (रहितः) विरहवान्। ता. अविनाशी। वि. उन्मग्नचेतनाशंः प्रकृत्यवस्थाविशेषः। ता. ककारादिवर्णात्मकः। वि. कूटस्थः अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा। गी. जीवात्मा। गी. ज्ञानसंकोचरूपक्षरणाभावान्मुक्तः (अक्षरादपि चोत्तमः इत्यत्र)। श्रु. न क्षरतीति। (वैकुण्ठे मुक्तैस्सदाऽनुभूयमानोऽपि मधूत्सवन्निस्सीमगुणगौरवात् उपर्युपरि भोग्यतयोपचीयतेन तु क्षरतीति)। सह. परमात्मा। श्रु. प्रत्यगात्मा। न्यासि. प्रधानम्। बृ. मुक्तः। तै. स्वरूपविकाररहितः। श्रु.
**अक्षरम्** - अकृत्स्नपरिणामि। वि. अक्षरशब्दः प्राण्यप्राणिसाधारणविनाशसामान्याभाववाची। वे. कौ. अचित्समष्टिसंसृष्टा पुरुषसमष्टिः। श्रु. अनन्तम्। वै. अव्याकृतम्। श्री. अश्नुत इति। मु. अश्नुते व्याप्नोतीति वा न क्षरतीति वा अक्षरं, ब्रह्म। बृ. अश्नुते न क्षरतीति वा अक्षरम्। श्री. आत्ममात्रानुभवः। गद्य. कालकृतपरिणामशून्यम्। वै. क्षरणशून्यम्। प्र. चिद्वर्गम्। श्वे. चिरकालस्थायि (कैवल्यम्)। रत्न. न क्षरतीति, नित्यविभूतिः। वा. न क्षरति इति। मु. न

क्षरतीत्यक्षरं क्षेत्रज्ञसमष्टिरूपम् । गी. न क्षरतीत्यक्षरं स्वरूपविकाररहितमात्मस्वरूपम् । ता. न क्षरतीति, अश्नोति व्याप्नोतीति वाऽक्षरम्; परमात्मा। "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुतेः। रा. निर्विकारम्। क. परमपदम्। तै. प्रत्यगात्मस्वरूपम्। न्यासि. प्रधानं, जीवः, परमात्मा वा । श्री. ब्रह्म । मु. मुक्तानां स्थानभूतपरमाकाशः । नी. मूलप्रकृत्यवस्थाविशेषः । न्यासि. यस्यामवस्थायां गुणसाम्यमप्यस्फुटम्, तदवस्थं चेतनसमष्टिगर्भमव्यक्तम्। सुबा. स्वरूपेणाविकारम्। मु. [सलिलसंसृष्टार्द्रशिथिलावयवबीजतुल्यप्रकृतितत्त्वम्। ई.]

**अक्षरयाथात्म्यं** - विविक्तात्मस्वरूपम्। गीसं. अक्षरशब्दितप्रत्यगात्मयाथात्म्यम्, कैवल्यम्। न्यासि.

**अक्षरविद्या** - "अथ परा यया तदक्षरमधिगम्यते" इत्युपदिष्टा विद्या। परभक्तिविशेषः। न्यासि.

**अक्षाः** - पाचिकाः । अक्षपातानन्तरं तत्तत्स्थानेषु संचार्यमाणाः दारुविशेषाः शाराः। श्रीस्तु.

**अक्षितः** - अक्षयः। षड्भावविकारशून्यः। तै.

**अक्षितम्** - क्षयशून्यम्। छा.

**अक्षितिः** - अक्षतः । बृ. अक्षयः । चिरकालावस्थायित्वम्। कौ.

**अक्षुण्णः** - अनभ्यस्तः। अति.

**अक्षेत्रवित्** - अचतुरः। पा.

**अक्षोभ्यः** - प्रपन्नाभयदानदार्ढ्यात् स्वमहिम्नाऽपि दुर्धर्षत्वाच्च क्षोभयितुमशक्यः । सह. गभीराशयत्वेनाविकार्यः । सह.

**अक्षौहिणी** - परिमाणविशेषयुक्ता सेना। रा.

**अखण्डम्** - निरवयवम्। श.

**अखण्डितम्** - निर्विघ्नम्। भा.

**अखण्डैकरसम्** - नित्यनिर्विशेषस्वप्रकाशस्वभावम्। त.

**अखिलम्** - अनेकप्रकारम्। ता. खिलं नास्ति इति। श्रु.

**अखिलजन्मा** - अखिलस्य जन्म यस्मिन्। वि.

**अखिलवाक्यम्** - समग्रतयोपलभ्यमान श्रुतिवाक्यम्। सच्च.

**अखिलहेयप्रत्यनीकत्वम्** - अखिलहेयात्यन्ताभाववत्त्वम् । तेन कतिपयहेयरहितेभ्यो व्यवच्छेदः। गद्य.

**अखिलाधारः** - अखिलं आधारं व्याप्यं यस्य सः। भा.

**अखिलेन** - 'कात्स्न्येन'। सुन्दर.

**अख्यातिः** - शुक्तिरजतत्वयोरसंसर्गाग्रहात् शुक्तिरजतयोर्भेदाग्रहः भ्रान्तिस्थले प्राभाकरैरभ्युपगम्यमानः । अधि. प्रसिद्ध्यभावः। नि.

**अगतधर्मा** - कृत्याकरणवान्। रा.

**अगतिः** - कर्मरहितः । सुन्दर. उपायान्तररहितः। सुन्दर. अति.

[**अगदङ्कारः** - भिषक् । या.]
**अगरुः** - वृक्षविशेषः । रा.
**अगस्त्यः** - अगं स्तम्भयतीति । रा.
**अगुणम्** - हेयगुणरहितम् । भा.
**अगोत्रम्** - अनामकम् । श्रु. कुलरहितम् । मु. नामरहितम् । वै.
**अगोत्रमवर्णम्** - प्राकृतनामरूपरहितम् । श्रु.
**अग्निः** - अग्निशरीरकः परमात्मा । अग्रनयनादिगुणयुक्तः । ई. वेदान्तव्युत्पत्त्या अग्न्यादिशब्दः अग्न्यादिशरीरकपरमात्मपरः । श्रीत. अग्रनेता । तै. प्र. अग्रनेता मोक्षप्रदः; संसारपाशदाहक इति वा । श्वे. अर्चिरादिमार्गे प्रथम आतिवाहिकः । कौ. रुद्रः, "अग्निर्वै रुद्रः" इति प्रसिद्धेः । बृ. [सुदर्शनम् । (नेमिना तप्ततनुरिति विधीयमानांकनदशायां अग्नितप्तत्वात्) । सुदर्शनम् । अग्रनयनात् । (पवित्रमित्यग्निरित्यत्र) सुदर्शनम् । तेजस्त्रयीमयत्वात् । सच्च.]
**अग्निकार्याणि** - शान्तिकपौष्टिकहोमाः । रा.
**अग्निचितः** - जाठराग्निव्यापाराः । अग्नि.
**अग्निचूडा** - अग्निज्वाला । रा.
**अग्निवर्णः** - सुदर्शननृपपुत्रः । रा.
[**अग्निवेश्यगृह्यम्** - एतन्नामकेन ऋषिणा प्रणीतं गृह्यसूत्रम् । सच्च.]
**अग्निशरणम्** - अग्निगृहम् । रा.
**अग्निष्टोमः** - सोमसंस्थाविशेषः । वि.
**अग्निहोत्रम्** - अग्निकुण्डम् । रा. अग्नौ दर्विहोमः वैश्वदेवयज्ञाख्यः । वि.
**अग्नीन्धनम्** - अग्न्याधानम् । श्री.
**अग्नौ**-अग्निना निमित्तेन । निमित्ते सप्तमी ।बृ.
**अग्न्यगारम्** - अग्निहोत्रगृहम् । रा. अग्निहोत्रशाला । रा.
**अग्रम्** - भोजनाष्टमांशः । वि.
**अग्रजः** - स्वं प्राप्तवतां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया यथापर्यङ्कविद्यं परमभोग्यो जायत इति । सह.
**अग्रणीः** - अग्रं पश्चिम (?) स्थानं नयतीति अग्रणीः । सह.
**अग्रस्तः** - अन्तः अप्रवेशितः । लुप्तवर्णपदं ग्रस्तमित्यमरः । छा.
**अग्रहणम्** - ग्रहणाहेतुत्वम् । मां.
**अग्राक्ष्णा** - कटाक्षेण । रा.
**अग्राह्यः** - चक्षुरादिना ग्रहणानर्हः । श्रु. (मृत्तन्त्वादिरिव कुलालकुविन्दादिना) अनधिष्ठेयः (ग्रहीतुं अधिष्ठातुं न शक्यः) । सह.
**अग्राह्यम्** - (अद्रेश्यमग्राह्यमित्यत्र) अनुमानागोचरं इन्द्रियान्तरागोचरं वा. । श्रु. अनुमानाद्यविषयभूतम् । वै.
**अग्रे** - सृष्टिपूर्वसमये । श्वे.
**अग्र्यः** - ब्राह्मणः । अति. ऐकाग्र्ययुक्तः । ब्राह्याभ्यन्तरव्यापाररहितः । क.
**अग्र्यम्**- आदिकारणम् । श्वे. उत्कृष्टम् । वि. प्राकृतम् । वि.
**अग्र्यप्रायनयः** - अग्र्याणां बहुत्वे तन्मध्यगतस्याप्यग्र्यत्वबुद्धिविषयत्वम् । सर्वा.

**अघम्** - अनघोद्यमैः द्र. व्यसनम्। रा.

**अघस्य (उत्तराघस्य) अश्लेषकरणम्** - वैदिककर्मायोग्यतावासनाप्रत्यवाय-हेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति। अत्र शक्तिः परमपुरुषाप्रीतिः। श्री. उत्पत्स्यमानायाः उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धोऽश्लेषः। शक्तिः कर्मानुष्ठानजन्यभगवन्निग्रहः। श्रु.

**अघस्य (पूर्वाघस्य) विनाशकरणम्** - उत्पन्नायाः वैदिक कर्मायोग्यतावासना प्रत्यवायहेतुशक्तेः विनाशकरणम्। अत्र शक्तिः परमपुरुषाप्रीतिः। श्री. उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेः विनाशकरणं विनाशः। श्रु.

**अघजित्** - हेयप्रतिभटः। पद.

**अघमर्षणः** - अघानां भेत्ता। तै. वरुणः अघानामपनोदकः। तै.

**अघशक्तिः** - परमपुरुषाप्रीतिः। कर्मादौ शक्तित्वव्यपदेश औपचारिकः। न्यासि.

**अघायुः** - अघारम्भायैव यस्य आयुः, अघपरिणतं वा, उभयरूपं वा सोऽघायुः। गी.

[**अङ्कनम्** - (शरीरे) तत्तत्पदार्थाकार-सदृशरेखाकरणम्। सच्च.]

**अङ्गम्** - अपेक्षितम्। श्रु. नियमेनोपादेयम्। श्रु.

**अङ्गत्रयम्** - दमो दानं दयेति गुणत्रयं प्रकृष्टतरमुपासनाङ्गम। सबा.

**अङ्गत्वम्** - निष्पादकत्वम्। नि.

**अङ्गदः** - लक्ष्मणस्य कुमारः। रा.

**अङ्गदम्** - अङ्गं अनन्याभरणं अवयवं स्वसंवलिततया उन्मील्य ददातीति। सह. कूर्परोपरि धार्यं भूषणम्। रा.

**अङ्गपञ्चकम्** - (न्यासस्य) आनुकूल्यसङ्कल्पः, प्रातिकूल्यवर्जनम्, कार्पण्यम्, महाविश्वासः, गोप्तृत्ववरणम्। न्याद. [(तर्कस्य) 'प्राप्तिस्तर्कप्रतिहतिर-वसानं विपर्यये। अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्॥' इत्युक्तम्। या.]

**अङ्गरागः** - कुङ्कुमहरिचन्दनादिः। रा.

**अङ्गहारः** - नृत्तविशेषादङ्गविक्षेपविशेषः। 'अङ्गानां योग्यदेशेषु हरणेन यथोचितम्। अङ्गनिर्वर्तनीयत्वादङ्गहारस्तथोच्यते॥' इति भरतशास्त्रम्। रा.

**अङ्गारः** - प्रशान्तार्चिः दग्धकाष्ठखण्डः। या.

**अङ्गारचूर्णम्** - इङ्गालचूर्णम्। रा.

**अङ्गारावक्षयणम्** - अङ्गारा अवक्षीयन्ते गृह्यन्ते येन पात्रेण तदङ्गारावक्षयणम्। बृ.

**अङ्गुलित्राणम्** - धन्विनोऽङ्गुलिरक्षक कवचम्। रा.

**अङ्गुल्यग्रचोद्यम्** - यथा अङ्गुल्यग्रं स्वात्मानं न स्प्रष्टुमलं तथा ज्ञानं न स्वात्मानं विषयीकर्तुमलमिति चोद्यम्। रत्न.

**अङ्गी** - समग्राङ्गयुक्तः। छा.

**अङ्गुष्ठमात्रः** - अङ्गुष्ठमात्रपरिमाणः (जीवः)। श्वे. हृदयगुहानिहितत्वनिबन्धनाङ्गुष्ठ-

परिमाणयुक्तः । श्वे. अङ्गुष्ठपरिमाणः (परमात्मा) । क.

**अचक्षुःश्रोत्रम्** - इन्द्रियाधीनज्ञानाभाववत् । श्रु.

**अचक्षुरूपः** - अचक्षुस्स्वरूपः चक्षुस्स्वरूपरहितो वा । वि.

**अचरम्** - पादाद्यधीनसंञ्चाराभाववत् । ता.

[**अचरमगुरुः** - प्रथमगुरुः श्रीमन्नारायणः। र.]

**अचलः** - दुर्योधनादिभिर्दुरात्मभिः अभेद्यः; चलः चञ्चलो नेति । सह. एकरूपः। गी.

**अचलम्** - प्रत्यगात्मस्वरूपं अपरिणामित्वेन स्वासाधारणाकारान्न चलति न च्यवत इत्यचलम् । ता.

**अचलकुलम्** - कुलाचलः । अति.

**अचलत्वम्** - निश्चलत्वम् । श्री.

**अचला** - निर्विघ्ना । गी.

[**अचापलम्** - स्पृहणीयविषयसन्निधावचञ्चलत्वम् । गी. र.]

**अचित्** - प्रधानम् । अधि. चिद्भिन्नः । चित्पदं द्र. चैतन्यानाश्रयः द्रव्यम् । अष्टश्लो.

**अचित्प्राप्तिः** - संसारित्वम् । श्रु.

**अचिन्तनीयम्** - अपरिच्छेद्यम् । रा.

**अचिन्त्यः** - (आत्मा) सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः । गी. मुक्तोपमयाऽपि दुर्निरूपः । सह. बाह्यतर्कैः चिन्तयितुमशक्यः । श्रु.

**अचिन्त्यम्** - ईदृशमिति चिन्तयितुमशक्यम् । वर. परमयोगिभिरपि अपरिच्छेद्यम्, कुतर्कैः असम्भावितमिति प्रतिक्षेप्तुमशक्यम् वा । स्तो.

**अचिन्त्यत्वम्** - अस्मदादिभिः स्वरूपतः कारणतः विषयतश्च परिच्छेत्तुमयोग्यत्वम्, कुतर्कैः अपह्नोतुमशक्यत्वं वा । स्तो.

**अचिन्त्यरूपः** - सकलेतरविसजातीयस्वरूपः । गी.

**अचिरम्** - (कुर्वाणाऽचीरमित्यत्र) अचिरम् क्षिप्रम् । तै. (इदं शाङ्करभाष्ये) । सिद्धान्ते चीरमित्येव पदम् ।

**अचेतनः** - अस्वस्थचित्तः । रा.

**अचेतनवर्गः** - धर्मभूतज्ञान-त्रिगुण - शुद्धसत्त्व - काल -भेदाच्चतुर्धा । श्रीत.

**अचेतना** - क्षुभितचित्ता । रा.

**अचेतसः** - आत्मावलोकनसमर्थचेतोरहिताः । गी.

**अचोदनम्** - अविधानम् । श्री.

**अच्छः** - आलोकाद्यनुप्रवेशयोग्यसन्निवेशवान् । सर्वा.

[**अच्छावाकः** - होतृगणान्तर्भूतः ऋत्विग्विशेषः । सच्च.]

**अञ्चितानि** - पूजितानि । स्निग्धानि । रा.

**अच्युतः** - जीवगतज्ञानसङ्कोचादिरहितः। वि. अप्रच्युतस्वभावः । ता. आश्रितान् न च्यावयति अतश्च्युतोऽस्य नास्ति इति अच्युतः । ता. प्रपन्नेभ्यो नापगतः आश्रितानां च्युतिर्यस्मान्नास्ति सः । सह. ब्रह्मादिसाधर्म्येणावतारेऽपि स्वैश्वर्य-

प्रच्युतिवैधर्म्यात् तद्वत् च्यवनधर्मो न भवतीति। सह. स्थानप्रच्यावहीनः। सह. आश्रितसंरक्षणव्रतान्न च्युतः। 'न कर्मणा वर्धते नो कनीयान्' इत्यादिषूक्तं ज्ञानबलैश्वर्यादिः अप्रच्युतत्वं वा। स्तो.

**अच्युतम्** - स्वरूपस्वभावप्रच्युतिशून्यम्। छा.

**अच्छायम्** - अपापम्। प्र.

**अजः** - कर्मानधीनस्वेच्छावतारवान्। अति. उत्पत्तिरहितः (जीवः)। श्वे. उत्पत्तिरहितः। बृ. जननादिविक्रियारहितः। क. अकारवाच्यत्वेन जातः। सह. स्तम्भसम्भवत्वेन इतरवन्न जायत इत्यजः। सह. स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव अजति क्षिपतीति। सह. कर्मायत्तोत्पत्त्यादिरहितः। भा. स्वरूपतः शरीरद्वारा च जन्मरहितः। गी. (परमात्मा) न जायत इत्यजः। विकारिद्रव्यादचेतनात् तत्संसृष्टात्संसारि चेतनाच्च विसजातीयः। संसारिचेतनस्य कर्मकृताचित्संसर्गो जन्म। गी. नाभागनृपपुत्रः। रा.

**अजङ्गमशरीरम्** - वृक्षलताकाष्ठशिला-तृणघटपटादिकं जीवशरीरं ईश्वरशरीरञ्च। न्यासि.

**अजडम्** - स्वयम्प्रकाशम्। न्याप. य जडादन्यत् (स्वतोभासमानम्) न्यासि.

**अजडत्वम्** - स्वनिरूपितविषयतावत्त्वं, तादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वम्। वा.

**अजत्वम्** - उत्पत्तिरहितत्वम्। श्रु.

**अजन्मक्षयः** - कर्माधीनजन्मनाशरहितः। वि.

**अजरः** - सर्वदा उन्निद्रः। तै.

**अजरम्** - जरामरणशून्यम्। प्र. कालेन न जीर्यति इति। वि.

**अजा** - प्रकृतिः। श. उत्पत्तिरहिता (प्रकृतिः) (नात्राजाशब्दः छागीपरः, नापि तन्मुखेन गौणः)। श्वे. मु. तै.

**अजातः** - जननादिलक्षणसंसारहीनः। श्वे.

**अजातशत्रुः** - काश्यो राजा कश्चित्। कौ.

**अजाय** - कार्यगतोत्पत्त्यादिरहिताय। भा.

**अजितः** - श्रीकृष्णः। या. प्राकृतैः उत्पत्तिमरणादिभिः न जिता अजिता अपरजिताख्या प्रख्याता पुरी, सा अस्यास्तीति सोऽजितः। सह. विष्णुः। रा. [कृष्णः। "विष्णावप्यजिताव्यक्तौ" इत्यमरः। या.]

**अजिह्मम्** - अकुण्ठम्। रा.

**अजीवः** - जीवभोग्यवस्तुजातम् (जैनमते)। श्री.

**अज्ञः** - यथावदुपदेशलब्धज्ञानरहितः। गी.

**अज्ञातपरमार्था** - माया। अज्ञातः परमार्थः ब्रह्म यस्याः हेतोस्सा। वि.

**अज्ञानम्** - मिथ्याज्ञानम्। च. अविद्या। ता. विवरणे त्वेवमुक्तम् - त्रिविधमज्ञानम् स्वरूपाज्ञानं अन्यथाज्ञानं विपरीताज्ञानमिति।

स्वरूपाज्ञानं नाम वस्तुनोऽप्रतिपत्तिः । अन्यथाज्ञानं वस्तुनो वस्त्वन्तरतया भानम्; यथा शुक्तेः रूप्यतया । विपरीतज्ञानं तु यथावद्वस्तुनि भासमाने युक्तिभिस्तस्या न्यथोपपादनम्; यथा ज्ञातृतया अहन्त्वेन आत्मनि भासमानेऽपि कुयुक्तिभिरस्य भ्रान्तितोपपादनं कुदृशाम् इति । न्याप. ज्ञानविरोधि प्राचीनकर्म । च. ज्ञानविरोधि विपरीतज्ञानम् । गी. वादिना त्रिभङ्ग्यन्तराभिहिते सभ्येष्वन्यतमेनापि विदितार्थे वचने मया न ज्ञायत इति वाद्यन्तरस्य यद् वचनं तत् तस्याज्ञानम् (निग्रहस्थानम्) । न्याप. [परावरवस्त्व-विवेकता । र.]

**अज्ञानसम्मोहः** - अज्ञानहेतुकं भ्रान्ति-ज्ञानम् । ता.

**अज्ञाय** - अज्ञात्वा । ल्यबार्षः । भा. अविज्ञाय । भा. आर्षत्वात्प्रयोगस्य "अनञ्पूर्वे" इति न प्रतिषेधः । अतो ल्यप् । भा.

**अञ्चितः** - रहितः । या.

**अञ्चितम्** - पूजितम् । अति.

**अञ्चितानि** - पूजितानि । स्निग्धानि । रा.

**अञ्जनः** - गजविशेषः । रा.

**अञ्जनम्** - वैशद्यापादकवस्तु । भ.

**अञ्जलिः** - अकारवाच्यं परमपुरुषं जलयतीत्यञ्जलिः । रा. अनन्यगतिकत्व-सूचिका मुद्रा । रा. अञ्जलिः परमा मुद्रेति नमस्कारविशेषः। नि. कुब्जकरद्वययोगः।या.

**अञ्जसा** - अव्यवधानेन । स्वाभाविकम् । "अञ्जसैव विश्वसृजो रूपम् ।" वे. आशु । रा. साक्षात् । बृ.

**अटनी** - धनुष्कोटिः । रघु.

**अट्टालकः** - प्राकारोपरि युद्धार्थं परिकल्पितः चतुस्स्तम्भो मण्टपः । रा.

**अट्टहासः** - अतिशयेन । हासः । "अट्टावतिशयक्षौमौ" इत्यमरः (?) । या.

**अणवः** - जीवाः (शैवमते) । "आत्मनो विभुनित्यते"ति विभुत्वात् अणुक्षेत्रज्ञपदवेदनीया जीवा इत्यर्थः नत्वणुस्वरूपा इति । न्यासि.

**अणिमा** - अणुवद्दुर्विज्ञेयः । मानान्तरा-गोचर इत्यर्थः । छा. अणोर्जीवस्याप्यन्त-रात्मतया प्रवेशयोग्यः । भा. [शरीरतः अणुभवनम् । (अष्टैश्वर्येष्वन्यतमम्) । र.]

**अणीयः** - अतिशयेनान्तःप्रवेशयोग्यम् । श्वे.

**अणीयस्त्वम्** - सूक्ष्मत्वम् । वे. सूक्ष्मत्वम् (व्यापित्वम्) । मु.

**अणीयान्** -अणुतरः। अणोरन्तः-प्रवेशयोग्यः। क. सर्वसूक्ष्मवस्तु प्रवेशनयोग्यतया निरतिशय सौक्ष्म्ययुक्तः। तै. सूक्ष्मतरः । वि.

**अणीयोर्ध्वा** - अणियसी ऊर्ध्वा ऊर्ध्वाग्रा अणीयोर्ध्वेति कर्मधारयः । सन्धिश्छान्दसः । तै. [(ईश्वरः) प्रतिघातानर्हत्वरूप-सौक्ष्म्यवान् इत्यर्थः, न तु अणु परिमाण-वानिति । र.]

**अणुः** - सूक्ष्मतमः। वि. क्षुद्रधान्यविशेषः। वि. अतिसूक्ष्मः विश्वोपादानभूतः। अधि. दुर्विज्ञेयः। मु. दुर्विज्ञानः मानान्तरानधिगम्यः। बृ. सूक्ष्मः। क. अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यवान्। सह. सूक्ष्मतया चक्षुराद्यगोचरः। क.

**अणुम्** - अतीन्द्रियम्। म.

**अणुतरः** - अत्यन्ताणुः। वै.

**अणुत्वम्** - महत्त्वावधित्वम्। न्यासि. बहुदिगवच्छेदेन न्यूनभावः। न्यासि. (इन्द्रियाणाम्) परिच्छिन्नत्वे सत्युपलब्ध्यर्हस्थूलताराहित्यम्। न तु जीवात्मस्वरूपवदत्यन्ताल्पत्वम्। श्रु. परिच्छिन्नत्वे सत्यतिस्वच्छत्वम्। श्रु. इन्द्रियाणामणुत्वमुपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमात्रम्। न्यासि.

**अणुपरिमाणतारतम्यम्** - अणुपरिमाणपारम्यम्। अणुत्वोत्कर्ष इति यावत्। न्यासि. अणुत्वनिष्ठापकर्षसमानाधिकरण उत्कर्षः। रत्न.

**अणोरणीयान्** - जीवादपि सूक्ष्मतरः। गी. सकल सूक्ष्म वस्त्वन्तः प्रवेशयोग्य सौक्ष्म्यवान्। श्वे. जीवादपि अणीयान् तदन्तः प्रवेशयोग्यः। भा.

**अण्डम्** - कपित्थफलाकारं पञ्चीकृतपञ्चभूतारब्धं प्रकृतिद्रव्यम्। य.

**अण्डजः** - मत्स्यः। सुन्दर.

**अण्वन्तः** - अणोः सूक्ष्मस्य वस्तुनः प्रत्यगात्मादेः अन्तः निश्चयः। बृ.

**अतत्त्वार्थवत्** - मिथ्याभूतार्थविषयम्। गी.

**अतद्व्यावृत्तिः** - तत्तद्व्यक्तिभिन्नभेदकूटम्। रत्न. तत्तद्व्यक्तिभेदकूटावच्छिन्नभेदः। रत्न. तत्त्वावच्छिन्नभिन्नभेदः। रत्न.

**अतनुः** - निरवयवः। वि.

**अतन्त्रम्** - अप्रधानम्। रा.

**अतपत्** - आलोचनरूपं ज्ञानं कृतवान्। "तप आलोचने"। छा.

[**अतप्ततनुः** - सुदर्शनपाञ्चजन्यधारणात्मकसंस्कारहीनशरीरकः पुमान्। सच्च.]

**अतपस्कः** - अतप्ततपाः। गी.

**अतर्क्यम्** - बाधकागोचरभूतम्। श्रु.

**अतिग्रहः** - ग्रहाख्यपात्रविशेषस्थं द्रव्यम्। श्रु. विषयः, अतिशयेन स्वस्वविषयिणमिन्द्रियादिकं गृह्णाति स्ववशीकरोति इति अतिग्रहः। बृ.

**अतिघ्नी** - अतिशयं गता मात्रा। बृ.

**अतिच्छन्दाः** - इदं छान्दसं रूपम्।

**अतिच्छन्दम्** - अभिलाषातिगम्। बृ.

**अतिजने** - विजने। छा.

**अतिथिः** - नास्त्यागतस्य तिथिः एकदिनमपीति। वि.

**अतिदेशः** - एकत्र सिद्धार्थस्य अन्यत्राप्युपयोजनम्। अधि.

**अतिपतितावधिः** - निरवधिः। सुन्दर.

**अतिप्रचण्डः** - अत्यन्तकोपनः। रा.

**अतिप्रबुद्धः** - ज्ञानपौष्कल्यवान्। गद्य.

**अतिप्रश्नः** - नियमाद्युपेतप्रश्नमर्यादामतिक्रम्य वर्तमानः प्रश्नः अतिप्रश्नः । आक्षेप इति यावत् । बृ.

**अतिप्रश्नाः** - प्रश्नमतिक्रम्य वर्तमानाः, प्रश्नायोग्याः रहस्यार्थाः । प्र.

**अतिप्रसङ्गः** - अत्यासक्तिः । रा. एकत्राति (?) प्रवृत्तिर्जातेति अन्यत्रापि प्रसङ्गः अतिप्रसङ्गः । या (4-97).

**अतिबला** - यतः परस्य स्खालित्यं दृङ्गनः कार्यकर्मणाम् । स्वोपाये च ह्यमोघत्वं भवेत्सातिबला स्मृता ॥ पा.

[**अतिमानः** - स्वविद्याभिजनाननुगुणोऽभिमानः । गी. र.]

**अतिमानिता** - अस्थाने गर्वः । गी. र.

**अतिमुक्तकः** - वृक्षविशेषः । रा.

**अतिमुक्तिः** - शरीरवियोगानन्तरं प्रकृत्यतिक्रान्तपदाधिरोहणम् । बृ.

**अतिमुच्य** - ज्ञात्वा । के.

**अतिरिच्यते** - अतिशयेन निरस्यते । श्वे.

**अतिरेकः** - असाधारणधर्मः । न्यासि. आधिक्यम् । श्रु. धर्म्यन्तरेष्वसन् धर्मः । न्यासि.

**अतिरोचते** - अतिक्रम्य प्रकाशते । बृ.

**अतिवहति** - अतितारयति । बृ.

**अतिवहनं** - गन्तॄणां गमयितृत्वम् । श्री.

[**अतिवादः**-वस्तुस्वभावाननुगुणोत्कर्षवादः । र. स्वार्थे तात्पर्याभाववद्वाक्यम् । सच्च.]

**अतिवादाः** - अन्यपरोक्तयः । (देवताधिकरणे अतिवादाः कृताः। वे.) । अधि.त.

**अतिवादित्वम्** - वस्त्वन्तरात्पुरुषार्थतयाऽतिक्रान्तस्वोपास्यवस्तुवादित्वम् । श्री.

**अतिवादी** - अतिक्रान्तस्वोपास्यवस्तुवादी स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादीत्यर्थः । बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायकस्वोपास्यदेवतापारम्यवादशीलत्वमतिवादित्वम् । छा. अतीत्य सर्वान् वदितुं शीलमस्येति । यस्तु स्वोपास्यदेवतायाः सर्वातिशायित्वं वदति सः । मु.

**अतिव्याप्तिः** - (लक्षणस्य) लक्ष्यादन्यत्र वर्तमानत्वम् । य.

**अतिशक्वरी** - "उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठा या सुपूर्विका" इत्यादिछन्दस्सु पञ्चदशस्थाननिवेशात् अतिशक्वरीति पञ्चदशसंख्या उच्यते । अधि.

**अतिशङ्का** - अविश्वासः । रा.

[**अतिशयः** - अतिक्रमः । या.]

**अतिशायनम्** - उत्कर्षः । रत्न.

**अतिशिष्टः** - अवशिष्टः । छा.

**अतिशेषेण** - अतिरर्थाभावे । अशेषेण । निःशेषमित्यर्थः । छा. निश्शेषम् । श्रु.

**अतिष्ठाः** - वैश्वानरात्मनो मूर्ध्नो नामैवम् । अतीत्य तिष्ठतीत्यतिष्ठाः । दिवस्सर्वलोकानतीत्य स्थितत्वादतिष्ठात्वम् । अग्नि. सर्वमपि कार्यमतिक्रम्य तिष्ठतीत्यतिष्ठाः । कौ. सर्वानतीत्य तिष्ठतीति । "आतो मनिन्" इति विच् प्रत्ययः । बृ.

**अतिसृज** - मुञ्च। भाव.
**अतिसृजते** - अनुजानाति। कौ.
**अतिस्वरति** - शब्दं करोति। छा.
**अतीतकालः** - कालात्ययापदिष्टः हेत्वाभासः। न्याप.
**अतीन्द्रः** - (इन्द्रानुजत्वेपि ऐश्वर्येणापदानेन) इन्द्रमतिक्रान्त इति। सह.
**अतीन्द्रियः** - इन्द्रियग्राह्यानतीत्य वर्तमानः। श्रु. ज्ञानोपकरणाव्रातमतिक्रान्तः। सह.
**अतीन्द्रियम्** - प्रत्यक्षाद्यगोचरः। वै.
**अतीन्द्रियग्राह्यः** - इन्द्रियमतीत्य वर्तमानेन शास्त्रेणैव ग्राह्यः। श्रु.
**अतीपानम्** - (अतिपानम्) शास्त्रनिषिद्धं पानम्। तै.
**अतुलः** - अनुपमः। "न तस्य प्रतिमा अस्ति"। सह.
**अतुला** - सादृश्याभावः। रा.
**अतुष्टिः** - अनलंबुद्धिः। भा.
**अतृप्तिः** - अभिलषिताभावजन्यं दुःखम्। च.
**अत्कम्** - अन्तिकम्। अधि.
**अत्ता** - अनुभविता। बृ. संहर्ता। प्र.
**अत्तुम्** - संहर्तुम्। बृ.
**अत्यन्तम्** - अक्षय्यम्। रा.
**अत्यन्तभेदः** - अभेदासमानाधिकरणभेदः। रत्न. ऐक्यप्रतिभटस्वभावः। त.
**अत्यन्तसौक्ष्म्यम्** - सर्वव्यापनशीलाया बुद्धेस्संसारदशायां मशकदेशान्तर्मितत्वे अपि न तदवयवानां परस्परप्रतिघातो यतः तत्। न्यासि.
**अत्यन्तातीन्द्रियाणि** - नित्यानुमेयानि। श्रु.
**अत्यन्ताय** - कार्त्स्न्येन। च.
**अत्यमुच्यत** - अत्यन्तमुक्ता अभवत् (वाक्)। बृ.
**अत्ययः** - (अनुभवेन) विनाशः। श्रु.
**अत्ययाम** - अतितरेम, जयेम। बृ. जयामेत्यर्थः। श्रु.
**अत्यरिच्यत** - वृद्धः अभूत्। वि.
**अत्यर्थम्** - अत्यभिधेयम्। सर्वज्ञेन सर्वशक्तिनापि दुर्वचम्। गद्य. अत्यभिधेयम्। त. अत्यभिधेयम् अभिधातुमशक्यम्। ता.
**अत्यर्थप्रिया** - अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना, अयुक्तदशायामपि 'या प्रीतिरविवेकिना' इति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता। त.
**अत्यवहत्** - अतीत्य अवहत्। बृ. अत्यक्रामयत्। बृ.
**अत्यसृजत** - अतिक्रान्ततया सर्वाधिकतया ससर्ज। बृ.
**अत्याशनम्** - (अत्यशनम्) शास्त्रनिषिद्धाशनम्। तै.
**अत्याश्रमिणः** - अतिशयिताश्रमिणः।
**अत्याश्रमिभ्यः** - अति पूजायाम्। पूज्याश्रमयुक्तेभ्यः परमहंससन्यासिभ्यः। श्वे.

[**अत्याहितम्** - प्राणानाकांक्षि कर्म। या.]
**अत्येष्यन्ति** - जेष्यन्ति। बृ.
**अत्रम्** - प्राणः। न त्रायते अन्येन केनचित्। बृ.
[**अत्रिसंहिता** - वैखानसशास्त्रान्तर्गतः संहिताविशेषः। सच्च.]
**अत्रैवामृतत्वम्** - उत्तरपूर्वाघयोरश्लेष-विनाशरूपम्। श्री.
**अथ** - अथशब्दः प्रश्नार्थः यद्यर्थविश्रान्तो वा। ता. अथशब्दः प्रकृतविषयद्योतनार्थः। छा. प्रश्नार्थकः कात्स्न्र्यपरो वा। ता. 'अत्र अथशब्दो मङ्गलवाची। मङ्गलस्वरूपः'। श्रीसू.
**अथर्वाङ्गिरसः** - अथर्वाङ्गिरोमन्त्राः। छा.
**अथर्वाङ्गिरसाः** - अथर्वणाऽङ्गिरसा च दृष्टाः अथर्ववेदप्रदेशाः। श्रु.
**अथो** - अपि। बृ. कृत्स्नम्। श्रु. वाक्यान्तरोपक्रमे। बृ.
**अदत्कम्** - भक्षयितृ। छा.
**अदभ्रचक्षुषा** - अनल्पज्ञानेन। भा.
**अदमः** - नास्य अन्यः कश्चिद्दमयितेति। सह.
**अदम्भित्वम्** - धार्मिकत्वयशः प्रयोजनतया धर्मानुष्ठानं दम्भः, तद्रहितत्वम्। गी.
**अदितिः** - अखण्डनीयस्वरूपगुणविभवा। दो अवखण्डने। दितिर्नेत्यदितिः। "द्यति स्यति" इत्यादिना इकारः। श्रीसू. कर्मफलान्यत्तीति जीवः। भा. परमात्मा। सर्वां अत्तीति तददितेरदितित्वम्। बृ. भूः। न्यासि. साक्षाल्लक्ष्मीः, लक्ष्मी - विभूतिभूतभूमिर्वा। श्रीसू.
**अदीनः** -सत्स्वपि क्षोभहेतुष्वक्षोभ्यान्तः-करणः। रा.
**अदीनात्मा** - सत्स्वपिक्षोभहेतुषु अक्षोभ्यान्तः करणः। रा.
**अदीर्घदर्शिनम्** - दूरविचारानभिज्ञम्। भा.
**अदीर्घसमीक्षा** - अदूरविचारः। भा.
**अदुःखार्हा** - दिव्यभोगार्हा। रा.
**अदृप्तः** - दृप्तः पारमेष्ठ्यतेजसा गर्वितो नेति। दृप्त इति पाठे यशोदानन्दलालनदृप्त इति। सह.
**अदृश्यः** - अतर्क्यवृत्तान्ततया दृश्यः द्रष्टुं शक्यो नेति। सह.
**अदृश्यम्** - अचक्षुर्ग्राह्यम्। वै. चक्षुरादिग्रहणानर्हम्। तै.
**अदृष्टम्** - ईश्वरस्य प्रीतिः कोपो वा। न्यासि. ईश्वरप्रीतिकोपरूपज्ञानविशेषः। न्यासि. अन्तःकरणपरिणतिः (सांख्यमते)। सर्वा. चेतसो वासना (सौगतमते)। सर्वा. तत्तत्कर्मानुगुणपरिणतेश्वरबुद्धिविशेषः। सर्वा. पुद्गलरूपम् (जैनैकदेशिनः)। सर्वा. पुंधर्मः (न्यायमते)। सर्वा. बाह्येन्द्रियज्ञानागोचरम्। मा. भगवत्प्रीतिजनककर्मविशेषजन्यो ज्ञानविशेषः। स विशेषो भगवत्सङ्कल्प एव। य. विभुरूपं तत्त्वान्तरम् (जैनैकदेशिमते)। सर्वा.

**अदेशः** - कुत्सितस्थानम्। वि.

**अदोषाय** - धर्मस्थापनाय। वि.

**अद्धा** - निश्चयः। छा.

**अद्भिः परिगृहीता** - समुद्रावृता। छा.

**अद्भुतः** - सर्वदा सर्वैः सर्वथाऽनुभवेऽप्यपूर्ववदतिविस्मयनीयः। सह.

**अद्भुतम्** - आश्चर्यशालि। तै. सकलविजातीयात्याश्चर्यावहम्। वर. सदानुभूतत्वेऽपि अदृष्टपूर्ववत् आश्चर्यावहम्। स्तो.

**अद्भुतत्वम्** - अवगतांशस्यापि लोकोत्तरतया आश्चर्ययुक्तत्वम्। स्तो. वैचित्र्यवत्त्वम्। गद्य. प्रतिक्षणं अभिनवत्वम्। श्रु.

**अद्रव्यम्** - अनुपादानम्। सर्वा. अवस्थानाश्रयः।न्यासि. आगन्तुकधर्मानाश्रयः। न्याप. संख्याकारकान्वयायोग्यम्। रत्न. संयोगरहितम्। न्यासि.

**अद्रव्यत्वम्** - द्रव्यत्ववैधुर्यम्। सर्वा.

**अद्रेश्यम्** - अदृश्यम्। ज्ञानेन्द्रियाविषयः। मु. इन्द्रियादृश्यम्, प्रत्यक्षागोचरम्। चक्षुरगोचरं वा (अद्रेश्यमग्राह्यमित्यत्र)। श्रु.

[**अद्रोहः** - परेष्वनुपरोधः। परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमिति यावत्। गी.र.]

**अद्वयः** - अब्रह्मात्मकद्वितीयवस्तुरहितः। भा.

**अद्वयम्** - तुल्यवस्त्वन्तररहितम्। भा. स्वसमाभ्यधिकरहितम्। भा.

**अद्विजः** - शूद्रः। रा.

**अद्वितीयः** - अदृष्टाद्वारकचेतनान्तरसहकरणरहितः। च. अधिष्ठात्रन्तररहितः निमित्तकारणं च। भा. अनुपमः। भा.

**अद्वितीयम्** - निमित्तान्तररहितम्। न्यासि. निमित्तान्तरानपेक्षम्। वै. स्वसजातीयरहितम्। साजात्यं समस्तचिदचिन्नियन्तृत्वेन। रत्न.

**अद्वैतम्** - द्वीति भावप्रधानम्। द्वित्वेन वस्तुतत्त्वापेक्षया अन्यात्मकत्वरूपद्वितीयप्रकारेण इतं ज्ञातं वस्तु द्वीतम्। "इण गतौ"। द्वीतस्येदं द्वैतं मिथ्याज्ञानम्। न विद्यते मिथ्याज्ञानं यस्मात् तत् अद्वैतम्। मिथ्याज्ञानविरोधि वा। अहंममतादिमिथ्याध्यवसायनिवर्तकमिति यावत्। मा. देवादिद्वैतराहित्यम्। देवादिभेदरहितम्। वि. "परमात्मानं चिदचिद्विशिष्टमभिप्रेत्य तस्यैकत्वात् अद्वैतमित्याहुः। 'एकमेवाद्वितीय' मित्याद्याः काश्चन श्रुतयः"। मा. सजातीयद्वितीयरहितम्। मा.

**अद्वैतमयम्** - देवमनुष्यादिद्वैतरहितात्मविषयतया तत्प्रचुरम्। वि.

**अद्वैतमहावाक्यानि** - तत्त्वमस्यादिवाक्यानि। श.

**अधर्मः** - धर्मेतरः उपेयः। श्रु. क. निषिद्धक्रियासाध्यतयाभिमतः सर्वप्रशासितुरीश्वरस्य निग्रहाख्यबुद्धिविशेषः। न्याप. स्थितिहेतुभूतो द्रव्यविशेषः व्यापी (जैनमते)। श्री.

**अधर्मसहितम्** - अधर्मकृतम् । रा.

**अधि** - उपरिष्टात् । श्री. ऊर्ध्वम् । कौ. श्वे.

**अधिकः** - अर्थान्तरभूतः । श्री.

**अधिकम्** - (निग्रहस्थानम्) अन्वितमुपयुक्तमपुनरुक्तं कृतकरतया स्वसिद्धान्तनिर्णीतम् । तत्र हेत्वधिकं यथा धूमवत्त्वादालोकवत्त्वादित्यादि । न्याप. समृद्धम् । या.

**अधिकपरिमाणम्** - यत्संयुक्तं देशं देशान्तरञ्च यत् युगपदाक्रमितुं शक्तं तत् ततोऽधिकपरिमाणम् । न्यासि.

**अधिकरणम्** - विषयसंशयपूर्वपक्ष-सिद्धान्तप्रयोजनरूपार्थपञ्चकप्रतिपादकम् । अधि.

**अधिकरणसिद्धान्तः** - यस्यार्थस्य सिद्धौ अन्येऽर्थाः अनुषज्यन्ते, न तैर्विना सोऽर्थस्सिध्यति, तेऽर्थाः यदधिष्ठानाः, सोऽधिकरणसिद्धान्तः । न्याभा. "यत्सिद्धौ अन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः" । न्यासू.

**अधिकारः** - अर्थित्वे सति सामर्थ्यम् । तादर्थ्यबोधनम् । श्रु. पदम् । श्रु. प्रस्तावः । श्रु. मदभिलषितसाधनत्वात् मदर्थमिदं कर्मेत्यभिमानः । ता. [उपायानुष्ठानोपयुक्तो धर्मविशेषः । र.]

**अधिकारिकर्तव्यभरः**-आचार्योपसदन-प्रभृतिकर्मयोगादिद्वारकोपासनसंपाद्यभगवत्कृपोत्तम्भनम् । न्याद.

**अधिकारी** - नियोज्यो द्र.

**अधिगतिविहतम्** - लोकोपलम्भ-विरुद्धम् । सर्वा.

**अधिगमः** - प्राप्तिः । श्री. विचारः । अधिगम्यते अनेन । त.

**अधिगमनम्** - आधिक्येन गमनम् (अपरोक्षीकरणम्) । मु.

**अधिगमिष्यति** - ज्ञास्यति । रा.

**अधिचकार** - अधिकृतवान् । जग्राहेत्यर्थः । या.

**अधिजातः** - सर्वमङ्गलान्यधिकृत्य जातः । श्रीसू.

**अधिदैवतम्** - दैवतोपरि वर्तमानम् । ता. देवतायामुपासनम् । श्रु. देवेषु वर्तमानम् (देवतास्वन्तर्भूतत्वेन वेद्यम्) । सुबा. दैवतोपरि वर्तमानः इन्द्रप्रजापतिप्रभृति-कृत्स्नदैवतोपरि वर्तमानः इन्द्रप्रजापति-प्रभृतीनां भोग्यजातात् विलक्षणशब्दादे-र्भोक्ता पुरुषः । गी.

**अधिनिषेदुः** - आश्रिताः । तै.

**अधिपः** - शेषी । श्वे.

**अधिपतिः** - इन्द्रियम् (सौगतमते) । श्री. इन्द्रियम् । तद्धि ज्ञानस्य रूपादिषु पञ्चसु एकैकमात्रविषयत्वनियामकम् । नियामकश्च लोके अधिपतिरुच्यते (सौगतमते) । बृ. इन्द्रियम्, चक्षुरादि (सौगतमते) उदितस्य ज्ञानस्य रसादिसाधारण्याद्रूपादिविशेष-नियमनात् इन्द्रियस्याधिपतित्वम् । नियामकस्याधिपतित्वात् । सर्वा. परमात्मा ।

श्रु. प्राप्यः । वै. शेषी । छा. बृ. [अधिकः पतिः । ई.]

**अधिपत्नी** - अधिकस्य भगवतः पत्नी आश्रितसंरक्षणयज्ञे सहधर्मचारिणी । "पत्युर्नो यज्ञसंयोगे" इति पाणिनिः । श्रीसू.

**अधिपुरुषः** - अधिकारिपुरुषो ब्रह्मा । अथवा भगवन्तमधिकरणीकृत्य पुरुषः । आत्मसमष्टिरूपो हिरण्यगर्भः । वि.

**अधिभूतम्** - अधिभवतीति, प्राणिजातम् । ता. क्षरो भावः, वियदादिभूतेषु वर्तमानः तत्परिणामविशेषः क्षरणस्वभावो विलक्षणश्शब्दस्पर्शादिः साश्रयः । गी. भूतेषु पृथिव्यादिषु वर्तमानम् । सुबा.

**अधिमात्रम्** - अधिकाःऽमात्राः अंशाः यस्य तत् । मा. मात्रासु वर्तमानः य ओङ्कारो नादात्मकः सः । मा.

**अधियज्ञः** - यज्ञैराराध्यतया वर्तमानः । गी. यज्ञे सम्बध्यमानः अधियज्ञः । तत्र च सर्वेश्वरस्य आराध्यतया सम्बन्धः । ता.

**अधिषवणम्** - अधिषवणफलकम् । बृ. अधिष्ठातानिमित्तकारणम् । वे. प्रेरकः । वे. स्वतन्त्रः । श्रु.

**अधिष्ठानम्** - उपादानद्रव्यस्य कर्त्रा अवष्टम्भः । तच्चाभिमतकार्यानुगुण मध्यमावस्थाप्रापणम् । ता. परकीयेषु निर्वाहकत्वादिरूपेण संसर्गः । ता. भ्रमधर्मी । च. मन्दराद्रेः । अधिष्ठानतया भ्रमन् सोऽयमाधितिष्ठत्यस्मिन्निति । सह. शरीरम् । श्रु. शरीरम् । अधिष्ठीयते जीवात्मनेति महाभूतसङ्घातरूपं शरीरमधिष्ठानम् । गी. 'कृत्यल्युटो बहुलम्' इति कर्मार्थतया शरीरेऽधिष्ठानशब्दः । ता.

**अधिष्ठितम्** - उपविष्टम् । या.

**आधष्ठ्यत्वम्** - कस्यचित् व्यापारेण व्यापार्यत्वम् । सर्वा.

**अधिसानो** - सानुवदुन्नतप्रदेशे । तै.

**अधीकर्मतया प्रकाशमानत्वम्** - ज्ञानान्तरानधीनप्रकाशवत्त्वम् । रत्न.

**अधीतवेदः** - गृहीतस्वाध्यायः । नी कृतसाङ्गसशिरस्काध्ययनः । श्रु.

**अधीराः** - अध्रुवविषयकपरित्यागौ-पयिकधैर्यरहिताः कापुरुषाः। व.

**अधृतः** - छायानुप्रवेशेन परचित्त-वशीकरः, अनुध्यानेन तच्चित्ताधिष्ठनम्, सजीवस्य उत्थितजीवितस्य वा शरीरस्यानुप्रवेशनम्, इष्टापूर्ताधिष्ठानम्, इति चतुर्विधं यत्र कामावसायित्वमाहुः, तादृशवैश्वरूप्य प्रकर्षेण क्वचित् धृतो नियमितो नेति । सह.

**अधृतिः** - अप्रीतिः । बृ.

**अधोक्षजः** - अधोमुखानि अन्तर्मुखानि अक्षाणि इन्द्रियाणि येषां ते अधोक्षाः, तेषु जायते प्रादुर्भवतीति अधोक्षजः। उपासकहृदयकमलवासी । सुन्दर. अधःकृतेन्द्रियवृत्तिः । भा. सर्वैः उपभुज्यमानोऽपि क्षयरहितः । अधो न क्षीयते जातु । सह. ["अमृतोदधिवत्सर्वै-र्भुज्यमानोऽपि सर्वदा । अधो न क्षीयते जातु

यस्मात्तस्मादधोक्षजः ॥'' अधोक्षेषु जायत इति । जितेन्द्रियाणां मनसि सन्निधत्त इति यावत् । यद्वा अधोक्षेभ्यो रामकृष्णादिरूपेण जायत इति । ई.]

**अधोपहासः** - मैथुनम् । बृ.

**अध्यक्षः** - अधिकं अश्नुत इति । ता. करणाधिपो जीवः । श्रु. स्वरूपस्वभाव-विभूतिनिर्वाहकः । अधि.

**अध्ययनम्** - अक्षरराशिग्रहणफलकं आचार्योच्चारणानूच्चारणम् । त. आचार्योच्चारणानूच्चारणम् अक्षरराशि-ग्रहणफलकम् । श्री. (जपविलक्षणं) उच्चैरुच्चारणम् । वे. वेदाभ्यासः। छा. सनियमकोच्चारणम् । श्रु. स्वतन्त्रोच्चारण-शक्तिफलकगुरुमुखोच्चारणानूच्चारण-रूपम् । अधि. [श्रवणम् । र.]

**अध्यर्धः** - अर्धाधिकः (एकः)। कतमोऽध्यर्धः इति। योऽयं पवत इति । वायुरित्यर्थः। यदयमेक एवेव पवते कथमध्यर्ध इति। यदस्मिन्निदं सर्वमध्यार्ध्नोत् तेनाध्यर्ध इति । अध्यार्ध्नोत् । ऋधुवृद्धौ । अधिकवृद्धिं यस्मिन्? वायाविदं जगत् प्राप्तं तेनायं वायुरध्यर्ध इत्युच्यते । बृ.

**अध्यवसायः** - आलोच्य मयेदं कर्तव्यमिति योऽयं चितिसन्निधानात् आपन्नचैतन्याया बुद्धेः निश्चयः सः । (सांख्यमते) । सर्वा.

**अध्यात्मम्** - अनात्मभूतं आत्मनि सम्बध्यमानम् । गी. आत्मन्यधिवसनात् सम्बध्यमानमित्यध्यात्मशब्दनिर्वचनम् । तत एव सिद्धमनात्मत्वम् । ता. आत्मनि सम्बध्यमानम् । ता. आत्मन्युपासनम्; आत्मशब्दो देहपरः । श्रु. आत्मनि शरीरे वर्तमानम् । सुबा. इन्द्रियमनःप्राणादि-सङ्घातरूपात्मविषयं उद्गीथोपासनम् । छा. वेदान्तभागः । शरीरे । पा.

**अध्यात्मचेतः** - आत्मनि यच्चेतः तदध्यात्मचेतः । भगवच्छरीरतया भगवत्प्रवर्त्यात्मस्वरूपानुसन्धानम् । गी. परशेषत्वादि विशेषित यथावस्थितात्म-गोचरबुद्धिः । ता.

**अध्यात्मज्ञाननित्यत्वम्** - आत्मज्ञान-निष्ठत्वम् । गी.

**अध्यात्मदीपः** - आत्मनि अध्यात्मम्, आत्मनि दीपः दीपवत् स्वप्रकाशं नित्यं असंकुचितं धर्मभूतं ज्ञानं यस्य सः । भा.

**अध्यात्मनित्याः** - आत्मनि यत् ज्ञानं तदध्यात्मम्; आत्मज्ञाननिरताः । गी.

**अध्यात्ममाया** - योगप्रभावः । भा.

**अध्यात्मयोगः** - प्राप्तृस्वरूपविषययोगः। श्रु.

**अध्यात्मविद्या** - जीवपरमात्मयाथा-त्म्यविद्या । गी. ता.

**अध्यात्मशिक्षया** - आत्मनि अध्यात्मम्, स्वात्मपरात्मयाथात्म्य-विषयकं ज्ञानम्; तस्य शिक्षा सम्यगुपदेशः तया । भा.

[**अध्यात्मश्रुतयः** - उपनिषदः । र.]

**अध्यात्मसंज्ञितम् (वचः)** - आत्मनि

प्रतिपादकत्वेनाधिवसनात् अध्यात्मसंज्ञितं वचः आत्मनि वक्तव्यं वचः । गी. ता.

**अध्यायः** - वेदः । रा. ग्रन्थविशेषः । तै.

**अध्यायसमयः** -वेदारम्भसमयः । रा.

**अध्यायिकः** -अध्ययनवान् । अध्यापकः । तै.

**अध्यासः** - अन्यस्मिन्नन्यधर्मानुसन्धानम् । श्री. प्रथमभ्रमः । श्रु.

**अध्यासभिन्नभ्रमः** - अध्यासो द्र. । श्रु.

**अध्याहारः** - शेषपूरणम् । च.

**अध्युषितः** - सहवासी । सुहृत् इति यावत् । रा.

**अध्युषितम्** - अधिष्ठितम् । वर.

**अध्यूढम्** - उपरि स्थितम् । छा.

**अध्येति** - इक् स्मरणे । उपास्त इत्यर्थः । यद्वा इण् गताविति गत्यर्थानां ज्ञानार्तत्वादवगच्छतीत्यर्थः । छा.

**अध्येमि** - स्मरामि । वेद्मीति यावत् । छा.

**अध्रियत** - ऐच्छत् । बृ. प्रवृत्तम् । बृ.

**अध्रुवत्वम्** - क्षयिष्णुत्वम् । गी.

**अध्रुवाणि (नह्यध्रुवैः प्राप्यते)** - अध्रुवफलसाधनतया चोदितानि । त.

**अध्वनाम्** - अध्वगमनानाम् । बृ.

**अध्वर्यवः** - यजुर्वेदाध्यायिनः । सर्वा.

**अनः** - प्राणः। छा. बृ. श्रु. सर्वा.

**अनः (स्)** - शकटम् । बृ.

**अनघः** - अकर्मवश्यत्वेन तन्मग्नजीव-विलक्षणः । सह. रम्यः । या. पापप्रतिस्पर्धी । सह. अघं पापम्, तद्विरुद्धः । सकलपाप-क्षयकारी । अघं दुःखम्, दुःखविरोधी । या.

**अनघोद्यमैः** - अवितथोद्योगैः । अंहोदुःखव्यसनवाचिनोऽघशब्दस्य तत्र तत्रोचिते दोषान्तरे लक्षणा । या.

**अनङ्गाङ्गीकारः** - अप्रयोजकस्य प्रयोजकत्वेनाङ्गीकारः । श.

**अनड्वान्** - कालचक्रपरिवर्तनहेतुतया अनडुच्छब्दवाच्यः सूर्यः । श्वे.

**अनतिप्रश्न्या** - अतिप्रश्नमर्हतीति अतिप्रश्न्या आक्षेपार्हा । सा न भवतीत्यनतिप्रश्न्या । आक्षेपमुखेन ज्ञातुमयोग्या । बृ.

**अनध्यवसितः**- असाधारणोऽनैकान्तिक भेदः । न्याप.

**अननम्** - स्थितिः । श्रु.

**अननुभाषणम्** - त्रिभङ्ग्यन्तरोक्तस्य प्राश्निकविदितस्य अनुद्भावितस्वाज्ञानेन यथोचितमनुभाषणाभावः अननुभाषणम् (निग्रहस्थानम्) । न्याप.

**अननुविद्य** - अनुपास्य । छा.

**अनन्तः** - अपरिच्छिन्नः । वर. आदिशेषः । वर. त्रिविधपरिच्छेदरहितः । रा. त्रिविधपरिच्छेदरहितः। परिच्छेदत्रयराहित्यं नाम सर्वदेशसर्वकालव्यापित्वसर्वान्तर्या-मित्वरूपम् । ता. देशकालवस्तुपरिच्छेद-रहितः । सह. परमपुरुषः । 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ता' इत्यत्र। श्रु. विष्णुः। सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्ये पुल्लिङ्ग-द्वितीयानन्तपदेन रूढ्युपस्थापिते विष्णौ

योगार्थस्य त्रिविधपरिच्छेदराहित्यस्य बोधनात् । रत्न. सत्यकामत्वाद्यनन्त-गुणाश्रयः । श्वे.

**अनन्तम्** - असंख्यातम् ।सुन्दर. त्रिगुण-द्रव्यस्यानन्तत्वमधःप्रभृतिदेशेषु । ऊर्ध्वं हि भोगविभूत्यवच्छिन्नम् । न्यासि. देशकालपरिच्छेदरहितम् । वि. देशकालवस्तुपरिच्छेदरहितम् । तै. सुबा. श्री. न्यासि. स्वरूपतोऽपरिच्छेद्यम् । बृ.

**अनन्तजित्** - अन्तं परिमितशिशु-रूपस्याप्यस्य, महिमावधिं जयति अभिभवति प्रधर्षयति यः, स नास्ति कश्चित् कदाचित् कथञ्चिदपि । सह.

**अनन्तत्वम्** - असंख्येयत्वम् । श्री. असंख्यातत्वम् । गद्य. त्रिविधपरिच्छेदरहितत्वम् । श्रु. त्रिविधपरिच्छेदरहितत्व रूपमिदं श्रियोऽपि । श्रीत. पतिमात्रनिष्ठ-ब्रह्मशब्दरूढिनिमित्तं सर्वप्रकारेण सर्वोत्कृष्टत्वरूपमिदं न श्रियः । श्रीत. देशकालवस्तुपरिच्छेदरहितत्वम् । अधि. गद्य. परिच्छेदरहितत्वम् । श्री. स्वरूपरूप-गुणविभूतिभिः अपरिच्छेद्यत्वम् । स्तो.

**अनन्तबाहुः** - असङ्ख्येयबाहुः । गी.

**अनन्तरः** - अन्तरवयवव्यतिरिक्तः । बृ. अन्तरङ्गव्यतिरिक्तः । श्रु. नाशरहितः । ''नाशाभावादनन्तरः। अन्त शब्द पर्यायोऽत्रान्तरशब्दः'' । मा(कू).

**अनन्तरम्** - बहिः आदित्यमण्डलादौ प्रकाशमानम् । सुबा.

**अनन्तरूपः** - सद्यः सम्पाद्यानि अनन्तानि बहूनि रूपाण्यस्येति । सह. 'नान्तं न मध्यं न पुनस्तवादि'मित्युक्तरीत्या अन्तरहित-रूपवान् । ''पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानी''त्युक्तरीत्या वा अनन्तरूपः। शतशस्सहस्रशश्च नाना-विधानीति परव्यूहविभवाद्यवच्छेद-क्रोडीकृतानन्ताप्राकृतविग्रहवत्त्वं दर्शितम् इति । यत् एकादित्यमण्डलवर्ति रूपम्, तत्समानमनन्तब्रह्माण्डेष्वादित्यमण्डल-वर्त्यसंख्यातं रूपम् । एवं श्रीविश्वरूपादि-रूपान्तरेष्वपि । ता.

**अनन्तरूपम्** - अपरिमितावतारविग्रहम् । वै. नानारूपम् । तै.

**अनन्तर्हितम्** - अव्यवहितम् । बृ.

**अनन्तलोकः** - विष्णुलोकः । क.

**अनन्तवान्** - केनचिदपि पारं गन्तुमशक्य इत्यर्थः । अजेय इति यावत् । छा.

**अनन्तवीर्यः** - अनवधिकातिशय-वीर्यादिगुणः । गी.

**अनन्तश्रीः** - प्रपन्नेभ्यो देयाः स्वप्राप्ति-पर्यन्ता अनन्ताः श्रियोऽप्यस्येति । सह.

**अनन्तहुतभुग्भोक्ता** - सप्ततन्तुषु हुतं भुङ्क्त इति हुतभुक् इन्द्रः; स च, भुनक्ति प्रजाः पालयतीति भोक्ता प्रजापतिः; स च इति द्वन्द्वः । तौ अनन्तौ अनवधिक-माहात्म्यतया महान्तौ अस्येति । सह.

**अनन्तात्मा** - कमठोपरि जगदाधार-स्तम्भभोगिस्वरूपः । सह.

**अनन्तादिः** - आद्यन्तरहितः । वि.
**अनन्ते** - असंख्यातव्यक्तिके । श्वे.
**अनन्दाः** - सुखलेशशून्याः अन्धतमसावृताः (केचन लोकाः) । बृ.
**अनन्नम्** - अभक्ष्यं गजाश्वादिकम् । बृ. वागादिकम् । छा.
**अनन्यः** - अविभक्तः । रा.
**अनन्यम्** - न विद्यते अन्यत् अशरीरभूतं वस्तु यस्य । भा. भगवद्व्यतिरिक्ते असम्भावितम् । व.
**अनन्यगतिः** - शरण्यान्तरप्राप्यान्तररहितः । स्तो .
[**अनन्यगतित्वम्** - प्रयोजनान्तर वैमुख्यम् । शरण्यान्तरवैमुख्यं वा । एतत् (शरण्यान्तर वैमुख्यम्) प्रयोजनान्तर वैमुख्येनाप्यर्थसिद्धम् । र.
**अनन्यचेताः** - भगवदेकान्तधीः । च.
**अनन्यथासिद्धत्वम्** - तदर्थप्रमाणतां विनानुदयत्वम् । विरुद्धार्थत्प्रमाणाबाधेनानुदयत्वमिति यावत् ।श्रु.
**अनन्यदृष्टिः** - अन्यनिरपेक्षदृष्टिः । अनन्येति नैरपेक्ष्यार्थकनञ्समासः । या.
**अनन्यधी** : - अन्यस्मिन् प्रयोजनान्तरे भोग्यताबुद्धिः न विद्यते यस्य सः । वर.
**अनन्यभक्तिः** - न विद्यते अन्यत् यस्यास्सा अनन्या । प्रयोजनतया यादृशभक्तिसम्बन्धि अन्यन्न भवति , तादृशी भक्तिरनन्या । अनन्यप्रयोजनेति यावत् । अनन्यदेवताकेत्येके । ता.
**अनन्यभाक्** - नान्यं भजतीति । देवतान्तरभक्तिरहितः । भा.
**अनन्यभावाः** - अन्यो विषयत्वेन नास्ति यस्य सोऽनन्यः । अनन्यो भावो येषां ते; एकान्तिनः । या.
**अनन्ययोगः** - अनन्यप्रयोजनो योगः । गो.
**अनन्यशरणः** - उपायान्तरशून्यः । गद्य. कर्मज्ञानसाध्यभक्त्यभाववान् । सुन्दर.
[**अनन्यशरणत्वम्**-उपायान्तररहितत्वम् । र.]
**अन[न्]यसाधनः** - स्वप्रकाशः । श्रु. सर्वा.
**अनन्या** - (श्रीः) नास्ति मनोरथविषयत्वेन अन्यो यस्यास्सा अन्यासङ्गरहिता । या.
**अनन्याः** - एकान्तिनः। या. [उपायान्तरनिरपेक्षाः । अत्र अपेक्षाभावो नञर्थः । तथा शृङ्गारप्रकाशिकायां अपेक्षाभावमपि नञर्थमुक्त्वा "अभूषितः कान्तः" इत्युदाहृतम् । या.]
**अनन्याधिपतिः(मुक्तः)**-स्वाभाविक शेषिणः परमपुरुषादन्यो नाधिपतिर्मुक्तस्येत्यर्थः । श्रु.
**अनन्याधिपतित्वम्** - विधिनिषेधायोग्यत्वम् । छा.
**अनन्याधीनः** - स्वतन्त्रः । वर.
**अनन्याधीनत्वम्** - इदं श्रीश्रीशसाधारणं लक्षणम् । श्रियोऽपि स्वतस्तदधीनत्वाभावात् । श्रीत.

**अनन्वितम्** -उचितान्वयशून्यम् । व्यवहितान्वयमप्यनन्वयम् । प्रतीत्य भावाविशेषात् । न्याप.

**अनपगमः** - नापगच्छतीत्यनपगमः । कौ.

**अनपयन्तः** - अयप्यरहताः। श्रु.

**अनपायवाचः** - नित्यत्वेन वक्तृदोषमूलकबाधितार्थपरत्वरूपापायरहिताः वाचः वेदाः ।व.

**अनपावृतम्** - तिरोहितम् (ब्रह्म) ।सुबा.

**अनभिध्या** - अभिध्याराहित्यम् । अभिध्या द्र. । श्रु.

**अनभिनिहितः** - अद्रुतोच्चारितः । छा.

**अनभिष्वङ्गः (पुत्रदारगृहादिषु)** - तेषु शास्त्रीयकर्मोपकरणत्वातिरेकेण श्लेषरहितत्वम् ।गी.

**अनयः** - स्वव्यतिरिक्तशुभावहविधिरहितः । अयः शुभावहो विधिः सोस्मादन्यो जगतां नास्तीति अनयः । सह.

**अनरण्यः** - अयोध्याधिपतिः कश्चिन्नृपः । रा. बाणनृपपुत्रः । रा.

**अनर्थः** - अर्थकामैः अव्याजं अप्रार्थनीयः । सह. व्यसनम् । रा. [प्रतिकूलप्राप्तिः । अनुकूलनिवृत्तिः । र.]

**अनलः** - अशक्तः । अति . न किञ्चित् कृतं एषां भक्तानां मयेत्यवितृप्तः; स्वभक्तविषयान्यकर्तृकापराधान् सोढुं पर्याप्तो नेति वा । सह. बहमुखमुपकृत्यापि अनुग्रहमहिम्नो नालं न पर्याप्तं अस्येति वा; अलः पर्याप्तो नेति वा । सह. योग्यैर्लब्धैरलंभावरहितः । यद्वा अग्निः । ता.

**अनवकाशत्वम्** - विषयान्तरालाभः । अप्रमाणकोटिनिवेशाभावो वा । श्रु.

**अनवक्लृप्तिः** - असिध्दिः । श्रु.

**अनवद्यम्** - हेयप्रत्यनीकम् । सुन्दर.

**अनवधिकम्** - भगवत इव श्रियोऽपि ऐश्वर्यातिशयस्यानवधिकत्वमेव । अनवधिकमत्रापि स्वापेक्षया उत्कृष्टावधिरहितत्वम् ।

**अनवधिकत्वम्** - उत्कृष्टावधिराहित्यम् । ता. स्वापेक्षयोत्कर्षावधिराहित्यम् । गद्य.

**अनवधिकातिशयत्वम्** - उत्कृष्टावधिरहितोत्कर्षत्वम् । ग्तो. स्वापेक्षया उत्कृष्टावधिरहितातिशयत्वम् । गद्य.

**अनवधिकातिशयस्वाम्यम्** - अनवच्छिन्नसर्वविषयस्वामित्वम् । गद्य.

**अनवरुध्य (अश्वम्)** - अवरोधनमकृत्वा; उत्सृष्टबन्धनमेव कृत्वा । बृ.

**अनवसादः** - अवसादविपर्ययः । श्रु. अवसादो द्र. दैन्याभावः । य.

**अनवस्था** - अपर्यवसिताप्रामाणिकप्रवाहप्रसक्तिः। न्याप. अप्रमाणिकानन्तपदार्थपरंपराप्रसङ्गः । उपर्युपर्यपेक्षा । य.

**अनवस्थाभासः** - प्रमाणसिद्धप्रवाहप्रसक्तिः । न्याप.

**अनवस्थितः** - अमर्यादः । रा.

**अनवेक्षितुम्** - उपेक्षितुम् । रा.

**अनवेक्ष्य** - अविमृश्य । गी.

**अनसूयुः** - गुणेषुगुणाध्यवासायविशिष्टः । ता.

**अनसूरिः**- विपश्चित् । असूरिर्न भवतीत्यनसूरिः । छा.

**अनहङ्कारः** - अनात्मनि देहे आत्माभिमानरहितत्वम् । गी.

**अनहङ्कृतिः** - देहात्मभ्रान्तिरहितः । भा.

**अनहंवादी** - कर्तृत्वाभिमानरहितः । गी. अहंवदनशीलोऽहंवादी । तदन्योऽनहंवादी । तत्र मनःपूर्वा हि वागित्यभिप्रायेणाह - कर्तृत्वाभिमानरहित इति । ता.

**अनाकाशम्** - विवररहितम् । वि.

**अनाख्येयम्** - रूपवर्णादीनां अगोचरस्वरूपम् ।वि.

**अनात्मनाम्** - अयोगिनाम् । न विद्यते आत्मा अन्तःकरणं स्ववशे येषां तेषाम् । भा.

**अनात्म्यः** - अशरीरः । कर्मकृतशरीररहितः । तै. आत्म्यं व्याप्यं कर्मकृतशरीरं तद्रहितः । श्रु.

**अनात्म्यम्** - अशरीरम् । व्याप्यं हि शरीरमात्म्यम् । त.

**अनाथः** - रक्षकरहितः । रा.

**अनादरः**- अनङ्गीकारः । च. तात्पर्याभावः । श्रु. अवाप्तसमस्तकामत्वेन आदर्तव्याभावात् आदाररहितः । छा . श्री.

**अनादि** - कारणरहितम् । ता. आदिमतोऽजान्मुक्तात्मनो विसजातीयः । अजत्ववेषेणानादिः परमात्मा । मुक्तात्मनो ह्यजत्वमादिमत् । हेयसम्बन्धस्य पूर्ववृत्तत्वात् । ता.

**अनादिः** - चतुर्मुखैरन्यपरैर्न स्वामित्वेनादीयत इति । उपसर्गे घोः किः । सह.

**अनादित्वम्** - अनारभ्यत्वम् । गी.

**अनादिनिधनः**- (नित्ययौवनजनिजरामरणादिदुरितदूरनित्यविग्रहतया) न विद्यते आदिनिधने ( आद्यन्तौ) अस्येति । सह.

**अनाद्यन्तवती** - आद्यन्तशून्या । म.

**अनाम** - देवमनुष्यादिनामरहितम् । वि.

**अनामयः** -संसारमहाव्याधिविरोधी । सह.

**अनामयम्** - अरोगताहेतुः । गी. दुःखशून्यम् । श्वे.

**अनामयं पदं** - स्थानविशेषो वा परमप्राप्यं परमात्मस्वरूपं वा, प्रकरणवशादत्र ब्रह्मपर्यन्तजीवस्वरूपंवा, पद्यते गम्यते इति पदम् । त्रयमपि साक्षादन्यथा वा मुक्तप्राप्यत्वात् पदशब्दवाच्यम् । ता.

[**अनामिका** - अङ्गुलिविशेषः । सच्च.]

**अनारब्धकार्यः - (अपचारः)** - प्रारब्धकार्यकर्मनिरुध्दावसरतया अनुपक्रान्तफलः । गद्य.

**अनारम्बणम्** - आलम्बनान्तरशून्यम् । छा.

**अनार्यः** - दुष्टहृदयः । रा.

**अनार्यम्** - अमङ्गलम् । वि.

**अनावृतत्वात्**- असंकुचितज्ञानत्वात् । भा.

**अनावृत्तिः**-पुनः प्रकृतिवश्यतालक्षणावृत्त्यभावः । छा.

**अनाशकम्** - अनशनम् । सुबा. फलाभिसंधिरहितं यज्ञादिकम्, विनाशकेन फलभोगेन तदभिसंधिकर्तृत्वादिना च रहितत्वात् । सुबा.

**अनाशकम् (तपः)** - फलाभिसन्धिरहितम् । न विद्यते आशा फलेषु यस्य तदनाशम्, स्वार्थे कप्रत्ययः, अनाशकम् । बृ. (तपः) अनशनरूपम् । आशः अशनम् । भावे घञ् । अनाशः अनशनम् । अनाशकम् (कः ?) स्वार्थे कप्रत्ययः । बृ.

**अनाशकं कर्म** - अनभिसंहितफलकं कर्म । च.

**अनाशकायनम्** - अनशनलक्षणो मार्गः । छा.

**अनाशकेन** - अनशनेन, नाशकादन्येन इति वा । (....यज्ञेन दानेन तपसानाशकेन) । त.

**अनाशाः** - निष्कामाः । भा.

**अनाश्वासः** - विश्वासाभावः । नि.

**अनिकेतता** - गृहाद्यभिमानराहित्यम् । भा.

**अनिङ्गम्** - स्थावरम् । वै.

**अनित्यः** - कर्मवश्यः । श्रीत.

**अनित्यत्वम्** - उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वम् । श्री. कादाचित्कत्वम् । श्रु. परिमितकालवर्तित्वम् । विनाशः । श्रु.

**अनित्यहृदयः** - चञ्चलमनस्कः । रा.

**अनिदम्पूर्वा** - अनादिकालप्रवृत्ता । या.

**अनिदम्प्रथमम्** - कालापरिच्छिन्नम् । वै.

**अनिंद्रनिद्रा** - योगनिद्रा । निद्रा नाम विषमपरिणामसंकल्पराहित्यम् । न्यासिटी. रत्न.

[**अनिबद्धप्रलापः** - असंगतभाषणम् । र.]

**अनिमित्तनिमित्तम्** - कामादिनिमित्तरहितम् । निमित्तं फलम् । अनिमित्तं अप्रवर्तकं निमित्तं फलं यत्र । भा.

**अनिमिषः (दिव्यमीनतनुः)** - सत्सु सततजागरूकतया निमिषो नेति अनिमिषः । सह.

**अनियतम्** - व्याप्तिशून्यम् । श्रु.

**अनियन्ता** - अव्यापकः । सर्वा.

**अनियमः** - व्याप्त्यभावः । सर्वा.

**अनियाम्यः** - अव्याप्यः । सर्वा.

[**अनियोज्यः** - अपरप्रेर्यः । र.]

**अनियोज्यत्वम्** - अनितरचेतनप्रेर्यत्वम् । श्रु.

**अनिरस्तः** - बहिरक्षिप्तः । "निरस्तं त्वरितोदितमि"त्यमरः । छा.

**अनिरुक्तः** - अस्पष्टः । छा. निरुक्तभिन्नः । बद्धावस्थायां देवादिशब्दैः उक्ताः जीवाः । परमात्मनः तद्व्यावृत्तिरत्र विवक्षिता । श्रु. अशब्दगोचरः । त.

**अनिरुक्तम्** - जातिगुणादिशून्यं चेतनजातम् । तै.

**अनिरुक्ते** - जातिगुणादिवाचिदेवादिपदवाच्ये । तै.

**अनिरुद्धः** - निर्धूतनिरोधनिरवधिक-

जीवलोकजीवातुदिव्यचेष्टितः । निरवधिकजीवलोकजीवातुदिव्यचेष्टिततया निरुद्धः प्रतिरुद्धो नेति। सह. ब्रह्मा। 'राजसी चाऽनिरुद्धाख्या मूर्तिर्ब्रह्मेति संज्ञिता' । वेकौ. शक्तितेजोद्वन्द्ववान्। जगद्धरणतत्त्व-ज्ञापनकरो व्यूहः। न्यासिटी. वासुभाण्डाख्ये भूभागे जनार्दनाख्यः अनिरुद्धः वसन्, नित्यसंनिहिततया वसन्, अप्रतिरुद्धः । सह. शक्तितेजोभ्यां पूर्णः । य. लोकानां प्रभवाप्ययः। वि.

**अनिर्दशान्** - अनतिक्रान्तदशदिनान्। भा.

**अनिर्देश्यम्** - इतरसजातीयतया अचिन्त्यम्। वि. देहादन्यतया (देवत्वादि-प्रवृत्तिनिमित्तविरहेण साक्षात्) देवादि-शब्दानिर्देश्यमात्मस्वरूपम् । "यद्यपि देहादन्यस्मिन्नपि देहद्वारा देवादिशब्दाः प्रवर्तन्ते, तथापि विविच्य निर्देष्टव्ये प्रकृतिसंबन्धरहिते चापवृक्तात्मस्वरूपे तावत् तादृशवृत्तिरपि न संभवती"ति। ता. (**ब्रह्म**)- शतयोजनत्वलक्षयोजनत्वादि-विशेषणैर्निर्देष्टुमशक्यम्। सुबा.

**अनिर्देश्यवपुः** - तत्तद्युगगुणानुग्राहक-रूपवैचित्र्यात् अनिर्देश्यं इदमीदृशमिति निर्देष्टुमशक्यं वपुः शरीरमस्येति । सह. षाड्गुण्यविग्रहत्वेनानुपमत्वात् अनिर्देश्यं (इदमीदृशमिति निर्देष्टुमशक्यम्) वपुः शरीरं अस्येति। सह.

**अनिर्वेदः** - अक्लेशः। रा. उत्साहः। रा.

**अनिर्वचनीयता** - विद्वत्सन्निधौ दुरुपपादत्वम्। श्रु.

**अनिर्वचनीयत्वम्** - सदसद्विलक्षणत्वम्। सर्वा.

**अनिर्वाच्यत्वम्** - सत्त्वात्यन्ताभावासत्त्व अत्यन्ताभावोभयवत्वम् (अद्वैते)। रत्न.

**अनिर्विण्णः** - अनलसः। सृष्ट्यादेस्त-त्तदिष्टदानस्य चासकृत्प्रयुक्तस्य, संसारिषु विषयोन्मादादसम्मुखीनेषु, वैफल्येऽपि, पुनस्तदावर्जन दुराशयाऽनुच्छिन्नजगद्व्या-पारत्वेन निर्विण्णोऽलसो नेति । सह. आश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं प्रापय्य च तमशोच्यं पश्यन् निर्वेदरहितः। सह.

**अनिलः** - इल प्रेरणे। प्रेरयतीति इलः। सोऽस्य नास्तीति। सह. बद्धमुक्तनित्यानां अननात् उज्जीवनात् अनिलः । "श्वस प्राणने अन च" । सलिकल्यनीत्यादिना इलच्। सह.

**अनिलम्** - परिशुद्धः प्रत्यगात्मा; निलयनरहित्वात् क्वचिदपि व्यवस्थितत्वा-भावाच्च। ई.

**अनिलयनः** - आधाररहितः । श्रु. अनाधारः। त.

**अनिलयनम्** - अचेतनवर्गाधारभूतं चेतनजातम्। तै. अनाधारम्। श्रु.

**अनिलयने** - आधारशून्ये। तै.

**अनिवर्ती** - प्रवृत्तिमार्गरतान् धूमादिना पितृयाणेन पथा पुनरावर्तयन् संसारान्न निवर्तयतीति। सह.

**अनिष्टादिकारिणः** - ये विहितं न कुर्वन्ति निषिद्धं च कुर्वन्ति ते उभयेऽपि पापकर्माणः । श्री. विद्याकर्मविधुराः, ''तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्वम्रियस्वेत्येवं तृतीयं स्थान''मिति तृतीयस्थानशब्दिताः । कौ.

**अनिष्टादिकारी** - दुष्कृतकारी । कौ.

**अनीडाख्यम्** - अनीडत्वेनानिलयत्वेन अनाधरत्वेन ख्याप्यमानम् । श्वे.

**अनीदृशम्**-(वैष्णवं पदम्) अपरिच्छिन्न-रूपगुणविभूतिकम् । वै. चेतनाचेतन-विजातीयम् । वै.

**अनीशः** - नियामकरहितः । रा. प्रणम्रपराधीनः तेष्वीशो नेति । सह.

**अनीशया** - (ईशनविशिष्टादन्यया) भोग्यभूतया प्रकृत्या । 'अनीशत्वेनेति केचित्' । श्वे.

**अनीशा** - भोग्यभूता प्रकृतिः । श्री.च. स्वयं किञ्चित्कर्तुं अशक्ता । रा.

**अनीश्वरः** - जगद्व्यापाररहितश्चेतनः । न्याप. शास्त्रवश्यः । भा.

**अनीश्वरम्** - सत्यसङ्कल्पेन परेण ब्रह्मणा सर्वेश्वरेण अनियमितम् । गी.

**अनीश्वरेण** - कर्मवश्येन । श्रु.

**अनीहः** - सङ्कल्पेतरव्यापारशून्यः । भा. परिचर्यारहितः । श्रीस्त.

**अनीहैः** - निष्कामैः । भा.

**अनु** - पश्चात् । बृ. सदृशम् । रा.

**अनुकम्पनीयत्वम्** - दीनत्वम् । नि.

**अनुकर्षः** - रथस्याधस्स्थितं काष्ठम् । वि.

**अनुकारः** - तद्वद्वृत्तिः । श्रु. साम्यम् । श्री. सारूप्यम् । सुन्दर.

**अनुकूलः** - निसर्गमहत्त्वेन विस्मयमद-मानवर्जनात् अनुद्वेलतया अनुकूलः । कूलमनुवर्तमान इति वा, भक्तभव्य इति वा अनुकूलः । सह. प्रियङ्करः । रा.

**अनुकूलत्वम्** - स्वतः इष्टत्वम् । तच्चानिष्टनिवृत्तिरूपतया इष्टसाधनतया च विनापीष्टत्वम् । श्रु.

**अनुकृतिः** - अनुकारः । साम्यम् । छा.

**अनुक्रिया** - अनुकारः । वर.

[**अनुक्रोशः** - कृपा । र.]

**अनुक्षणत्वम्** - अनन्तरक्षणवर्तित्वम् । सर्वा.

**अनुगतिः** - अनुप्रवेशः । श्री. व्याप्तिः । सर्वा.

**अनुगमः** - पूर्ववाक्यप्रकृतस्योत्तरवाक्य-संबन्धः । श्रु.

**अनुगृहीतवान्** - आदरेण परिगृहीतवान् । सुन्दर.

**अनुग्रहः** - उपकारः । रा. प्रसादः । श्रु. फलप्रदानम् । रा. अनुप्रवेशः । वि.

[**अनुग्रहदशा** - (भगवतः) भक्तकृतार्थी-करणावस्था । या.]

**अनुचरः** - अनुगुणकैङ्कर्यवान् । रा.

**अनुचरन्** - तत्तदवस्थोचितवृत्त्या सेवमानः । स्तो.

**अनुचराः** - मन्त्रिणः । रा.

**अनुच्छित्तिधर्मा** - न विद्यते उच्छित्तिः विनाशो यस्य सः अनुच्छित्तिः । नित्य इत्यर्थः । अनुच्छित्तिः धर्मो यस्यासावनुच्छित्तिधर्मेति पुनर्बहुव्रीहिः । नित्यज्ञानवानिति भावः । ई (17.कू.) न विद्यते उच्छित्तिः यस्य सोऽनुच्छित्तिः । अविनाशीति यावत् । अनुच्छित्तिः धर्मो यस्य सोऽनुच्छित्तिधर्मा । बहुव्रीहिगर्भो बहुव्रीहिः । आत्मनो ज्ञानलक्षणो धर्मोप्यविनाशीत्यर्थः । बृ.

**अनुच्छिष्टम्** - अभिनवोदकम् । अथवा अवत्सायाः पयः । वि.

**अनुत्तमः** - उत्तमो नास्ति यस्मात् सः । सह.

**अनुत्तमम्** - अस्मादुत्तमं नास्तीत्यनुत्तमम् । अनवधिकातिशयम् । ता. परमम् । गद्य.

**अनुत्तमं पदम्** - पदमनुत्तमं द्र. । सह.

**अनुत्तमं श्रेयः** - मुक्तिः । सह.

**अनुत्तमं हितम्** - अपवर्गसाधनम् । श्रु.

**अनुत्तमाः** - स्वावधिकोत्तमरहिताः । छा.

**अनुत्थितिः** - अनन्तरस्थितिः, प्रमाणापेक्षया पश्चात् स्थितिः, अप्रामाण्यमिति यावत् । केचित्तु व्यर्थप्रवृत्त्यनुसरणमित्यर्थ इत्याहुः । सर्वा.

**अनुद्धर्षः** - तुष्ट्यभावः । अतिसन्तोषाभावः । य. उद्धर्षविपर्ययः । श्रु. उद्धर्षो द्र.

**अनुद्भवः** - स्फुटतरप्रकाशाभावः । सर्वा.

**अनुद्यमः** - जाड्यम् । भा.

**अनुद्रवः** - अनुधावनम् । सुन्दर.

**अनुद्वेगकरम्** - पु(?)रुषमर्मोद्घट्टनापरिवादादिराहित्यादनुद्वेगकरत्वम् । भयादेरहेतुभूतमित्यर्थः । ता.

**अनुध्यानम्** - सङ्कल्पः । रा.

**अनुपपन्नम्** - तर्कपराहतम् । श्रु.

**अनुपमः** - समाभ्यधिकदरिद्रः । अति.

**अनुपलभ्य अननुविद्य** - श्रवणमननाभ्यामज्ञात्वा । छा.

[**अनुप्लवः** - अनुचरः । या.]

**अनुपश्यति** - अनुस्यूतं विशदं निध्यायति । ई. अनुस्यूतं निदिध्यासति । ई (कू). पश्चात् पश्यति, अनुभवति । प्र.

[**अनुपाकृतम्** - असंस्कृतम् । सच्च.]

**अनुपाती** - अनन्तरभावी । सर्वा.

**अनुपेतः** - असहायः । भा.

**अनुपोष्य** - (शरीरेन्द्रियादिसम्बन्धं) अदग्ध्वा । श्री. "उष दाहे" इति धातुः । श्रु.

**अनुप्रयातम्** - अनुस्यूतम् । रा.

**अनुप्रवेशः** - अन्तस्संयोगावच्छिन्नक्रियारूपः गतिविशेषः । वा.

**अनुबन्धः** - अनुचरः । रा. अनुबध्नातीत्यनुबन्धः दोषोत्पादः । 'दोषोत्पादोऽनुबन्धः स्यात्' इत्यमरः । रा. अनुबध्यत इत्यनुबन्धः, विपाकः । गी.ता. कृते कर्मणि अनुबध्यमानं दुःखम् । गी. पश्चाद्भावि दुःखम् । ता. फलम् । रा. हेतुः फलं च । ता.

**अनुबन्धाः** - कर्मैकदेशधात्वर्थादयः। श्रु. यज्ञानुबन्धिनः ग्रहस्तोत्रशस्त्रादयः। श्री.

**अनुबन्धीनि** - पुरुषमनुबध्नन्ति, यद्वा सुदृढाविच्छिन्नानि। ता.

**अनुबभूव** - पश्यति स्म। या.

**अनुबुबुधिरे** - श्रुतवन्तः। छा. कर्णाकर्णिकया श्रुतवन्तः। भाव.

**अनुब्रूते** - स्वाध्यायमधीते। बृ.

**अनुभवः** - आत्मभावनम्। (स्वापमद-मूर्छासु च सविशेष एव अनुभवः...)। त. स्मृतिव्यतिरिक्तं ज्ञानम्। न्याप.

**अनुभवति** - अनुगतो भवति। बृ.

**अनुभवनम्** - चिन्तनम्। सुन्दर.

**अनुभानम्** - पश्चाद्भानम्। क.श्रु.

**अनुभावः** - अनुभावशब्देनानुभव-वाचिना समृद्धिरिह लक्ष्यते। या. (7-59). तेजोविशेषः। अष्ट. प्रभावः। भा.

**अनुभावाः** - सत्यादिगुणाः।

**अनुभूतित्वम्** - वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्। स्वसत्तयैव स्वविषयसाधनत्वं वा। श्री.

**अनुभूतोपसर्गः** - जन्मान्तरानुभूता-नामर्थानां स्मरणम्। रा.

**अनुमतिः** - अङ्गिरसो भार्यायां स्मृतौ जाता। वि.

**अनुमन्ता** - प्रवृत्तस्य प्रवर्तकः। त. प्रवृत्तस्योत्तरोत्तरं प्रवर्तकः। अधि.

**अनुमन्तृत्वम्** - प्रवृत्तप्रवर्तकत्वम्। श्रु. प्रवृत्तस्य प्रवर्तकत्वम्। श्रु.

**अनुमानम्** - अनुमीयत इत्यनुमानं प्रधानमुच्यते (प्रकृतिः)। अनुमानप्रमित-त्वादनुमानमिति वा। श्री. तर्कः। श्रु. युक्तिः। लिङ्गम्। रा. व्याप्यस्य व्याप्यत्वानुसन्धा-नात् व्यापकविशेषप्रतीतिरनुमानम्। न्याप. शास्त्रम्। अनुमीयते अनेन सूक्ष्मार्थ इत्यनुमानम्। भा. स्मृतिः। श्री. कौ. स्वानुरूपवेदानुमापिका स्मृतिः अनुमानशब्दवाच्या। श्रु.

**अनुमासः** - अधिकमासः। वि. मासानुमासं द्र.

**अनुमितिः** - व्याप्यतया प्रतिसन्धीयमानात् तद्व्यापकतया सामान्यतः प्रसिद्धस्यार्थस्य विशेषतः अवगतिः। सर्वा. व्याप्यस्य व्याप्यत्वानुसन्धानेन व्यापकविशेष-प्रमितिः। य.

**अनुमृताः** - पुनर्मृताः। वि.

**अनुयागः** - भगवन्निवेदितेन पावनतमेनान्नेन वैश्वदेवप्राणाग्निहवनपूर्वकं वैदिकैः क्रियमाणं वैश्वानरमूर्तेर्भगवत-स्समाराधनम्। भगवन्निवेदतिप्राज्ञाम्। सच्च. भोजनम्। पाञ्च.

**अनुयुक्तः** - अभियुक्तः। वि.

**अनुयोगः** - प्रश्नः। नि.

**अनुरागः** - प्रीतिः। ता. अनुग्रहावहप्रसादः। अति.

**अनुरूपत्वम्** -सम्बन्धे सति प्रकृष्टं सादृश्यम्। यथा 'परस्परस्य सदृशौ

प्रमाणेङ्गितचेष्टितैः' इति । रत्नकाञ्चन-मुक्ताप्रवालादेरिव स्वसम्बन्धेन शोभातिशयहेतुत्वरूपमौचित्यं वा, यथा 'अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः' इति । गद्य.

**अनुलेपनम्** - कर्पूरादि । रा.

**अनुलोमः** - क्रमप्राप्तः । न्याय्यः । भा.

**अनुलोमम्** - अनुकूलाचरणम् । रा.

**अनुवर्तमानत्वम्** - उत्तरोत्तरप्रतीति-विषयत्वम् । रत्न.

**अनुवाकः** - सूक्तसमूहः । वि.

**अनुवित्तः** - अनुभूतः । संबद्धः । अवगतः । बृ. विद ज्ञाने, उपास्य इत्यर्थः । विदिर्लाभे, प्राप्यः । श्रु.

**अनुविद्य** - अनुवेदनं वाक्यार्थज्ञानम् । छा. उपास्य । छा.

**अनुविधानम्** - अनुवृत्तिः । श्रु.

**अनुविषण्णम्** - निबद्धम् । छा.

**अनुवीक्षणम्** - साक्षात्कारः । बृ.

[**अनुव्रता** - धर्मपत्नी । या.]

**अनुवृत्तिः** - आचार्यसेवा । भा.

**अनुवृत्त्या** - भक्त्या । भा.

**अनुव्याख्यानानि**-भाष्यव्याख्यानानि ।बृ.

**अनुशंसन्ति** - उद्गातृगणैः स्तुतां देवतां होतृगणाः ऋग्भिः शंसन्ति । म.

**अनुशयः** - अनुतापः । वर. उपभुक्तशिष्टं कर्म । श्री. फलोदयपर्यन्तमात्मन्यनुशेत इति कर्मवर्गः । अधि. भुक्तकर्मफलशेषः । भा.

**अनुशयाः** - प्रतिजन्मभुक्तावशेषोत्तरदेह-निमित्तकर्मयुक्ताः । भुक्तावशिष्टं कर्म अनुशयः, स एषां अस्तीति, अर्श आद्यच् । भा.

**अनुशाधि** - अनुपूर्वः शासिः विविच्यज्ञापनार्थः । विविच्य ज्ञापयेत्यर्थः । श्रु. विविच्य ज्ञापयेति यावत् । त.

**अनुशासनम्** - उपदेशः । बृ. सुबा. विविच्य ज्ञापनम् । अनुपूर्वः शासिर्विविच्य ज्ञापनार्थो दृष्ट इति हि शाब्दाः ।

**अनुशासिता** - विश्वस्य प्रशासिता । अनुपूर्वः शासिः विविच्यज्ञापनार्थः । ईश्वरस्य ..तोऽनुशासनमाज्ञापनमेवेति भावः । ता.

**अनुशिष्टः** - अनुशिष्टसर्वविद्यः । बृ. पृष्टः। रा (यु.३०.४)

**अनुश्रवः** - वेदः । आचार्योच्चारणात् अनुश्रूयत इति । वर.

[**अनुषङ्गः** - अविनाभावः । ई.]

**अनुष्णाशीतः** - उष्णशीतविलक्षणः स्पर्शविशेषः, न तु शीतोष्णाभावादिमात्रम् । न्यासि.

**अनुष्वधम्** - अनुकृता स्वधा येन तत् । स्वधासादृश्यम् । तै.

**अनुसन्धानम्** - ज्ञानम् । श्रु.

**अनुसमाहरणम्** - समाधानम् । छा.

**अनुसन्तनुत** - आसमाप्ति अविच्छिन्नं कुरुत । छा.

**अनुस्मरणम्** - पूर्वानुभूतवस्तुविषयं

ज्ञानम् । प्रत्यभिज्ञानमित्यर्थः । श्री. अनुर्विहीनार्थे । सर्वशेषत्वानुसन्धानपूर्वकं स्मरणम् । वि.

**अनुस्मृतिः** - उपासनम् । छा.

**अनूचानः** - अङ्गाध्यायी । वि. श्रु. अङ्गाध्यायी; अङ्गाध्याय्यनूचान इति स्मृतेः । कौ. अङ्गाध्यायी 'एकां शाखां अधीत्य श्रोत्रियः । अङ्गाध्यायी अनूचानः' इति स्मृतिः । अतश्चामीमांसितवेदार्थः इत्युक्तं भवति । बृ. ब्रह्मविद्यानुवचनकुशलः । बृ.

**अनूचानमानी** - आत्मानं साङ्गवेदाध्यायिनं मन्यमानः । छा.

**अनूच्यम्** - पर्यङ्कस्यानूचीनदारु । कौ.

**अनृणः** - विमुक्तकर्मबन्धः । भा.

**अनृतम्** - 'हिंसा भार्या त्वधर्मस्य तयोर्जज्ञे तथाऽनृतम्' । वि. अशास्त्रीयं प्रमाणमिति भाषणम् । भा. कर्म । छा. कृषिकर्म । रा. प्राकृतम् ऐश्वर्यादिकम् । नि. भगवत्तिरोधायकं कर्म । न्यासि. विकारि । सर्वा. (अनृतेन हि प्रत्यूढा इत्यत्र) सांसारिकफलं कर्मब्रह्मप्राप्तिविरोधि । भा.

**अनृतवचः** - अविद्यमानस्य वचनम् । सर्वा.

**अनृताभिसन्धः** - असत्यप्रतिज्ञः । छा.

**अनृशंसता** - दया । रा.

**अनेकमूर्तिः** - अनेका असाधारणमूर्तयोऽस्येति । सह.

**अनेकवसुप्राणाः** - अनेकं वसु धनं रश्मिवान्(र्वा) प्राणः बलं येषां ते । वि.

**अनेकाग्रः** - अव्यवस्थितचित्तः । रा.

**अनेकान्तवादः** - एकस्य वस्तुनः विरुद्धानेकरूपत्ववादः (जैनवादः) । श. सत्त्वासत्त्वाद्यङ्गीकर्तृमतम् (जैनवादः) । सर्वा.

**अनेजत्** - अकम्पमानम् । एजृ कम्पने । ई.

**अनैकान्तिकः** - सव्यभिचारः । हेत्वाभासविशेषः । न्याप. [व्यभिचरितः । सच्च.]

**अनैकान्तिकम्** - अनियतम् । श्रु.

**अनैकान्तिकत्वम्** - अनियतत्वम् । श्रु.

**अनैकान्त्यम्** - अतिव्याप्तिः । सर्वा. व्याप्त्यभावः । श्रु.

**अनैश्वर्यम्** - पारतन्त्र्यम् । नि.

**अनौपमम्** - अनुपममेवानौपमम् । वि.

**अनौपम्यम्** - उपमैव औपम्यम्, तद्रहितम् । वि.

**अन्तः** - अवधिः । निश्चयो वा । रा. (यत्रासौ केशान्तः, केशयोः ब्रह्मरुद्रयोः अन्तः) अवधिभूतः । कारणमिति यावत् । संहर्ता । स्थानभूत इति वा । तै. अवसानम् । बृ. निर्णयः । च. निश्चयः । बृ.ता.रा. पारभूतम् । श्री. अवसानम् । अवधिः । श्रु. पारभूतम् । प्रधानम् । बृ. फलम् । छा.रा.श्रु. मध्यम् । मरणम् । बृ. राष्ट्रसीम्रा । रा. स्थानम् । "अन्तस्समाप्तौ स्थाने च निर्णयेऽभ्यन्तरेपि च" इति निघण्टुः । बृ. विनाशः । गो. अन्तिकम् । गी. [अन्तिकदेशः ।

''अन्तोऽस्त्र्यवसितौ मृत्यौ स्वरूपे निश्चयेऽन्तिके'' इति वैजयन्ती। या.]

**अन्ते** - अन्तकाले। गी. अवसाने। गी.

**अन्तेषु** - स्थानेषु। छा.

**अंततः** - परमार्थतः। न्यासि. पर्यवसाने। रत्न. मरणकाले। छा.

**अन्तकः** - अन्तयतीत्यन्तकः संहारकर्ता। सह. नाशकः। रा.

**अन्तगतम्** - क्षीणम्। गी.

**अन्तपालाः** - बाह्यरक्षिणः। रा. सेनापर्यन्तपालकाः। रा.

**अन्तवत्** - नश्वरफलसाधनम्। बृ.

**अन्तवत्त्वम्** - सृष्टिसंहाराद्यास्पदत्वम्। बृ.

**अन्तसन्तानः** - अन्तं संहारं संतनोतीति। वि.

**अन्तःकरणम्** - मन एवान्तःकरणम्। अन्तः करणत्रैविध्यं सांख्यसम्मतं तु नेष्टम्। न्यासि. मिथुनीकरणम्। बृ.

**अन्तःकरोति** - मिथुनीकरोति। छा.

**अन्तःपुरुषे ज्योतिः** - कौक्षेयज्योतिः शरीरकम्। छा.

**अन्तरात्मकम्** - अन्तःकरणम्। भा.

**अन्तरात्मा** - अन्तः करणम्। रा. अन्तर्यामी। वै.

**अन्तरारामः** - आत्मैकोद्यानः। गी.

**अन्तर्ज्योतिः** - आत्मैकज्ञानः। गी. स्वप्रकाशः। आत्मज्योतिरित्यपि हि श्रूयते। त.

**अन्तर्भवे** - भवतीति भवः देहः। देहमध्ये। भा.

**अन्तर्यन्ता** - अन्तर्यामी। सर्वा.

**अन्तर्यामी** - अन्तर्नियन्ता। मा. नियमनार्थं सर्वजन्तूनां हृदये परिच्छिन्नतया स्थितो भगवान्। वे. तदन्तर्यामी नाम तत्र तिष्ठन् ततोऽन्तरः तेनावेद्यमानः तत् यमयति यस्स इति। तदुक्तमन्तर्यामिब्राह्मणे।

**अन्तर्याम्यवतारः** - हृत्पद्मकर्णिका-मध्यगतभगवद्रूपविशेषः। न्यासि.

**अन्तःसुखः** - आत्मानुभवैकसुखः। गी. आत्मैव, आत्मन्येव वा सुखं यस्य सः। ता.

**अन्तरः** - अन्तर्गतः। बृ.

**अन्तरम्** - अवकाशः। रा. अतिशयित-भेदः। श्वे. अवसरः। या. अवस्थाना-यावकाशः। रा. छिद्रम्। रा. तारतम्यम्। रा. भेदम्। रा. विच्छेदः। तै. श्रु. विशेषः। गी. वैषम्यम्। भा.

**अन्तरे** - अन्तर्भागे। सुबा.

**अन्तरतरः** - अत्यन्तान्तरङ्गः। मुख्य इति यावत्। बृ.

**अन्तरा** - मध्ये। अस्पृष्टमिति यावत्। छा. (मध्ये) अस्पृष्टः। 'अन्तराऽन्तिक-मध्ययोः' इति नानार्थरत्नमालोक्त्या अन्तराशब्दस्यान्तिकपरत्वम्। रत्न.

**अन्तराणि** - अन्तःस्थानि। वि.

**अन्तरालम्** - असंसर्गः। च.

**अन्तरिक्षक्षित्** - अन्तरिक्षनिवासः (वायुः)। छा.

**अन्तरिक्षसत्** - अन्तरिक्षे सीदन् वायुः। तै. अन्तरिक्षगतः (वायुः)। क.

**अन्तिके च तत्** - अमानित्वादिगुणोपेतानां सुग्रहम्। ता.

[**अन्तिमयुगतत्त्वचिन्तकाः** - कलियुगब्रह्ममीमांसका मिथ्यावादिनः ! सच्च.]

**अन्धः** - अनभिज्ञः। सुन्दर. दृक्शक्तिविकलः। श्री. स्वकर्तव्यपरित्याज्यहिताहितपरिज्ञानशून्यः। व. तत्त्वनिरीक्षणासमर्थः। सर्वा.

**अन्धकारः** - अज्ञानम्। अति.

**अन्धं तमः** - अतिगाढोऽन्धकारः। ई. अतिगाढमज्ञानम्। ई. दुस्तरः संसारलक्षणोऽन्धकारः। बृ.

अन्ननाशः - उज्झननिखननादि। "न त्वेवान्नं नाश्यं भवति को वाऽन्ननाशः। उज्झनं निरवननमप्सु प्रक्षेपणं काकेभ्यश्च सूकरेभ्यो वा यत्किञ्चिन्न कर्मण्यं स्थावरं जंगमं वा तत्र दानमित्येषोऽन्ननाशः" इति रहस्याम्नायात्। सच्च.

**अन्नम्** - अदनीयम्। संहार्यम्। सुबा. अनुभाव्यम्। बृ. अन्नवदुपकरणभूतः। छा. ओषधिवनस्पतिमाषादिभक्ष्यसंसर्गिणः। बृ. घ्राणेन्द्रियं रसनेन्द्रियं च। अन्नशब्दोदितपृथिवीसंबन्धित्वात् घ्राणेन्द्रियमनेन गृह्यते। अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। श्वे. निष्पादितभोक्तृशक्तिभिः अद्यते भुज्यत इति। सह. पृथिवी। श्री. पृथिवी। अत्रान्नशब्देन महाभूताधिकारात् पृथिव्युच्यते। छा. प्रकृतिप्राकृतसंबन्धः। श्वे. भोगोपकरणम्। बृ. भोग्यम्। प्र. बृ. (अन्नपरिणामः) शरीरम्। मु.

[**अन्ननाशः**- उज्झननिखननादि। "न त्वेवान्नं नाश्यं भवति को वाऽन्ननाशः। उज्झनं निरवननमप्सु प्रक्षेपणं काकेभ्यश्च सूकरेभ्यो वा यत्किञ्चिन्न कर्मण्यं स्थावरं जङ्गमं वा तत्र दानमित्येषोऽन्ननाशः" इति रहस्याम्नायात्। सच्च.

**अन्नमत्थ** - लौकिकं भोगमनुभवथ। छा.

**अन्नमयः** - भूतपरिणामरूपदेहः अन्नमयः। सुबा.

**अन्नमयाय** - व्यष्टिशरीरकाय। भा.

**अन्नयज्ञः** - भगवदाराधनस्य प्रधानमङ्गम्। सच्च.

**अन्नस्यात्मा** - व्रीहियवादिरूपौषधिवर्गस्य प्रियत्वाद्वा, चन्द्रमसस्सर्वरसात्मत्वेन तत्स्वरूपत्वाद्वा, अमावास्यायां चन्द्रस्य सर्वौषध्यनुप्रवेशश्रवणाद्वा चन्द्रस्यान्नात्मत्वम्। कौ.

**अन्नादः** - अन्नदः। बृ. श्रु. अन्नं तद्वद् भोग्यान् भक्तान् अत्ति भुङ्क्त इति। सह. अभिमतान्नभोक्ता। बृ. दीप्ताग्निः। छा. ब्रह्मलक्षणान्नानुभववान्। छा.

**अन्नाद्यम्** - अन्नमत्तीत्यन्नादः तस्य भावः अन्नाद्यम्। आदिवृद्ध्यभावः छान्दसः। अथवा अन्नञ्च तदाद्यं च अन्नाद्यम्। आद्यं भक्षणार्हम्। बृ.

**अन्यः** - पूर्वनिर्दिष्टसदृशान्यः।

अन्यशब्दादेस्सर्वनाम्नः पूर्वनिर्दिष्टसदृशान्यपरत्वं "समानेषु पूर्वत्वात्" इति साप्तमिकाधिकरणे व्यवस्थितम् । बृ. विसजातीयः । गी.

**अन्यत्** - व्यतिरिक्तम् । गी.

**अन्यतस्त्यजायी** - अन्यतो भवा अन्यतस्त्याः शत्रवः, तान् जेतुं शीलमस्य । 'सुप्यजाता' विति णिनिः । कौ.

**अन्यत्रैतस्मात्** - उक्तादितरत् । छा.

**अन्यथाख्यातत्वम्** - अन्यत्र सतः अन्यत्र ख्यातत्वम् । श्रु.

**अन्यथाख्यातिः** - विपर्ययो द्र.

**अन्यथाज्ञानम्** - धर्मविपर्यासः । य. भ्रान्तिः (नैयायिकमते) । अधि. अज्ञानं द्र.

**अन्यथात्वे** - वैषम्ये । सर्वा.

**अन्यथासिद्धत्वम्** - स्वोपस्थापितार्थविषयप्रामाण्यं विनापि संभावितोदयत्वम् । विरुद्धार्थप्रमाणाबाधेनापि सम्भवदुदयत्वमिति यावत् । श्रु.

**अन्यपरत्वम्** - . . .तात्पर्यभावः ।

**अन्यभावः** - अन्यत्वम् । श्री.

**अन्यमनाः** - कार्यान्तरासक्तः ।

**अन्यराजानः** - कर्मवश्याः । श्री. विधिनिषेधकिङ्कराः । कर्मवश्या इति यावत् । स्वराडित्यस्य प्रतिद्वन्द्वित्वात् । छा.

**अन्यलोक्यः** - अन्यलोकार्हः । वि.

**अन्यविषयत्वम्** - अतिव्याप्तिः । त.

**अन्याधिपतित्वम्** - विधिनिषेधयोग्यत्वम् । श्री.

**अन्योन्यलक्ष्यम्** - भगवतः स्वरूपनिरूपिका श्रीः । पत्युरपि पत्नीस्वरूपनिरूपकत्वादेवम् । श्रीत.

**अन्योन्याश्रयः** - परस्परापेक्षा । य. स्वनिर्वाह्यपदार्थनिर्वाह्यत्वम् । श.

[**अन्यो रसः** - प्रसिद्ध वैषयिकानन्दातिरिक्त परमानन्दरूपः परमात्मा । या.]

**अन्वजायत** - समपद्यत । बृ.

**अन्वयः** - सम्बन्धः । सर्वा. साधनसद्भावे साध्यसद्भावः । सर्वा.

**अन्वयव्यतिरेकि (लिङ्गम्)** - पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वं, असत्प्रतिपक्षत्वम् इति पञ्चरूपोपपन्नं व्याप्यम् । य.

**अन्वयव्याप्तिः** - साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः । यथा- यो धूमवान् सोऽग्निमानिति । न्याप. य.

**अन्ववस्यन्ति** - अनुवर्तन्ते । कौ.

**अन्ववायानि** - अनुगच्छेयम् । बृ.

**अन्वविन्दन्** - उपासितवन्तः । तै.

**अन्वशाः** - अनुशासितवानसि । रा.

[**अन्वाचयः** - अप्राधान्यम् । ई.]

**अन्वादेशः** - अन्वाख्यानम् । श्रु.

**अन्वायत्तः** - अनुवशः । बृ. श्रु.

**अन्वायत्तम्** - उपजीवकम् । छा.

**अन्वायत्ता** - स्वामित्वेन अनुगताः । छा.

**अन्वारम्भणम्** - स्पर्शः । श्रु.

**अन्वारुह्यवादः** - परपक्षमङ्गीकृत्य सान्त्वेन समाधानम् । अधि.

**अन्वारोहः** - अङ्गीकारः । सर्वा अपरीक्ष्यैव परोक्तस्याङ्गीकारः । त. अभ्युपगमः । सर्वा.

**अन्वाविशन्ति** - अनुसरन्ति ।

**अन्वाहार्यपचनः** - दक्षिणाग्निः । छा.

**अन्विच्छा** - चिन्ता । अग्नि.

**अन्विच्छामः** - अवगच्छामः । छा.

**अन्विताभिधानम्** - शब्देनान्वय-पर्यन्ताभिधानम् । श्रु.

**अन्वेष्टव्यम्** - श्रवणमननाभ्यामव-गन्तव्यम् । छा.

**अपकर्षसमः** - व्यापकाभासनिवृत्त्या कुतश्चित् कस्यचित् व्याप्याभासस्याप-कर्षणम् । न्याप.

**अपक्रान्तिः** - रणाजिरादन्यत्र पलायनम् । रा.

**अपघ्नन्** - नाशयन् । तै.

**अपचयः** - कृशत्वम् । श्रु. क्षयः । श्रु. ह्रासः । सर्वा.

**अपचायि** - क्षयिष्णु । वै.

**अपचारः** - अकृत्यकरणकृत्याकरणरूपः। सुन्दर. अविचारः । रा.

**अपचितिः** - निष्कृतिः । भा. पूजा । छा. अग्नि. रा.

**अपच्छेदः** - विच्छेदः । श.

**अपच्छेदन्यायः** - उत्तरशास्त्रप्राबल्य-बोधकन्यायः । श.

**अपटुप्रत्ययः** - अल्पधर्मविषयकप्रत्ययः । रत्न.

**अपदानम्** - पुरावृत्तमद्भुतकर्म । रा. [पराक्रमः । या]

**अपदिशन्** - निरस्यन् । वर.

**अपध्वान्तम्** - भिन्नकांस्यरवसमं गानम् । छा.

**अपमोचनम्** - अवतरणस्थानम् । अपमुच्यन्ते गमनोपयुक्तपरिकरबन्धा यत्रेति । भा.

**अपरः** - पूर्वतनः । मा (कू).

**अपरजातिः** - न्यूनव्यक्त्याश्रितजातिः । न्यासि.

**अपरत्वम्** - कालसम्बन्धन्यूनत्वम् (जैनमते) । सम्बन्धश्च संयोगः । सर्वा. दिक्कालसम्बन्धविशेष एव । न तु वैशेषिकवत् गुणान्तरम् । तज्जनकतयाऽस्य क्लृप्तत्वात् अधिकानङ्गीकारे लाघवात् । न्यासि. परिणामपरम्परान्यूनतावच्छिन्न-कालयोगः । योगश्च न संयोगः । अपि तु आधाराधेयभावादिसंबन्धविशेषः । सर्वा. परिमाणस्यन्यूनदेशावच्छेदः । ज्ञानस्य-न्यूनविषयकत्वम् । न्यासिटी. रत्न.

**अपरपर्पटा** - ग्रामविशेषः । रा.

[**अपरस्परः** - सन्ततमविच्छिन्नः । ''अपरस्पराः क्रियासातत्ये'' इति सूत्रम् । या.]

**अपरस्परसम्भूतम्** - योषित्पुरुषयोः परस्परसम्बन्धेन अजातम् । गी.

**अपरा** - अनुत्कृष्टा, अप्रधानभूता । ता.

**अपराजितः** - न सन्ति पराजिताः

स्वकीया अस्येति । अपराजिताः पञ्च पाण्डवा अस्य सन्तीति वा । सह. सर्वतोमुखे प्रशासने क्वचित् कदाचित् कुतश्चिदप्रतिहतः । सह.

**अपराजितम्** - अब्रह्मविद्भिर्न जीयत इत्यपराजितम् । एतन्नामकमायतनं पुरं ब्रह्मलोके । कौ.

**अपराजिता** - अब्रह्मविद्भिः प्राप्तुमशक्यत्वेन अपराजिता नाम परब्रह्मणः पुरी । छा.

**अपराजिष्णुः** - अपराजितः । बृ.कौ.

**अपराधकृतः** - कृतापराधः । वि.

**अपराधवर्गः** - एकस्मिन् दुरिते कृते पापं प्रज्ञां नाशयतीति रीत्या तत्कृतवासनावशेन पुनः पुनः क्रियामाणा तत्तत्सजातीयदुरित परम्परा । व.

**अपरिग्रहः** - आत्मव्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः । गी. [निषिद्ध-द्रव्यानादनम् । ई.]

**अपादानम्** - पराक्रमः । या.

**अपरिमितम्** - असंख्येयम् । ता.

**अपरिमिताः** - निस्संख्याताः । श्रु.

**अपरिमेयाम्** - अपरिच्छेद्याम् । गी. असङ्ख्येयाम् । अनन्तशाखाम् । ता.

**अपरोक्षत्वम्** - (ब्रह्मणः) सर्वदेश-सर्वकालसंबन्धित्वम् । श्री.

**अपरोक्षात्** - अपरोक्षमित्यर्थः । ''सुपां सुलुगि''त्यादिना आदादेशः । अपरोक्षत्वं नाम सर्वदेशकालसन्निहितत्वम् । बृ.

**अपर्यन्तम्** - पुत्रपौत्रगामि (विद्यारूपं द्रविणम्) । बृ.

**अपर्यवसानवृत्तिः** - विशेषणशक्तेः विशेष्यपर्यन्तता । [विशेषणमात्रे पर्यवसानरहितबोधनशक्तिः । ई.]

**अपर्यायबुद्धिः** - न पर्यायौ इति बुद्धिः । रत्न. विलक्षणबुद्धिः । ऐक्यविरोधिप्रतीतिः । न्यासिटी.

**अपलायनम्** - (युद्धे) आत्ममरणनिश्च-येऽप्यनिवर्तनम् । गी.

**अपवर्गः** - दुःखान्तरकारणासमानाधि-करणा दुःखनिवृत्तिः । स च स्वाभाविकात्मस्वरूपाविर्भावपूर्वक-समस्तगुणविभूतिविशिष्टनिरतिशयानन्द-ब्रह्मानुभवगर्भ इति परमपुरुषार्थः । तत्पूर्वको वा तादृशब्रह्मानुभवोऽपवर्गः । न्याप. मोक्षः । श्रीस्त.

**अपवादः** - अविद्यमानदोषाविष्करणम् । पा.

**अपविद्धः** - ताडितः । रा. त्यक्तः । रा. ''मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयात् अपविद्धस्स उच्यते ।'' वि.

**अपवृक्तः** - मुक्तः । न्यासिटी.

**अपवृत्तः** - दुराचारः । वि.

**अपशब्दितम्** - अपकृष्टं शब्दितम् अपभ्रंशितम् । रा.

**अपष्ठु** - असारम् । सर्वा (आ).

**अपसव्यम्** - अप्रदक्षिणम् । रा.

**अपसिद्धान्तः** - स्वसिद्धान्तप्रतिषिद्धाभ्युपगमः। सर्वा. स्वाभ्युपगतसिद्धान्तविरुद्धाभ्युपगमः। न्याप.

**अपस्नातः** - मृतस्नातः। रा.

**अपहतपाप्म** - पापप्रतिभटम्। बृ.

**अपहतपाप्मत्वम्** - (ब्रह्मणः) पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वम्, न तु पापप्रध्वंसवैशिष्ट्यम्। श्रु.

**अप्रहतपाप्मा** - अश्लिष्टपाप्मा। अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेष उच्यते। अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजनन शक्तानीत्यर्थः। कृतेऽपि पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषः अपहतपाप्मत्वम्। परिशुद्धात्मविषयस्यापहतपाप्मत्वस्याप्ययमेवार्थः। स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति। ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति विशेषः। छा.

**अपहसना** - परिभवः। वि.

**अपाकजस्पर्शः** - अनुष्णाशीतः। वायाविव पृथिव्यामपि। न्यासि.

**अपाणिपादम्** - इन्द्रियाधीनचेष्टाभाववत्। श्रु.

**अपात्तम्** - प्राप्तिः। बृ.

[**अपात्रम्** - अनुचितसंप्रदानम्। सच्च.]

**अपानः** - अवागननशीलः आसनादिस्थानवर्ती प्राणभेदः। सर्वा. गन्धः। अपानेन निश्वासवायुना उपनीयमानत्वात् गन्धो अपानशब्देन लक्ष्यते। बृ. घ्राणेन्द्रियम्। बृ. मुखनासिकेन अन्तः आकृष्यमाणो वायुः। छा.

**अपांनिधिः** - मथ्यमानमहार्णवधारणात्, अपां जलबाहुल्यात् समुद्रस्य निधिः स्थानम्। सह.

[**अपामूर्मिः** - गर्भोदकानां पुञ्जः। सच्च.]

**अपापविद्धः** - अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूपकर्मानालीढः। ई.

**अपापाः** - भगवदनुभवशीलाः। पा.

**अपायः** - अनर्थसाधनम्। नि.

**अपारम्** - अपरिच्छिन्नम्। वर. दुस्तरम्। रा. गुणतोऽपरिच्छेद्यम्। बृ.

**अपारपारः** - लक्षणया पारः शक्तिः। अपारपारः अनन्तशक्तिः। यद्वा पारं यस्य नास्ति सः अपारपारः। अपरिमितपरिमाणः इतिवन्निर्देशः। अथवा अपारस्य असमाप्तस्य अपूर्णस्य यज्ञादिकर्मणा पारः स्वसङ्कीर्तनस्मरणादिना पारयिता समापकः पूरको वा। वि.

**अपार्थैः** - अपगतपुरुषार्थैः। भा.

**अपावृतम्** - उद्घारितम्। रा.

**अपावृत्ताम्** - अधरोत्तरीकृताम्। रा.

**अपि चेत्** - यद्यपि। गी.

**अपीच्यदर्शनम्** - स्पृहणीयदर्शनम्। हृष्टपुष्टाङ्गतया स्पृहणीयदर्शनम्। भा.

**अपीच्येन** - सुन्दरेण। भाव.

**अपीतः** - लीनः। छा.

**अपीतिः** - अप्ययः। बृ. श्री. अप्ययः, ब्रह्मप्राप्तिः। श्री. प्रलयः। मा.

**अपुरोभागा** - दोषदर्शनरहिता। अनपराधेत्यर्थः। रा.

[**अपुत्रः** - (भूम्याः) अपकृष्टः पुत्रः (नरकः)। अमनुष्योऽयमित्यादिप्रयोगात् अपकर्षोपि नञर्थ इत्युक्तं शृङ्गारप्रकाशिकायाम्। या.]

**अपूर्वः** - अभिनवः। रा. न विद्यते पूर्वं कारणं यस्य सः। मा.

**अपूर्वम्** - अदृष्टपूर्वम्। रा. अप्रसिद्धम्। या. अप्राप्तम्। श्री. पूर्वमज्ञातम्। श. पूर्वमस्य प्रकृतिभूतं (होमान्तरं) नास्तीति, अनन्यप्रकृतिकम्। वि.

**अपूर्वत्वम्** - अप्राप्तत्वम्। श्री. प्रमाणान्तरागोचरत्वम्। वे.

**अपूर्वमनपरम्** - पूर्वोत्तरकालशून्यम्। कालापरिच्छिन्नम्। बृ.

**अपूर्वरूपसंस्थानम्** - समस्तलोकविलक्षणवर्णाङ्गसन्निवेशः। वि.

**अपूर्वोत्तरत्वम्** - पूर्वोत्तरकालावर्तित्वम्। तत्क्षणमात्रवृत्तित्वमिति यावत्। सर्वा.

**अपृथक्सिद्धत्वम्**- अपृथक्सिध्यात्मकसंयोग प्रतियोगित्वम्। वा. [पृथक्स्थित्यनर्हत्वम्; स्वनिष्ठत्वाभावः। र.]

**अपृथग्भावः** - पृथग्व्यवहारानर्हसंसर्गः। श्री.

**अपेक्षाबुद्धिः** - अनेकैकत्वबुद्धिः। त. द्वित्वत्रित्वादिजनिका इदमेकमिदमेकमिति नानैकत्वविषयिणी। न्यासिटी.

**अपेशलम्** - असाधु। श्रु.

**अपैशुनम्** - परानर्थकरवाक्यनिवेदनाकरणम्। गी.

**अपोढम्** - निषेधबुद्धिविषयः। रत्न.

[**अपोहः** - अतद्व्यावृत्तिः। च. अतद्व्यावृत्तिः। घटत्वं नाम अघटव्यावृत्तिरित्येवम्। न्यासिटी.][उक्तस्यापि यथोचितं त्यागः। र.]

**अपोहनम्** - ज्ञाननिवृत्तिः। ऊहनं वा। गी. विषयान्तरस्मृत्यभावः। भा.

**अपौरुषेयत्वम्** - अनाद्यानुपूर्वीविशेषविशिष्टत्वेन पश्चादप्युच्चार्यमाणत्वम्। वे. [(वेदस्य) पूर्वपूर्वोच्चारणजनितेन संस्कारेण तमेव क्रमविशेषं स्मृत्वा क्रमेणोच्चार्यत्वम्। ई.]

**अपौरुषेयाः**-यत्र वाक्यानामुच्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनितसंस्कारपूर्वकः सर्वदा, तेऽपौरुषेयाः (शब्दाः)। ते च वेदाः। वे.

**अप्ययः** - लयः। बृ. व्यापारोपरतिः। श्रु.

**अप्येति** - लीनो भवति। अपिपूर्वस्य एतेः लयार्थकत्वात्। बृ. लीयते। भा.

**अप्रकाशः** - ज्ञानानुदयः। गी.

**अप्रकाशवान्** - प्रकृष्टज्ञानरहितः। वि.

**अप्रकाश्यम्** - चक्षुरादिभिः प्रकाशयितुमशक्यम्। सुबा.

**अप्रकृतिस्था** - अस्वस्था। रा.

**अप्रज्ञातम्** - प्रज्ञानं प्रकृष्टज्ञानं अपरोक्ष-ज्ञानमित्यर्थः। अपरोक्षज्ञानेन विषयीकर्तु-मशक्यम्। श्रु.

**अप्रणयः** - स्नेहाभावः। रा.

**अप्रतर्क्यम्** - अतर्कगोचरम्। श्रु. अनुमानागोचरभूतम्। श्रु. बाह्यतर्का-गोचरभूतम्। श्रु.

**अप्रतिकृतः** - अकृतप्रत्युपकारः। रा. प्रत्युपकारमकुर्वन्। रा.

**अप्रतिभा** - कथां प्रविष्टस्य साधन-दूषणाद्यप्रतिपत्तिः। न्याप.

**अप्रतिरथः** - अनिष्टजनार्दने अप्रतिपक्षः। नास्ति प्रतिरथः यस्य। सह.

**अप्रतिरूपम्** - अनुचितम्। बृ. अत्यन्तानुचितम्। रा.

**अप्रतिरूपरूपम्** - अप्रतिमसौन्दर्यम्। रा.

**अप्रतिष्ठः** - यथावस्थितं स्वर्गादिसाधनं कर्म फलाभिसन्धिरहितस्यास्य स्वफल-साधनत्वेन प्रतिष्ठा न भवतीति। गी.

**अप्रतिष्ठम्** - ब्रह्मणि अप्रतिष्ठितम्। गी.

**अप्रतिष्ठितः** - कारणान्तररहितः। कार्याणां हि कारणे प्रतिष्ठा प्रलयः। तदभावात् कारणान्तरराहित्यं फलितम्। भा.

**अप्रतिसङ्ख्यानिरोधः** - प्रतिसंख्या-निरोधविपरीतो निरोधः। स च सूक्ष्मः लौकिकबुद्ध्ययोग्यः बौद्धैर्युक्त्या साध्यमानः प्रतिक्षणविनाशः। बृ. प्रतिसंख्यानिरोधादितरो निर्हेतुकः प्रतिक्षणमुत्पद्यमानो विनाशः। न्यासिटी. सदृशसन्ताने प्रतिक्षणभावी उपलब्ध्यनर्हः सूक्ष्मो निरन्वयो विनाशः (बौद्धमते)। श्रु. (बौद्धमते) सान्वयविनाशः। अस्फुट-रूपादिनाशः अप्रतिसंख्यानिरोध इति केचित्। सर्वा.

**अप्रतीतिः** - ज्ञानस्य व्यवहारनुगुण्या-भावः। श्रु.

**अप्रतीकालम्बनाः** - प्रतीकालम्बन-व्यतिरिक्ताः। श्री. प्रतीकालम्बनव्यति-रिक्ताः। परं ब्रह्मोपासीना. आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनाः। न्यासि. ये परं ब्रह्मोपासते ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते ते। श्री.

**अप्रदक्षिणम्** - प्रतिकूलम्। रा.

**अप्रदाहाय** - (जाठराग्निकृत) दाहा-भावाय। तै.

**अप्रधानत्वम्** - (कारणे) साधारण-कारणत्वम्। श्रु.

**अप्रधृष्यम्** - युक्तिभिरविचाल्यम्। रा.

**अप्रमत्तः** - उपजीविनां त्राणेषु सावधानतया प्रमत्तोऽनवहितो नेति। सह. विषयान्तरविमुखः। मु.

**अप्रमादात्** - अवधानात्। रा.

**अप्रमेयः** - अदृश्यः। रा. (ब्रह्मादीनां करणैः) परिच्छेत्तुमशक्यः। सह. [परिपूर्णः। र.]

**अप्रमेयम्** - अपरिच्छेद्यम् । बृ. अपरिच्छेद्यमहिम । रा. साधकागोचरभूतम् । श्रु.

**अप्रमेयत्वम्** - परिपूर्णत्वम् । श्रु.

**अप्रमेयस्य** - अपरिच्छिन्नस्य । भा.

**अप्रमेयात्मा** - असंख्येयानां तेषां (नराणां), अनवधिकानां एकैकशोऽप्यप्रमेयानां प्रमातुमशक्यानां, अन्तर्बहिश्च व्यापनात् आत्मेति अप्रमेयात्मा । सह.

**अप्रयतः** - मन्त्रानध्ययनादिनाऽपूतः । रा.

**अप्रयोजकम्** - विपक्षे बाधकरहितम् । श.

**अप्रवर्ति** - अचलम्, स्थिरम् । छा. पूर्णमप्रवर्ति, पूर्णत्वप्रयुक्तनिर्व्यापारत्वलक्षणाप्रवर्तित्वविशिष्टम् । कौ.

**अप्रवर्तित्वम्** - अचलत्वम् । श्रु.

**अप्रवृत्तिः** - स्तब्धता । गी.

**अप्रसङ्गः**-अव्याप्तिः । 'अतो नाप्रसङ्गातिप्रसङ्गो' । च. अप्रसङ्गः-अव्याप्तिः, अतिप्रसङ्गः-अतिव्याप्तिः ।

**अप्रसाहः** - न प्रसह्यत इत्यप्रसाहः । अनिष्टस्वप्नदर्शनेन यथा नाभिप्लुतो भवति तथा संयतचित्तः । छा.

**अप्रस्तुतप्रतिबन्धः** - प्रतिबन्धाभावः । छा.

[**अप्राकृतत्वम्** - शुद्धसत्त्वद्रव्यरूपत्वम् । र.]

**अप्राकृतेन्द्रियम्** - प्राकृतचक्षुरादेरिव अप्राकृतचक्षुरादेर्विषयनियमादिकं नास्ति । अतश्चक्षुरादिलक्षणं तत्र तत्रोक्तं प्राकृतविषयम् । अप्राकृतस्य तु चक्षुरादेः गोलकाधिष्ठितमिन्द्रियमितिरीत्या अधिष्ठानविशेषमादाय लक्षणं वाच्यम् । न्यासि.

**अप्राकृतेन्द्रियत्वम्** - रजोरहितत्वे सति तमोरहितत्वे सति वा इन्द्रियत्वम् । वा.

**अप्राणः** - प्राणायत्तस्थितिशून्यः । भाव.

**अप्राप्तकालम्** - विवक्षितक्रमस्य विपर्यस्तकरणम् । न्याप.

**अप्राप्तबाधः** - पूर्वप्रवृत्तैः श्रुत्यादिभिः तस्मिन् काले अप्राप्तानां लिङ्गादिसिद्धानां अर्थानां बाधः । अधि.

**अप्रियम्** - परुषम् । रा.

**अप्लुतम्** - गतिरहितम् । वि.

**अप्सुमान्** - जलान्तर्वर्ती । तै. प्रभूतोदकसंपन्नः । छा.

**अफलता** - निष्प्रयोजनत्वं अनपेक्षितप्रयोजनत्वं वा । अधि.

**अफलाकांक्षिभिः** - फलाकांक्षारहितैः । गी.

**अब्जः** - शंखः । सच्च.

**अबाधः** - अविरोधत्वम् । श्रु.

**अबालिशम्** - बालबुद्धिरहितम् । रा.

**अबाह्यः** - बहिरङ्गव्यतिरिक्तः । श्रु. बाह्यावयवव्यतिरिक्तः । बृ.

**अबाह्यम्** - अन्तः हृदयपुण्डरीके प्रकाशमानम् । सुबा.

**अबिभः** - भरणं कृतवान् । भृञ् भरण इति धातोः लङिरूपम् । बृ.

**अबुद्धिपूर्वकः** - विशेषध्यानरहितः। वि.
**अबुधः** - ज्ञानरहितः। सुन्दर. प्रत्यगात्मविद्याशून्याः, पञ्चाग्निविद्याशून्या इति यावत्। 'बुधः' इति बुध्यतेः क्विबन्तस्य प्रथमाबहुवचनान्तस्य रूपम्। बृ.
**अब्जः** - जलजः। क.[शङ्खः। सच्च.]
**अब्रह्मगुणत्वम्** - ब्रह्मगुणत्वाभावः। श्रु.
**अब्राह्मणः** - अत्रैवर्णिकः, शूद्रः इति यावत्। सूत्रितं च "तदभावनिर्धारणे च प्रवृत्तेरि"ति। शूद्रत्वाभावनिश्चये सत्येव 'उप त्वा नेष्य' इति उपनयनप्रवृत्तेर्दर्शनादित्यर्थः। अतोऽब्राह्मणशब्दः शूद्रपरः। छा.
**अभक्तः** - भक्तियोगरहितः। वर.
**अभङ्गुरधियः**- स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वतया कुत्रापि अप्रतिहतज्ञानाः। व.
**अभयः** - परमात्मा। बृ.
**अभयम्** - अकुतोभयम्। प्र. इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयम्, तन्निवृत्तिरभयम्। गी. दुःखासम्भिन्नम्। छा. निर्भयम्। क. भयाभावः। रा. भयाभावाय। नाव्ययीभावादिति चतुर्थ्या अम्भावः। अर्थाभावे यदव्ययमिति अव्ययीभावसमासः। तै. मोक्षः, "अथ सोऽभयं गतो भव"तीति ब्रह्मविद्याफलत्वेन श्रवणात्। रा.
**अभयत्वम्** - दुःखासंभिन्नत्वम्। श्रु.
**अभयदक्षिणा** - अभयदानम्। रा.
**अभयस्थानविवेकः** - भगवद्रक्षकत्वाध्यवसायादिना निर्भयत्वम्। वे.
**अभवः** - भवेच्छारहितः ज्ञानी। वै.
**अभवन्** - सत्तां अलभन्त। बृ.
**अभव्यः** - क्रूरः। रा. दुर्जनः। रा.
**अभाक्तः** - मुख्यः। श्री.
**अभागिप्रतिषेधः** - अप्राप्तप्रतिषेधः। त.
**अभाजयत्** - अप्रीणयत्। बृ.
**अभावः** - अभावस्त्वस्मन्मते भावान्तरात्मा। स चाक्षादिभिर्यथासम्भवं सिद्ध्यति।...स्मर्तव्यस्य स्मरणाभावाद्वा तत्र तदनुमानम्। न्याप. भावान्तरम्। न्यासि. विद्यमानपदार्थावस्थाविशेषः। श्री. प्रतिकूलानुभवहेतुको मनसोऽवसादः। गी.
**अभाव्यम्** - असाध्यम्। श.
**अभास्वरत्वम् (मनसः)** - दैन्यम्, उपयुक्तप्रकाशनाशक्तत्वम्। त.
**अभि** - अभिमतः। तै. आभिमुख्येन। बृ.
**अभिकामाः** - अभ्यर्थिनः। श्रु.
**अभिक्लृप्तः** - ग्राह्यः। क. तै. श्रु.
**अभिक्रमः** - आरम्भः। उपक्रमशब्दवदयमिति भावः। गी. [उपक्रमः। र.]
[**अभिख्या** - कान्तिः। या.]
**अभिगच्छन्ति** - अभितो गच्छन्ति। ई. (कू.) कात्स्न्येन निरन्तरं प्राप्नुवन्ति। ई. (दे).
**अभिगमनम्** - अन्वेषणम्। दर्शनं वा। रा. ["ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र

वासरे । जपध्यानार्चनस्तोत्रैः कर्म वाक्चित्तसंयुतैः । अभ्यागच्छे जगद्योनिं तच्चभिगमनं स्मृतम्'' । पाञ्च. भगवदाराधनस्य प्राथमिकमङ्गम्। 'अन्तः-करणयागादि यावदात्मनिवेदनम् । तदाद्यमङ्गं यागस्य नाम्नाऽभिगमनं महत्'। इति जयाख्यसंहितोक्तेः । सच्च.]

**अभिचाकशीति** - अपहतपाप्मत्वादि-महामहिमशाली वर्तते ।

**अभिजनः** - आभिजात्यम् । रा. सत्कुल-प्रसूतत्वम् । भा.

**अभिजनम्** - प्रशस्तकुलम् । रा.

**अभिजन्म** - आभिजात्यम् । न्यासिटी.

**अभिजयः** - प्राप्तिः । प्र.

**अभिजिति** - मध्याह्ने । भा.

**अभिज्ञः** - सर्वज्ञः । अभितः सर्वदा सर्वं जानातीति । भा.

**अभिज्ञा** - अयं देवदत्त इत्येवमादि-रूपज्ञानम् । रत्न. अनुभवरूपं ज्ञानम् । वै. इदन्तया वस्तुज्ञानम् । श.

**अभिज्ञातम्** - सम्यग्ज्ञातम् । रा.

**अभिज्ञानम्** - चिह्नम् । रा.

**अभिदासनम्** - हिंसनम् । अभिदासति हिनस्ति । 'दा' प्लवने इत्यतः 'दो' अवखण्डने इत्यतो वा 'सिब्बहुलं हिमस्ति। 'दा प्लवेन' इत्यतः 'दोलेटि' इति सिपि दासतीति रूपम् । छा.

**अभिद्रुत्य** - शीघ्रं प्राप्य । बृ.

**अभिधत्ते** - सन्निधत्ते । प्र.

**अभिधा** - व्युत्पत्तिसिद्धार्थ एव वृत्तिः । न्याप.

**अभिधानम्** - मुख्यवृत्त्या बोधनम् । श्रु. ता. मुख्यामुख्यसाधारणशब्दव्यापारमात्रम्। श्रु.

**अभिधास्यति** - व्याख्यास्यति । गी.

**अभिध्या** - परकीये स्वत्वबुद्धिः । यद्वा निष्फलचिन्ता । अथवा परकृता-पकारचिन्ता । श्रु. परप्रतिकूलचिन्ता, परकृतद्रोहे निरन्तरस्मृतिः, वितथाभि-निवेशः, परस्वे ग्राह्यत्वधीर्वा। त. संकल्पः । श्री.

**अभिध्यानम्** - आभिमुख्येन ध्यानम् । निरन्तरध्यानम् । प्र. आलम्बनसंशीलनम् । श्रु. आरम्भणसंशीलनम् । श्वे. उपासनम् । प्र. सङ्कल्पः । कौ. बृ. श्री. श्रु. निपुणतया निरूपणम् । क.

**अभिनद्धाक्षम्** - पिनद्धचक्षुषम् । छा.

**अभिनन्दः** - आनन्दः । सुन्दर.

**अभिनन्दनम्** - अभितः नन्दनम् । अनुबन्धिषु कालान्तरेषु च प्रीत्यनुवृत्ति-हेतुभूतनन्दनमित्यर्थः । ता.

**अभिनहनम्** - बन्धनम् । छा.

**अभिनिष्पत्तिः** - आविर्भावः । 'युक्त्या अयमर्थो निष्पन्न', 'इदमेकं सुनिष्पन्नम्' इत्यादिवत् । छा. तिरोधाननिवृत्तिः । श्री. स्वरूपाविर्भावः । श्री.

**अभिनिष्पद्यते** - आविर्भवति । छा.

**अभिपद्य** - गृहीत्वा । कौ.

**अभिपन्नम्** - वशीकृतम् । बृ.
**अभिप्रतारी** - अभिप्रतारिनामा कश्चित् क्षत्रियः चित्ररथवंश्यः । छा.
**अभिप्रायः** - सत्यधर्मनिष्ठेन निरुपाधिकोद्देश्यतयाऽभिप्रेतः । सह.
**अभिप्रास्य** - परित्यज्य । छा.
**अभिप्रेतः** - ईप्सितः । रा.
**अभिप्लुतः** - व्याप्तः । रा.
**अभिभूः** - परेषामभिभाविका । तै.
**अभिभूतः** - परतन्त्रः । रा. सम्पन्नः, सम्परिष्वक्तः । प्र.
**अभिमतत्वम्** - अभिमत्यर्हत्वम् । स्वानुरूपत्वमिति यावत् । श्रु.
**अभिमथ्यते** - अभितो निवार्यते । श्वे.
**अभिमानः** - अहं कर्तेति बुद्धिः । सर्वा. गर्वः । रा. भ्रमः । च.
**अभिमुखीकृत्य** - प्रतिपाद्यतया परिगृह्य । श्री.
**अभियाचाम** - शरणं गच्छाम । नि.
**अभियाता** - यत्र शत्रवस्तत्र स्वयमेव अभिमुखं प्रहर्तुं याता । रा.
**अभियानम्** - युद्धाय निर्गमः । रा.
**अभियुक्तः** - ज्ञानी । विरक्त इति यावत् । रा.
**अभिरतः** - प्रीतः । रा.
**अभिलक्ष्यः** - लक्ष्यवेधने प्रसिद्धः । रा.
**अभिवदनम्** - आशिषः प्रयोगः । क. नमस्कारः । रा.
**अभिविमानः** - सर्वाभिव्याप्ततया विगतमानः । छा.
**अभिव्यक्तिः** - बुद्धिसौकर्यम् । छा.
**अभिव्याप्तः** - अन्यूनानतिप्रसक्तः । श.
**अभिशप्तः** - परुषोक्त्या विषयीकृतः । रा.
[**अभिशस्तिः** - अपवादः । या.]
**अभिशुः** - मयूखः । अभिशुशब्दस्तालव्यान्तः । ''अभीषुः प्रग्रहे रश्मौ'' इति षान्तेष्वमरकोशे । अयं वल्मिकवल्मीकवद् ह्रस्वमध्यो दीर्घमध्यश्च । 'अभीशुभिः सूर्य इवाभिदीप्तः' इत्यपि । या.
**अभिश्रीः** - अभितः श्रीः यस्य सः । श्रु.
**अभिषवः** - ऋत्विग्भिः पाषाणैस्सोमलताभिहतिः । रा. निष्यन्दतीर्थम् । तण्डुलजं वा । वि.
**अभिषेचनम्** - अभिषेचनसामग्री । रा.
**अभिष्टुतः** - (सृष्ट्यर्थं) उद्बोधितमहिमा। वि.
**अभिष्वङ्गः** - आसक्तिः । अनुरागो वा । रा.
**अभिसन्धिः** - सङ्कल्पः । श्रु.
**अभिसमावृत्य** - निर्वर्त्य । छा. समावर्तनं कृत्वा, गुरुकुलान्निवृत्य । छा.
**अभिसम्पत्तिः** - अभ्यर्हितत्वेन, श्रेष्ठत्वेन संपत्तिः । प्र.
**अभिसंभवः** - प्राप्तिः । छा.
**अभिसम्भवन्ति** - प्रतिपद्यन्ते । छा. प्राप्नुवन्ति । श्रु.
**अभिसम्भविता** - प्राप्ता । छा. श्रु.
**अभिसमरम्भः** - कोपः । रा.
**अभिसंविशत** - अभितः उपविशत । बृ.

**अभिसंविशन्ति** - अभि अभिलक्ष्य अनुभूयेति यावत् । भोगानन्तरमुदासीना भवन्ति । छा.

**अभिसंवेशः** - ऐक्येन लयः । प्राणमभिलक्ष्य संविशन्ति । समित्येकीकारे । ऐक्येन विशन्ति लीयन्त इत्यर्थः । छा.

**अभिसिद्ध्यति** - आप्नोति । छा.

**अभिस्नेहः** - प्रवृत्तिपर्यन्तस्नेहः । ता.

**अभीक्ष्णम्** - पुनः पुनः । रा. भृशम् । या.

**अभीतिः** - संसारनिवृत्तिः । अभी.

**अभीद्धः** - उत्पन्नः । तै.

**अभूतम्** - असत्यम् । रा.

**अभूतपूर्वः** - न भूतं पूर्वं यस्मात् सः । वि.

**अभूतपूर्वत्वम्** - इतः पूर्वं सञ्जातेभ्यः विलक्षणत्वम् । स्तो.

**अभेदः** - ऐक्यम् । श्रु. पक्षपातशून्यः । वैषम्यनैर्घृण्यशून्य इति यावत् । वै. भेदाभावः । न्यासि. च.

**अभेदम्** - भेदरहितम् । वि. विभागानर्हम् । सूक्ष्मदशापन्नम् । वै.

**अभेदी** - भेदानर्हः । वि.

**अभ्यतपत्** - सारनिष्कर्षाय (लोकान्) पर्यालोचयत् । छा.

**अभ्यधिकराहित्यम्** - स्वावधिकोत्कर्षाश्रयराहित्यम् । उत्कर्षावधिशून्यत्वम् । रत्न.

**अभ्यर्थनम्** - कामप्रवेदनम् । नि.

**अभ्यर्हितम्** - अन्तरङ्गम् । श्रु.

**अभ्यवपत्तिः** - अनुग्रहः । वि.

**अभ्यवपन्नः** - आभिमुख्येन गतः । रा.

**अभ्यसूयकाः** - दोषमाविष्कुर्वन्तः । गी

**अभ्यसूयति** - दोषमाविष्करोति । गी.

**अभ्यसूया** - दोषाविष्करणम् । रा.

**अभ्याख्याताः** - अभिशस्ताः । तै.

**अभ्यात्तः** - स्वीकृतवान् । वे. श्री. स्वीकृतवान् । 'भुक्ता ब्राह्मणा' इतिवत् कर्तरि क्तप्रत्ययः । अर्शआद्यजन्तो वा । छा.

**अभ्यारोहः** - (मन्त्रविशेषः) अभ्योरोहमन्त्रः । बृ.

**अभ्याशः** - अभ्यागन्तारः । श्रु. क्षिप्रम् । अभ्याङ्पूर्वादश्नोतेः असुन् । छा. अभ्यागन्तारः । अभ्याङ्पूर्वात् अशेर्धातोः क्विबन्ताद् बहुवचनान्तोऽयं शब्दः । छा.

**अभ्यासः** - अखिलहेयप्रत्यनीकासंख्येयकल्याणगुणसागरस्वरूपरूपभगवद्विषयप्रेमगर्भस्मृत्यभ्यसनम् । आलम्बने पुनः पुनः स्थापनमभ्यासः । गी. ता. गुणनम् । आवृत्तिः । श्रु. नित्यनैमित्तिकाविरुद्धेषु कालेषु मनसोपास्यसंशीलनम् । गी. पुनः पुनः परिशीलनम् । नि. पुनः पुनरालम्बनसंशीलनम् । य.

**अभ्यासयोगः** - आलम्बने पुनः पुनः स्थापनमभ्यासः, स एव योगः । ता.

**अभ्याहितः** - प्रवर्तितः । बृ.

**अभ्याहितस्य** - इन्धनैरभ्याहितस्य प्रज्वलितस्य । छा.

**अभ्युक्ता** - अभिमुखीकृत्य उक्ता । तै.

**अभ्युपगमसिद्धान्तः** - अव्यापकः

स्वतन्त्रस्य तन्त्रान्तरस्य च साधारणोऽभ्युपगमसिद्धान्तः । यथा नैयायिकानां सामान्यविशेषसमवायादिः । साङ्ख्यादीनां भेदाभेदादिः । सौगतादीनां प्रपञ्चमिथ्यात्वादिः । परतन्त्रे साधितः स्वतन्त्रे समाश्रित इति वा । तन्त्रान्तरसिद्धसद्भावस्य वस्तुनो विशेषपरीक्षणमिति वा(च) केचिदाहुः । अत्र स्वतन्त्रपरतन्त्रसाधारण्यमेव निष्कृष्टलक्षणं भवति । न्याप.

**अभ्युपपत्तिः** - अनुग्रहः । रा.

**अभ्युपपत्स्यामः** - सहायं करिष्यामः । वि.

**अभ्यैरयन्त** - अभिमुखतया गानं कुर्वन्ति । तै.

**अभ्रम्** - अपो बिभर्तीत्यभ्रम् । मूलविभुजादित्वात् कः । ततश्चाभ्रशब्देन जलधारणावस्थोच्यते । छा. अभ्रकाख्यः शिलाविशेषः । वि. अपो बिभर्तीत्यभ्रम् । श्रु. मेघस्यावस्थाविशेषापन्नं रूपम् । छा.

**अभ्रकम्** - स्वर्णवर्णः पार्थिवविशेषः । सर्वा.

**अभ्रघनः** - अभ्रमूर्तिः । रा.

**अभ्राणि** - जलधारकत्वमात्रावस्थापन्नानि । छा.

**अभ्रान्तम्** - अर्थक्रियाक्षमे वस्तुरूपेऽविपर्यस्तमुच्यते । सर्वा.

**अमः** - प्राणः । अमति गच्छतीति । बृ.

**अमतम्** - स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवदप्रतिपन्नम् । श्रु.

**अमनसः** - अप्रौढमनसः । छा.

**अमनस्कः** - अनिगृहीतमनाः । क.

**अमनाः** - मन आयत्तज्ञानाभाववत् । श्री.

**अमनोहरम्** - मनसा चिन्तयितुमशक्यम् । नि.

**अमन्यन्त** - बहुमेनिरे । या.

**अममाः** - अस्वे स्वत्वबुद्धिहीनाः । पा.

**अमरत्वम्** - 'जरामरणमोक्षाय' इत्युक्तः कैवल्याख्यो मोक्षः । रा. [कैवल्यम् । ई.]

**अमरप्रभुः** - अमराणां सृष्ट्याद्यधिकारदानेन निर्वाहकः । सह.

[**अमराः** - कैङ्कर्यनिष्ठाः ']

**अमरावती** - इन्द्राधिष्ठिता पुरी । रा.

**अमर्यादः** - "वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्वृत्तिसारूप्यमाचरन् विचरेदिह ॥" इत्यादिषूक्तां श्रुतिस्मृतिमर्यादामतिक्रान्तः । स्तो. त्यक्तस्वप्रकृत्यवस्थानः । रा.

**अमर्षः** - अतितिक्षा । वि. असहिष्णुता । रा.

**अमर्षणः** - असहनः । रा.

**अमर्षात्** - असहनात् । रा.

**अमलम्** - हेयप्रतिभटशोभम् । अति. प्रकृतिस्पर्शरहितम् । वि. पापहरम् । भा. मलप्रतिभटम् । श्रु. [रागद्वेषादि सर्वदोषरहितम् । र.]

**अमलाः** - निर्विघ्नाः । भा.

**अमलाम्** - अनन्यप्रयोजनाम् । भा.

**अमलात्मकत्वम्** - अमलस्वभावत्वम् । कर्मसम्बन्धानर्हत्वम् । श्रु.

**अमलात्मानः** - अमलमनसः। वि.
**अमा** - सह। सद्य इत्यर्थः। "अमा सह समीपे चे"ति निघण्टुः। बृ.
**अमाः** - प्राणः। छा.
**अमात्रः** - परिच्छेदशून्यः। मा.
**अमात्रम्** - मात्रा इन्द्रियाणि, यद्वा मात्रा परिच्छेदः। तद्रहितम्। बृ.
**अमानम्** - संशयविपर्ययात्मकज्ञानम्। सर्वा.
**अमानवः** - विद्युत ऊर्ध्वं वरुणेन्द्रप्रजापतिभिस्सह, पश्चात् पृथक् च ब्रह्मगमयिता आतिवाहिकः। असंसारी वैद्युतः पुरुषः। छा. चन्द्रानन्तरं प्राप्तः आमोक्षं नेता वैद्युतनामा आतिवाहिकः'1 न्यासि.
**अमानित्वम्** - उत्कृष्टजनेष्ववधीरणारहितत्वम्। गी.
**अमानी** - भक्तेषु मानः चित्तसमुन्नतिः अस्य नास्तीति। भक्तेष्वनहंयुः। सह.
**अमायिनः** - अनभिसंहितफलस्य। मा.
**अमितविक्रमः** - अपरिमितबलः। सह. त्रैलोक्येपि अपर्यवसितपादविक्षेपः। सह.
**अमिताशनः** - अमितं अपरिमितं अशनं गोपैरिन्द्राय परिकल्पितं भोजनं अस्येति। सह.
**अमितौजाः** - योगपर्यङ्को ब्रह्मणः। कौ.
**अमीवम्** - निकृष्टम्। भा.
**अमुर्हि** - अमुष्मिन् काले। बृ.
**अमूढाः** - आत्मानात्मस्वभावज्ञाः। गी.
**अमूमुहत्** - मोहयति स्म। बृ.
**अमूर्तम्** - अशरीरं मुक्तरूपम्। वि.
**अमूर्तिः** - स्थूलभौतिकमूर्तिव्यावृत्तः। सह.
**अमूर्तिमान्** - नास्ति मूर्तिः एषाम्, ते अमूर्तयः अव्यक्तपुरुषादयः। तेऽप्यस्य स्वमिति। सह.
**अमृतः** - असंसारी। तै. बृ. कालापरिच्छिन्नः। बृ. जन्मजरामरणादिप्राकृतधर्मरहितः आत्मा। गी. परमात्मा। तै. भक्तानां निरवधिकमाधुर्येण, जरामरणनिवारणेन, सदा सेवायामपि अतृप्तिकरत्वेन वा नास्ति मृतं मृतिः अस्मादिति। सह. मरणशून्यः असंसारी। तै. मुक्तः। के. बृ. श्रु.
**अमृतम्** - अपौरुषेयतया नित्यम् (वेदम्)। तै. अमृतवत् भोग्यं कल्याणगुणजातम्। तै. अमृतशब्दः प्राणिविनाशाभाववाची। वेकौ. अयाचितद्रव्यम्। भा. असंसारि। तै. मु. अस्पृष्टसंसारगन्धम्। मु. आत्मा। गी. चिरकालस्थायि। रत्न. चेतनम्। छा. जन्मजरामरणादिप्राकृतधर्मरहित आत्मा। गी. धारोष्णं पयः। "धारोष्णममृतं पयः' इति वैजयन्ती। रा. निरतिशयभोग्यम्। छा. निरतिशयसुखस्वरूपम्। छा. परं ब्रह्म। मोक्षः। ई. परमात्मनि प्रतिषिध्यमानममृतत्वं संसारित्वविनाशरूपम्। तत्र प्रतियोग्यप्रसक्त्या विनाशाप्रसक्तिरिति। सुबा. ब्रह्म। श्री. अधि. कौ. लोकान्तरे चिरस्थायित्वरूपामृतत्वप्राप्तेः प्राणाधीनो-

पायानुष्ठानसाध्यत्वात्प्राणोऽमृतम् । कौ. ब्रह्मप्राप्तिरूपो मोक्षः । अधि. भोग्यम् । मु. मरणधर्मशून्यम् । श्वे. मरणाद्यवद्यशून्यम् । श्वे. मोक्षः । प्र. श्रु. मोचकम् । भा. म्रियमाणेऽपि देहसन्ताने स्वयममृतम्, स्वरूपतो धर्मतश्च अविनाशि । ई.

[समस्तजरामरणसन्तानोच्छेदकः नित्यः परमपुरुषार्थः । सच्च.]

**अमृतं लोकम्** - नित्यसिद्धं विष्णोः परमं पदम् । श्रीसू.

**अमृतघटः** - मधुघटः । रा.

**अमृतत्वम्** - निरतिशयसुखरूपत्वम् । श्रु. तत्तद्वस्तुगतदोषविशेषसंबन्धराहित्यम् । श्रु. ब्रह्मप्राप्तिः । श्री.

**अमृतपः** - हविः परिणामरूपामृतपः । सह.

**अमृतवपुः** - रूपमप्यमृतमस्येति । सह.

**अमृतांशूद्भवः** - अमृतांशोः सर्वतापहराप्यायनमृतसंजीवनामृतमयांशोश्चन्द्रस्यापि तन्मनश्शैत्यादिगुणोपस्नेहात् तथोद्भूतत्वेन । उद्भवति अस्मादिति उद्भवः उत्पत्तिस्थानमिति । सह.

**अमृताः** - नित्याः । वि. अमोघाः । बृ. मुक्तियोग्याः । बृ. अत्यन्तरसवत्यः । छा.

**अमृताशः** - भक्तान् स्वगुणामृतमाशयतीति । सह.

**अमृत्युः** - मृत्युमृत्युत्वात् मृत्युविरोधी । सह.

**अमृषा** - सत्यम् । बृ.

**अमेध्यम्** - अयज्ञार्हम् । अयज्ञशिष्टमित्यर्थः । गी. मेधोऽत्रयज्ञः । तदर्हं मेध्यम् । तद्विपरीतममेध्यम् । ता. मेधाविरोधिन्यप्यमेध्यशब्दप्रयोगः । ता.

**अमेयात्मा** - 'इयान्' इति अपरिच्छेद्यस्वरूपः । सह. विविधगुणरूपानुरूपाम्भोधिगाम्भीर्यात् अपरिमेयः आत्मा स्वभावः अस्य इति । सह.

**अमोघः** - नास्य व्यर्थः अस्तीति । सह. वितथस्पर्शरहितः । सह.

**अमोघवाञ्छितः** - सत्यकामः । वि.

**अमौनम्** - ''अथ मुनि'' रित्यत्र मौनात् पूर्वनिर्दिष्ट पाण्डित्यं बाल्यं चेत्येतद्द्वयम् । बृ.

**अम्बरम्** - आकाशः । श्री.

[**अम्बरान्तम्** - मूलप्रकृतिः । ई.]

**अम्बरीषः** - प्रशुश्रुकनृपपुत्रः । रा.

**अम्बुजम्** - रक्तपद्मम् । रा. (सु. ४४-८)

[**अम्बुजत्रयम्** - कमल कुमुदेन्दीवरात्मकम् । या.]

**अम्बुसंरोधः** - जलधिः । अम्बूनि संरुध्यन्ते अनेनेति । रा.

**अम्भोनिधिः** - अखिलजगदाधारपीठकमठात्मना पातालाम्भोनिक्षिप्तः, अम्भसि स्वयं निधीयते निक्षिप्यत इति । सह.

**अयम्** - लौकिकप्रमाणसिद्धाकारविशिष्टः । श्रु.

**अयं लोकः** - इहलौकिकं फलम् । बृ.

**अयज्ञः** - महायज्ञादिपूर्वकनित्यनैमित्तिकादिकर्मरहितः । गी.

**अयतिः** - मेरुकन्या। वि.

[**अयथाकृतम्** - न्यूनातिरिक्ततया कृतम्। या.]

[**अयनपुष्पम्** - उपनन्द्यावर्तकम्। पाञ्च.]

**अयनम्** - आयः। निर्गमनमित्यर्थः। बृ. उपायः। श्रु. प्रयोजनम्। गी. प्राप्यम्। अयनशब्दोऽत्र कर्मणि ल्युडन्तः प्राप्यपरः। ता. मार्गम्। रा.[इण्गतौ, ईयते अनेनेति अयनम् उपायः, इयतेऽयौ इति अयनम उपेयः इयतेऽसौ इति अयनम् उपेयः,ईयतेऽस्मिन्निति अयनम् आधारः। 'अयपयगतौ' इत्यस्मादपि निष्पद्यते अयनमिति। र. ईयत इत्ययनम्। प्रवेष्टव्यं वस्तु। दे.]

[**अयमसौ (गरुडः)** - अयमिति स्वरूपपरामर्शः। असाविति प्रकार-परामर्शः। अतो न पौनरुक्त्यम्। या.]

**अयशः** - यशोविरोधि, नैर्गुण्यप्रथा, सदोषत्वप्रथेति यावत्। गी.ता.

**अयशाः(स्त्री)** - अरजस्का। बृ.

**अयाज्याः** - शूद्राद्याः, पतिताः, व्रात्या वा। वि.

[**अयातयामम्** - (आज्यम्) भगव-द्देवताकत्वाद्यातयामत्वदोषहीनम्। सच्च.]

**अयास्यः** - प्राणः। अयमास्ये अन्तरिति सः अयास्यः। बृ. कश्चित् ऋषिः। मुखनिर्गतश्च। अयते आस्यात्। छा.

**अयुक्तः** - शास्त्रीयकर्मायोग्यः, विकर्मस्थः। गी.

**अयुक्तबुद्धिः** - अनियोजितबुद्धिः। अप्रवर्तितबुद्धिरित्यर्थः। रा.

**अयुगपत्** - भिन्नकाले। सर्वा.

**अयुतसिद्धम्** - अपृथक्सिद्धम्। च.

**अयुतसिद्धिः** - अपृथक्सिद्धिः। श्रु.

**अयोध्या** - अपराजिताख्यवैकुण्ठपुरी। रा. [परमपदम्। ई.]

**अयोनिजः** - सारस्वतावतारे भगवद्वाक्सम्भवः तथा, योनौ भगे जायत इति योनिजः स नेति। सह.

**अरः** - ब्रह्मलोकस्थः ह्रदः कश्चित्। कौ. ब्रह्मलोके स्थितः अर्णवः। छा.

**अरम्** - अल्पम्। तै. चक्राङ्गम्। पा. शीघ्रम्। श्रु.

**अरकरः** - संकल्पमात्रेण करोतीत्यरकरः। अरं शीघ्रम्। भा.

**अरजाः** - शुक्रस्य ज्येष्ठपुत्री। रा.

**अरणम्** - स्वप्रापकम् (भगवन्तम्)। "ऋ गतौ" करणे ल्युट्। भा. रक्षकम्। भा.

**अरणिः** - जन्मभूः। वि.

**अरण्यायनम्** - अरण्यवासः। छा.

**अरतिः** - निर्वेदः। या.

**अरत्निः** - चतुर्विंशत्यङ्गुलयः। 'चतुर्विंशत्यङ्गुलयोऽरत्नि'रिति सूत्रम्। रा.

**अरविन्दाक्षः** - अरविन्दसुन्दरे अक्षिणी अस्येति। सह.

**अराः** - नेमिमध्यवर्तिकाष्ठविशेषाः। श्वे. चक्रस्य नाभिनेम्योः अन्तरालवर्तीनि काष्ठानि। प्र. चक्राणां नेमिनाभिमध्य-

गतावयवाः । या. चक्रमध्यवर्तिदारु-शलाकाः । बृ.

**अरातीयतः** - सत्रून्, शत्रुवदाचरतः । तै.

**अराधि** - सिद्धम् ।

**अराळम्** - वक्रम्, व्यत्यस्तम् । सुन्दर.

**अरिः** - निमित्ततोऽनर्थेच्छुः । गी.

**अरिष्टम्** - अविनाशः । छा. अशुभप्रदम् । रा. बाधरहितम् । रिष हिंसायाम् । रा. रिष्टं नाशः । रिष हिंसायमिति हि धातुः । भावे क्तः । अरिष्टं अनाशः । क्षेमः । बृ. शुभम् । 'अरिष्टं पापशुभयो'रिति वैजयन्ती । रा. सुखम् । रा.

**अरिष्टनेमिः** - काश्यपः । रा. यक्षः कश्चित् । वि.

**अरुचितम्** - अनभिमतम् । रा.

**अरुणः** - अव्यक्तरागः । रा. गौतम औपवेशिः । अग्नि. रविसारथिः । श्रु.

**अरुन्धती** - वसिष्ठभार्या । रा.

**अरुन्मुखः** - रुत् वेदः । रुत् मुखे न विद्यते यस्य सः अरुन्मुखः वेदान्तविमुखः । कौ.

**अरूपम्** - कर्मकृतरूपरहितम् । श्वे. रूपरहितम् । अति.

**अरूपमनामयम्** - कर्मकृतदेहतत्कृतदुःख-विरोधीत्यर्थः । तापत्रयप्रतिभटमिति यावत् । श्रु.

**अरूपवत्** - रूपरहिततुल्यमेव । जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वं न विद्यते इत्यर्थः । श्री.

**अरौद्रः** - परमैश्वर्येऽपि गुणशीतलिम्ना अनुग्रः । सह.

**अर्कः** - अहो महात्मा अतिधार्मिक इति स्तुतः । अर्क स्तुतौ । सह. परमात्मा । बृ. स्फटिकः । रा.

**अर्काः** - अर्चनीयाः । अग्नि.

**अर्घ्यः** - पूज्यः । कौ.

**अर्घ्यम्** - पूजा । रा. पूजार्थमुदकम् । रा.

**अर्चन्** - प्रीणनाय प्रवृत्तः । बृ. प्रीणयन् । अर्चन्नित्यत्र "लक्षणहेत्वोः क्रियाया" इति हेतौ शतृप्रत्ययः । जगद्व्यापारलीलया स्वात्मानं प्रीणयितुमचरदित्यर्थः । बृ.

**अर्चनम्** - प्रीणनम् । श्रु.

**अर्चयन्ति** - कर्मभिः प्रीणयन्ति । ता.

[**अर्चापकः** - अर्चकः । पाञ्च.]

**अर्चावताराः** - स्वयंव्यक्तदैवार्षादयः । न्यासि.

**अर्चिः** - अग्निः प्रथम आतिवाहिकः । अर्चिरभिमानिनी देवता । बृ.

**अर्चितः** - अर्चावतारवान् । अर्चा अर्चावतारः, साऽस्य सञ्जातेति । सह.

**अर्चितम्** - अलङ्कृतम् । रा.

[**अर्चितुम्** - पूजयितुम् । अयं धातुर्भौवादिकः । 'अर्चयितुं' इति तु चौरादिकाद्धातोर्भवति । या.]

**अर्चिमत्** - दीप्तिमत् । मु.

**अर्चिरादयः** - आतिवाहिकाः देवता-विशेषाः । श्री. अर्चिराद्यात्मभूता-भिमानिदेवताविशेषाः । श्री. आतिवाहिको गणः । श्री.

**अर्चिरादिमार्गः** - अर्चिरहस्सितपक्षोदगयनाब्दमरुदर्केन्दुवैद्युतवरुणेन्द्रप्रजापतिसंज्ञैरातिवाहिकैर्मुच्यमाननयनार्थमुपयुक्तो मार्गः। न्यासि. [''अर्चिरादिधूमादिमार्गौ गगनमार्गे दक्षिणोत्तरभागनियतौ'' इति आगमप्रसिद्धिः। ज्योतिर्विदस्तु-अश्विन्यादितारात्रिककृते वीथीनवके प्रत्येकं त्रिवीथिकाः पितृयानयोगियानदेवयानाख्याः दक्षिणमध्यमोत्तरभागनियताः पितृलोकब्रह्मपददेवलोकप्राप्तिहेतवः त्रयो मार्गा इत्याहुः। या.]

**अर्चिष्मान्** - बाह्याभ्यन्तरचक्षुरुन्नमनक्षमदिव्यतेजोऽतिशयः।सह.

**अर्जुनः** - कार्तवीर्यः। सुन्दर. माहिष्मतीनगराधिष्ठाता हैहयो नृपः। रा. वृक्षविशेषः। रा.

**अर्थः** - अभिधेयः। गी. श्रु. अर्थनीयभोगविशेषः। ता. अर्यते प्राप्यते अर्थ्यत इति वा विभूतिः। च. अर्यमाणः, गम्यमानः। ऊषि कुषि गार्तीत्यादिना अर्तेरौणादिके थन्प्रत्यये अर्थशब्दनिष्पत्तिः। न्यासिटी. रत्न. एकभक्तिविशिष्टाधिकारिस्वयंप्रयोजनम्। सह. निवृत्तिः। रा (यु.७४-७७). पुरुषार्थः। वर. सुन्दर. प्रजननेन्द्रियम्। बृ. प्रयोजनम्। गद्य. गी. रा. अर्थेन प्रयोजनमुद्दिश्य। छा. मोक्षः। 'अर्थःस्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने' इति वैजयन्ती। रा. वस्तु। वै. वस्तुसामर्थ्यम्। श्रु. विषयः। ता. शब्दवाच्यः। वि. श्रेयः। रा. साध्यम्। प्रयोजनम्। भा.

**अर्थकृच्छ्रम्** - धननाशः। रा.

**अर्थक्रियाकारि** - अनुष्ठानपर्यन्तम्। ई.

**अर्थक्रियाकारित्वम्** - अर्थनिष्पत्तिहेतुत्वम्। च.

**अर्थतत्त्वम्** - तत्त्वार्थः। याथार्थ्यम् इति यावत्। रा.

**अर्थत्वम्** - स्ववाक्यस्थपदान्तरान्वययोग्यत्वम्। श्रु.

**अर्थनित्यत्वम्** - प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वार्थाकारसुसदृशसंस्थानविशिष्टत्वम्। श्रु.

**अर्थपञ्चकम्** - (शैवमते) मलं कर्म च माया च मायोत्थमखिलं जगत्। तिरोधानमयी शक्तिः अर्थपञ्चकमिष्यते। न्यासि. सर्वा.[प्राप्यः, प्राप्ता, प्राप्तिसाधनं, प्राप्तिविरोधि, प्राप्तिफलञ्च। ई. ''प्राप्यस्य ब्राह्मणे रूपम् प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायः फलं चैव तथा प्राप्तिविरधि च''। र.]

**अर्थपदम्** - अर्थबोधकपदवत् वार्तिकम्। रा.

**अर्थबुद्धिः** - विशिष्टार्थधीः। सर्वा.

**अर्थवशीकरणम्** - विषयासन्निधापनम्। हेयतया ज्ञापनं च। श्रु.

**अर्थवादः** - विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषः। न्याप. य. स्तावकवाक्यम्। त.

**अर्थविभागः** - 'धर्माय यशसेऽर्थाय आत्मने स्वजनाय च । पञ्चधा विभजन् वित्तमिहामुत्र च शोभते ॥' इत्युक्तप्रकरो विभागः । रा.

[**अर्थविज्ञानम्** - विशिष्यज्ञानम् । (बुद्धेः अष्टस्वङ्गेषु अन्यतमम्) । र.]

**अर्थशास्त्रम्** - दण्डनीतिः । वि.

**अर्थसामानाधिकरण्यम्** - भिन्नानां अर्थानां एकस्मिन्नर्थे वृत्तिः । अधि.

**अर्थस्वरूपम्** - धर्मिस्वरूपम् । श्रु.

**अर्थस्वरूपेण स्थितः** - देवमनुष्यादि-तत्तदाकारविशिष्टपिण्डमात्रतया प्रतिभासमानः । वि.

**अर्थाः (न्यासू)** - इन्द्रियगोचराः शब्दादयो गुणाः तद्विशिष्टानि च । न्याप. कार्यपदार्थाः । ई.

**अर्थान्तरम्** - प्रकृतानुपयुक्तवचनम् । न्याप.

**अर्थापत्तिः** - अर्थापत्तिस्त्वनुमानमेव । तथा हि । अनुपपद्यमानदर्शनादुपपादक-कल्पनं नाम व्याप्याद् व्यापकज्ञानम् । ... प्रमाणद्वयविरोधे सति विषयव्यवस्थापन-मर्थापत्तिः इत्यपि न वाच्यम् । प्रमाणयोः सतोर्विरोधाभावात्, विरुद्धयोरपि प्रामाण्यायोगात् । न्याप. [अनुपपद्यमानार्थ दर्शनात् तदुप पादकार्थान्तरकल्पकं प्रमाणम् । ई.]

**अर्थार्थी (भक्तः)** - अपूर्वैश्वर्यकामः । य. अप्राप्तैश्वर्यतया ऐश्वर्यकामः । गी.

**अर्थिकल्पकः** - अर्थी च कल्पकश्च । अर्थिनां कल्पद्रुम इति वा । अर्थिनः कल्पद्रुमाः यस्य सः इति वा । अभिमत-पुरुषार्थदानार्थमर्थिनामुत्पादकः शास्त्रादि-मुखेनार्थित्वापादकश्चेति वा । गद्य. स्वार्थे कः । अर्थिनां कल्पद्रुमवत् सर्वापेक्षितप्रदः । यद्वा अर्थिनः कल्पद्रुमभूताः यस्य सः । तथाहि- उदाराः सर्व एवैत इति । अथवा स्वयं अर्थिनः कल्पयतीत्यर्थः । क्षेत्रज्ञानां तत्तत्पुरुषार्थाधिकारदशाऽपि हि परमपुरुषकल्पिता । स्तो.

**अर्थे** - देवत्वमनुष्यत्वाद्याकारे । भा.

**अर्थ्यम्** - अर्थादनपेतम्, प्रयोजननियत-मित्यर्थः । रा.

**अर्थ्यताम्** - इष्यताम् । सर्वा.

**अर्थ्याः** - अर्थादनपेताः । रा.

**अर्दितम्** - हिंसितम् । रा.

**अर्धम्** - स्थानम् । छा.

**अर्धवैनाशिकः** - वैशेषिकः । सर्वा. (ये) सावयवद्रव्येषु अवयविनो विनाशं वदन्ति न परमाणुपरममहतोः ते, (वैशेषिकाः) । अधि.

**अर्भकौकस्त्वम्** - अल्पायतनत्वम् । श्री. छा.

**अर्यमा** - उत्तरफल्गुनीनक्षत्रदेवता । रा. पितॄणां पतिः ।

**अर्यमाणम्** - गम्यमानम् । 'इन्द्रयैरर्यमाण-त्वाद् ज्ञायमानोऽर्थ उच्यते' । न्यासिटी.

**अर्वाग्वसुः** - बृहस्पतिपोषकः कश्चन सूर्यरश्मिविशेषः । वि.

**अर्हः** - अनन्यस्पृहाणां (ज्ञानिनां) अयमेव योग्य इति। सह.

[**अर्हणम्** - पूजा। या.]

**अर्हाणि** - अर्हणानि; पूजाः। छा.

**अलकाः** - कुटिलकेशाः। या.

**अलक्षणम्** - अनुमानागम्यम्। लक्ष्यते अनेनेति लक्षणमनुमानम्। मा. लक्षणं अनुमापकम्। जाग्रदादिप्रवृत्तिरूपानुमापकराहित्यादलक्षणम्। मा(कू). स्त्रीत्वादिरहितम्। लिङ्गजन्यज्ञानागम्यमिति वा। वि.

**अलक्ष्मीः** - दर्शनायोग्या। श्रीसू. दुस्सहभार्या। लैङ्गे 'अलक्ष्मीश्च मया प्रोक्ता पत्नी या दुःसहस्य च। नारायणपदं ध्यात्वा नश्यत्येव न संशयः ॥' श्रीसू. 'सा हि श्रीरमृता सताम्' इत्याद्युक्तब्रह्मविद्यायाः अभावः। श्रीसू.

**अलङ्कारः** - अलङ्कार इति सुन्दरबाहोर्नामान्तरम्। सुन्दर.

**अलङ्काराः** - अनुप्रासोपमादयः। या.

**अलम्** - निवृत्तिः। 'तेनालमस्तु तन्निवृत्तिः अस्तु'। वि.

**अलम्पटः** - चित्तविक्षेपरहितः। भा.

**अलं भवति** - समर्थो भवति। बृ.

**अलसः** - मन्दप्रवृत्तिः। गी.

**अलसाः** - (कटाक्षाः) व्रीडेन विषयात् प्रत्यावृत्तिमन्तः। 'आलस्यं तदभीष्टार्थाद् व्रीलाद्रेर्यन्निवर्तनम्'। या.

**अलिङ्गः** - लिङ्गागम्यः। क.

**अलिङ्गम्** - कर्मकृतशरीररहितम्। भा.

**अलीकम्** - अत्यन्तासत्। न्यासिटी. अप्रियम्। 'अळीकन्त्वप्रियेऽनृते' इत्यमरः। रा.

**अलूक्षाः** - अरूक्षाः, क्रोधलोभादिरहिताः। तै.

**अलोकपथम्** - उत्पथम्। भा.

**अलोकाकाशः** - जन्तुसंचाररहिताकाशः (जैनमते)। सर्वा.

[**अलोलुत्वम्** - अलोलुपत्वम्; विषयेषु निस्पृहत्वमिति यावत्। र.]

[**अलोलुप्त्वम्** - अलोलुपत्वम्। अलोलुत्वमिति वा पाठः। विषयेषु निस्पृहत्वमित्यर्थः। गी. लुपिधातौ यङ्लुगन्ते क्विपि कृते लोलुप् इति पकारान्तपदम्। अचि कृते तु लोलुप इति। तद्व्यञ्जयति - अलोलुप्त्वं अलोलुपत्वमिति। "लूञ् छेदने" इति धातौ लोलू इति यङ्लुगन्तं, तत्र 'त्वे च' इति छान्दसं ह्रस्वमभिप्रेत्याह- अलोलुत्वमिति वा पाठ इति। अयोग्यस्पृहारूपं लौल्यमिह निषिध्यत इत्यभिप्रायेणाह - विषयेष्विति। ता.]

**अलोहितम्** - रूपादिशून्यम्। प्र.

**अलौकिकपथम्** - अकर्मवश्याचारम्। भा.

**अल्पबुद्धयः** - घटादिवत् ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्त आत्मोपलभ्यत इति विवेकाकुशलाः। गी.

**अल्पमेधाः** - अल्पबुद्धिः । गी. अल्पेषु इन्द्रियादिषु तदधीनफलेषु च मेधा यस्य सः । अल्पगोचरत्वादल्पा मेधा यस्येति वा । ता.

**अवकल्कनम्** - 'अवकल्कनं चिन्तन'-मिति व्याख्यातम् । या.

**अवकीर्णिपशुः** - गर्दभः । श्रु.

**अवकीर्णी** - क्षतव्रतः । तै. ब्रह्मचर्यभ्रष्टः । श्रु. [प्रभ्रष्टयत्याश्रमः पुमान् । सच्च.]

**अवक्लृप्तम्** - नित्येच्छानियमितम् । शास्त्रैर्विहितमिति वा । गद्य.

**अवक्रचेताः** - ऋजुबुद्धिः । क.

**अवक्रीणनम्** - आभरणादिना वशीकरणम् । बृ.

**अवगमः** - विषयः, अवगम्यत इत्यवगमः। गी.

**अवग्रहः** - प्रतिबन्धः । अवग्रहशब्देन वृष्टिप्रतिबन्धवाचिना प्रतिबन्धसामान्यं लक्ष्यते । या.

**अवच्छिन्नः** - परिच्छिन्नः । च.

**अवच्छेदः** - वैशिष्ट्यम् । रत्न.

**अवज्ञा** - उपेक्षा । रा. क्षुद्रत्वेन प्रतिपत्तिः । रा. प्रतीयमानोत्कर्षापह्नवेन निकर्षापादनम् । ता.

**अवज्ञातम्** - सावज्ञम् । गी.

**अवटः** - गर्तः । सुन्दर.

**अवधानम्** - इन्द्रियाणां विषयान्तरासञ्चारः । च.

**अवधाय** - प्रक्षिप्य । छा.

**अवधित्वम्** - प्रतियोगित्वम् । रत्न.

**अवधूतम्** - देहसंस्काररहितम् । भा.

**अवधृतः** - ज्ञातः । भा.

**अवन्ति** - पूजयन्ति । 'अव रक्षणगतिकान्त्यादिषु' बृ.

**अवपन्नः** - प्राप्तः । रा.

**अवबोधनम्** - उपासनम् । अवबुध्यते अनेनेति साक्षात्कारसाधनम् । भा.

**अवमर्शः** - गर्भसंधौ प्रवृत्तस्य बीजार्थस्य हेतुना येन केनाप्यवमर्शनम् । न्यासिटी.

**अवमर्शनम्** - परिमार्जनम् । अपनयनम् । तै.

**अवमीत्** - सर्वोत्तरतया सृष्टवान् । तै.

**अवयन्ति** - अवगच्छन्ति । तै.

**अवयवभूतैः** - अपृथक्सिद्धविशेषणतया अंशभूतैः (शरीरभूतैः जीवैः) । श्वे.

**अवयवाः** - परार्थप्रमाणप्रयोगवाक्यावान्तरवाक्यानि । न्याप.

**अवयवि** - अवयवातिरिक्तं तदारब्धं तत्समवेतं द्रव्यम् (तार्किकमते) । रत्न.

**अवयविभङ्गात्** - अतिरिक्तस्यावयविनो दूषितत्वात् । न्यासिटी.

**अवयवी** - सङ्घातविशेषः । त.

**अवरः** - वराभावः । कौ. अङ्गुष्ठपरिमाणादपि हीनपरिमाणः । श्वे.

**अवरम्** - अङ्गभूतम् । मु. कालसंख्यया अपकृष्टम् । गी.

**अवरपुरुषाः** - शिष्यप्रशिष्यादयः पुत्रपौत्रादयश्च । छा.

**अवरुणद्धि** - स्ववशीकरोति । बृ.

**अवरोधः** - सङ्ग्रहः। छा. सङ्ग्रहणम्। श्री. बृ.

**अवरोहः** - ह्रासावस्था। वि.

**अवर्णम्** - रूपरहितम्। वै. अपवादः। अविद्यमानदोषकीर्तनमिति यावत्। पा. अपेतब्रह्मक्षत्रादिवर्णम्। मु.

**अवर्णवत्** - शुक्लादिवर्णहीनम्। वि.

[**अवर्णवादः** - अपवादः। "अवर्णवादो निर्वादोऽप्यल्प (प?) वाद" इति यादवः। या.]

**अवर्ण्यसमः** - जात्युत्तरविशेषः। न्याप.

**अवलोकनः** - अवलोकितुम्। 'तुमुण्ण्वुलौ क्रियायां क्रियार्थायां' इति ण्वुलि 'युवोरनाकौ' वित्यकादेशे सत्यवलोकन इति रूपम्। वि.

**अवलोकनम्** - अवलोक्यतेऽनेनेत्यवलोकनं चक्षुः। गीसं.

**अवशः** - प्रभुत्वरहितः। रा. कर्मवश्यः। गी. सृज्यत्वसंहार्यत्वादिविशिष्टः। ता.

[**अवश्यंभवनम्** - अवश्यंभावः; अविनाभूतत्वमिति भावः। र.]

**अवष्टब्धम्** - परिगृहीतम्। रा. भूमिमाक्रम्य स्थितम्। रा.

**अवष्टभ्यः** - अवलम्ब्यः। गी.

**अवष्टम्भः** - अवलम्बः। प्र. आधारः। बलम्। वि. गर्वः। रा.

**अवसन्नम्** - खिन्नम्। सुन्दर.

**अवसादः** - अवसादश्च लक्षितो वाक्यकारेण - देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं अभास्वरत्वं मनसोऽवसादइति। देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसः। श्री. देशकालवैगुण्यादिजन्यं दैन्यम्। मु. मनसोऽभास्वरत्वम्। त. मनसो यदभास्वरत्वं यच्च तज्जन्यं दैन्यं तदुभयम्। त.

**अवसादनम्** - नियमैः देहक्षपणम्। छा.

**अवसुप्तः** - ईषत्सुप्तः। रा.

**अवसेयम्** - (कर्ममीमांसावसेयम्) साध्यम्। त.

**अवस्तु** - असत्। सर्वा. सततविकारि। वसत्येकरूपेणेति वस्तु। ततोऽन्यत् अवस्तु। भा.

**अवस्तुभूता** - अपरमार्थभूता। श्रु.

**अवस्था** - अनित्यधर्मः। श्रु. आगन्तुकोऽपृथक्सिद्धो धर्मः। न्यासि. आगन्तुकापृथक्सिद्धधर्मः। त.वा. आगन्तुरपृथक्सिद्धधर्मः। सर्वा. विकारः। सर्वा.

**अवस्थातुम्** - व्यवस्थापयितुम्। रा.

**अवहितः** - पिहितप्रविष्टः। बृ.कौ.

**अवाकी** - अजल्पाकः। वे. वाकः उक्तिः सोऽस्य नास्तीति अवाकी। उक्तिरहितः, परिपूर्णैश्वर्यत्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीनः। छा. वाकः उक्तिः, सोऽस्य नास्तीति, अजल्पाकः। श्री.वाकः उक्तिः' अवाकः तदभावः। अवाकोऽस्यास्तीति अवाक-

शब्दात् तद्धितप्रत्ययः । यद्वा, वाकी न भवतीत्यवाकी । श्रु.

**अवाचकम्** - शब्दशास्त्रविरुद्धस्वरूपम् । न्याप.

**अवाप्तसमस्तकामः** - अब्भक्षः इतिवदवधारणगर्भमिदम् । अवाप्ता एव समस्ताः कामाः येन । अवाप्तव्यं नास्तीत्यर्थः । श्रु.

**अवाप्तसमस्तकामत्वम्** - इच्छायां सत्यां अभिमतविनियोगानुगुणपरिकर-संपत्तिः । श्रु. सदाभिमतसकलभोगोप-करणसद्भावः । वेसा. सर्वत्राविहतेच्छत्वम् । गद्य.

**अविकलम्** - अन्यूनम् । सर्वा.

**अविकल्पम्** - जातिगुणादिरहितम् । भा.

**अविकारः** - जननमरणरूपविकाररहितः । वि. स्वयं कस्यचिद्विकारभूतः कार्यभूतः न भवतीति । श्रु.

**अविकार्यः** - विकारानर्हः । गी. अविकार्य(र?) इत्येतावति निर्दिष्टे कादा-चित्कविकाराभावमात्रेण सिद्धसाधनता स्यादिति तत्परिहारकं प्रत्ययार्थं विवृणोति "विकारानर्ह" इति । ता.

**अविक्रियम्** - स्वरूपान्यथाभावरूप-विकाररहितम् । भा.

**अविक्लिष्टम्** - सयुक्तिकम् । रा.

**अविचारितरमणीयम्** - अविचारिते विचाराभावे रमणीयम् । सम्यग्विचार्यमाणे न रमणीयमित्यर्थः । केचित्तु अविचारितशब्दः पुरुषपर इत्याहुः । सर्वा (आ).

**अविचिकित्सः** - संशयशून्यः । बृ.

**अविज्ञातम्** - अध्यवसायदशायां घटादिवत्स्वरूपवच्चानवगतम् । श्रु.

**अविज्ञाता** - प्रपन्नपापोपेक्षावान् । सह. [स्वाश्रितदोषवषये अज्ञानभावकः । ई.]

**अविज्ञातार्थम्** - त्रिभङ्ग्यन्तराभिधानेऽपि प्राश्निकप्रतिवादिष्वन्यतमेनाप्यज्ञातार्थं वचनम् । न्याप.

**अविज्ञानम्** - जडस्वरूपम् । तै.

**अविज्ञेयम्** - अविज्ञानं विभागेनाज्ञानं परस्माद्ब्रह्मणः पृथग्व्यपदेशानर्हत्वावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः । वेकौ. विभागेन ज्ञातुमशक्यम् । पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः । श्रु. विविच्य ज्ञातुं अशक्यम् । ता.

**अविता** - रक्षकः । तै.

**अविव्यत्सन्** - वेद्धुं ऐच्छन् । "व्यध ताडने" तस्मात्सनि नेट् । अकित्वान्न संप्रसारणम् । बृ.

**अविदासिनः** - अशोष्याः । भा.

**अविदिः** - अलाभः । न विदिः, अविदिः, 'इकृष्यादिभ्य' इति इक् । छा.

**अविदितः** - अनुपासितः । बृ.

**अविदुः** - ज्ञातवन्तः । बृ. अचिन्तयन् । 'विद ज्ञाने' इति धातोर्लङ् । या.

**अविद्यमानत्वम्** - तुच्छत्वम् । सर्वा (आ).

**अविद्या** - अज्ञानम् । देहात्मभ्रमादिकं च । गद्य. अनात्मनि आत्मबुद्धिः । श्रु. अनात्मनि आत्मेति, अस्वे स्वमिति च मतिः । वे. अनात्मसु देहादिषु आत्मबुद्धिः । वि. कर्म । श्वे. श्री.वे. कर्म भ्रान्तिज्ञानम् वा । वि. कर्म (विद्याभिन्नम्) । "अविद्या कर्मसंज्ञाऽन्या" "तर्तुं मृत्युमविद्यये" त्यादिवचनात् । बृ. कर्मसंचयः । श्री. कामकर्मात्मिका । क. क्षणिक-कार्य-दुःख-शून्येषु स्थायि-नित्य-सुख-वस्तु-बुद्धिः (सौगतमते) । बृ. त्रिगुणतिरस्करिण्या तिरोधानसंकल्पः । श्रीत. देहात्मभ्रमादिः । ता. वर्णाश्रमविहितं कर्म । श्रु. विद्यान्या क्रिया । केवलकर्म । विद्याविधुरं कर्म । ई. विद्याविरोधादिभिः प्रकृतिरविद्यादिशब्देनोच्यते । न्यासि. विपरीतबुद्धिः । श्री. संसारकारणं कर्म; अविद्या कर्मसंज्ञेत्युपक्रम्य, 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिते'ति वचनात् । ता. स्वाभाविकधीप्रसरप्रतिबन्धकं कर्म । एतन्निवृत्तिरविद्यानिवृत्तिः मोक्षः । श्रीत.

**अविद्यागृहीतः** - अविद्याकल्पितः । श्रु.

**अविद्यानिवृत्तिः** - भावपदार्थः, धीविशेषविकासादिः । न्यासि.

**अविद्यारचितम्** - प्रकृतिपरिणामरूपम् । भा.

**अविद्याशक्तिः** - आवरणं विक्षेपश्च । न्यासिटी.

**अविद्यासर्गः** - तमो-मोह-महामोह-तामिस्र-अन्धतामिस्रसंज्ञितानां वृक्ष गुल्म लता वीरु तृणानां सर्गः । न्यासि.

**अविद्वान्** - ज्ञानयोगानधिकारी । ता. ब्रह्मज्ञानशून्यः । बृ.

**अविधिपूर्वकम्** - अयथाचोदनम् । गी. विधिरत्र विधायकं वाक्यम् । तदुक्तप्रकार-परित्यागोऽत्राविधिपूर्वकत्वमित्याह - अयथा-चोदनमिति । ता.

**अविधेयत्वम्** - पुरुषेच्छाधीनकृत्य-साध्यत्वम् । वा.

**अविध्यन्** - वेदनं कृतवन्तः । बृ. संयोजितवन्तः । बृ.

**अविनाभावः** - सम्बन्धनियमः । श्रु.

**अविनिश्नताः** - स्वेदजाः । भा.

**अविभक्तम्** - स्वरूपेण देवत्वादिविभाग-रहितम् । ता.

**अविभक्तं च भूतेषु** - देवमनुष्यादिभूतेषु सर्वत्र स्थितं आत्मवस्तु वेदितृत्वैका-कारतया अविभक्तम् । ता.

**अविभक्ततमः** - अक्षरावस्थौन्मुख्यरहितं तमः । परमात्मशरीरतयाऽपि चिन्तयितु-मशक्यं सलिलविलीनलवणचन्द्रकान्त-स्थसलिलसूर्यकान्तस्थवह्निकल्पं सर्वज्ञपरमात्मैकवेद्यम् । सुबा.

**अविभागः** - निरतिशयसूक्ष्मतापत्तिः । श्रु. संयोगः । वि.

**अवियुतितः** - अविनाभावात् । सर्वा.

**अविरतम्** - अविच्छेदम् । वि.

**अविरले** - सार्वत्रिके । सर्वा.

**अविरोधः** - विरोधाभावः । श्रु.

**अविलक्षः** - निर्लज्जः । न्यासिटी.

**अविवाक्यम्** - विविधवाक्यरहितम् । श्रु.
**अविशदग्रहणम्** - अल्पधर्मविशिष्टतया ग्रहणम् । सर्वा.
**अविशदावभासः** - कतिपयविशेषरहितावभासः । श्री.
**अविशेषः** - सर्वसमः । वि. सामान्यम् । श्री.
**अविश्वम्** - विश्वविलक्षणम् । भा.
**अविश्वहेतुः** - सृज्यकर्मसापेक्षत्वात् स्वतो विषमसृष्टेरहेतुः । वि.
**अविश्वासिनः** - असमीचीनत्वज्ञानवन्तः । च.
**अविषमाम्** - कर्मानुगुणपरिणामित्वादपक्षपातिनीम् ।
**अविसंवादः** - बाधविरहः । सर्वा.
**अविस्तरम्** - शब्दप्रपञ्चरहितम् । रा.
**अवीतः** - व्यतिरेकी (हेतुः) । अन्वयाभावात् । अधि.
**अवीतहेतुः** - व्यतिरेकिहेतुः । सर्वा (आ.)
**अवेदिः** - अज्ञानम् । "इन् सर्वधातुभ्यः" इति इन् प्रत्ययः वेदनं वेदिः । बृ.
**अवेदिनः** - अविवेकिनः । वि.
**अवैद्यः** - प्राकृतो लोकः । पाञ्च.
**अवैशद्यम्** - न्यूनधर्मभानम् । रत्न.
**अव्यक्तः** - केनचित्प्रमाणेन न व्यज्यत इत्यव्यक्तः (जीवः) । स्वसंवेद्यस्वासाधारणाकार इत्यर्थः । गी. केवलमनसोऽप्यगोचरः । रा. चक्षुराद्यगोचरः । रा. (आत्मा) छेदनादियोग्यानि वस्तूनि यैः प्रमाणैः व्यज्यन्ते तैरयमात्मा न व्यज्यत इत्यव्यक्तः । गी. निरूपितश्च मोक्षधर्मे व्यक्ताव्यक्तशब्दार्थः । "इन्द्रियैर्गृह्यते यद्यत् तत्तद्व्यक्तमिति स्थितिः । अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥" इति । ता. प्रमाणतराणामगोचरः । भा. मनुष्यत्वेन परभावस्य गूहनात् व्यक्तो न भवतीति । सह.
**अव्यक्तम्** - अक्षरादनन्तरावस्था मूलप्रकृतिः । न्यासि. अत्राव्यक्तशब्दोऽपि न मूलाव्यक्तविषयः । अपि तु तदुपादानकब्रह्मशरीरपरः । ता (८). आत्मस्वरूपम् । भा. इन्द्रियागोचरम् । तै. गुणत्रयवैषम्यस्य पूर्वावस्था गुणसाम्यम् । तदवस्थं द्रव्यमव्यक्तम् । सुबा. चक्षुरादिकरणानभिव्यक्तमात्मस्वरूपम् । गी. प्रकृतिः । अचेतनप्रकृतिः । गी. प्रत्यक्षाद्यगोचरं वस्तु । रा. बाह्येन्द्रियागोचरम् । वि. प्रधानम् । वि. सर्वा. मायाजन्यं गुणतत्त्वम् (शैवमते) । न्यासि. सत्त्वरजस्तमांसि मिलितानि । नी. [उच्छूनबीजसमानाकारं प्रकृतितत्त्वम् ।]
**अव्यक्तताम्** - पृथगुपलम्भानर्हाविभक्तनामरूपाविभक्ततमोऽवस्थताम् । म.
**अव्यक्तदृष्टिः** - देहगोचरज्ञानः । भा.
**अव्यक्तब्रह्मसेविनः** - अव्यक्तब्रह्मणी सेवमानाः अव्यक्तशब्दवाच्यजीवविशेष्यकब्रह्मप्रकारकोपासनपराः । रत्न.
**अव्यक्तमूर्तिः** - अप्रकाशितमूर्तिः । गी.

**अव्यक्तमूर्तिमान्** - अव्यक्तस्वरूपः । वि.

**अव्यक्तावस्था** - महत्तत्त्वादिरूपफलोन्मुखावस्था । वा.

**अव्यग्रः** - एकाग्रः । रा. निर्दोषः । रा.

**अव्यग्रमनाः** - अचञ्चलचित्तः । रा.

**अव्यङ्गः** - वेदाङ्गैः छन्दः कल्पादिभिः स्वकल्पितैः अविहीनः । सह.

**अव्यपदेश्यम्** - व्यपदेष्टुमशक्यम् । मा. इदमीदृगिति व्यपदेशानर्हम् । मा.

**अव्यभिचारः** - ऐकान्त्यविशिष्टः । गी.

**अव्ययः** - अक्षरः । मु. अविकलः । वि. ज्ञानसंकोचादिरहितः । श्रु. दोषैरपरामृष्टः । सह. न वीयते व्यपगम्यते अस्मादिति । 'न वीयते च वैकुण्ठात् मुक्तोधस्तादतोऽव्ययः' । सह. न व्येतीति । व्ययरहितः । वि. प्रवाहरूपेण प्रतिकल्पावस्थायी । रा. व्ययरहितः । गी. स्वरूपस्य गुणस्य विभवस्य वा यदाकदाचित्प्रच्युतिर्हि व्ययः । स सर्वोऽप्यस्य नास्तीति । ता. सर्वदेशकालव्यापी । ता. शश्वदेकरूपः । मा. शश्वदेकप्रकारः । मा. स्वतो गुणसम्बन्धानर्हः । व्ययः गुणसम्बन्धकृतज्ञानसङ्कोचः सोऽस्य नास्ति । ता. स्वरूपतो धर्मतश्च निर्विकारः । ता.

**अव्ययःनिधिः** - (निधिरव्ययः) सर्वदा उपजीव्यमानत्वेपि अनुपक्षीणः । आपद्धनवत् निधेयतया निधीयत इति निधिः । सह.

**अव्ययम्** - (उपासनम्) अक्षयम् । भगवत्प्राप्तिं साधयित्वाऽपि स्वयं न क्षीयते । गी. अनवच्छिन्नज्ञानाकारम् । गी. व्ययो ज्ञानसङ्कोचविकासरूपः । ता. अपक्षयादिविकाररहितम् । वि. अवयवापचयशून्यम् । क. अविकलम् । गी. अविकृतम् । फलादिसङ्गानर्हम् । गो. असङ्कुचितकल्याणगुणम् । वै. न व्ययम् स्थाणु (स्थावरम्) । व्ययं द्र.वि. (माहात्म्यम्) नित्यमपरिमितम् । गी. कालतो विषयतस्संख्यातः प्रकर्षतश्चानवधिकम् । ता. निर्विकारम् । म.भा. परिणामविवृध्द्याख्यावस्थान्तररहितम् । वि. प्रवाहवन्नित्यम् । रा. सदैकरूपम् । गी.

**अव्ययत्वम्** - एकरूपत्वं पूर्णत्वं वा । श्रु.

**अव्यवस्थितः** - धैर्यरहितः । रा.

**अव्याकुलः** - अविकलः । ता.

**अव्याकृतम्** - अव्यक्तम् । अव्यक्तशरीरकम् । नामरूपाभ्यां न व्याकृतमिति व्युत्पत्त्या अव्याकृतशब्दस्य अव्यक्तवचनत्वात् । अव्यक्तत्वं च नामरूपविशिष्टतयानभिव्यक्तत्वम् । बृ. प्रकृतिः । अधि.

**अव्याजम्** - अकृत्रिमम् । अति.

**अव्याजत्वम्** - अनुकूलव्यापारनिरपेक्षत्वम् । व.

**अव्याप्तिः** - लक्ष्यैकदेशे लक्षणस्य अवर्तनम् । य.

**अव्युच्छिन्नेन** - समग्रशुभाश्रयादियुक्तेन । भा.

**अव्ये** - अव्यये (भगवल्लोके) । तै.

**अव्रणः** - अक्षतः । ई.

**अव्रणम्** - कर्मायत्तशरीररहितम् । भा. निर्दोषम् व्रणकिणरहितं वा । रा.

**अशनाया** - बुभुक्षा । कु.बृ. सञ्जिहीर्षा । ''अशनायोदन्याधनाया बुभुक्षापिपासा-गर्धेष्वि''ति बुभुक्षार्थे निपातितोऽशनाया शब्दः सञ्जिहीर्षां लक्षयित्वा तद्वति लक्षितलक्षणया वर्तते । बृ.

**अशनिः** - मेघज्योतिः । रा. विद्युत् । रा.

**अशब्दम्** - नामरहितम् ।अति. प्रधानम् । श. यस्मिन् शब्द एव प्रमाणं न भवति तत् अशब्दम्, आनुमानिकम् प्रधानम् । श्री.

**अशमः** - इन्द्रियानुपरतिः । गी. प्रवृत्ति-हेतुरिन्द्रियोद्रिक्तता । ता.

**अशरणः** - उपायान्तरशून्यः । वर.

**अशरण्यभूतः** - शरण्यभूतपुरुषान्तर-रहितः । सुन्दर.

**अशरण्यशरण्या** - (लक्ष्मीः) येषां मोक्षोपायनिष्पत्तिकामानां सर्वलोक-शरण्योपि न भवेत् शरण्यः, तेषामप्यसौ शरण्या । गद्य.

**अशरीरम्** - कर्मकृतशरीररहितम् । क.

**अशरीरत्वम्** - कर्मनिमित्तशरीराभावः । श्री.

**अशान्तः** - अनुपशान्तकामक्रोधवेगः । क. बहिरिन्द्रियनिग्रहरहितः । नि.

**अशान्ताः** - (प्रजाः) राजस्यः । भा.

**अशाश्वतम्** - अस्थिरम् । गी.

**अशितम्** - भुक्तम् । छा.

**अशुचिः** - अनिगृहीतमनस्त्वादेव सर्वदा विपरीतचिन्ताप्रवणः । क.

**अशुचित्वम्** - उत्तरकर्माद्ययोग्यत्वम् । ता. भगवत्कैङ्कर्यविरुद्धप्रकृतिसंसृष्टत्वम् । स्तो.

**अशुचिव्रताः** - अशास्त्रविहितव्रतयुक्ताः । गी.

**अशुद्धम्** - अशुद्धियुक्तम् । श्रु. पापमिश्रम् । श्री.

**अशुद्धसत्त्वम्** - रजस्तमस्सहवृत्तिसत्त्वम् । तच्च त्रिगुणे । शुद्धसत्त्वं तु नित्यविभूतौ । न्यासि.

**अशुभानि** - शुभप्रतिभटानि । स्तो.

**अशोकः** - अनाथविषये शोकरहितः । कस्यचिदप्यनाथस्याहानात् । सह (६७). वृक्षविशेषः । रा. शोकस्य तदुपलक्ष्याणां आध्यात्मिकानां शोकमोहाशनायादीनां विरोधी । सह (३३८).

**अशोकम्** - शोकशून्यम् । बृ.

**अशोकवनिका** - अन्तःपुरगतं लीलोद्यानम् । रा.

**अश्मनगरम्** - कालकेयाख्यासुराणामा-वासनगरम् । रा.

**अश्मा** - पाषाणः । बृ.

**अश्माखणः** - अश्मप्राप्ताखण इत्यर्थः । वाजसनेयके समानप्रकरणे 'यथाऽश्मानं ऋत्वा लोष्टो विध्वंसते' इति श्रवणेन तत्समानार्थकत्वस्यैव वक्तव्यतया आखणशब्दस्य लोष्टवाचित्वस्यैवो चितत्वात् । 'एतेन खनो घ चे'ति घप्रत्य-

यस्य करणाधिकरणयोरित्यनुवृत्त्या कर्मण्यभावात् करणार्थ एव 'घ' प्रत्ययो वक्तव्यः। अतः 'आखण' शब्दस्य 'खननसाधनतया दृढं' इत्यर्थो वक्तव्यः। अत एव 'स एषोऽश्माखणः' इति वाक्यशेषे अश्मविशेषणत्वमेव आखणस्य श्रूयते इति शङ्का अपास्ता।

**अश्रद्दधानः** - विश्वासपूर्वकत्वरारहितः। गी.

**अश्रद्धा** - कर्मसु नास्तिक्यबुद्धिः। बृ.

**अश्राम्यत्** - अयतत। अत्र श्रान्तिशब्दः करणलक्षणया यत्नपरः। बृ. श्रान्तः अभूत्। बृ.

**अश्रुतम्** - शब्दश्रवणदशायामज्ञातम्। श्रु.

**अश्रुतिः** - यत्र गते नामापि न श्रूयते स देशः। रा. श्रुतिवाक्याभावः। श्रु.

**अश्लिष्टकर्मप्रहाणम्** - यद्यर्थानुपहितफलदित्सानुत्पत्तिसंबन्धिकर्मविषयकयद्यर्थोपहितदित्सानिवृत्तिः। यद्ययमुपासनं न समापयेत्, फलं दास्यामीति यद्यर्थोपहितदित्सा। रत्न.

**अश्लेषः** - कर्मफलदित्सा प्रतिबन्धः। यद्ययमुपासकः प्रक्रान्तमुपासनं समापयेत्, उत्तरकर्मणः फलं न दास्यामीत्येवं भगवत्संकल्पः। कौ.

**अश्वकर्णः** - सर्जतरुः। रा.

**अश्वकर्णैः** - खदिरैः। रा.

**अश्वतरः** - अश्वगर्दभसङ्करः। वि. फाल्गुने मासि सूर्यमण्डलनिवासी कश्चन सर्पः। वि.

**अश्वतरीरथः** - अश्वतरीभिर्युक्तो रथः। छा.

**अश्वत्थः** - अद्य स्थितमपि न श्वः अनित्यमिन्द्रादित्यादिपदं येषां तेषु नियामकतया तिष्ठतीति। सह.

**अश्वनाथः** - अश्वनेता। छा.

**अश्वपतिः** - कश्चन ऋषिः। छा.

**अश्वपूर्वा** - अश्वः जगद्व्यापारेषु व्यापनशीलः भगवान् यस्याः पूर्वप्रदेशे सा। यस्याः प्रयाणकाले सेनाग्रे असङ्ख्येयान्यश्ववृन्दानि पुरस्ताद् गच्छन्ति सा। श्रीसू.

**अश्वमेधः, म्** - (अश्वरूपस्य प्रजापतेः) अश्वयदित्यश्वः मेधार्हत्वान्मेधः। यद्यप्यश्वमेधशब्दो यागनाम, तथापि यागद्रव्ययोरभेदोपचारात् तथोक्तिरुपपद्यत इति द्रष्टव्यम्। बृ.

**अश्वयत्** - उच्छूनमभूत्। बृ.

**अश्ववृषः** - पुमश्वः। "वृष सेचने" रेतस्सेक्ता इत्यर्थः। बृ.

**अश्विनौ** - देवभिषजौ। रा.

**अष्टकैः षड्भिः** - अणिमाद्यैश्वर्याष्टकम्, प्राच्यादिदिगष्टकम्, दिक्पालाष्टकम्, भूम्यादिप्रकृत्यष्टकम्, ब्रह्मादिदेवाष्टकम्, वस्वष्टके अपहतपाप्मत्वादिब्राह्मगुणाष्टके दयाद्यात्मगुणाष्टके चैकञ्च, तैः। श्वे.

[**अष्ट गुणाः** - "दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा" इत्युक्ताः अष्टौ गुणाः। र.]

[**अष्ट पुष्पाणि** - (आत्मगुणरूपाणि अष्ट पुष्पाणि) "अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियानिग्रहः। सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः। ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च। सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत्"। र.]

**अष्टभुजः** - दीनोद्दिधीर्षया द्विगुणीकृत-बाहुः विष्णुः। अष्ट.

[**अष्ट रसाः** - "शृङ्गरवीरकरुणाद्भुत-हास्यभयानकाः। बीभत्सरौद्रौ च रसाः।" र.]

**अष्टरूपम्** - पञ्चतन्मात्रप्रकृतिमहदहङ्कार-रूपाष्टप्रकृतिरूपाम्। म.

**अष्टवर्गः** - "कृषिवाणिज्यदुर्गाणि सेतुः कुञ्जरबन्धनम्। खन्याकरः करादानं शून्यानां च निवेशनम्॥ अष्टवर्गमिमं साधुः स्वस्थवृत्तो न लोपयेत्।" इति कामन्दकोक्तः। यद्वा 'पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम्। वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः॥" इति.। रा.

[**अष्ट सिद्धयः** - "ऊहस्तर्कोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानं च सिद्धयोष्टो" इत्युक्ताः अष्टौ सिद्धयः। र.]

[**अष्टाङ्गपूजा** - (प्रथमाङ्गम्) "अन्तःकरणयागादि यावदात्मनिवेदनम्। तदाद्यमङ्गं यागस्य ......। (द्वितीयाङ्गम्) "पूजनञ्चार्घ्यपुष्पाद्यैः भोगैर्यदखिलं मुने। बाह्योपचारैस्तद्विद्धि भोगसंज्ञन्तु नारद।" (तृतीयाङ्गम्) "मध्वाज्यात्क्तेन दध्ना वै पूजा च पशुना सह। तत्तृतीयं हि यागाङ्गं .....। (चतुर्थाङ्गम्) "तुर्यमन्नेन पूजनम्"। (पञ्चमाङ्गम्) "निवेदितस्य यद्दानं पूर्वोक्त-विधिना मुने। सम्प्रदानन्तु तन्नाम यागाङ्गं पंचमं स्मृतम्। (षष्ठाङ्गम्) "वह्निसन्तर्पणं षष्ठम्।" (सप्तमाङ्गम्) "पितृयागन्तु सप्तमम्।" (अष्टमाङ्गम्) प्राणाह्निहवनं नाम्ना, अनुयागं तदष्टमम्। पाञ्च.]

**अष्टाविंशकः** - अव्यक्तमहदहङ्कारेन्द्रिय-तन्मात्रभूतसृष्टिप्रकारणेषु जीवपरौ पञ्चविंशकषड्विंशकौ। अक्षरतमसोः पृथग्गणने, अन्यतरोपक्रमे कालस्य पृथग्गणने च षड्विंशकसप्तविंशकाष्टविंश-कत्वादिकं यथासम्भवं भाव्यम्। न्यासि.

**अष्टीकरणम्** - 'महाभूतान्यहङ्कारो बुद्धि-रव्यक्तमेव च' इति गीतानुसारेण शरीराणा-मष्टद्रव्योपादानत्वात् अष्टतत्त्वमयत्वापा-दनम्। न्यासि.

**अष्टौ प्रकृतयः** - मोक्षधर्मगतयाज्ञवल्क्य-जनकसंवादवसिष्ठकरालसंवादयमस्मृत्य-नुसारात् गीताभाष्यानुसाराच्च अव्यक्तमह-दहङ्काराः पञ्चमहाभूतानि च क्षेत्रारम्भक-द्रव्याणि अष्टौ। सुबा.

**असंविदानौ** - परस्परसंमन्त्रणमकुर्वन्तौ। छा.

**असंवृतम्** - योगिनामतिरोहितम्। सुबा.

**असंशयम्** - निःसंशयम्। अकुटिलमिति यावत्। रा. निस्संशयम्। गी.

**असंस्कारम्** - (वाक्यम्) व्याकरणाननुशिष्टम्। वि.
**असंस्कृतान्नम्** - वैश्वदेवादिना असंस्कृतं यदन्नं तत्। वि.
**असंस्तुतम्** - अपरिचितम्। वै.
**असंहार्यः** - अनिवार्यः। रा.
**असक्त** - संयोजितवान्। षञ्जेस्सिचि व्यत्ययेन आत्मनेपदे "झलो झली"ति सिज्लोपे तस्य छान्दसेन ञित्वे सिद्धत्वेन "अनिदिता" मित्यनुनासिकलोपः कुत्वम्। बृ.
**असक्तम्** - अप्रतिहतम्। वि. देवादिदेहसङ्गरहित्तम्। गी.
**असक्ता** - विरक्ता। वि.
**असक्तिः** - आत्मव्यतिरिक्तपरिग्रहेषु सङ्गरहितत्वम्। गी. परमपुरुषप्रीतिव्यतिरिक्तस्वर्गादिफलसङ्गत्यागः। गीसं.
**असङ्कल्पः** - फलकामनात्यागः। नि.
**असङ्ख्यातत्वम्** - परार्धपर्यन्तसंख्यारूपबुद्धिविशेषविषयत्वाभावः। तादृशैकसंख्यावच्छेदाभावः। न्यासिटी.
**असङ्ख्यातप्रदेशः** - एकरूपसङ्ख्याहीनप्रदेशः। अनियतप्रदेश इत्यर्थः। श्रु.
**असङ्ख्येयः** - नरसमूहाः असंख्येयाः अगणनगोचराः अस्य सन्तीति वा तद्वत्तया तद्व्यपदेशेन वा असंख्येयः। सह.
**असङ्गः** - अनर्थहेतुत्वपर्यालोचनपूर्वकानासक्तिः। भा. अविलम्बः। रा. निर्लेपः। त्र्. संगविरोधी। श्रु.

**असङ्गचारी** - निरालंबनगमनशीलः। रा.
**असङ्गतत्वम्** - संगत्यभावः। अधि.
**असङ्गशस्त्रम्** - गुणमयभोगासङ्गाख्यं शस्त्रम्। गी.
**असत्** - अचित्। श. अचेतनम्। श.प्र. अचेतनवर्गः। भा. अनित्यम्। श्रु. अप्रत्यक्षम्। प्र. सद्भिन्नम्। अप्रामाणिकं मुमुक्षोरनुपादेयं च। सर्वा. अमूर्तप्रपञ्चः। श्वे. अवर्तमानम्। प्र. अविभक्तनामरूपम्। श. अव्याकृतनामरूपम्। छा. अश्रद्धया कृतम्। गी. असाधुजनानामनन्तभवप्रदतया असदिति वेदनार्हः। सह. कल्पितम्। अविद्यमानम्। रत्न. कारणावस्था प्रकृतिः। असदिति वेदनार्हाः। सह. कल्पितम्। अविद्यमानम्। रत्न. कारमावस्था प्रकृतिः अतीतमनागतञ्च, 'सदसच्चाहमर्जुन' इति। गी. महदहङ्कारदेवमनुष्यादिनामरूपशून्यम्। सुबा. सततपरिणामिदेवमनुष्यादिरूपम्। भा. सूक्ष्मम्। प्र .मु.
**असत्कृतम्**- पादप्रक्षालनादिगौरवरहितम् (दानम्)। गी. सत्कृतं सत्करणम् तद्रहितमसत्कृतम्। ता.
**असत्क्षरम्** - असद्विनाशहेतुः! सह.
**असत्त्वम्** - (जगतः सृष्टेः प्राक्) सूक्ष्मदशापत्तिः। श्री. परिदृश्यमानावस्थाविरोध्यवस्थावत्त्वम्। बृ. विनाशस्वभावः। गी.
**असत्प्रतिपक्षत्वम्** - समबलतया प्रतीयमानप्रमाणोपरोधाभावः। य.

**असत्यम्** - अब्रह्मात्मकम्। गी. अद्रव्यम्। न्यासिटी.

**असत्यात्सत्यप्रतिपत्तिः** - असत्यात् तत्त्वमस्यादिवाक्यात् सत्यब्रह्मणस्सिद्धिः (अद्वैतमते)। न्यासिटी.

**असत्स्वरूपम्** - दृश्यस्वरूपरहितम्। वि.

**असद्ग्राहः** - असदर्थाभिनिवेशः। रा. वृथा निर्बन्धः। वि.

**असद्ग्राहान्** - अन्यायगृहीतपरिग्रहान्। गी. असद् ग्रहणम् आर्जनं येषां तेऽत्रासद्ग्राहाः। धर्माभिसन्धिमन्तो हि न्यायेनार्जयन्ति। कामप्रवणास्तु चौर्यादिभिस्तदुपकरणानीत्याह- अन्यायगृहीतपरिग्रहानिति। ता.

**असनः** - वृक्षविशेषः। रा.

**असनम्** - गतिनिवृत्तिः। 'असनं यात्रा-निवृत्तिः' इति विश्वः। रा.

**असन्ततिः** - समन्तात् ततिः सन्ततिः विभुत्वम् तदभावोऽसन्तातिः अणुत्वम्। श्रु.

**असन्निकृष्टवाक्** - "शास्त्रं शब्दविज्ञा-नादसन्निकृष्टेऽर्थे विज्ञानम्" इत्यादिषु शाबरभाष्यस्थेषु प्रमाणलक्षणेषु घटकं 'असन्निकृष्टे' इति पदम्। च.

**असन्न्यस्तसङ्कल्पः** - आत्मयाथात्म्या-नुसन्धानेन अनात्मनि प्रकृतौ आत्मसङ्कल्पः सन्न्यस्तः परित्यक्तः येन सः सन्न्यस्त-सङ्कल्पः, अनेवम्भूतः। गी.

**असपत्नः** - स्वसदृशप्रतिस्पर्धिरहितः। बृ.

**असमञ्जः** - सगरनृपपुत्रः। रा.

**असमागम्य** - एकत्वमप्राप्य। वि.

**असम्बाधम्** - विस्तीर्णम्। रा.

**असम्बाधान्** - अन्योन्यपीडालक्षण-सम्बाधशून्यान्। छा.

**असम्भवः** - अनुत्पत्तिः। श्री. तर्कप्रकारभेदः। 'सर्वप्रमाणासिद्धत्वाद-सम्भव उदाहृतः'। 'शशे शृङ्गमुदस्थादित्ये-वमादिरसम्भवः'। न्याप. लक्षणस्य लक्ष्ये कुत्राप्यसत्त्वम्। य.

**असम्भूतिः** - आसन्नप्रतिबन्धविनाशः। मानदंभहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिः। ई. कर्मणामन्यसंक्रान्तिरूपो विनाशः। न्यासि.

**असम्भेदः** - असङ्करः। छा. असाङ्कर्यम्। बृ.

**असम्मूढः** - अस्थिरेण शरीरेण स्थिरमा-त्मानमेकीकृत्य मोहः, सम्मोहः तद्रहितः। गी.

**असंमूढत्वम्** - एकीकृत्य मोहरहितत्वम्। ता.

**असम्मोहः** - समित्येकीकारे विसजातीये सजातीयताबुद्धिस्संमोहः तन्निवृत्तिरसंमोहः। गी.

**असह्यापचारः** - निर्निबन्धनभगवद्भा-गवतद्वेषावज्ञापरिहासादिः। गद्य.

**असाधकम्** - अप्रवर्तकम्। वि.

**असाधारणः** - अनैकान्तिकभेदः हेत्वाभासविशेषः। न्याप.

**असाधारणधर्मत्वम्** - तदितरावृत्तित्वे सति तद्वृत्तित्वम्। श्रीत.

**असाधारणानैकान्तिकः** - सपक्षतोऽपि व्यावृत्तो हेतुः । न्यासिटी.

**असाधारण्यम्** - तदन्यावृत्तित्वे सति तद्वृत्तित्वम् । सर्वा (आ).

**असाधु** - असाधुकर्म । छा.

**असारम्** - न्याय्यादन्यत् । सर्वा.

**असार्वत्रिकी** - न सर्वविषया । श्री.

**असितः** - कर्मबन्धशून्यः, "षीञ् बन्धने" । बृ. ध्रुवसन्धिपुत्रस्य भरतस्य पुत्रः । रा. महर्षिविशेषः, यस्य पिता देवलः ।

**असिता** - रजोमयी । श्रु.

**असिद्धः** - व्याप्तिपक्षवृत्तिनिश्चयरहितः । हेत्वाभासविशेषः । तद्भेदास्तु न्यायतत्त्वे सङ्ग्रहेणोक्ताः - अज्ञातविपरीतसन्दिग्धास्तिस्रोऽसिद्धय इति । न्याप.

**असिद्धिः** - केचित्तु असिद्धिं चतुर्धा संगृह्णन्ति । तथाहि । व्याप्तत्वे सति पक्षधर्मतया प्रमितिर्हि हेतोः सिद्धिः । तदभावश्च व्याप्तेः पक्षस्य तद्धर्मस्य तत्प्रमितेर्वा खल्वभावात् स्यात् । तत्र च व्याप्यत्वासिद्धिः, आश्रयासिद्धिः, स्वरूपासिद्धिः, तत्रैवा(?) ज्ञानासिद्धिरिति समाख्यानिवेश इति । न्याप. हेत्वसिद्धिः । सर्वा (आ).

**असिद्धिसमः** - जात्युत्तरविशेषः । न्याप.

**असीमभूमकम्** - अपरिच्छिन्नस्वभावम् । वर.

**असीमा** - अपरिच्छिन्नपरिमाणः । सुन्दर.

**असुखम्** - अन्नपानादिजन्यसुखरहितम् । वि. [दुःखरूपः संसारः । र.]

**असुतृपः** - इन्द्रियतर्पणमात्रपरः । भा.

**असुप्तदृक्** - असंकुचितज्ञानः । भा.

**असुर्यः** - असुराणां स्वभूतः । असुरस्वभावभूतः । आसुरप्रकृतीनामनुभाव्यः । ई.

**असुहृदः** - अशोभनहृदयाः । रा.

**असूयवः** - सत्स्वपि गुणेषु दोषाविष्करणैकशीलाः । भा.

**असूया** - गुणेषु दोषारोपः । पा. गुणेषु दोषाविष्करणम् । रा.ता. अनसूयालक्षणव्याजेनासूयामपि बृहस्पतिरलक्षयत् - "न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ।" इति । ता. गुणेषु दोषाविष्करणचित्तवृत्तिविशेषः । ता. सत्स्वपि गुणेषु दोषारोपः । अच्यु.

**असूयितुम्** - दोषदृष्ट्या द्रष्टुम् । भा.

**असृक्षि** - सृष्टवान् अस्मि । बृ.

**असृष्टान्नम्** - अचोदितद्रव्यम् । गी. यज्ञार्थं सृष्टमिह सृष्टशब्देन विवक्षितम् । न्यायागतमित्यर्थः । ता.

**असौ लोकः** - स्वर्गलोकः । छा.

**अस्तम्** - अदर्शनम् । सुन्दर.

**अस्तमलाः** - अज्ञानविपर्यासरहिताः । वि.

**अस्तादिः** - अस्तः निरस्तः आदिः यस्याः सा (संसृतिः) । सुन्दर.

**अस्तिकायः** - अनेकदेशवर्ति द्रव्यम् (जैनमते) । श्री.

**अस्तित्वम्** - उत्पन्नावस्था । सुबा.

**अस्तेयम्** - मनसापि परस्वाग्रहणम्। भा. [परद्रव्यापहरणाभावः। ई.]
**अस्त्रम्** - बाणादौ शक्तिविशेषाधायको मन्त्रविशेषः। व. समन्त्रको बाणः। रा.
**अस्त्रभूषणाध्यायः** - "क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः। पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपव"दित्येवंबोधकः विष्णुपुराणगतोऽध्यायः। न्यासिटी.
**अस्थिनिचयः** - शुष्ककायः। रा.
**अस्थिरम्** - नाशवत्। श्री.
**अस्थूलत्वम्** - स्थूलत्वविरोधिशब्दाभिलप्यः आकारः। श्रु.
**अस्थेमभावाः** - क्षणिकत्ववादिनः। सर्वा.
**अस्पर्धन्त** - परस्परविजिगीषां कृतवन्तः। बृ.
**अस्फुटम्** - पररूपम्। वि.
**अस्य द्विषन्** - एनं द्विषन्। "द्विषश्शतुर्वावचनम्" इति कर्मणि षष्ठी। बृ.
**अह** - आश्चर्यद्योतकमव्ययम्। छा.
**अहः** - आदित्यस्थानविशिष्टस्य परमात्मनः रहस्यनाम। बृ. अग्न्यनन्तर आतिवाहिकः। न हीनः अस्य अस्तीति। अनाद्यविद्यानिद्रावधौ स्वावबोधहेतुत्वाद्वा अहरिवेति। सह.
**अहम्** - अहमिति हिरण्यगर्भनाम। अहमभिमानिव्यष्टिपुरुषाणां प्रथमजत्वाद्धिरण्यगर्भस्य। बृ. अक्षिस्थानविशिष्टस्य परमात्मनो रहस्यनाम। बृ.
**अहंश्रेयः** - अहमर्थस्य आत्मनः श्रेयः। बृ.
**अहंश्रेयसि** - स्वश्रेयसि। अहंश्रेयसि व्यूदिरे - अहं श्रेयानस्म्यहं श्रेयानस्मीति विवादं चक्रुः। छा.
**अहङ्कर्तव्यः** - स्तूलोऽहमित्यभिमानविषयत्वाज्जीवात्मैवाहङ्कर्तव्यः। सुबा.
**अहङ्कारः** - अनहमर्थे प्रकृतावहमभिमानः। गी. 'अभूततद्भावेच्व्विः'। ता. अनन्यापेक्षोऽहमेव सव करोमीत्येवंरूपः। गी. भगवानेव सर्वं कारयतीत्यस्य प्रतिक्षेपो-(पक्षो?)ऽहङ्कारः। ता. अनात्मनि देहे अहंभावकरणहेतुः। त. अनात्मन्यात्माभिमानवृत्तेर्मनसोऽनुग्राहकं महत्कार्यं तत्त्वम्। सुबा. अभिमानवृत्तिविशिष्टं मनः। न्यासि. अहमेव कृत्याकृत्यविषयं सर्वं जानामीति भावः (अभिमानः)। आत्मनि हिताहितज्ञाने स्वातन्त्र्याभिमानः। गी. अहंबुद्धिः। मानसव्यापारवाचिनः करोतेः बुद्धिपरत्वं युज्यते। श्रु. अहम्भावः। ता. इन्द्रियाव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणम्। स चानात्मनि देहेऽहम्भावकरणहेतुत्वमात्रादहंशब्दवाच्यः, नत्वहमर्थत्वात्। न्यासि. उत्कृष्टजनावमानहेतुः गर्वः। त. तत्र तत्र त्याज्यत्वेनोक्तोऽहङ्कारस्तु उत्कृष्टजनावमानहेतुर्गर्वापरपर्यायोऽभिमानः। न्यासि. उत्कृष्टजनावमानहेतुः गर्वापरनामा। त. गर्वः। ता. भूतादिः। गी. महत्तत्त्वजन्यं तत्त्वमचेतनम्। सुबा. महत्तत्त्वपरिणामभूतं

अचिद्द्रव्यम् । ता. श्रीप्रेरितमहत्तत्त्वजन्यः विकारः । श्रीत.

**अहङ्कारत्वम्** - महत्त्वावस्थानाशरूपत्वे सति तन्मात्रावस्थाप्राक् कालीनत्वम् । वा.

**अहङ्कारदेवता** - महत्तत्त्वदेवताभूतचतुर्मुखपुत्रो रुद्रो महत्तत्त्वकार्याहङ्कारतत्त्वदेवता । सुबा.

**अहङ्कारादेशः** - अहङ्ग्रहेण उपासनप्रकारोपदेशः । छा.

**अहङ्कृतः** - अहमभिमानकृतः । गी. अहमभिमाननूलत्वमात्रमिह विवक्षितम् । अत्राहंशब्दस्याहमभिमानलक्षणा वा । यद्वा अहङ्कृत इति भुक्ता ब्राह्मणा इतिवत् कर्तरि क्तः । अहमभिमानकृत इति फलितोक्तिः । ता. अवलिप्तः । वि.

**अहङ्ग्रहेणोपासनम्** - अहमर्थशब्दयोः परमात्मपर्यन्तत्वबुद्ध्योपासनम् । श्रु.

**अहतं वासः** - 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयाद्दैवो पित्र्ये च कर्मणि ॥' इत्युक्तजलप्रक्षालनादिगुणकं वस्त्रम् । रा.

**अहमर्थः** - अहंशब्दवाच्यः अहन्त्वविशिष्टो वा । त. प्रत्यक्त्वाश्रय आत्मा । न्यासि. प्रत्यगात्मा । वि. न्यासि.

**अहम्भावः** - अहमर्थः प्रकाशश्च । त. अहमिति बुद्धिः । श्रु.

**अहम्मत्या** - देहात्मभ्रान्त्या । भा.

**अहम्मानाः** - स्वाभिमानिनः । वि.

**अहर्जरः** - वृद्धः । अहोभिः जरा यस्य सः । तै. संवत्सरः । अहानि जीयन्ति यत्र । तै.

**अहल्लिकः** - षण्डः । बृ.

**अहस्संवर्तकः** - अहरुपलक्षितकालपरिवृत्तिहेतुः । अहः तदुपलक्षितं कालं हेतुत्वात् संवर्तयति परिवर्तयतीति । "वृतुवर्तने" संपूर्वः । सह.

**अहिः** - सर्पः । वृत्रासुरः । या.

[**अहिर्बुध्न्यसंहिता** - पाञ्चरात्रसंहिताविशेषः । सच्च.]

**अहिसन्नन्यत्र तीर्थेभ्यः** - शास्त्रीयहिंसाव्यतिरिक्तहिंसामकुर्वाणः । 'अशुद्धमिति चेन्न शब्दा'दिति सूत्रात् वैधपशुहिंसाया हिंसात्वाभावेऽपि अवर्जनीयतुलस्याहरणादिहिंसायाः हिंसाधात्वर्थत्वात् अन्यत्र तीर्थेभ्य इत्युक्तम् । छा.

**अहिंसा** - अप्राणिपीडा । गी. अभूतद्रोहचिन्ता । भा. अशास्त्रीयप्राणिपीडावर्जनम् । त. करणत्रयेण परपीडानिवृत्तिः । श्रु. करणत्रयेणापि परपीडानिवृत्तिः । भा. परदुःखाहेतुत्वम् । वे. परदुःखाहेतुत्वम् । गी. परदुःखहेतुव्यापारो हिंसा । दुःखशब्देनाहितं विवक्षितम् । चिकित्सादौ हितरूपदुःखकरणस्य हिंसात्वाभावात् । ता. "अहिंसा अपीडाप्राणिनाम्" (शां) । परपीडावर्जनम् । गी. भूतद्रोहराहित्यम् । भा. वाङ्मनःकायैः परपीडारहितत्वम् । गी. सर्वभूतसुहृत्त्वम् । भा.

**अहितम्** - यच्च श्रुतिनिषिद्धं तदखिलमप्यहितम्। न्याप.

**अहिनिर्ल्वयनी** - सर्पस्य निर्मोकः। बृ.

**अहिमम्** - हिमाद्याधिदैविकदुःखंशून्यम्। बृ.

**अहेतुः** - स्वयं हेतुरहितः। बि.

**अहेतुकविनाशः** - क्षणभङ्गः। त.

**अहैतुकीम्** - फलाभिसन्धिरहिताम्। भा.

## आ

**आकस्मिकी** - अकस्माद्भवा। या.

**आकाङ्क्षा** - अजनितान्वयबोधत्वम्। च.

**आकारः** - निरूपकस्वभावः। ता. भ्रूसंज्ञादिः शरीरचेष्टा। रा. विग्रहः। सुन्दर. स्वरूपम्। वे.श्रु. [खनिः। ई.]

**आकारणम्** - सम्बोधनम्। रा.

**आकारत्रयम्** - (श्रियः) प्राप्यत्वप्रापकत्वपुरुषकारत्वरूपम्। केचित्तु स्वासाधारणधर्मेण, अविशेषेण चेतनसाधारणधर्मेण, स्वेश्वरसाधारणधर्मेण चाकारत्रयवत्त्वमाहुः। अन्ये तु भगवदेकशेषत्वं भगवदेकनियाम्यत्वं भगवदेकरक्ष्यत्वमित्यविशेषेणाकारत्रयशालित्वम्। तथा जगच्छेषित्वं जगद्रक्षकत्वं जगन्नियामकत्वमितीश्वरस्वासाधारण्येनाकारत्रयशालित्वमाहुः। नि.

[**आकारयसि** - आह्वयसि। या.]

**आकारैक्यम्** - (घटः पट इत्यादौ) इदं भट्टपराशरपादोक्तम्। तत्र न तावन्मुख्यमेव आकारैक्यं विवक्षितम्। तैर्जातिनिराकरणात्। एकाकारविकल्पयोग्यसंस्थानविशेषवत्त्वरूपमभिमतम्। न्यासि.

**आकालिकम्** - समानकालाद्यन्तम्। क्षणिकमिति यावत्। 'आकालिकडाद्यन्तवचने' इति सूत्रेणाद्यन्तविशेषणतया समानकालशब्दस्य आकालादेशः इकट्प्रत्ययश्च निपातितः। या. स्वकालादन्यस्मिन् काले भवम्। कालाट्ठञ् इति शैषिकः प्रत्ययः। या.

**आकाशः** - अव्याकृतम्। बृ. अव्याकृत आकाशः। बृ. अस्पर्शवत्त्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायकत्वं अवकाशप्रदत्वमित्याद्याकाशलक्षणम्। स च शब्दमात्रगुणकः। नीलं नभ इति प्रतीतेः प्रत्यक्षः। पञ्चीकरणप्रक्रियया च सावयवो रूपवान्। एतेन आकाशस्याजन्यत्वनिरासः। य. आ समन्तात् काशयति इति आकाशः परमात्मा। न्यासिटी. परं ब्रह्म। आकाशते आकाशयति चेति। श्री. आकाशते स्वस्मै प्रकाशते। आकाशयति अन्यं प्रकाशयति स्वात्मने। श्रु. देवताविशेषः। छा. अनावृतप्रदेशः। वि. परमं व्योम। बृ. परमात्मा, न तु मुक्तात्मा। छा. प्रकाशः, प्रकाश्यमानरूपं वा। छा. ब्रह्म। आकाशते प्रकाशते आकाशयतीति वा व्युत्पत्त्या आकाशशब्दो ब्रह्मपरः। 'आकाशो ह वै नामरूपयोर्निर्वहिते'त्यादावाकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात्। न तु भूताकाशपर इति द्रष्टव्यम्। छा. स्पर्शरहितत्वे सति उद्भूतशब्दवान्। वा.

**आकाशम्** - प्रकाशकम् । छा. प्रकाशकमालोकादि । प्रकाशमानं रूपं वा । श्रु.

**आकाशवतः** - विस्तारयुक्तान् । छा.

**आकाशशरीरम्** - आ समन्तात्प्रकाशमानदिव्यविग्रहयुक्तम् । तै.

**आकाशात्मा** - आकाशवत् सूक्ष्मस्वच्छस्वरूपः । सकलेतरकारणभूतस्याव्याकृताकाशस्य आत्मभूतः इति वा । स्वयं च प्रकाशते अन्यांश्च प्रकाशयतीति वा । श्री. छा. आकाशवत्स्वच्छस्वरूपः । वे. प्रकृत्यन्तरात्मा । वे.

**आकाशादिभावः** - आकाशादिशरीरकत्वम् । श्रु.

**आकिञ्चन्यम्** - उपायान्तरदारिद्र्यम् । श्रीस्तु. [उपायान्तर सामर्थ्याभावः । र. स्वरत्तणार्थोपायान्तर प्रवृत्तिशून्यत्वम् । र. उपायान्तरशून्यत्वम्, प्राप्यान्तरशून्यत्वं च । ई.]

**आकुलम्** - व्याप्तम् । रा.

**आकुलत्वम्** - आगामि दुःखशङ्कया मनःक्षोभः । श्रु.

**आकूतिः** - अभिप्रायः । तै. अभिप्रायगतिः, मनोरथपरिकल्पितोऽर्थः । श्रीसू. मनः । भा.

**आकूतिभिः** - कर्मेन्द्रियव्यापारैः । भा.

[**आकेकरत्वम्** - अद्भुतरूपदर्शनात् आकुञ्चितपुटत्वादिर्दृष्टिगतो विकारः । 'आकुञ्चितपुटापाङ्ग संततार्धनिमोषणी । मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा मता ।' इति भावप्रकाशात् । या.]

**आकृतिः** - वेषः । रा.

**आक्रमः** - आक्रामत्यनेनेत्याक्रमः आश्रयः, पुण्यपापरूपः । बृ

**आक्रान्** - व्यापकः । तै.

[**आक्रीडाः** - उद्यानानि । र.]

**आक्षः** - इन्द्रियविषयः । रा.

**आक्षपादाः** - गौतमीयाः । अक्षपादो गौतमः तस्येमे । नैयायिकाः । अधि.

**आखणम्** - आखन्यत इत्याखणम् । मृत्पिण्डमित्यर्थः । छा.

**आखेटनम्** - मृगसंहारानुगुणव्यापारः । सुन्दर.

**आख्यायिका** - पूर्ववृत्तकथा । रा.

**आगन्तुः** - कार्यम् । सर्वा (आ).

**आगन्तुकम्** - अनित्यम् । श्रु.

**आगन्तुकत्वम्** - जन्यत्वम् । रत्न. (अवस्थालक्षणघटकम्) स्वाश्रयसमानकालिक प्रागभावप्रतियोगित्वम् । न तु जन्यत्वमात्रम् । रत्न.

**आगमः** - आगतवानसि । भा. आप्तवाक्यम् । रा. उपायः । रा. श्रुतिस्मृतीतिहासादिः । सर्वा.

**आगमप्रामाण्यम्** - भगवद्यामुनमुनिप्रणितो ग्रन्थः पाञ्चरात्रप्रामाण्यस्थापकः ।

[**आगमसिद्धान्तः** - पाञ्चरात्रागमसिद्धान्तः । स चतुर्विधः आगमसिद्धान्तः मन्त्रसिद्धान्तः तन्त्रसिद्धान्तः तन्त्रान्तरसिद्धान्तः इति । ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् ।'' र. ''वासुदेवादयो

व्यूहाश्चत्वारस्साधकैरपि। क्रमागतैस्तुल्य-कक्ष्याः पूज्यास्तु प्रभवाप्यये। कर्मणाममपिप सन्न्यासः कथ्यते यत्र चागमे। तन्त्रमागम-सिद्धान्तं तदुक्तं कमलासन।'' पाञ्च.]

**आगमाभासाः** - सापराधैः पुरुषैः प्रणीतानि वाक्यानि। न्याप.

**आगायत्** - गानं कृतवती। बृ.

**आगृह्य** - निश्चलीकृत्य। छा.

**आग्नीध्रीयः** - अग्निविशेषः। छा.

[**आग्नेयम्** - पुराणविशेषः। सच्च.]

[**आग्नेयस्नानम्** - भस्मधारणात्मक-स्नानविशेषः। सच्च.]

**आग्रयणम्** - शरदि कर्तव्यः इष्टिविशेषः। कश्चिद्धविर्यज्ञः नूतनधान्यभोजनस्यादौ अनुष्ठेयः। रा.

**आघातम्** - हिंसास्थानम्। भा.

**आङ्गिरसः** - अङ्गिरोगोत्रः कश्चित् ऋषिः। छा. प्राणः; अंगानां रसः। बृ.

**आङ्गिरसकल्पः** - अभिचारविधिः। वि.

**आचमनम्** - भक्षणम्। छा.

**आचरणम्** - अग्निहोत्रादिकर्मकरणे योग्यतापादकं सन्ध्यावन्दनादिकम्। बृ. शकटम्। श्रु. छा.

**आचारः** - वेषः। रा. सन्ध्यावन्दनादिः। गी. अव्यभिचारि बाह्यलिङ्गम्। ता. स्वरूपावगतिलिङ्गम्। गी (१४-२१).

**आचार्यः** - आचारप्रवर्तकः। रा. उपनीयाध्यापयिता। भाव. 'उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः। संकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥' श्रु. लोके खलु शिल्पिषु आचार्यशब्दः जातावेव प्रयुज्यते। अधि. [''आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यपि। स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते''। ब्रह्मविद्योपदेष्टा। र.]

**आचार्याः** - नीतिशास्त्रोपदेष्टारः। यद्वा उपनयनपूर्वकं साङ्गवेदाध्यापकाः। रा.

**आचार्योपासनम्** - आत्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम्। गी.

**आचितिः** - व्याप्तिः। रा.

[**आच्छादकाविद्या** - ब्रह्मणि स्वरूपति-रोधानकरी।]

**आच्छादनम्** - आच्छाद्यविषयज्ञानोत्पत्ति-निरोधः। नी.

**आजगवम्** - (अजगवमेव) पिनाकः। वि.

**आजस्रम्** - अजस्रमेव आजस्रम्। सदा। सुन्दर.

**आजहार** - आजहर्थ। व्यत्ययश्छान्दसः। छा.

**आजानजः** - आजन्मजः, सहजः। सुन्दर.

**आजानजाः** - आजाने देवलोके जाताः। स्मार्तकर्मविशेषतो देवस्थानेषु जाताः। तै.

**आजानसिद्धं (देवत्वम्)** - कल्पादावेव सिद्धं देवत्वम्। यद्वा उपासनसिद्धं देवत्वम्। यद्वा त्रयस्त्रिंशद्देवतात्मत्वम्। बृ.

**आज्ञा** - अभिप्रायज्ञापकव्यापारः । व. आज्ञापनम् । रा. कृत्याकृत्यज्ञापनम् । वर.

**आज्ञाम्बुजम्** - (मातृकाध्यानश्लोके) भ्रूमध्यम् । न्यासिटी.

**आटकी** - अनुपजातपयोधरादिव्यञ्जना । छा.

**आटविकाः** - वन्याः (म्लेच्छाद्याः) । वि.

**आडम्बरम्** - ख्यात्यर्थो व्यापारः । सुन्दर. वाद्यविशेषः । श्रु. बृ.

**आढकी** - तुवरी । वि.

**आण्डम्** - अण्डम् (छान्दसो दीर्घः) । छा. भाव.

**आण्डजम्** - अण्डजं पक्षिसर्पादि । स्वार्थे अण् । छा.

**आततम्** - अविनाभावेन संश्रितम् । प्र.

**आततायी** - "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन" । ता. द्रोहकारी । रा. वधोद्यतः । वि. शस्त्रपाणिस्सन् वधोद्युक्तः । रा.

**आतिथ्यम्** - अतिथिसत्क्रिया । रा. अतिथये क्रियमाणः सत्कारः । रा. आचमनीयपूर्वकं भोज्यप्रदानम् । रा.

**आतिवाहिकाः** - विदुषामतिवाहे परमपुरुषेण नियुक्ता देवताविशेषाः आतिवाहिकाः । गन्तॄणां गमयितार इति यावत् । छा.

**आतृण्णः** - छिन्नः । बृ.

**आत्मऋणम्** - ज्ञानप्रकाशहेतुत्वेनोपकर्तरि शरीरेन्द्रियसंघातरूपे आत्मनि प्रत्युपकारानाचरणम् । रा.

**आत्मकामम्** - आत्मानन्दतृप्तम् । बृ.

**आत्मकेतम्** - आत्माधारम् । भा.

**आत्मक्रीडः** - यस्य क्रीडा आत्मन्येव नोद्यानादिषु सः । मु.

**आत्मगुणाः** - मोक्षहेतुगुणाः । श्रु.

**आत्मगुणैः** - तत्तत्फलाभिसंध्यादिलक्षणरागादिरूपगुणैः । श्वे.

**आत्मजयः** - देहजयः; देहधर्मैः अनभिभाव्यता । भा. मनोनियमः । वि.

**आत्मतन्त्रः** - स्वतन्त्रः, अकर्मवश्यः, कर्ममूलसुखदुःखादिभोक्तृत्वशून्यः । भा.

**आत्मतृप्तः** - आत्मनैव तृप्तः नान्नपानादिभिः आत्मव्यतिरिक्तैः । गी.

**आत्मत्वम्** - अन्तः प्रविश्य नियंतृत्वम् । श्रु. अपृथक्सिद्धविशेष्यत्वम् । बृ. धारकत्वम् । श्रु. पुरुषार्थप्रतिसंबन्धित्वम्, देहं प्रति नियन्तृतयान्तः प्रविष्टत्वं वा । श्रु. पुरुषार्थप्रतिसम्बन्धित्वम्, देहं प्रति नियन्तृतया व्यापित्वं वा । श्रु. शरीरप्रतिसम्बन्धित्वम् । य.

**आत्मनः प्रतिरूपम्** - स्वबुद्ध्यनुगुणम् । रा.

**आत्मना** - ज्ञानेन । भा. ज्ञानेन (स्वयमेवात्मनाऽऽत्मानमित्यत्र) । गी. आत्मनेत्यस्य व्याख्या ज्ञानेनेति । "आत्मा

जीवे'' इत्यारभ्य ''यत्नेऽर्केऽग्नौ मतौ वायौ'' इति पाठात्। ता. मनसा। वि. स्वत एव। बृ.

**आत्मना भवति** - समीचीनेन मनसा युक्तो भवति। बृ.

**आत्मनिक्षेपः** - आत्मात्मीयनिक्षेपः। नि. ''आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते''। नि. श्रीत.

**आत्मनिवेदनम्** - आत्मतदनुबन्धिनां भगवदायत्तत्वानुसन्धानम्। भा. शेषत्वानुसन्धानम्। भा.

**आत्मनो निरुपाधिकत्वम्** - देवादिकतिपयशरीरविशेषानवच्छिन्नत्वम्। श्रु.

**आत्मनो वशीकरणम्** - आत्मस्वरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनम्। श्रु.

**आत्मन्वी** - प्रशस्तशरीरेन्द्रियादिमान् जीवः। आत्मन्शब्दात् प्रशंसायां छान्दसो विनिप्रत्ययः। बृ. शरीरी। बृ. शरीरी; चेतनाचेतनप्रपञ्चशरीकः, आत्मन्शब्दात् तदस्यास्तीति विनिप्रत्ययश्छान्दसः। बृ.

**आत्मप्रस्वापनम्** - जीवानां ज्ञानसंकोचकम्। भा.

**आत्मबन्धनः** - ज्ञानप्रतिबन्धकः। भा.

**आत्मबुद्धिप्रकाशम्** - स्वविषयबुद्धिप्रकाशहेतुम्। श्वे.

**आत्मबुद्धिप्रसादजम्** - आत्मविषया बुद्धिः आत्मबुद्धिः; तस्या निवृत्तसकलेतरविषयत्वं प्रसादः; निवृत्तसकलेतरविषयबुद्ध्या विविक्तस्वभावात्मानुभवजनितं (सुखम्)। गी. बुद्धेरयोग्यविषयसंसर्गरूपकालुष्यनिवृत्तिर्हि प्रसाद इत्यभिप्रायेणाह - निवृत्तत्वमिति। ता.

**आत्मभावः** - मनोवृत्तिः। च.

**आत्मभवात्मभूतम्** - ब्रह्मशरीरोद्भूतम्, आत्मभवः ब्रह्मा। भा.

**आत्मभावनः** - आत्मनो जीवान् देवमनुष्यादिरूपेण भावयतीति सः। भा.

**आत्ममीमांसा** - देहविलक्षणप्रत्यगात्मविचारः। भा.

**आत्ममूलम्** - आत्मैव मूलं यस्य तत्, अकार्यम्। (कार्यभिन्नम्)। भा.

**आत्मयोनिः** - दुग्धेनेव सिताविशेषं आत्मानं भोक्तारं यौति मिश्रयतीति। सह. आत्मा योनिः स्थानं यस्य सः, जीवान्तर्यामीत्यर्थः। श्वे.

**आत्मयोनित्वम्** - स्वकारणभूतत्वम्। रा.

**आत्मरतिः** - आत्मनि ब्रह्मणि रतिः प्रीतिर्यस्य सः। आत्मा ब्रह्म रतिः अनुकूलविषयः यस्य स इति वा। श्रु. यस्य रतिः आत्मन्येव सः। मु.

**आत्मलोकावरणः** - आत्मनो धर्मभूतज्ञानावारकं (कर्म)। आत्मनो लोकः धर्मभूतज्ञानम्। भा.

**आत्मवत्** - परमात्मना (अन्तर्यामिणा) युक्तम्। वि.

**आत्मवञ्चकः** - आत्मापहारी।

'योऽन्यथा सन्तमात्मानं' इति वचनार्थोऽत्रानुसन्धेयः । भा.

**आत्मवन्तः** - आत्मज्ञानिनः । रा.

**आत्मवर्त्मात्मा** - वेदस्वरूपः, आत्मवर्त्मनः स्वप्रापकमार्गस्य वेदस्य आत्मा । भा.

**आत्मवान्** - अतिकृच्छ्रावस्थायामप्यक्षुभितमनस्कः । रा. जितमनस्कः । स्तो. तदायत्तस्वरूपप्रवृत्त्यादिकतया स्वस्य स्वभूताः तत्कर्तारोप्यात्मानः अस्य सन्तीति । सह. धीरः । भा. धैर्यवान् । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति कोशः । रा. प्रशस्तमनस्कः । भा. मनस्वी । उपदिष्टार्थे दृढावस्थितमनाः । गी. यत्नवान् । रा. वशीकृतमनस्कः । रा. समाहितचित्तः । भा. सर्वात्मशेषी । रा. स्वाधीनः । यदधीन आत्मा स आत्मवान् । भा.

**आत्मवित्** - परब्रह्मवित् । छा.

**आत्मविनिग्रहः** - मनोवृत्तेर्ध्येयविषये अवस्थापनम् । गी. आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्तनम् । गी.

**आत्मविशुद्धिः** - बन्धनिवृत्तिः । गी.

**आत्मवृत्तिभिः** - शमदमादिभिः । भा.

**आत्मवेदनः** - स्वयंप्रकाशः । वि.

**आत्मवेदी** - परिशुद्धात्मवेदनशीलः । स्तो.

**आत्मशक्तित्वम्** - कार्योपयुक्तत्वे सति आत्मापृथक्सिद्धविशेषणत्वम् । भा.

**आत्मशक्त्या** - स्वापृथक्सिद्धविशेषणभूतया । भा.

**आत्मसंयमः** - मनोनियमनम् । गी.

**आत्मसंवेद्यम्** - स्वप्रकाशम् । त. स्वयंप्रकाशम् । श्रु.

**आत्मसंस्थम्** - आत्मन्यन्तर्यामितया स्थितम् । श्वे.

**आत्मसंस्थितः** - स्वाधारः । वि.

**आत्मसमर्पणम्** - आत्मस्वरूपभरफलसमर्पणम् । श्रीत. शरणागतिप्रपदनत्यागात्मनिक्षेपणन्यासादिपदाभिधेयम् । श्रीत. स्वात्मनस्तदनुबन्धिनश्च तदायत्तसत्तादिमत्त्वानुसन्धानम् । भा.

**आत्मसम्बोधविषयम्** - स्वज्ञानगम्यम् । वि.

**आत्मसम्भाविताः** - आत्मनैव सम्भाविताः । गी.

**आत्मसर्वगतत्वम्** - जीवात्मनस्सर्वगतत्वं न विभुत्वरूपम् । एवमपि तद्व्यपदेशाः समुदायापेक्षया, धर्मभूतज्ञानद्वारा, सूक्ष्मानुप्रवेशक्षमतया वा निर्वाह्याः । न्यासि.

**आत्मसिद्धिः** - स्वरूपप्रकाशः । सि.

**आत्मस्थम्** - स्वान्तर्यामिणम् । श्वे. आत्मन्यन्तर्यामितया वर्तमानम् । श्वे.

**आत्महनः** - "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः, ब्रह्मज्ञानहीनाः काम्यकर्मादिनिष्ठाः । ई.

**आत्मा** - अन्तःप्रविश्य नियन्ता श्रु. अन्तः प्रविश्य प्रशासनेन धारकः । भा.

अन्तःप्रविष्टश्शास्ता। गी. अन्तरात्मा। अति. अन्तर्यामी। वै. (सर्वे स्वरा इन्द्रस्यात्मानः) अवयवसदृशाः। छा. अहङ्कारः। वि. "आत्मा देहेन्द्रिये बुद्धौ स्वभावे परमात्मनि"। सर्वा (आ). आप्नोतीति। मा. श्रु. (परमात्मनि) आप्नोतीत्यात्मा; स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिमान्। श्री. चित्तम्। भा. चेतनः। वि.श्रु.न्याप. देहः। श्रु. देहान्तर्गत आकाशः। बृ. धारकः। भा. धारकत्वेन प्रधानभूतः। तै. नियन्ता। छा. बृ. नियमनार्थव्यापित्ववान्। श्री. नियमेनाधारः। बृ. परमात्मा। रा. परमात्मा। 'आत्मा नारायणः परः' इति श्रुतेः। श्रु. पूर्णः। मा. प्रभुः। रा. अन्तः प्रविश्य प्रशासनेन धारकः। भा. बुद्धिः। गी. मध्यकायः। छान्दोग्ये मध्यकायवाचिसंदेहशब्दस्य समानप्रकरणे श्रवणात्। अग्नि. मनः। श्री.गी.बृ. मनोमयसंकल्पः। गी. विभूतिगुणविशिष्टं ब्रह्म। श्रु. व्यापकः। कौ. व्याप्तिरूपसातत्यविशिष्टः। च. शरीरम्। गी.बृ.छा. शरीरधारकः। ता. शरीरप्रतिसम्बन्धी जीवः। श्रु. शरीरप्रतिसम्बन्धी। च. शरीरस्य सर्वात्मना आधारो नियन्ता शेषी च। शरीरं नाम सर्वात्मना आधेयं नियाम्यं शेषभूतञ्च। "त्रयमप्येकं लक्षणमि"त्येके। तत्र श्रुत्याद्यनुसारेण जन्मादित्रयस्य ब्रह्मलक्षणत्व इव शङ्कितमात्रव्यवच्छेदार्थतया त्रयाणां साफल्यम्। लक्षणत्रयमिति चान्ये" इत्यादि। ता. शेषी, आधारः। बृ. संकल्पः, आत्मशब्दो हि मतिवाची; 'यत्नेऽर्केऽग्नौ मतावात्मे'ति। श्रु. स्वतः शरीरप्रतिसंबन्धियन्ता। श्रु. स्वभावः। श्रु. स्वरूपम्। श्रु. ता. स्वम्। गद्य. हृदयम्। बृ.

**आत्माकात्स्र्न्यम्** - (हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकाशरीरे मानासंभवेन) शरीरे स्थितस्य अपूर्णत्वम्। न्यासिटी.

**आत्मादेशः** - आत्मत्वोपदेशः। छा.

**आत्माधिकारः** - आत्मानमधिकृत्य प्रवृत्तः। रा.

**आत्मानः** - शरीरभूताः। बृ.

**आत्मानुभूतिः** - योगजन्यात्मसाक्षात्कारः। ता.

[**आत्मान्तम्** - यावदात्मभावि। सार्वदिकम्। वि.]

**आत्माभासम्** - आत्मप्रतिबिम्बम्। भा.

**आत्मारामः** - आत्मैकोद्यानः, स्वगुणैः आत्मैव सुखवर्धको यस्य सः। गी. आरामो हि भोगस्थानभूतः, स्वगुणैरपहतपाप्मत्वज्ञानान्दादिभिः स्वविषयवादकरणग्रन्थकरणादिक्रीडोत्थापकैरात्मैव सुखवर्धक इत्यारामशब्देनोपचर्यते। ता.

**आत्मारामाय** - स्वानुभवैकपराय। भा.

**आत्मारामोपि** - षाड्गुण्यपूर्णोऽपि। भा.

**आत्माश्रयः** - स्वरूपाधारः। सुन्दर.

**आत्मोपशमः** - इन्द्रियनिग्रहः।

**आत्म्यम्** - व्याप्यम्। शरीरमित्यर्थः। तै.

**आत्यन्तिकम्** - फलदशायामप्यनिवर्त्यम्। ता.

**आत्यन्तिकत्वम्** - नित्यानुवृत्तत्वम्, निरतिशयत्वं च। गद्य. फलान्तरोपाधिक-निवृत्तिरहितत्वं पश्चात् यावत्कालमनुवर्त-मानत्वं वा। गद्य.

**आत्यन्तिकनिवृत्तिः** - तत्सजातीयान्त-रानुत्पत्तौ सत्यां तस्यानुत्पादः। श.

**आत्यन्तिकलयः** - मोक्षः। भाव.

**आत्यन्तिकी** - अन्तमतिक्रान्ता। निरवधिरित्यर्थः। नि. [(भगवत्प्राप्तिः) सर्वकालानुवृत्ता। र.]

**आदत्तवान्** - प्राप्तवान्। वि.

**आदत्ते** - अपनुदति। गी.

**आदिः** - उत्पत्तिहेतुः। 'आदिर्मध्यमन्तश्च' उत्पत्तिस्थितिप्रलयहेतुरित्यर्थः। गी. सर्वप्रधानम्। मा. [भगवान्। र.]

[**आदिकर्म** - प्रारम्भः।]

**आदिकविः** - चतुर्मुखः। भा. [शास्त्र-योनित्वादाद्यः कविः कृष्णः। या.]

**आदिग्धः** - ईषल्लिप्तः। रा.

**आदित्** - आदिभूतम्। छा.

**आदित्यः** - अदितेः पुत्रत्वेनावतीर्णो भगवान्। यद्वा अदितेः अखण्डिताया भूमेः पतिरित्यादित्यः सर्वेश्वरः। रा. आकारप्राप्यः। आकारो हि संकर्षणबीज-मन्त्रः। आदिति तपरः। आता इत्यः प्राप्यः। सह. पूषानिवासः अस्येति। सह. भोक्ता जीवः। प्र. सूर्यः, वाय्ववनन्तर आतिवाहिकः।

**आदित्याः** - देवविशेषाः। रा. (द्वादश) द्वादश मासाः। एते हि मासाः उत्पत्तिमतां जीवितं आददाना अपहरन्तो यन्ति; तस्मात् ते आदित्याः। बृ.

**आदित्यम्** - आदित्यदैवत्यम्। छा.

**आदित्यवर्णः** - अप्राकृतस्वासाधारण-दिव्यरूपः। गी.

**आदित्यवर्णम्** - आदित्यवर्णविग्रह-विशिष्टपुरुषम्। श्वे. स्वप्रकाशम्। वा.

**आदित्यवर्णा** - बाह्यान्तरसकलतमो-विरोधितेजोमयदिव्यस्वरूपा; अथवा अकारवाच्यात् सर्वेश्वरात् इत्थं प्राप्यं वर्णं यस्याः सा। श्रीसू.

**आदिदेवः** - आदिश्चासौ देवश्च। जगत्कारणभूतः क्रीडारूपजगद्व्यापारश्च। गी. ब्रह्मादीनां कारणं, द्योतमानश्च। आदिः द्योतमानश्च। सह. यदवरविभूत्या क्रीडति तदाह। संप्रयोज्य वियोज्य च, कामकार-करणतया, आदिः प्रथमबीजभूतश्चासौ देवश्च क्रीडंश्चेति। सह.

[**आदिभक्ताः** - 'मुदलाल्वार् कल्' इति दाविड्यां प्रसिद्धा भूतसरोवेतालाख्याः प्रथमे त्रयो भगवद्भक्ताः। सच्च.]

**आदिराजः** - मनुः। भा.

**आदिष्टम्** - उपदिष्टम्। छा. प्रतिपादितम्। वै.

[**आदिष्टः** - विहितः। र.]

**आदिसंयोगहेतुः** - समीचीनपरमात्मयोगे प्रधानहेतुः। श्वे.

**आदिसृष्टिः** - समष्टिसृष्टिः । न्यासि.

**आदीयमानः** - गृह्यमाणः । बृ.

**आदेशः** - आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः । साधकतमत्वेन कर्ता विवक्षितः । आदेष्टा । श्री. आदेशनम्; प्रशासनम् । आदेष्टा प्रशासिता । छा. आदेष्टा नियन्ता । अधि. इदं कुरु इदं मा कार्षीः इति विधिनिषेधरूपं रहस्यानुशासनम् । तै. उपदेशः । बृ. छा.नी. 'एतस्य वा अक्षरस्य प्रशासने गार्गि', इत्यादि प्रसिद्धविश्वप्रशासितृत्वविषयोऽत्रादेशशब्दः, 'तमादेश' मित्यादौ सर्वतत्त्वाधिष्ठातृत्वगुणविशिष्टं किं श्रुतवानसीति प्रश्नार्थः । त. नियन्ता । च. नियोगः । रा. प्रशासिता । श्रु. येनापवादः (यः अन्यस्य स्थाने भवति) सः । न्यासिटी. विधिः । न्याद. शासनम् । तै. [आदिश्यतेऽनेनेति, नियन्ता । ई.]

**आदेशनम्** - शासनम् । भाव.

**आदेशी** - यदपोद्यते (यस्यस्थाने अन्यो भवति) सः । न्यासिटी.

**आदोहनम्** - दोहनस्थलम् । वि.

**आद्यम्** - अदनीयम् । प्र. अनादिम् । ता. आदौ भवम् । वि. मूलभूतम् । वि. [अनादिसिद्धम् । र.]

**आद्या** - प्राचीना । या.

**आद्यन्तवन्तः** - आद्यन्तकर्तारः । वि.

**आधयः** - मनःपीडाः । भा.

**आधर्षितः** - अवमानितः । रा.

[**आधाता** - आ समन्तात् धारकः स्थितिनियामकः । र.]

**आधानम्** - अन्त्येष्टिसंज्ञकं कर्म । रा. गर्भगोलकम्, आधीयते अस्मिन्निति । बृ.

**आधारः** - गुदस्यैवं संज्ञा (मातृकाध्यानश्लोके) । न्यासिटी.

**आधारत्वम्** - इहेति प्रतीयमानत्वमात्रम् । सर्वा.

**आधारनिलयः** - धार्मिकतया जगदाधाराः प्रह्लादविभीषणपाण्डवादयः, तेषां निलयः आस्पदम् । सह.

**आधारसिद्धान्तः** - 'केचित्तु कस्यचित् साधने अनुषङ्गसिद्धोऽन्य ऽआधारसिद्धान्त, इति चतुर्धा विभागमाहुः ...... तदयुक्तम्' । न्याप.

**आधिः** - चित्तविक्षेपः । भा. मनःपीडा । भा. मानसपीडा । वर. शोकः । रा.

**आधिकारिकाः** - अधिकारेषु नियुक्ताः हिरण्यगर्भादयः । श्री.

**आधिदैविकम्** - अग्न्यादिजं (दुःखम्) । वि. शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवम् । (दुःखम्) । गद्य. वृष्ट्यादि । श.

**आधिपत्यम्** - अधिपतिसम्बन्धि । अधिपतिः परमात्मा । तत्संबन्धि गुणाष्टकं ब्राह्मम् इति व्यासार्याः । अधिपतित्वम् । कौ.

**आधिभौतिकम्** - पशुपक्षिमनुष्यादिसमुद्भवम् (दुःखम्) । गद्य. व्याघ्रादिपीडा । श. मनुष्यादिजं (दुःखम्) । वि.

**आधृतिः** - आधारः । गी. आधारत्वमत्र भोगायतनत्वम् । ता.

**आधोरणः** - गजशिक्षकः । अधि.
**आध्मातः** - उपबृंहितः । वि.
**आध्यात्मिकम्** - आत्मदोषजं (दुःखम्) । वि. आत्माश्रिताचित्समुदायप्रधानहेतुकम् । गद्य. ज्वरादि । श.
**आध्यात्मिकयोगः** - भक्तियोगः । भा.
**आध्यानम्** - अनुचिन्तनं, उपासनम् । "स्याच्चिन्ता स्मृति राध्यान"मिति हि नैघंटुकाः । श्रु. उत्कण्ठापूर्वकस्मरणम् । सि.
**आनकः** - पटहः । या.
[**आनकदुन्दुभिः** - वसुदेवः । या.]
**आनन्त्यम्** - असंख्यातत्वम् । न्यासि. विभुत्वम् । श्वे. हरेः पदम् । स्वार्थे ष्यञ् । भा.
**आनन्त्याय** - धर्मभूतज्ञानविकासेन विभुत्वलक्षणानन्त्याय । श्वे.
**आनन्दः** - अनुकूलं ज्ञानम् । श्री. अनुकूलज्ञानमेव ह्यानन्द इति भाष्यकृतः । ता. अनुकूलवस्तुज्ञानम् । व. अनुकूलवस्तुदर्शनजा प्रीतिः । बृ. अनुकूलविषयजा प्रीतिः । श्रु. परमात्मा; आनन्दगुणसारत्वात् । श्री. वाङ्मानसदुर्ग्रहमहानन्दवान् । सह. विभूतिजन्या प्रीतिः । श्रु. छा. भोग्यवस्तुविनियोगजा प्रीतिः । श्रु. सुखातिशयः । तै.
**आनन्दत्वम्** - स्वानुकूलत्वम् । भाव. अनुकूलत्वम् । श्रु. तै. अनुकूलतया वेदनीयत्वम् । बृ. आनुकूल्यम् । च.
**आनन्दभुक्** - विषयभोगान् विनैव आनन्दं भुङ्क्ते भोजयति चेति । मा(कू). (जीवस्य सौषुप्तिक) आनन्दानुभावकः । मा(रं).
**आनन्दमयः** - अत्रानन्दपदेन जीवानन्दं गृहीत्वा तच्छरीरकः परमात्मेत्यर्थवर्णनं न युक्तम् । 'यतो वाचः' इत्यादिना आनन्दस्य ब्रह्मसंबन्धित्वश्रवणात् । जीवानन्दस्य सर्वमनस्संवेद्यत्वाच्च । सुबा. निरतिशयानन्दप्रचुरः परमात्मा । तैत्तिरीये 'सोऽकामयते'त्यादिना जगत्कारणत्वचिदचिदन्तरात्मत्वकृत्स्नप्रशासितृत्वादिना निरतिशयानन्दयोगित्वमुपपादितम् । सुबा. आनन्दघनः । मा(रं). आनन्दप्रचुरः । मा(कू).
**आनन्दमयविद्या** - निरतिशयानन्दाश्रयत्वादिप्रकारकानन्दमयविशेष्यकभक्तिः ।
**आनन्दयितव्यम्** - स्त्रीपुंसशरीरस्थ आत्मा । सुबा.
[**आनन्दाख्यसंहिता** - पाञ्चरात्रसंहिताविशेषः । सच्च.]
**आनन्दित्वम्** - ज्ञातृत्वम् । श्री.
**आनशानाः** - अशितवन्तः, अनुभूतवन्तः । तै.
**आनीताम्** - (आनीतां तु निजाक्षरैः) बुद्ध्यासन्ने स्वार्थे स्थापिताम् । त.
**आनुकूल्यम्** - दुःखनिवृत्तिरूपत्वम् । नी. भक्तिः । रा. भोग्यत्वम् । नी.
**आनुकूल्यसंकल्पः** - अनुकूलो भवेयमिति मानसिकव्यवसायः । वर.
**आनुमानम्** - प्रधानम् । श.

**आनुमानिकम्** - प्रधानम् । वा.
**आनुश्रवम्** - अनुश्रवो वेदः । गुरूच्चारण-मनु श्रूयत इति व्युत्पत्तेः । तत्सिद्धम् । भा.
**आनुश्रविकम्** - अनुसृत्याविछिन्नपाठ-परंपरां श्रूयत इति अनुश्रवो वेदः । तद्विहितम् । भा.
**आनृशंस्यम्** - अक्रौर्येण वर्तनम् । शर. अघातुकत्वम् । सर्वधर्मसारभूतो दयागुणो वा । रा. आश्रितसंरक्षणपरत्वम् । श्रु. आश्रितसंरक्षणैकस्वभावत्वम् । रा. कारुण्यम्; परदुःखनिराचिकीर्षा । पा. कृपा; परदुःखनिराचिकर्षा । न्याद. मार्दवम् । दयेति यावत् । पा. [आश्रितसंरक्षणशीलत्वम् । आश्रितविषये क्रौर्याभावः । र.]
**आन्तरः** - चित्तचैत्तात्मा (बौद्धमते) । भाव.
**आन्तरम्** - बुद्धिः । रा. मनः । श्रु.
[**आन्तरशौचम्** - भावशुद्धिः । ई.]
**आन्तरं कर्म** - आत्मप्रावण्यहेतुकर्म । श्रु.
**आन्तरायिकम्** - मोक्षमार्गप्रवृत्तानां तद्विघटनकरं विज्ञानम् । बृ.
**आन्वीक्षिकी** - तर्कशास्त्रम् । वि. ब्रह्मविद्या । भा. आत्मानात्मविवेकविद्या मोक्षफला । भा.
**आह्निकवेला** - अह्नि क्रियमाणाराधन-वेला । वि.
**आपः** - अप्तत्त्वभिमानी नारायणः । बृ. अव्याकृतपञ्चभूतानि । बृ. समुद्राः । श्रु. [(अपामूर्मिमित्यत्र) शरीररूपेण परिणतमचिद्द्रव्यम् । सच्च.]
**आपत्** - मरणम् । रा.
**आपतितः** - उत्पन्नः । रा.
**आपत्तिः** - प्रसंजनीयविपर्ययेण प्रसञ्जकस्य विपर्यये पर्यवसानम् । श.
**आपत्सखः** - आपदि सखा भवतीत्या-पत्सखः । सखेव प्रीतिविश्वासगोचरः संरक्षकश्चेति भावः । गद्य.
**आपत्सखत्वम्** - आश्रितानां आपदि प्रियसखन्यायेन समानार्थतयाऽवस्थितत्वम् । स्तो.
**आपन्नम्** - प्राप्तम् । गी.
**आपन्नाः** - अपूर्वैश्वर्यकामाः । रा. 'सकृदेव प्रपन्नाय' इत्युक्तरीत्या ईषत्प्रपन्नाः । रा.
**आपन्नानां परा गतिः** - 'योगक्षेमं वहामी' त्युक्तरीत्या आश्रितविषये उपाय-दशाप्रभृति फलपर्यन्तसर्वकार्यकरः । रा.
**आपरोक्ष्यम्** - 'व्यवहार्यार्थसम्बन्धिज्ञा-नजत्वविवर्जनम्' (तत्त्वरत्नाकरे) । न्याप. 'ज्ञातकारणजज्ञानस्मृतित्वरहिता मतिः । अपरोक्षा' । न्याप. प्रमाया आपरोक्ष्यं नाम विशदावभासत्वमिति ब्रूमः (मानयाथा-त्म्यनिर्णये वरदविष्णुमिश्रीये) । न्याप. स्वार्थे ष्यञ्, प्रत्यक्षम् । च.
**आपातः** - तात्कालिकत्वम् । 'आपात-स्तदात्वे पतनेऽपि च' इति विश्वः । पा.
**आपाततः** - सहकारिविशेषमनपेक्ष्य ।
**आपीय** - संहृत्य । भा.
**आपूरणः** - कश्चित् यक्षः । वि.
**आपूर्यमाणपक्षः** - शुक्लपक्षः । अहरनन्तर आतिवाहिकोऽर्चिरादिमार्गे ।

**आप्तः** - यथार्थदर्शी यथादृष्टार्थवादी च। ता.

**आप्तकामः** - आप्ताः कामाः येन सः। अनुत्पन्नोत्तरकाम इत्यर्थः। बृ.

**आप्तकामाः** - शब्दादिभोगतदुपकरण-तत्स्थानसिद्धिमन्तः। भा.

[**आप्ततमः** - पुरुषोत्तम्। सच्च.]

**आप्तवादः** - प्रमाणवाक्यम्। वि.

**आप्तिः** - यथार्थदर्शनं यथार्थकथनञ्च। च. यथावस्थितवस्तुदर्शित्वं यथादृष्टार्थवादित्वं चेति द्विधा आप्तिः। श्रु. व्याप्तिः। मा.

**आप्तुं दुःखम्** - प्राप्तुमशक्यः। न्यासिटी.

**आप्नुवत्** - अवाप्नुयात्। बृ.

**आप्नोति** - (ऋचमाप्नोत्योमिति) आरभते। छा.

**आप्यायनम्** - वर्धनम्; पोषणम्। वि. संवर्धनम्। आप्यायते संवर्ध्यते। ओप्यायी वृद्धौ। कौ.

**आप्यायमानः** - हर्षयन्। भा.

**आप्याययामास** - पोषयामास। या.

**आ प्रणखात् सर्व एव सुवर्णः** - रमणीयसर्वावयवः। छा.

**आप्लवः** - स्नानम्। बृ.

**आबल्यम्** - अबलस्य भावः आबल्यम्। बलराहित्यम्। कौ. बृ.

**आभजन्** - प्राप्नुवन्। सुन्दर.

**आभजस्व** - भाजय; (अस्मान्) अल्पाल्पभागवतः कुरु। आङीषदर्थे; अन्तर्भावितण्यर्थोऽयं भजिः। बृ.

**आभवन्ति** - आगत्य भवन्ति। छा.

**आभिरूप्यम्** - "यदात्मीयगुणोत्कर्षैर्व-स्त्वन्यन्निकटे स्थितम्। सारूप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते"। गो.

**आभिहारिकम्** - राज्ञे प्रातराहर्तव्यं मङ्गलार्थं वस्तु। रा.

[**आभूतसंप्लवः** - संप्लवो लयः, आङ्शब्दोऽत्राभिव्याप्तिपरः; व्यष्टि-कार्याणां स्वकारणभूतसमष्टिरूप-पञ्चभूतान्यभिव्याप्य लय इत्यर्थः। समष्टिभूतानामपि लय इति यावत्। र.]

**आभ्यन्तरजनः** - अन्तःपुरचारी जनः। रा.

**आम** - (अव्ययम्) एवमित्यर्थः। पा. [अवक्वकषायः। परिपाकमप्राप्तः। सच्च.]

**आमननम्** - आभिमुख्येन मननम्, अनुचिन्तनम्। श्री. आभिमुख्येन मननम्। ध्यानमिति यावत्। बृ. आभिमुख्येन मननम्, सङ्कल्पः। श्री.

**आमनन्ति** - उपासते। भा.

**आमनामः** - आम्नायेन जानीमः। वै.

**आमर्षणम्** - सहनम्। रा.

[**आमिषम्** - भोग्यवस्तु। मांसम्। या.]

**आमुक्तः** - पिनद्धः। या.

**आमुष्मिकत्वम्** - जन्मान्तरभोग्यत्वम्। भाव.

**आम्नातम्** - वेदप्रतिपादितम्। अति.

**आम्नायवृद्धाः** - स्मर्तारः। सर्वा.

**आयः** - न्यायप्राप्तधनार्जनव्यापारः। रा. लाभः। छा.

**आयजस्व** - प्रयच्छ। तै.
**आयतः** - गाढसुप्तः। "यम उपरमे" निष्ठा। "अनुदात्तोपदेश" इति अनुनासिकलोपः। बृ.
**आयतिः** - उत्तरकालः। रा. उत्तरः कालः। या.
**आयतनम्** - आधारः। आश्रयः। छा. आधारः। शरीरमिति यावत्। बृ. आधार-भूतम्। तै. देवतागृहम्। रा. निवासस्थानम्। भाव. पुरम् (अपराजितमायतनमित्यत्र)। अपराजिता पूरित्येतदनुसारात्। कौ. प्रतिष्ठा। रा. मनः। स्रक्चन्दनादिविषयज्ञानरूप-भोगायतनत्वमेव मनस आयतनत्वम्। छा. सभादि। रा.
**आयतनत्वम्** - स्वाधीनान्यवृत्तिकत्वम् (इन्द्रियाणां मनोऽधीनवृत्तिकत्वादिन्द्रिया-न्तरापेक्षया मनस आयतनत्वम्)। बृ.
**आयतनवतः** - सावकशान्। छा.
**आयत्तः** - उद्युक्तः। रा.
**आयस्तः** - आयासितः। छा.
**आयस्तम्** - आयासः; प्रयत्न इति यावत्। रा.
**आयागः** - उत्सवे प्राधान्येनार्चितं धनुः। रा.
**आयागम्** - आभिमुख्येन यागोद्देश्यम्। वि.
[**आयतिः** - आगामिकालः। या.]
**आयाचितम्** - अभिमतार्थप्रार्थनम्। रा.
**आयामशब्दाः** - सर्वव्याप्तिवाचिशब्दाः। श्री.
**आयासः** - पीडा। रा. श्रममूलदुःखम्। नि. तीर्थयात्रादिकायक्लेशः। वि.
**आयुः** - उच्छ्वासादिविशेषः। तत्साधन-त्वात् प्राणोऽप्यायुः। अथ तच्छरीरकं ब्रह्माप्यायुः। कौ. सर्वप्राणिप्राणनहेतुभूतम्। बृ.
**आयुक्ताः** - आसमन्तात् युक्ताः। लौकिकेष्वपि कुशलाः। तै.
**आयुता** - व्याप्ता। रा.
**आयुधम्** - धनुः, इन्द्रायुधमित्यादौ तथा प्रयोगात्। रा.
**आयुर्वेदः** - वैद्यशास्त्रम्। वि. न्यासिटी.
**आयुष्कम्** - आयुः कथयति उत्पादन-द्वारेण। बृ.
**आरक्षः** - अन्तपालः। रा.
**आरक्षम्** - गुल्मम्। रा.
**आरग्वधम्** - पुष्पविशेषः। पा.
**आरब्धकार्यः** - जात्यायुर्भोगरूपविपाक-संज्ञफलप्रदाने प्रवृत्तः। गद्य.
**आरम्भः (आरभ्यत इति)** - कृतप्रति-कृतादिरूपं कर्म। ता.
**आरम्भः (कर्मणाम्)** - फलसाधनभू-तानां कर्मणामारंभः। गी.
**आरम्भः** - साभिसन्धिकप्रवृत्तिः। ता.
**आरम्भणम्** - आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणम्। कृत्यल्युटो बहुलमिति कर्मणि ल्युट्। श्री. आलम्भ-स्पर्शहिंसयोरिति निघण्टुकाराः। श्रु. आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणम्।

कर्मणि ल्युट् । छा. आलम्बनम् । ता. (आलम्बनम्) शुभाश्रयः । श्रु. शुभाश्रयः । त. योगमारुरुक्षोः चित्तालंबनं शुभाश्रयरूपम् । त.

**आरम्भपर्यायः** - आरम्भपरम्परा । रत्न.

**आरवः** - अट्टहासः । सुन्दर.

**आरा** - चर्मसूची । च.वा.रत्न.

**आराग्रम्** - चर्मभेदिसूच्यग्रम् । भाव. [चर्मभेदकायुधाग्रम् । ई.]

**आरादुपकारकम् (अङ्गम्)** - उत्पत्त्यपूर्वेण परमापूर्वनिष्पत्तौ व्याप्रियमाणम् । न्यासिटी.

**आराधनम्** - परिपूर्णशेषवृत्तिः । गी.

**आराधना** - महानीयप्रीतिहेतुभूता क्रिया । भाव.

**आरामः** - सर्वविधभोग्यभूतः । तै. भोगोपकरणभूतमुद्यानादिकम् । देहेन्द्रियादिकं च । बृ.

**आरुणिः** - अरुणसुतः (उद्दालकः) । छा.

**आरुणेयः** - आरुणेरपत्यम् । बृ. अरुणस्यापत्यम् आरुणिः । तस्यापत्यमारुणेयः । छा.

**आरोग्यम्** - धातुसाम्यादि । ता.

**आरोपणम्** - अनुसन्धानम् । ता.

**आरोप्यदोषः** - दोषारोपविषयः । च.

**आरोहणम्** - सोपानम् । या.

**आर्जवम्** - "आर्जवं समचित्तता" । भाव. करणत्रयस्यैकरूप्यम् । त. कौटिल्यनिवृत्तिः । ता. कायवाग्बुद्धिव्यापाराणां परस्परमविसंवादित्वम् । गद्य. मनोवाक्कायव्यापाराणां मिथः संवादित्वम् । गद्य. परचित्तानुवर्तित्वम् । रा. परचित्तानुसारित्वम् । अकौटिल्यं वा. । रा. परेषु मनोऽनुरूपं बाह्यचेष्टाप्रकाशनम् । भा. परेषु मनोऽनुरूपं बाह्यचेष्टाप्रकाशनं मनोवाक्कायानामैकरूप्यं वा । भा. परान् प्रति वाङ्मनः कायप्रवृत्तीनां एकरूपता । गी. मनोनुरूपं बाह्यचेष्टाप्रकाशनम् । गी. मनोवाक्कायानां ऐकरूप्यम् । भा.श्रु. मनोवाक्कायवृत्तीनामेकनिष्ठता परेषु । गी. मनोवाक्कायैकरूपत्वम् । य. यथा मनः शारीरवृत्तम् । गी. स्वांशस्याग्रे स्वांशस्थितिः । न्यासि.

[मनोवाक्कायवृत्तीनामेकनिष्ठा । र. करणत्रयसारूप्यम् । ई.]

**आर्तः** - निःशेषवैराग्यात् निःशेषनिवर्तनार्थं प्रपन्नः । न्यासि. प्रतिष्ठाहीनः भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः । गी. (भक्तः) भ्रष्टैश्वर्यकामः । य. व्याध्यादिना पीडितः । कौ. (प्रपन्नः) संसारस्थितेरतिदुस्सहत्वात् प्रपत्त्युत्तरक्षण एव मोक्षकामः । य. स्वाभिमतसम्भवे विलम्बाक्षमतीव्रसंवेगवान् वा शरणागमनवेलायामपि स्वापराधनिमित्तभयादिमान् वा । मुमुक्षुपक्षे, संसारजुगुप्सानुसन्धानेन सद्य एव देहनिवृत्तिकामः । यद्वा आकिञ्चन्यानन्यगतित्वपुरस्सरं प्रपन्नः । रा.

**आर्तम्** - दुःखि । न निर्विकारम् । बृ.

**आर्तवः** - ऋतुः कालविशेषः । तत्तत्कालविशेषवर्तिपदार्थः ।
**आर्ताः** - आर्तपपन्नाः । रा. भ्रष्टैश्वर्यकामाः । रा.
**आर्तानां संश्रयः** - आश्रितेष्वप्यार्तानां तु सर्वदा समीचीनाश्रयः सर्वकार्यनिर्वाहकः । रा.
**आर्तिः** - मनःपीडा । रा. दुःखम् । संसारः । बृ. दैन्यम् । भा. [भ्रष्टैश्वर्यस्य पुनस्तत्प्राप्तिकामना । र.]
**आर्त्विज्यम्** - ऋत्विजः कर्म । बृ.
**आर्द्रम्** - द्रवरूपम् । बृ.
**आर्द्रहृदा** - भक्तिमता मनसा । भा.
**आर्द्रा** - दयार्द्रहृदया । श्रीसू.
**आर्द्रीकरोति (विदुषां हृदयम्)** - शिशिरीकरोति । व्यामोहयति । अति.
**आर्यः** - त्रैवर्णिकः । रा. अतत्त्वेभ्यः आरात् दूरात् याता बुद्धिः यस्य, सः आर्यः विद्वान् । ता. [आचार्यः । र.]
**आर्यपथे** - सन्मार्गे । रा.
**आर्यपुत्रः** - भर्ता । रा.
**आर्यमार्गम्** - सद्वर्त्म । भा.
**आर्यशीलः** - श्रेष्ठस्वभावः । रा.
[**आर्याः** - विहितकारिषु आदरणशीला महान्तः । सच्च.]
[**आर्यावर्तः** - विध्यहिमाचलमध्यगः पुण्यभूमिविशेषः । सच्च.]
**आर्षविधिः** - ऋषिप्रोक्तकल्पः । रा. तपोऽनुष्ठानम् । रा.
**आलम्बनम्** - ध्यानविषयः । पा. प्राप्त्युपायः । अष्ट. विषयः । श्रु. शुभाश्रयः । श्रु.
**आलम्बनप्रत्ययः** - नीलानीलाद्यर्थाकारः प्रत्ययः । (सौगतमते) सर्वा (आ).
**आलम्भः** - मरणानुकूलव्यापारः । रत्न.
**आलयः** - प्रवृत्तिविज्ञानाश्रयः (सौगतमते) । सर्वा (आ).
**आलयविज्ञानम्** - अहमास्पदं विज्ञानम् (सौगतमते) । न्यासिटी. अहमिति विज्ञानम् । "तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्" । सर्वा (आ). प्रवृत्तिविज्ञानाश्रयः ज्ञानस्वरूप आत्मा (सौगतमते) । सर्वा (आ).
**आलस्यम्** - इन्द्रियव्यापारमान्द्यम् । गी. कर्मसु अनारम्भस्वभावः । स्तब्धतेति यावत् । गी.
**आलीढम्** - सम्बद्धम् । वे.
**आलोकः** - दयनीयविषयस्य प्रकाशः । दया.
**आलोचनम्** - संमुग्धाकारेण ज्ञानम् (सांख्यमते) । सर्वा (आ).
**आवरणम्** - ज्ञानसङ्कोचः । वे. प्रकृतिसम्बन्धकर्मवासनादिकम् । श्रु. यथावस्थितस्वरूपाप्रतिभासः । न्यासिटी. व्यवहारायोग्यता । च.
**आवर्जनीयम्** - नेतव्यम् । सर्वा (आ).
**आवर्तः** - अम्भसां भ्रमः । वर. जलभ्रमणम् । सुन्दर. संवर्तः । प्रलय इत्यर्थः । रा.

**आवर्तनः** - संसारघटीयन्त्रं आवर्तयति परिवर्तयतीति। "भ्रामयन् सर्वभूतानि"। सह.

**आवर्तिनी** - विद्याविशेषः। रा.

**आवसथाः** - शीतवातवर्षातपवारणान्नोदकशयनाच्छादनादिपूर्णाः शालाः। छा.

**आवह** - सन्निधापय। श्रीसू.

**आवहः** - सप्तविधान्तर्गतः वायुप्रभेदः। छा.

**आवहन्ती** - उत्पादयन्ती। तै.

**आवापः** - पदान्तरप्रक्षेपः। अधि. [अन्यत्र स्थितानामर्थानां अन्यत्र स्थितेष्वर्थेषु एकराशितया ग्रहणम्। र. अन्यत्र सिद्धार्थस्य स्वमते अङ्गीकारः। सच्च.]

**आविकम्** - कम्बलः। बृ.

**आविर्भावः** - निष्पत्तिः। श. विकासः। श्री. विकासः। जन्म। वि. स्वरूपाविर्भावः, नापूर्वाकारोत्पत्तिरूपः। श्री.

**आविष्कृणोमि** - प्रकाशयामि। बृ.

**आविष्टाम्** - मणिमन्त्राद्यभिभूताम्। रा.

**आविस्सन्निहितम्** - योगिनामपरोक्षं सन्निहितम्। श्रु.

**आवृत्** - स्मृत्युक्तपरिपाटिः। 'आवृत् परिपाटिरनुक्रमः'। बृ.

**आवृतम्** - तिरोहितस्थूलावस्थम्। बृ.

**आवृत्तचक्षुः** - स्वस्वविषयव्यावृत्तचक्षुः। क.

**आवेगः** - भयम्। रा. सम्भ्रमो द्र.

**आवेश्य** - संस्थाप्य। गी.

**आंशुमती** - यमुना। रा.

**आशयः** - मनोवृत्तिः। भा. वासना। भा. वासना, संस्कारः। श्रु. शरीरम्। आशेते अस्मिन्निति। भा. स्थानम्। न्यासिटी.

**आशयाः** - पूर्वानुभावभाविताः आफलोदयं शयानाः संस्काराः। गद्य.

**आशा** - इदं मम भविष्यतीत्यपेक्षा। भा. कामः। अनुत्पन्नविषयेच्छा। क. "चिन्ता कर्तव्यविषया। आशा तु फलविषया"। ता. फलेच्छा। छा.

**आशामोदकम्** - आशाकल्पितमोदकम्। श.

**आशाम्बराः** - दिगम्बराः (जैनाः)। श.

**आशावसनाः** - दिगम्बराः। जैना इति यावत्। सर्वा (आ).

**आशितम्** - अन्नादि। बृ. अन्नदाननिमित्तं धर्मजातम्। बृ.

**आशिषः** - आशाः। छा. ऐहलौकिककामाः। भा.

**आशिष्ठः** - आशुतरक्रियः। यद्वा अशनक्षमः। अरोग इत्यर्थः। यद्वा आशीर्वादविषयभूतः। सर्वानुरञ्जक इत्यर्थः। (श्रु).

**आश्रमः** - अणिमादिकामेभ्यो निवृत्त्य सुभिक्षपरविद्येषु वैष्णवगेहेषु योगस्खलितानां विश्रान्तिहेतुः। सह. [ब्रह्मचर्यादिः। र.]

**आश्रमकर्म** - आश्रमस्य कर्म, आश्रमिणा अनुष्ठेयमित्यर्थः। श्री.

**आश्रयः** - आधारः । वै. विषयः । त.
**आश्रयणम्** - प्रपत्तिपूर्वकभजनम् । ता. शरणत्वेन भजनम् । अति. संबन्धः । श्रु.
**आश्रयत्वम्** - शुभाश्रयस्याश्रयत्वमारुरुक्षुमनोगोचरत्वम् । रत्न.
**आश्रयदुष्टम्** - (अन्नम्) शूद्रान्नादि । त.
**आश्रयभागासिद्धः** - हेत्वाभासविशेषः । न्याप.
**आश्रयासिद्धः** - हेत्वाभासविशेषः । न्याप.
**आश्रितवात्सल्यम्** - समाश्रितजनदोषेषु भोग्यताबुद्धिः । सुन्दर.
**आश्रित्य** - प्रयोजनतयाऽभिसन्धाय । ता.
**आश्लेषः** - निबिडसम्बन्धः । दया.
**आश्वतराश्विः** - अश्वतराश्वसुतः बुडिलः । छा.
**आश्वस्तः** - लब्धसंज्ञः । रा.
**आश्वासः** - विश्रमः । रा.
**आस** - आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमिति शाकटायनः । 'अस गतिदीप्त्यादानेषु' इति धातोर्दीप्त्यर्थकं वा । या. बभूव । बृ.
**आसः** - कश्चित् राक्षसः । वि.
**आसक्तम्** - आभिमुख्येन सक्तम् । गी.
**आसचत** - आगच्छत । तै.
**आसनम्** - पर्यङ्कविद्यादिषु आम्नातं दिव्यसिंहासनम् । स्तो. [स्वस्तिकादि । यात्रां विहाय स्वस्थाने स्थितिः । या.]
**आसन्दिः** - वेत्रादिमयं चतुष्पादमासनम् । वि.

**आसन्यम्** - आसन्नम् । मुख्यमित्यर्थः । श्रु. आसन्नम् । स्वार्थे ष्यञ् । भाव. आस्ये भवः आसन्यः । आस्यशब्दस्य "पद्दन्नि" त्यादिना आसन्नादेशः । मुख्यमिति यावत् । बृः
**आसा** - आस्या । आसनमित्यर्थः । बृ.
**आसारः** - वेगवृष्टिः । या. सवेगा वृष्टिः । रा.
**आसिधारं व्रतम्** - खड्गनेमिसम्बन्धि व्रतम् । यथा खड्गधारावृत्तिर्नटः शिक्षावशात् सावधानो भवतितथा नियमवदित्यर्थः । पा.
**आसुतम्** - सत्रगतमभिषवणम् । छा.
**आसुरम्** - भगवदानुकूल्यप्रत्यनीकम् । गी.
[**आसुरप्रकृतयः** - भगवदाज्ञातिवृत्तिशीलाः । र.]
**आसुरं भावमाश्रिताः** - "मद्विषयं मदैश्वर्यविषयं च ज्ञानं सुदृढमुपपन्नं येषां द्वेषायैव भवति ते आसुरं भावमाश्रिताः" । गी.
**आसुरभावः** - देहात्माभिमानः । वि.
**आसुरी प्रकृतिः** - असुरसम्बन्धी लोभमयस्वभावः । ता.
[**आसेचनकम्** - "तदासेचनकं तृप्तेः नास्त्यन्तो यस्य दर्शनात्" । असेचनकमिति ह्रस्वादिरिति सर्वानन्दः । या.]
**आस्तरणम्** - कौसुम्भोत्तरच्छदः । रा. परिस्तरणम् । रा.

**आस्तावः** - आस्तुवन्ति अस्मिन्निति आस्तावः। स्तोत्रस्थानम्। छा.

**आस्तिक्यम्** - अस्ति परलोक इति मतिर्यस्य सः आस्तिकः तस्य भावः। भा. वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः। केनापि हेतुना चालयितुमशक्य इत्यर्थः। भगवान् पुरुषोत्तमो वासुदेवः परब्रह्मशब्दाभिधेयो निरस्तनिखिलदोषगन्धः स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसङ्ख्येयकल्याणगुणः निखिलवेदान्तवेद्यः। स एव निखिलजगदेककारणम्; निखिलजगदाधारभूतः। निखिलस्य स एव प्रवर्तयिता। तदाराधनभूतं च वैदिकं कृत्स्नं कर्म। तैस्तैराराधितो धर्मार्थकाममोक्षाख्यं फलं प्रयच्छतीत्यस्यार्थस्य सत्यतानिश्चय आस्तिक्यम्। गी. अस्ति मतिरस्येत्यास्तिकः। तद्भाव आस्तिक्यम्। तच्चाप्रामाणिकेषु भवद्दोषाय। प्रत्यक्षादिसिद्धे तु नासावतिशयः। शास्त्रीयेष्वपि क्वाचित्कसंशयादौ कुदृष्टित्वप्रसङ्गः। अतो "वैदिकार्थस्य कृत्स्न"स्येत्युक्तम्। ता. शास्त्रार्थविश्वासः। भा. शास्त्रार्थे सत्यतानिश्चयः। भा.

**आस्थानम्** - सभा। पा.

**आस्थानिवृत्तिः** - विषयेषु वैराग्यसिद्धिः। न्यासिटी.

**आस्थितः** - अधिरूढः। तिष्ठतेरुपसर्गभेदेनार्थभेदात् सकर्मकता। या.

**आस्थितिः** - सुदृढं भजनम्। गी.

**आस्रवः** - इन्द्रियप्रवृत्तिः। बृ. कर्मणा बन्धः। भाव. भोगोपकरणभूतमिन्द्रियादिकम् (जैनमते)। श्री.

**आह** - आहेत्युवाचार्थे विभक्तिप्रतिरूपकमव्ययमिति न स्मशब्दापेक्षा। या.

**आह-प्राह** - आहेत्युवाचार्थे विभक्तिप्रतिरूपकमव्ययमिति शाकटायनः। तत्र 'कुगतिप्रादयः' इति समासः। या.

**आहारः** - इन्द्रियाणां विषयीभूतोऽर्थ आहारशब्देनोच्यते। "इन्द्रियाणां आहाराः विषयाः"। गी. "निराहारस्ये" त्यनेन भोजननिषेधभ्रमं व्युदस्यति इन्द्रियाणामित्यादिना। 'न चैकान्तमनश्नतः' 'युक्ताहारविहारस्य' इति हि वक्ष्यते। अन्यत्रापि "अत्याशनादतीपानात्" इति ह्युच्यते। मोक्षधर्मे च 'दशैतानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये' इति सर्वेन्द्रियविषयाणामाहारशब्देन ग्रहणं दृष्टम्। ता.

**आहारशुद्धिः** - सात्त्विकाहारसेवनम्। छा.

**आहाराः** - आह्रियन्त इत्याहाराः तत्तद्द्रव्याणि। ता.

**आहार्यम्** - भोज्यम्। भा.

**आहिताग्निः** - आहिताः परितः स्थापिताः अग्नयः यस्य। रा.

**आहुः** - पप्रच्छुः। बृ.

**आहोपुरुषिका** - दर्पजनिता आत्मसम्भावना। पा.

**आह्लादि** - आह्लादकम्। वि.

**आह्वा** - आख्या। रा.

## इ

**इक्ष्वाकुः** - वैवस्वतमनोः सुतो नृपः। रा.
**इङ्गितम्** - अन्तर्गतभावसूचकस्मितादि। रा. भावसूचककायिकव्यापारः। अभिप्राय-सूचको व्यापारः। रा. भ्रूसंज्ञा। या. मुख-प्रसादवैगुण्यादि। रा.
**इच्छन्** - चिन्तयन्। बृ.
**इच्छा** - अपेक्षा। वि. इदं भवतु इत्या-कारिका। रत्न. ज्ञानविशेषः। न्यासिटी.
**इच्छाद्वेषसमुत्थः** - इच्छाद्वेषाभ्यां समुत्तिष्ठतीति सः। ता.
**इच्छाविहारः** - स्वैरसञ्चारः। अति.
**इच्छाश्राद्धम्** - काम्यश्राद्धम्। वि.
**इच्छासै** - इच्छस्व (?)। बृ.
**इज्यः** - यजनार्हः। सह.
**इज्यदृष्टयः** - पूज्यताबुद्धिमन्तः। भा.
**इज्या** - अर्ध्यपाद्यादिनिवदेनरूपा। भा. यागः। गी. [''ततोऽष्टाङ्गेन यागेन पूजयेत् परमेश्वरम्। साधिकं प्रहरं विप्र इज्याकालस्तु स स्मृतः।'' पाद्म.]
**इत्** - इदमवधारणार्थकमव्ययम्। श्वे.
**इतम्** - (यथेतम्) गतम्। इण् गताविति धातुः। श्रु.
**इति** - इतिशब्दो हेत्वर्थः। ता.
**इति (इष्टापूर्ते दत्तमित्युपासते)** - इति-शब्दस्तज्जातीयोपवासादिकर्मान्तरपरः। छा.
**इति** - प्रकारवचनोऽयं शब्दः। समाप्ति-द्योतको वा। बृ.
**इति (प्रथमः सर्गः)** - इतिशब्दः समाप्तिवाची प्रथमः सर्ग इत्येतदन्वयी। या.
**इतिकर्तव्यता** - अङ्गानि। श.
**इतिवृत्तम्** - कथाशरीरम्। रत्न.
**इतिहासः** - रामायणादिः। बृ. वेदशब्दा-न्तर्गतं पुरावृत्तम्। श्रु. [भारतरामायणे। सच्च.]
[**इतिहाससमुच्चयः** - भारतेतिहास-सारतया सर्वशिष्टपरिगृहीतः प्रबन्धविशेषः। सच्च.]
**इत्या** - गमनम्। कौ.
**इदम्** - प्रत्यक्षार्हम्। वर.
**इदन्तया** - प्रमेयतया। श्रु.
**इदन्त्वम्** - दृग्विषयत्वमात्राधीनसिद्धि-त्वम्। न्यासि. ज्ञानान्तराधीनसिद्धिकत्वम्। न्यासिटी. स्वभिन्नज्ञानविषयत्वमात्राधीना संशयविषयत्वाभावरूपा सिद्धिर्यस्य तत्त्वमिति। रत्न. वर्तमानकालसंबन्धः। सर्वा.
**इदम्पराः** - इदं परं मुख्यं येषां ते। तात्पर्य-पर्यवसानवन्तः। अतथाभूताः अनिदम्पराः। या.
**इदम्प्रथमम्** - कालपरिच्छिन्नम्। वै.
**इदम्भावः** - देशविशेषसान्निध्यम्। त.
**इध्मा** - (आर्षः टाप्प्रयोगः) समित्। वि.
**इन्दिरा** - महती समृद्धिः। भा.
**इन्दुः** - परमैश्वर्यशाली। तै.
[**इन्दुकान्तः** - चन्द्रिकया द्रवत्स्वभाव उपलविशेषः। या.]

**इन्द्रः** - इदि परमैश्वर्य इति परमैश्वर्यगुण-शाली परमात्मा । न्यासिटी. ईश्वरः । परमात्मा । इदि परमैश्वर्य इति धातोः तत्रैव मुख्यवृत्तत्वात् । रा. परमेश्वरः । प्र. परमैश्वर्यशाली । तै. बृ. परमैश्वर्यसम्पन्नः । रा. वरुणानन्तर आतिवाहिकः । सन्निहित-मुक्तैश्वर्यः जीवः । तै.

**इन्द्रकर्मा** - शरणागतेन्द्राद्यर्थे कर्म-व्यापारोऽस्येति । सह.

**इन्द्रगोपः** - क्रिमिविशेषः । बृ.

**इन्द्रजालम्** - अन्यथाभूतस्य वस्तुनः अन्यथाप्रतिभासनशक्तिः । ता. द्रष्टृजन-व्यामोहनम् । "देशकालापरोक्ष्यं यत् परोक्षस्यैव वस्तुनः । मन्त्रौषधिक्रियाभेदै-रिन्द्रजालं प्रचक्षते ।" या. [मायामात्रम् । या.]

**इन्द्रजित्** - इन्द्रविजयेन हेतुना ब्रह्मकृत-नामधेयो रावणपुत्रो मेघनादः । रा.

**इन्द्रद्युम्नः** - कश्चन ऋषिः । छा. भाल्लवेयः वैश्वानरोपासकः । अग्नि.

**इन्द्रपत्नी** - 'इदि परमैश्वर्ये' इति धातूपात्तपरमैश्वर्यविशिष्टविष्णुपत्नी । श्रीसू.

**इन्द्रप्रजापती** - ब्रह्मलोकस्थापराजिता-ख्यपट्टणद्वारपालकौ । कौ.

[**इन्द्ररात्रम्** - सनत्कुमारसंहितान्तर्गतो भागविशेषः । सच्च.]

**इन्द्रियम्** - जुष्टमिन्द्र इन्द्रियमिन्द्रलिङ्ग-मिन्द्र "सृष्टमिन्द्रदत्त"मिति व्युत्पत्ति-निमित्तमुक्तम् । न्यासिटी. ज्ञानेन्द्रिय-कर्मेन्द्रियभेदेन द्विविधमपीन्द्रियम् । न्यासि. प्राणाद्यन्यत्वे सति हृत्कर्णचक्षुरादि-शरीरप्रदेशविशेषावच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमित्यादि लक्षणम् । न्यासि. शरीरसंनिवेशातिरिक्तं सात्त्विका-हङ्कारजन्यं शरीरस्थितं सत् करणम् । न्यासि. सात्त्विकाहंकारोपादानद्रव्यम् । य. सात्त्विकाहङ्कारोपादानकं द्रव्यम् । तदेकादशविधम् पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति । न्याप.

**इन्द्रियतापनम्** - इन्द्रियक्षोभकम् । रा.

**इन्द्रियत्वम्** - सात्त्विकाहङ्कारोपात्तत्वम् । इन्द्रियाणामनुगतं लक्षणमिदम् । सर्वा. सात्त्विकाहङ्कारद्रव्यविकृतित्वम् । अधि. सात्त्विकाहङ्कारोपादानकत्वम् । इन्द्रियाणा-मिदमेव लक्षणम् । सर्वा.

**इन्द्रियसम्प्रयोगजन्यः** - लिङ्गशब्दबोध-नानुपक्षीणेन्द्रियसम्प्रयोगानन्तरजातविशिष्ट-प्रत्ययः । सर्वा.

**इन्द्रियादिः** - अहङ्कारभेदः । वि.

**इन्द्रियाय** - इन्द्रशिष्याय । तै.

**इन्द्रियार्थेषु वैराग्यम्** - आत्मव्यतिरि-क्तेषु विषयेषु सदोषतानुसन्धानेन उद्वेजनम् । गी.

**इन्धः** - "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः । तं वा एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ।" बृ.

**इन्धते** - प्रकाशन्ते । प्रकाशयन्तीत्युक्तिर-नुपपन्ना । णिजन्तत्वाभावात् । सुन्दर.

**इन्नु** - इत्थम् । बृ.
**इभ्यः** - इभमर्हतीति, हस्तिपः । श्रु.
**इभ्यग्रामः** - गजारोहाणां ग्रामः । छा.
**इयत्ता** - संख्या । श्रु.
**इयात्** - प्राप्नुयात् । बृ.
**इरम्मदः** - मेघाग्निः । यां.
**इरा** - अन्नम्, तदभिमानिदेवता । कौ.
**इरिणः** - ऊषरः । रा.
[**इरिणम्** - ऊषरक्षेत्रम् । र.]
**इलः** - बाह्लिकेश्वरः कर्दमकुमारः क्षत्रियः । रा.
**इव** - अल्पार्थकोऽयं शब्दः । बृ. इवशब्दो वाक्यालङ्कारे । या "अनिन्दितां ग्लानिमिवोद्वहन्त्यः" । ५.७५. इवशब्दो वाक्या-लङ्कारे 'आवर्जिता किञ्चिदिव स्तनाभ्याम्' इत्यादाविव । या. ४.२३. (किञ्चिदिव) इवशब्दो वाक्यालङ्कारार्थः । 'इवैवादयो वाक्यपूराणार्थाः' इति शब्दप्रकाशिका-वचनात् । या. (ततोभूय इव तमः) इवशब्दः तमस इयत्ताया दुर्ग्रहत्वं द्योतयति । ई. एवार्थकः । बृ.
**इषम्** - देवानुद्दिश्य दीयमानं अन्नादिकम् । भा.
**इषयन्ती** - अन्नाकारपरिणामहेतुः (भूः) । न्यासिटी.
**इषिः** - इच्छा । श्रु.
**इषितम्** - इष्टम् । के.
**इषीकतूलम्** - इषीकायाः मुञ्जान्तर्वर्तितृण-विशेषस्य तूलम् । छा.
**इषीकाः** - काशाः । वि.
**इषुः** - अमन्त्रको बाणः । रा.
**इषुवेगः** - इषुप्रयोगलक्ष्यसंयोगयोर्मध्य-कालल्पत्वम् । न्यासिटी.
**इष्टः** - प्रमाणेनाभ्युपगतः । सर्वा (आ). प्रीतिविषयः । ता. दृढमि?ष्टः - अत्यर्थं प्रियः । ता.
**इष्टम्** - पुण्यकर्म । भाव. यागादि श्रौतम् । तै. यज्ञादि । वि. यागादि । छा. यागादिकं कर्म । बृ. यागादि वैदिकं कर्म । भा.
[**इष्टशिष्टभक्षणन्यायः** - "अन्नशेषः किं क्रियतां, इष्टैस्सह भुज्यतां" मित्यादौ इष्टैस्सह शिष्टभोजनं यथा निवेदितावशिष्ट-विषयम्, तथा अन्यत्रापीति न्यायः । सच्च.]
**इष्टसम्पत्तिः** - सुखादिसम्पत्तिः । श्रु.
**इष्टापूर्तम्** - सकलश्रुतिस्मृतिचोदितं कर्म । श्रौतं इष्टं कर्म; स्मार्तं पूर्तं कर्म । वे. इष्टं यागादि । पूर्तं खातादि । क.
**इष्टापूर्ते** - श्रौतस्मार्तकर्मणी । श्रु.
**इष्टियाजुकः** - काम्येष्टियजनशीलः । यद्वा दर्शपूर्णमासयोरार्त्विज्यकारी ।
**इष्टोऽविशिष्टः** - (एकं नाम) । उदरेण धृतैर्मुख्यैरपि, अविशिष्टस्सन् अविशेषेण इष्टः जनयित्रीव वाञ्छितः । सह.
**इष्यमाणप्रधानत्वम्** - इष्यमाणवस्त्व-धीनत्वम् । वा.

## ई

**ईक्षणम्** - संकल्पः । श्री.
**ईक्षा** - तत्त्वविमर्शः । भा. हेयोपादेयादि-विवेकः । भा.

**ईक्षाञ्चक्रे** - अचिन्तयत्। बृ.
**ईजानः** - यष्टा। क.
**ईट्** - सर्वनियन्ता महापुरुषः। ई.
**ईड्यः** - क्षमादिभिः स्तुत्यः। गद्य.
**ईतिः** - 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' इत्युक्तरूपा। या.
**ईयते** - वर्तते। बृ.
**ईरणम्** - उच्चारणम्। वि.
**ईर्मौ** - बाहू। बृ.
**ईर्ष्या** - अक्षान्तिः; इतरसंपदसहिष्णुता। अच्यु.
**ईशः** - अकर्मवश्यः। भा. अणुव्यतिरिक्तः चेतनः। सर्वा. नियन्ता। तै. परमात्मा। अत्र ईशशब्दश्च न रूढः प्रयुक्तः। किं तु योगात्। "अनीशश्चात्मा" "ज्ञावजावीशनीशौ" "ईशस्सर्वस्ये"ति निर्देशस्य सप्रतिसंबन्धितया अवयवार्थविवक्षाज्ञापकत्वात्। श्रु. सर्वेश्वरः। वर. सापराधनिग्रहादिसमर्थः। गद्य. स्वतन्त्रः। रा.
**ईशते** - समर्था भवन्ति। बृ.
**ईशनम्** - नियमनम्। भाव.
**ईशम्** - सर्वस्य शेषिभूतम्। तै.
**ईशसंस्थः** - ईशे ईशनव्यापारे सम्यक् स्थितिर्यस्येति स तथोक्तः। श्वे.
**ईशानः** - धाता। वेकौ. नियन्ता। वेकौ. प्रेरकः। ईशान् ब्रह्मादीन् अनिति प्रेरयतीति। मा. सर्वावस्थस्वपरसमस्तवस्तुव्यवस्थापनशीलतया ईष्ट इति। सह. सकलवस्तुनियन्ता। वै. सर्वनियन्ता नारायणः। वेकौ.
**ईशानम्** - नियन्तृ। श्वे. नियन्तृ। इदं तु यौगिकं, न तु रुढं, पुंलिंगताप्रसंगात्। श्रु.
**ईशाना** - स्वभावतो नियन्त्री; अनन्याधीनेश्वरी। श्रीसू. स्वोत्कृष्टावधिशून्यैश्वर्यविशिष्टा श्रीः। श्रीत.
**ईशावास्यम्** - ईट्शब्दस्तृतीयान्तः, ईशाः, तेन वास्यम्। यद्वा ईशेनावास्यं ईश्वरपरतन्त्रमित्यर्थः। श्रु.
**ईशेशितव्यसंबन्धः** - स्वाभाविकशेषशेषिभावसंबन्धः। नि.
**ईश्वरः** - अन्तः प्रविश्य शासनकर्ता नारायणः। वेकौ. अपारेऽपि परभोगस्थाने अप्रतिहतस्वेच्छः। सह. ईशितव्यादर्थान्तरभूतः। गी. नियन्ता। श्रु. नियन्ता। "ईश्वरशब्दारूढ्या च स्वामित्वसिद्धिः। न खलु गरुडादिषु भुजङ्गादीन् नियच्छत्सु तदीश्वरशब्दः"। ता. नियन्ता। जन्मसु पारमेष्ठ्यादपि अधिकतमप्रयोजनैश्वर्यवत्तया ईष्ट इति। सह. प्रशासनपूर्वकव्याप्त्याधारः। भा. प्रशासिता। भा. "भगवान् सर्वावस्थास्वपि सपत्नीक एवेश्वरः"। श्रीत. व्यापकश्चेतनः। न्यासि. शेषी। श्रु. सर्वनियामकः। मा. सर्वनियमनशीलो वासुदेवः। गी. स्वतन्त्रचेतनः। न्याप. स्वाधीनः, नियन्ता। गी. शक्तिमान् अति. [विभुत्वे सति चेतनत्वं, अनन्याधीनत्वं, निरुपाधिकशेषित्वं, (एवमादीनि) तस्य लक्षणानि। र. विष्णुः; "ईश्वरो विक्रमी धन्वी"ति नामसु पाठात्। पाञ्च.]

**ईश्वरकर्तव्यभरः** - प्रसदनब्रह्मनाडीप्रवेशनादिः परिपूर्णानुभवप्रदानसंकल्पपर्यन्तः। न्याद.

**ईश्वरतत्त्वम्** - श्रीपतिरिव श्रीरपि स्वभावत ईश्वरतत्त्वभूता। श्रीत.

**ईश्वरतत्त्वस्वरूपम्** - सत्यत्वज्ञानत्वानन्तत्वविविधविलक्षणविग्रहवत्त्वादि। श्रीत.

**ईश्वरत्वम्** - नियन्तृत्वम्। गी. श्रु. निरंकुशस्वातन्त्र्यम्। नि. नेदं सर्वव्यापारोपधायकत्वरूपं, किं तु स्वरूपयोग्यत्वमात्रम्। अत एव भगवतः पुरुषकारत्वाभावेऽपि सर्वेश्वरत्वं न हीयते। श्रीत. यावद्वस्तुशेषित्वम्। श्रीस्तु. विभुत्वे सति चेतनत्वम्। वा.

**ईश्वरभावः** - स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम्। गी.

**ईश्वरलक्षणम्** - विभुत्वे सति चेतनत्वम्। इदं श्रीसाधारणम्। श्रीत. जगज्जन्मादिसामर्थ्यमात्रम्। न तु सर्वत्र व्यापारोऽपि। श्रियोऽपीश्वरत्वात्। श्रीत.

**ईश्वरव्यापाराः** - जगत्सृष्टिस्थितिसंहारमोक्षप्रदत्वादयः। श्रीत.

[**ईश्वरसंहिता** - पाञ्चरात्रसंहिताविशेषः। सच्च.]

**ईश्वरस्य निमित्तत्वम्** - अविभक्तचिदचिच्छरीरकत्वरूपोपादानतावच्छेदरूपातिरिक्तेन संकल्पविशेषवत्त्वाकारेण कारणत्वम्। न्यासि.

**ईश्वरस्योपादानत्वम्** - अविभक्तनामरूपचिदचिच्छरीरकस्य विभक्तनामरूपचिदच्छरीरकत्वापेक्षया कारणत्वम्। न्यासि.

**ईश्वरा** - स्वतन्त्रा। वि.

**ईश्वराः** - कर्मवश्यत्वाभावप्रयुक्तशास्त्रवश्यत्वाभाववन्तः। भा.

**ईश्वरी** - नियन्त्री स्वामिनी। 'ईर्श ऐश्वर्ये' इति धातुः। 'स्थेश भासपिसकसो वरच्, इति वरच्प्रत्यये ईश्वरशब्दो निष्पन्नः। श्रीसू.

**ईश्वरे उपादानत्वम्** - सर्वात्मकत्वम्। नी.

**ईषत्करत्वम्** - ईषत्प्रयत्नसाध्यत्वम्। नि.

**ईषत्पत्राढ्यम्** - पल्लवप्रचुरम्। रा.

**ईहामृगः** - वृकः। रा.

## उ

**उ** - अवधारणद्योतकमव्ययम्। अष्ट. अवधारणे। श्रु. बृ. उस्त्वर्थे। छा. उशब्दः प्रसिद्धौ। बृ. प्रजापतिः। बृ. [एव]

**उः** - रुद्रः। पा. लक्ष्मीः। न्यासि. लक्ष्मीः, 'उद्धृता विष्णुना लक्ष्मीः उकारेणोच्यते तथा' इति। श्रीसू. शिवः। वेकौ.

**उक्तविरोधः** - स्वोक्तस्य स्वेनैव विरुद्धकरणमुक्तविरोधः। न्याप.

**उक्तविशेषणम्** - अविशेषितपूर्वोक्ते दूषिते तद्विशेषणनिक्षेप उक्तविशेषणम्। न्याप.

**उक्तहानिः** - कथायां स्वोक्ते परेण दूषिते स्वेनैव तत्परित्याग उक्तहानिः। न्याप.

**उक्तापलापः** - स्वयमुक्तस्य सभ्यादिविदितस्य परेण दूषितस्य निगूहनमुक्तापलापः। न्याप.

**उक्तिः** - शुश्रूषुभ्योऽधिकारिभ्यः प्रतिपादनम्। गीसं.

**उक्थम्** - शस्त्रविशेषः। बृ.

**उक्थशासाः** - कर्मविधिप्रेरिताः। भा.

**उग्रः** - युगावसाने पापातिप्रसङ्गिषु सङ्कीर्णवर्णाश्रमव्यवस्थेषु प्रचण्डः। सह. उच समवाये। "ऋज्रेन्द्राग्र" इत्यादिना रन्प्रत्ययान्तो निपातः। सह.

**उग्रकर्माणः** - सर्वेषां हिंसकाः। गी.

**उग्रधर्मः** - अभिचारादिः। भा.

**उग्रयातारः** - तीक्ष्णं यथातथा शत्रून् अभिगन्तारः। रा.

**उग्ररूपः** - तीक्ष्णरूप इत्येके। क्रुद्धरूप इत्यन्ये। सर्वा (आ).

**उग्रसेनः** - कश्चिद् गन्धर्वः। वि. [यादवानां कश्चिद्राजा। या.]

**उग्राः** - जातिविशेषाः। क्रूरकर्माणो वा। बृ.

**उचितः** - प्राप्तः। सर्वा.

**उच्चावचः** - अनेकप्रकारः। रा.

**उच्चावचानि** - उत्कृष्टनिकृष्टानि। वि.

**उच्चिक्रमिष्यन्** - उत्क्रमितुमिच्छन्। छा.

**उच्छादकः** - अङ्गमर्दकः। रा.

**उच्छिष्टम्** - गुर्वादिभ्योऽन्येषां भुक्तशिष्टम्। गी. गुर्वादीत्यादिशब्देन पितुः, ज्येष्ठस्य भ्रातुः, भार्याविषये भर्तुश्च ग्रहणम्। ता.

**उच्छ्रयः** - उत्क्षेपणम्। रा.

**उच्छ्वासः** - वृद्धिः, धर्मोच्छ्वासवती धर्माभिवृद्धिमती। या.

**उज्जिहानम्** - शिरः उत्क्षिप्य आक्षिपन्तं (पूर्वपक्षिणम्)। अधि.

**उज्जिहाना** - नगरविशेषः। रा.

**उज्ज्वलनम्** - ऊर्ध्वं ज्वलनम्। बृ.

**उज्ज्वलाधरः** - प्रवालादिभ्योपि अधिकप्रकाशमानाधरः। स्तो.

**उञ्छः** - कणश आदानम्। भा. दैवात्प्रकीर्णानां व्रीह्यादीनां अङ्गुल्या एकैकशो ग्रहणम्। रा.

**उञ्छवृत्तिः** - एकैकशो धान्यग्रहणेन जीवनवान्। रा.

[**उत्** - सर्वपापोद्गतत्वेन प्रवृत्तिनिमित्तेन उच्छब्दाभिधेयः सवितृमण्डलमध्यवर्ती भगवद्रूपविशेषः। 'य एषोऽन्तरादित्ये पुरुषः..... । तस्योदिति नाम .... स एष सर्वेभ्यः पाप्मभ्य उदितः' इति श्रुतेः। या.]

**उताहो** - पक्षान्तरसत्ताद्योतको निपातः। रा.

**उत्कटम्** - स्फुटम्। मा (कू).

**उत्करः** - समूहः। रा.

**उत्कर्षसमः** - हेतुसाध्ययोरन्यतरबलात् दृष्टान्तात् पक्षे पक्षाद् दृष्टान्ते वा समुत्कर्षप्रसञ्जनम्। जात्युत्तरविशेषः। न्याप.

**उत्कलिका** - उत्कण्ठा। कल्लोलः। या.

**उत्क्रमणम्** - उत्क्रमणं हि अपसर्पण इव मरणेऽपि निरूढम्। भाव.

**उत्क्रान्तिः** - गतेरुपक्रमः। श्रु. देहान्निष्क्रमणम्। अधि.

**उत्क्रान्तित्वम्**-ऊर्ध्वदेशसंयोगावच्छिन्नक्रियात्वम्। वा.

**उत्क्रोडम्** - हृदयस्य स्थानम्। रा.
**उत्तब्धम्** - धृतम्। बृ.
**उत्तमः** - उत्कृष्टतमः। मुक्तो हि बद्धादुत्कृष्टः ततोऽप्यसौ सर्वान्तरात्मत्वादिभिरुक्तैर्हेतुभिरुत्कृष्टतमः। ता.
**उत्तमवित्** - उत्तमत्त्ववित्। आत्मयाथात्म्यवित् गी.
**उत्तमा मतिः** - धैर्यम्। रा.
**उत्तम्भनम्** - ज्ञापकम्। श्रु.
**उत्तरः** - आपदुत्तारकः। सह.
**उत्तरम्** - उत्कृष्टम्। रा.
**उत्तरं बिलम्** - ऊर्ध्वं मुखम्। छा.
**उत्तरत्वम्** - वर्तमानप्रागभावप्रतियोगिवस्त्ववच्छिन्नकालसंबन्धः। रत्न.
**उत्तरमीमांसा** - वेदान्तः। त.
**उत्तराघाश्लेषः** - अबुद्धिपूर्वकविद्याधिगमोत्तरकालिककर्माश्लेषः। न्यासि. उत्तरकर्मफलदित्सायाः भगवद्गतायाः प्रतिबन्धः। यद्यर्थोपहितसंकल्पविशेषः। रत्न.
**उत्तरावधिः - (कार्यस्य)**, ध्वंसः। रत्न.
**उत्तानम् - अहृदयम्**। सर्वा (आ).
**उत्तानिका** - नदीविशेषः। रा.
**उत्तारणः** - गजग्राहौ सरस उत्तारितवान्। सह.
**उत्तिष्ठत** - आत्मज्ञानाभिमुखा भवत। क.
**उत्तिष्ठन्ति** - जायन्ते। बृ.
**उत्तेजकम्** - प्रतिबन्धकस्य प्रतिबन्धकम्। श.
[**उत्तंसः** - शिरोभूषणम्। र.]
**उत्थम्** - उत्थापयितृत्वगुणविशिष्टम्। कौ.
**उत्थानम्** - विषयतया स्फुरणम्। ता.
**उत्थायी** - यात्राशीलः। बृ.
**उत्पटः** - (वृक्षाणाम्) क्षीरादिसारः। उत्क्रम्य पटति गच्छति इति। बृ.
**उत्पत्तिः** - अवस्था। श्रु. अवस्थान्तरापत्तिः। य. (पटस्य) आद्यक्षणावच्छिन्नपटत्वावस्था। सर्वा. आद्यसमयसम्बन्धः। सर्वा (आ). उत्तरावस्थाप्राप्तिरेव तदवस्थस्य (उत्तरावस्थस्य)। गी. (जीवस्य) ज्ञानविकासप्रादुर्भावः। बृ. द्रव्यस्य अवस्थान्तरापत्तिः। श्री.श्रु. प्रथमक्षणयोगः। श्रु. सतो द्रव्यस्यावस्थान्तरयोगः। वे. स्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्धः। वा.
**उत्पत्तिवाक्यम्** - प्रथमप्रतिपत्तिजनकं वाक्यम्। श्रु.
**उत्पथग्राहिणः** - दुर्मार्गगताः। वि.
**उत्पक्वः** - परिपक्वः। सुन्दर.
**उत्पलानि** - पद्मव्यतिरिक्तसरसिजानि। रा.
**उत्पाटनम्** - उन्नमय्य ग्रन्थिभेदनम्। वि.
**उत्पाटिका** - बहिस्त्वक् (चिञ्चादेः) वृक्षानुपमर्दैनैवोत्पाट्यत इत्युत्पाटिका। बृ.
**उत्पातः** - अरिष्टसूचको विकारः। या. भाविलोकानिष्टसूचकं दुर्निमित्तम्। रा.
**उत्पीडम्** - प्लीहोपरि स्थितं मांसम्। रा.
**उत्पुच्छनम्** - उन्नमनम्। सुन्दर.
**उत्प्रेक्षासमः**-स्वोत्प्रेक्षितसाधनदूषणादिप्रतिक्षेपः। न्याप.

**उत्सः** - प्रवाहः । "विष्णोः पदे परमे मध्व उत्सः" । अति.

**उत्संगतलम्** - मध्यतलम् । रा.

**उत्सर्गापवादन्यायः** - उपात्तविशेष-व्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय संकोचः । श्रु. [सामान्यविधेः अपवादविध्यतिरिक्त-विषयकत्वप्रतिपादनपरो न्यायः । सच्च.]

[**उत्सवाध्यायः** - भगवदाद्यर्चामूर्त्युत्सव-निरूपणपरः पाञ्चरात्रसंहिताध्यायविशेषः । सच्च.]

**उत्साहः** - उद्युक्तचेतस्त्वम् । गी. प्रयत्नः । ता. लोकोत्तरकार्येषु स्थिरतरप्रयत्नः । रा. लोकोत्तरेषु कार्येषु स्थेयान्प्रयत्नः । रा. सर्वत्र कार्येषु त्वरातिशयः । रा.

**उत्सीदेयुः** - नष्टा भवेयुः । गी. पुरुषार्थहा-नापुरुषार्थप्राप्तिरूपो नाश इहोत्सादः । ता.

**उत्सीम** - असंख्यातम् । सुन्दर.

**उत्सृजै** - संस्पृष्टो भवानि । छा.

**उत्सेकः** - गर्वः । रा.

**उत्सेधजीविनः** - व्रातः द्र.

**उदक्त्वम्** - मेरुसन्निहितमूर्तावच्छिन्नदि-क्संयोगः । रत्न.

**उदगयनम्** - शुक्लपक्षानन्तर आतिवाहिकः । उत्तरायणम् ।

**उदगायत्** - "तेभ्य एष प्राण उदगायत्" । उद्गातरि मुख्यप्राणदृष्टिं कृतवन्त इत्यर्थः । बृ. उद्गानं कृतवती (वाक्) । बृ.

**उदग्रम्** - उन्नतम् । स्तो.

**उदङ्** - उदङ्मुखः । उदग्देशस्थ इति वा । बृ.

**उदयः** - प्रकाशः । प्रकाशो नाम स्वस्व-कार्यकरणसमर्थतया अभिव्यक्तिः । व.

**उदरशाण्डिल्यः** - सन्ततिशाली शाण्डिल्यः । उदरशब्देन सन्ततिर्लक्ष्यते । छा.

**उदर्कः** - उत्तरफलम् । पा. फलम् । रा. [भाविफलम् । "उदर्कः फलमुत्तरम्" इति अमरः । या.]

**उदशरावे** - उदकपूर्णे शरावे । छा.

**उदात्तम्** - श्रेष्ठम् । रा.

**उदानः** - प्राणभेदः कण्ठस्थानः । सर्वा (आ).

**उदारः** - दक्षिणः; अपेक्षितकार्यक्षम इति यावत् । पा. महान् । रा.

**उदारम्** - ऊर्जितम् । महत् । वै. ख्यातम् । महत् । या. परुषवर्णप्रायतयो विकटाक्षर-बन्धम् । या.

**उदारगुणसागरः** - उदारः उत्कृष्टः प्रशस्यः गुणसागरो गुणगणो यस्येति बहुव्रीहिः । वे.

**उदारधीः** - सर्वोपजीव्यत्वात् उदारा धीः सार्वज्ञ्यलक्षणा बुद्धिः अस्येति । सह.

**उदाराः** - दीर्घनालाः (धान्यभेदाः) । वि. विदान्याः । गी.

**उदाराणि** - विपुलानि । भा.

**उदाराम्** - परमपदपर्यन्तवितरणादन-वच्छिन्नौदार्याम् । (लक्ष्मीम्) । श्रीत.

**उदासीनः**-अनुद्युञ्जानः। श्री.प्रयोजकत्व-रूपसंबन्धरहितः। ता.
**उदासीनम्** - कर्मफलाशनशून्यतया उदासीनम्। (व्यापारकरणादुद्गम्य व्यापारं विना आसीनम्?)। म.
**उदासीनाः** - अहंममतारहिताः। भा.
**उदाह** - उच्चैर्वदति। सर्वजनश्रवणार्हमाहेत्यर्थः। सुन्दर.
**उदाहरणम्** - दृष्टान्तवाक्यम्। सर्वा (आ). सम्यग्व्याप्तिनिर्देशपूर्वकं दृष्टान्त-वचनम्। न्याप.
**उदाहरामः** - स्तुमः। वै.
**उदीर्णः** - गर्वातिशयेन क्रूरकर्मकारी। रा. चर्मचक्षुषामपि प्रत्यक्षयोग्यत्वेन उदीर्णः उद्गतः उल्लसितः। सह.
**उदीर्णत्वम्** - (संसारदवाग्नेः) नित्यमप्यात्मानं असत्कल्पं कर्तुं अनुपरमेण जाज्वल्यमानत्वम्। स्तो.
**उदीर्णाः** - गर्विताः। रा.
**उदुम्बराः** - यां दिशं प्रातरुत्थाय प्रथमं पश्यन्ति तत आहृतैः फलादिभिः जीवन्तः। भा.
**उदूढम्** - परिगृहीतम्। कौ.
**उदौदनम्** - उदकौदनम्। शुद्धौदनमित्यर्थः। बृ.
**उद्गमयिता** - स्रष्टा। श्रु.
**उद्गातारः** - सामवेदाध्यायिनः। सर्वा (आ).
**उद्गारः** - पीरवाहः। रा.
**उद्गिरणम्** - वमनम्। सुन्दर.
**उद्गीतिः** - सामगानविशेषः। वि.
**उद्गीथः** - उद्गीथभक्त्यवयवभूतः ओंकारः। छा. सामावयवो भक्तिविशेषः। अधि.
**उद्गीथम्** - ओमित्येतदक्षरम्। श्रु.
**अद्ग्रन्थयः** - निरहंकाराः। भा.
**उद्ग्रहणम्** - (जलस्य) वर्षसमाप्तिः। छा.
**उद्दामा** - दाम्न उद्गतः; अप्रतिहतशोभः। वै.
**उद्दालकः** - कश्चिदृषिः, श्वेतकेतोः पिता अरुणस्य पुत्रः। छा.
**उद्देशः** - संक्षेपः। गी. एकदेशः। ता. (शां). उद्धारः। ता.
**उद्देश्यम्** - प्राप्तांशः। श. [आकाङ्क्षितम्।]
[**उद्धतत्वम्** - "सगर्वमुद्धतं फुल्लतारं स्थिरकनीनिकम्" इत्युक्तलक्षणश्चक्षुर्विकारविशेषः। या.]
**उद्धरेत्** - उत्तारयेत्। गी.
**उद्धर्षः** - उत्साहः। रा. गर्वः। रा. तुष्टिः। अतिसन्तोषः। यथाऽन्यविषेयेष्वेव प्रवृत्तिः स्यात् तथा सन्तोषोऽतिसन्तोषः। श्रु. देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा तुष्टिः। श्रु.
[**उद्धवः** - भगवतः श्रीकृष्णस्यान्तरङ्गभूतो यादवविशेषः। या.]
**उद्धूतः** - पातितः। रा.
**उद्बोधः** - उद्रेकापरपर्यायशक्तिविशेषः। यथा 'सत्त्वगुणोद्बोध' इति। न्यासि.
**उद्भटाः** - उत्साहवन्तः। सुन्दर.

**उद्भवः** - उद्भवत्यस्मादिति उद्भवः। श्वे. उत्पत्तिः। श्वे. मुक्त्युपदेशनाटितकेन भवादुद्गत इव। सह. स्फुटतरप्रकाशः। सर्वा (आ). स्वबन्धानुसन्धायिनां भवबन्धनिर्गमनेन उद्गतो भवोऽस्मादिति उद्भवः। सह.

**उद्भिज्जः** - वृक्षादिः। कौ.

**उद्भिज्जम्** - अण्डजजीवजभिन्नम्। स्वेदजमप्युद्भिज्जम्। 'तृतीयशब्दावरोधस्संशोकजस्ये'ति। कौ. उद्भिनत्तीत्युद्भित् स्थावरम्। ततो जातमुद्भिज्जम्। छा.

**उद्भूतरूपम्** - चाक्षुषत्वप्रयोजकरूपम्। च.

**उद्यत्** - उदयं प्राप्नुवत्। वै.

**उद्यतः** - यत्नवान्। सर्वा (आ).

**उद्यतम्** - अर्पितम्। रा.

**उद्यतासिः** - छेत्तुमुद्धृतासिः, अतिक्रूरः। रा.

**उद्यमः** - उत्तरोत्तरैश्वर्याधिक्यापादनानुगुणव्यापारः। भा. उत्साहः। रा.

**उद्यास्यन्** - ऊर्ध्वं गन्तुं इच्छन्। बृ.

**उद्योगः** - प्रयत्नरूपा कृतिः। श्रु.

**उद्वर्तः** - अभिवृद्धिः। प्रलयो वा। रा.

**उद्वर्तम्** - लोकान्तरगमनन्। बृ.

**उद्वहेत्** - दद्यात्। वि.

**उद्वापः** - स्थितपदोद्धारः। अधि. [अन्यतस्सिद्धार्थस्य स्वसमयात् बहिष्कारः। सच्च. एकराशिगतेषु केषांचिदुद्धारः। र.]

**उद्वायति** - विनश्यति। छा.

**उद्विग्नः** - भीतः। रा.

**उद्विग्नहृदयः** - भीतमनस्कः। रा.

**उद्विग्ना** - उद्भ्रान्तहृदया। रा.

**उद्वेगः** - भयसंभ्रमः। रा. विनाशभयम्। भा. संभ्रमः। रा.

**उन्नयनम्** - प्रणमनम्। उन्नतकरणम्। अति.

**उन्नसः** - उन्नतनासावंशः। स्तो.

**उन्नसम्** - उन्नतनासिकम्। अति. वर.

**उन्निनीषा** - सर्वलोकोर्ध्ववर्तिभगवल्लोकनयनेच्छा। कौ.

**उन्मत्तम्** - विस्मृतस्वपरविवेकम्। रा.

[**उन्मदिष्णुः** - उन्मादशीलः। या.]

[**उन्मनाः** - उत्कण्ठितः। या.]

**उन्मादः** - विरहिणां पित्तोद्रेकरूपावस्थाविशेषजो भ्रमः। रा.

**उन्मितम्** - परिमितम्। श्री.

**उप** - (उपसर्गः) उत्कृष्टवाची। मा.

**उपकरणम्** - विवक्षितकार्यार्थितयोपात्तः परिकरः। ता.

**उपकरणवान्** - साधनवान्। बृ.

[**उपकारिका** - राजसदनम्। या.]

**उपकार्या** - राजोचितं वासस्थानम्। रा.

**उपगच्छन्ति** - गत्यर्था बुद्ध्यर्थाः। उपासत इत्यर्थः। श्रु.

**उपगमः** - संबन्धः। श्रु.

**उपगुह्य** - आलिंग्य। रा.

**उपघातः** - ताडनादिः। वि.

**उपघ्नः** - अन्तिकाश्रयः। शरण्यः। सुन्दर.

**उपचयः** - पीनत्वम् । श्रु. वृद्धिः । श्रुः सर्वा.

**उपचायि** - वर्धिष्णु । वै.

**उपचारः** - मुख्यार्थबाधे तद्गुणसम्बन्धवति प्रवृत्तिः । यथा सिंहो देवदत्त इत्यत्र सिंहशब्दस्य शौर्यादिगुणयोगिनि देवदत्ते । न्याप. मुख्यार्थबाधे सति तदासन्ने वृत्तिः । न्याप. मुख्यार्थबाधे सति तदासन्नवृत्तिः । स च द्विविधः, लक्षणागौणभेदात् । य. लक्षणा । च. सत्कारः । अति.

**उपचारच्छलम्** - अभिधोपचारविपर्ययारोपणेन तद्दूषणम् । यथा गङ्गायां घोष इत्यादौ कथं प्रवाहे घोषवास इति । न्याप.

**उपच्छन्दनम्** - प्रलोभनम् । नी. वञ्चनम् । सर्वा (आ).

**उपजग्मुः** - अङ्गीचक्रुः । वै.

**उपजनम्** (शरीरम्) - स्त्रीपुंसयोरन्योन्योपगमेन जातमित्युपजनत्वं शरीरस्य । अथवा जनानां बन्धुजनानां समीपे शयितं कुणपमित्यर्थः । छा.

**उपजीवति** - उपाश्रित्य जीवति । या.

**उपज्ञा** - (नाथोपज्ञम्) नाथमुनिमारभ्य । सर्वा.

**उपतपन्** - उपतपतीत्युपतपन् । ज्वरादिरोगः । बृ.

**उपतापी** - ज्वरादियुक्तः । मरणवेदनाक्रान्तः । छा.

**उपत्यका** - (पर्वत)पर्यन्तभूमिः । वर.

**उपदा** - उपहारः । अति.

**उपदेशः** - पित्रादिहितैषिवचनम् । तै.

**उपद्रष्टा** - देहप्रवृत्त्यनुगुणसंकल्पादिरूपेण देहस्योपद्रष्टा । गी. द्रष्टा प्रमाणादिवशेन दृश्यानां प्रदर्शकः । उपद्रष्टा यथावत् स्वयमप्रवृत्तः प्रवर्तमानस्यानुसन्धाता । तत्साधर्म्यादिहोपद्रष्टृशब्द इत्याह - देहप्रवृत्त्यनुगुणसङ्कल्पादिरूपेणेति । ता. निरुपाधिकद्रष्टा परमात्मा । श्रु.

**उपधा** - कपटोपायः । रा.

**उपधारयामि** - निश्चिनोमि । अति.

**उपधावति** - भजते । भा.

**उपधावनम्** - चिन्तनम् । उपासनमिति यावत् । छा.

**उपनयः** - दृष्टान्तनिदर्शनेन व्याप्ततया पक्षे हेतुमुपसंहरद् वाक्यम् । न्याप.

**उपनिर्हारः** - उपनिष्क्रमणम् । रा.

**उपनिशामनम्** - आलोचनम् । रा.

**उपनिषत्** - उपनिषज्जन्यं ब्रह्मात्मकत्वज्ञानम् । छा. उपब्रह्मसमीपे निषण्णा । त. ब्रह्मण्युपनिषण्णेति । "उपनिषण्णत्वाद्वा उपनिषत्" इति वाक्यात् । श्रु. रहस्यतमा । भा. रहस्यनाम । श्री.बृ. रहस्योपदेशः । तै.

**उपनिषत्परम्** - उपनिषदां परमप्रतिपाद्यम् । श्वे.

**उपनिषदः**-तत्त्वोपदेशप्रधानमन्त्रब्राह्मणरूपवेदभागाः । श्रु. परतत्त्वप्रधानाः मन्त्रब्राह्मणभागाः । श्रु.

**उपपत्तिः** - अनुमानम् । च.

**उपपदविभक्तिः** - पदान्तरसाहचर्ये विहिता विभक्तिः । श्रु.

**उपपादनम्** - दृष्टान्तकथनम् । श्रु. निर्वर्तनम् । वि.

**उपपूर्वम्** - उपपातकम् । श्री.

**उपप्रदानम्** - प्रतिपक्षिणस्समीपं गत्वा द्रविणादिदानम् । रा.

**उपप्लुतम्** - अन्यथाप्रतिपत्त्यादिविषयीकृतम् । रत्न.

**उपबन्धः** - अन्वयः । श्रु.

**उपबर्हणम्** - पादोपधानम् । कौ.

**उपबृंहणम्** - नानाशास्त्रानुसारेण निर्णीतवेदार्थप्रतिपादको ग्रन्थः । रा. अनधीतशाखान्तरार्थैस्सह अधीतशाखार्थनिष्कर्षः । श्रु. अनुक्तविषयैः सहावगतार्थव्यक्तीकरणम् । च. 'उक्तार्थविशदीकारो युक्तार्थान्तरबोधनम् । मतं विवरणं नाम" इत्युक्तप्रकारं विवरणम् । वै. विदितसकलवेदार्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । श्री. श्रुतिप्रतिपन्नार्थविशदीकरणम् । श्री.

**उपबृंहितम्** - अधिष्ठितम् । भा. पुष्कलीकृतम् । वे.

**उपभुञ्ज्मः** - यावत् ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयामः । छा. श्रु.

**उपमन्त्रणम्** - प्रार्थनम् (उपमन्त्रयाचक्रे प्रार्थितवान्) । छा.

**उपमन्त्रयते** - सङ्केतं करोति । छा.

**उपमन्त्रिणः** - परिहासकाः । भा.

**उपमर्दासहः** - विकल्पासहः । अधि.

**उपमानम्** - उपमानमपि यदि गृह्यमाणपदार्थगतसादृश्यविज्ञानात् स्मर्यमाणपदार्थगतसादृश्यविज्ञानं तदा स्मृतिः । ... 'यत्तु श्रुतातिदेशवाक्यस्य गवयादावतिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम् । तच्च व्युत्पत्ति-फलकम्' इति तदप्यनुपपन्नम् । प्रागेव व्युत्पत्तिसिद्धेः.... तत् सिद्धं नोपमानमति-रिक्तम् । न्याप.

**उपमासः** - अन्तिममासः ।

**उपयाम** - शरणमुपगच्छाम । तै.

**उपयाहि** - उपयाति । तै.

**उपयेमे** - समीपं प्राप्तः । बृ.

**उपरक्तः** - राहुग्रस्तः । रा. समीपरक्तः, कृतपरिवेष इत्यर्थः । राहुग्रस्तो वा । रा.

**उपरक्तम्** - रक्तिमारोपविषयः । च.

**उपरतः** - देहयात्रायामपि यदृच्छालाभसन्तुष्ट्या नातिप्रवृत्तः । त.

**उपरतिः** - निषिद्धकाम्यादिषु कर्मसु उपरतिः । बृ. वृथाव्यापारोपरतिः । भा.

**उपरमः** - बाह्यलाभार्थं मानसोद्योगवारणम् । ता. विरामः । रा.

**उपरमते** - अतिशयितं सुखमिदमिति रमते । गी.

**उपरागः** - आरोपितः । वे. सम्बन्धः । श.

[**उपरिचरः** - सात्त्वतं विधिमास्थाय भगवत्समाराधनेऽधिकृतो भारतप्रसिद्धो राजर्षिः । सच्च.]

[**उपरिचराख्यानम्** - उपरिचराख्यराजर्षिकथाप्रतिपादको महाभारतभागः । सच्च.]

**उपरुन्धयति** - पचति । भा.

**उपर्युपरि** - उत्तरोत्तरम् । या.

**उपलक्षणम्** - अतत्कालीनतया व्यावर्तकम् । च. उपलक्ष्यबहिर्भूतः उपलक्ष्यप्रतीत्युपायः । श्रु. चन्द्रस्य शाखेव तटस्थं ज्ञापकम् । श्रु. ज्ञापकम् । रत्न. ज्ञाप्यबहिर्भावेपि उपलक्ष्यज्ञानहेतुः । रा. ज्ञाप्यबहिर्भूतः ज्ञाप्यप्रतीत्युपायः । श्रु. व्यञ्जकम् । न्यासिटी.

**उपलक्षणत्वम्** - केनचिदाकारेण प्रतिपन्नस्य केनचिदाकारेण प्रतिपत्तिहेतुत्वम् । श्रु.

**उपलक्षितः** - यदाकदाचित् संबन्धवान् । रत्न.

**उपलक्षितम्** - शाखयेव चन्द्रः दूरे स्थित्वा दर्शितम् । त.

**उपलब्धिः** - ज्ञानम् । अति.

**उपवादिनः** - परेषां समीपे तद्दोषवदनशीलाः । वाचाटाः । छा.

**उपवेशनम्** - उपासनम् । रा.

**उपशमः** - उत्कृष्टसुखम् । उत्कृष्टानन्दरूपम् । मा. सावशेषः शमः । छा.

**उपशमम्** - शब्दादिविषयेषु भोग्यताबुद्धिराहित्यम् । भा.

**उपश्रृणवत्** - श्रृणोतु । तै.

**उपश्रीः** - श्रीसमीपे वर्तमानं आस्तरणम् । कौ.

**उपष्टम्भनम्** - धारणम् । श्रु.

**उपसंहारः** - अनुष्ठानम् । श्री.श्रु. पर्यवासनम् । श्रु.

**उपसंहिताः** - उपजापिताः । उत्कोचादिना शत्रुभिर्भेदं प्रापिताः । रा.

**उपसंहृतिः** - अनुष्ठानम् । वे.

**उपसत्** - इष्टिविशेषः । रा.

**उपसदैरेति** - उपसद्भिस्साम्यं एति, उपसद्दृष्टिः कर्तव्येत्यर्थः । छा.

**उपसद्व्रती** - उपसत्प्रसिद्धपयोमात्रभक्षणात्मकव्रतवान् । बृ.

**उपसर्गः** - उपद्रवः । संहारः । श्रीस्त. उपप्लवः । पा.

**उपसृत्य** - ध्यात्वा । छा.

**उपसेचनम्** - स्वयमद्यमानत्वे सति अन्यस्य अदनहेतुः । क. स्वयमद्यमानं सदन्यस्य अदनहेतुः । श्री.ता.

**उपस्कराः** - क्रीडार्थोपस्कराः । जातरूपमयकृत्रिमपुत्रिकालीलापाकभाजनादिविचित्रोपकरणानि । रा.

**उपस्कार्यम्** - अध्याहार्यम् । सर्वा.

**उपस्तरणम्** - आस्तरणम् । कौ.

**उपस्तीर्णा** - व्याप्ता । रा.

**उपस्थः** - आनन्दविशेषकरणं इन्द्रियम् । न्यासि. आनन्दविशेषोद्देश्यककृतिजन्यव्यापारवदिन्द्रियम् । वा.

**उपस्थानम्** - सदः । रा.

**उपस्थितत्वम्** - पुरस्तात् आभिमुख्येन सेवितत्वम् । स्तो.

**उपस्थितिः** - उपस्थानम् । श्रु.

**उपस्पर्शः** - आचमनम् । रा.

**उपहत्य** - आच्छिद्य । बृ.

**उपहननम्** - स्पर्शः । बृ.
**उपहारः** - बलिः । रा.
**उपहास्यम्** - समीपस्थैरपि हास्यम् । श्रु.
**उपह्वये** - अभिमुखीकरोमि । श्री. समीपे आह्वयामि । तै.
**उपाकरणम्** - प्रस्तावः । श्रु. प्रारंभः । छा.
**उपाकृताः** - कल्पिताः । वि.
**उपाख्या** - प्रमितिः । श्रु. व्यवहारः । सर्वा.
**उपागतः** - बुद्ध्या प्राप्तः । ता.
**उपागतम्** - समीपे आगतम् । रा.
**उपागम्य** - प्रणिपत्य; नमस्कृत्य । रा.
**उपाङ्गम्** - अङ्गाङ्गम् । नि.
**उपादानम्** - अवस्थान्तरयोगि । श. अवस्थान्तरयोग्यम् । त. अवस्थाश्रयः । च. य. अवस्थाश्रयः, परिणामास्पदम् । न्यासि. उत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्ष-या तदुगुणनियतपूर्वभाव्यवस्थाविशिष्टं तदेव । न्यासि. ग्रहणम् । श्रु. जीविकाद्रव्यम् । वि. तृष्णया विषयेषु प्रवृत्तिः (सौगतमते) । बृ. भाविस्थूलावस्थावतः (?) पूर्वभावि-सूक्ष्मावस्थायोगि । मु. [समवायिकारणम् । वि. ''ततः पुष्पफलादीनां उत्थायार्जन-माचरेत् । भगवद्यागनिष्पत्तिकारणं प्रहरः परम् । तदुपादानसंज्ञं वै .... ।'' पाञ्च.]
**उपादानत्वम्** - भाव्यवस्थाविशेषवतः प्रागवस्थायोगः । वे. परिणामाश्रयत्वम् । नी. भाव्यावस्थाविशेषवतः प्रागवस्थायोगः । श्रु. भाव्यवस्थाविशेषवतः प्रागवस्था-योगित्वम् । श्रु. भाव्यवस्थावतः प्रागवस्थाश्रयत्वम् । रत्न. श्रियोपि भगवत इव बहुभवनसंकल्पादुपादानत्वमप्या-चार्याभिमतम् । श्रीत.
**उपादेयम्** - अनुष्ठेयम् । ता. प्रागज्ञातं वाक्यज्ञाप्यम् । श्रु. विधेयम् । श्रु.
**उपादेयत्वम्** - स्वीकार्यत्वम् । व्यवहर्त-व्यत्वमिति यावत् । श्रु.
**उपादेयांशः** - विधेयविशेषणम् । च.
**उपाधावत्** - तुष्टाव । भा.
**उपाधिः** - अवच्छेदकः । श्रु. कर्म, अब्रह्मात्मकज्ञानञ्च । श्रु. यावत्साधन-देशमवर्तमानो यावत्साध्यदेशवृत्तिः । सर्वा. सपक्षेषु सर्वेषु विद्यमानः पक्षेऽविद्यमानः । श्रु. साधनवन्निष्ठात्यन्ता-भावप्रतियोगित्वे सति साध्यवन्निष्ठा-त्यन्ताभावाप्रतियोगी । सर्वा. साधना-व्यापकत्वे सति साध्यसमव्याप्तः साधनधर्मव्यतिरिक्तो धर्मः । न्याप. साध्यव्यापकत्वे सति साधनाव्यापकः । य.
**उपायः** - कर्मानुगृहीतानुस्मृतिः । ता. फलसाधनम् । नि.
**उपायत्वम् (भगवतः)** - भरस्वीकार-पूर्वकरक्षासंकल्पवत्त्वम् । रत्न.
**उपायत्वप्रार्थना** - क्वचिदङ्गतया कथ्य-माना उपायत्वप्रार्थना गोप्तृत्ववरणमेव । न्याद. द्वयाधिकारादौ उपायत्वप्रार्थनापदं अङ्ग्यभिप्रायेण । न्याद. निरपेक्षरक्षकत्व-प्रार्थना, उपायान्तरस्थाननिवेशहेतुः निक्षेप एव । न्याद. नेदं गोप्तृत्ववरणमात्रम्, किंतु निरपेक्षरक्षकत्वप्रार्थना । न्याद.

**उपायत्वबुद्धिः** - फलानुकूलव्यापाराश्रयत्वबुद्धिः, न्यस्यमानवोढृत्वबुद्धिः। न्याद.

**उपायत्वस्वीकारः** - उपायबुद्ध्याऽनुष्ठानम्। नि.

**उपायनम्** - अन्यत्र प्रवेशः। श्रु. ब्रह्मवित्कर्मणां विधूननानन्तरं एतदीयप्रियाप्रियजनेषु एतदीयसुकृतदुष्कृतानुरूपेष्टानिष्टफलदित्सा भगवतः। कौ. शिष्यतया नैच्येनोपसर्पणम्। "उपायामि"। कौ.

**उपायनकीर्तिः** - शिष्यत्वेनोपैमीत्युपगमनकीर्तनम्। बृ.

**उपायभक्तिः** - भक्तिरेव भगवत्प्राप्तावुपाय इति मतिः। भक्तिरेवोपाय इति मतिपूर्वकमनुष्ठीयमाना भक्तिरुपाय इत्यत्र तात्पर्यम्। न्यासि.

[**उपायविरोधि** - भक्तिप्रपत्तिप्रतिबन्धकं कर्म। ई.]

[**उपायसप्तकम्** - 'साम भेदश्च दानं च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥' इत्युक्तास्सप्तोपायाः। या.]

**उपायान्तरस्थाननिवेशनम्** - त्वमेवोपायभूतो मे भवेति प्रार्थनम्। न्याद.

**उपायापायसन्त्यागी** - काम्यनिषिद्धरहितः। न्यासि.

**उपालम्भः** - अपवादः। रा.

**उपासङ्गः** - रथोपस्थः। वि.

**उपासनम्** - अनुष्ठानम्। तै. असकृदावृत्तं ज्ञानम्। श्रु. एकाग्रचित्तवृत्तिनैरन्तर्यरूपा स्मृतिसन्ततिः। श्री. ज्ञानविशेषः। श्रु. तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्। वर. नमस्कारः। रा. प्रकृष्टवस्तुविषयकस्मृतिसन्ततिः। श्रु. भक्तिः। गी. सेवा। ता. स्मृतिसन्ततिः। ता. स्मृतिसन्तानरूपम्, दर्शनसमानाकारम्। गी. [भक्तियोगः। र.]

**उपासनगतविशेषः** - उपसानप्रकारः। ता.

**उपासात्रैविध्यम्** - चिच्छबलतया, अचिच्छबलतया, स्वरूपेण चोपासनम्। स्वरूपेणानुसंधाने ज्ञानादिगुणवत् दिव्यविग्रहयोगिताऽप्यनुसन्धेया। छा. ब्रह्मणस्स्वरूपानुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानं, भोग्यादिशरीरकत्वानुसन्धानञ्च। न्यासि.

**उपासितुम्** - कर्तुम्। रा.

**उपासृजन्** - उपगतवन्तः। बृ.

**उपास्ते** - उपविशति। बृ.

**उपास्पृशत्** - स्नातवान्। रा.

**उपेक्षकः** - अनादरणशीलः। नि.

**उपेक्षकत्वम्** - औदासीन्यम्। श्रु.

**उपेन्द्रः** - अनुजत्वेन इन्द्रमुपगतः। सह.

**उपैति** - समानैश्वर्यो भवति। "स तं परं पुरुषमुपैति दिव्यम्"। गी.

**उब्जम्** - ऋजु। उब्ज आर्जवे। सुन्दर.

**उभयभावना** - कर्मब्रह्मोभयात्मिका। वे. कौ.

**उभयभावनाः.** - कर्मब्रह्मोभयभावनाः (चतुर्मुखादयः)। च.

**उभयलिङ्गः** - निर्दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गः । न्यासि. हेयप्रत्यनीकत्वकल्याणाकरत्वरूपासाधारणाकारद्वयविशिष्टः । रत्न.

**उभयलिङ्गम्** - उभयलक्षणम् । निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः । श्री.

**उभयलिङ्गम्** - समस्तहेयरहितत्वं, समस्तकल्याणगुणाकरत्वं च । वे.

**उभयलिङ्गत्वम्** - समस्तहेयप्रत्यनीकत्वं, सकलकल्याणगुणाकरत्वं । श.

**उभयविभूतिः** - लीलाविभूतिर्नित्यविभूतिश्च । वे.

**उरगाः** - उरसा गच्छन्ति ये । न्यासि.

**उरभ्रः** - ऊर्णायुः । वि.

**उरःस्थम्** - मन्द्रम् । रा.

**उरुः** - बहुधा । (उरुः विभासि) । भा.

[**उरुक्रमः** - त्रिविक्रमः । वि. उरुः प्रभूतः क्रमः त्रिविक्रमावतारकृतः पदविक्षेपो यस्य स भगवान् । प्रभूताधिष्ठानः । विश्वान्तर्यामीत्यर्थः । सच्च.]

**उरुगायः** - उरुकीर्तिः । क.

**उरुगायवतः** - कीर्तिमतः । छा.

**उरुदयम्** - निरवधिककृपानिधिम् । वर.

**उर्वरा** - भूमिः । सुन्दर.

**उर्वरितः** - अवशिष्टः । भा.

**उर्वशी** - उरून् महतः वशीकरोतीति । रा.

**उर्वी** - विपुला । तै.

**उलूकः** - कौशिकः । वि.

**उलूलवः** - उरूरवः, उरूरवाः विस्तीर्णरवाः महाध्वनियुक्ताः । उलूलव इति छान्दसं रूपम् । छा.

**उल्का** - निर्ज्वालोऽङ्गारः । रा.

**उल्बः** - जरायुः, गर्भवेष्टनम् । छा.

[**उल्बणम्** - प्रव्यक्तम् । या.]

**उल्बम्** - गर्भवेष्टनमांसम् । वि. सूक्ष्मं गर्भपरिवेष्टनम् । छा.

**उल्लसनम्** - आविर्भवनम् । श्रीस्त.

[**उल्लाघः** - रोगोन्मुक्तः । या.]

**उल्लाघनम्** - ऋजुकरणम् । वि.

**उल्लास** - उद्भवः । भा. विकसनम् । यथा मुकुलीभूतस्य पद्मादेः । सर्वा.

**उल्लिखन्** - उद्भिन्दन् । रा.

**उल्लखः** - विषयीकरणम् । सर्वा.

**उल्लेखाः** - विषयिताः । रत्न.

**उवध्यम्** - अर्धजीर्णम् घासाद्यशनम् । बृ.

**उशक् क्षयाः** - ब्रह्माश्रयाः, उशक् कमनीयं निरतिशयप्रियं ब्रह्म क्षयः आश्रयः येषाम् । भा.

**उशत्तमः** - शुद्धतमः । भा.

**उशना** - शुक्रः । रा.

**उशन्ति** - इच्छन्ति; वदन्तीत्यर्थः । वै.

**उशीरम्** - वीरणाख्यतृणमूलम् । रा.

**उशीरैः** - लामज्जकैः । रा.

**उशीरबीजम्** - देशविशेषः । रा.

**उषाः** - ब्राह्मो मुहूर्तः । बृ.

**उष्णगः** - ग्रीष्मकालः, उष्णं गच्छतीति । रा.

**उष्णीषः** - शिरोवेष्टनम्। रा.
**उस्रियाणाम्** - देवानाम्। भा.

## ऊ

[**ऊनः** - स्वकर्महीनः। र.]
**ऊर्क्** - देवः। वेकौ.
**ऊर्जम्** - अन्नम्, परमात्मानम्। बृ. पितॄनुद्दिश्य दीयमानं अन्नादिकम्। भा.
**ऊर्जितः** - नमुचिप्रभृतिपरिपन्थिवधबन्धनादौ बलं ऊर्जा अस्य सञ्जातेति। सह.
**ऊर्जितम्** - कल्याणारम्भेषूद्युक्तम्। ऊर्जाशब्दो ह्यदीनत्वेन सन्नाहशीलत्वपरः। ता. दृढम्। रा. बलवत्। श्रु.
**ऊर्जितशासनः** - विरिञ्चिपुरन्दराद्यलङ्घ्याज्ञः। सह.
**ऊर्णनाभिः** - लूताख्यकीटविशेषः। बृ.
**ऊर्णायुः** - कश्चित् गन्धर्वः। वि.
**ऊर्ध्वम्** - ऊर्ध्वस्थाण्वादिरूपम्।
**ऊर्ध्वगः** - स्वभावतुङ्गः, ऊर्ध्वं गच्छति महान् भवतीति। सह.
**ऊर्ध्वपवित्रः** - सर्वोत्तरपवित्रः। तै.
[**ऊर्ध्वपुण्ड्रम्** - संस्कृतश्वेतमृत्तिकया ललाटादिषु श्रीवैष्णवैः क्रियमाणो हरिपादाकृतिरूर्ध्वगत्युपकारी तिलकविशेषः। सच्च.]
**ऊर्ध्वपुमांसः** - पूर्वाचार्याः। वै.
**ऊर्ध्वभ्रमिः** - बुद्बुदविशेषः। वर.
**ऊर्ध्वमन्थिनः** - ऊर्ध्वरेतसः। भा.
**ऊर्ध्वमन्थिनाम्** - नैष्ठिकब्रह्मचारिणाम्। भा.
**ऊर्ध्वरेतम्** - उत्कृष्टं रेतः वीर्यं यस्य सः तम्। तै.
**ऊर्ध्ववाहः** - ऊर्ध्वोद्गतप्रवाहो नैमिशारण्यस्थब्रह्मावर्तरुद्रावर्तादिसरोविशेषः। रा.
**ऊर्ध्वस्रोतः** - उत्सृष्टभूमिकः। वि.
**ऊर्ध्वा** - अधिका। छा. ऊर्ध्वाग्रा। तै.
**ऊर्मयः** - अशनायापिपासे शोकमोहौ जरामृत्यू च। श्रु. कामक्रोधलोभमोहमदमात्सर्यरूपाः षट्। पद.
[**ऊर्मिः** - अशनायादिषट्कम्। जन्मादिविकारजातम्। सच्च.]
[**ऊर्मिका** - अङ्गुळीयकम्। या.]
**ऊर्मिषट्कम्** - ऊर्मयो। द्र.
**ऊष्मपाः** - पितरः। "ऊष्मभागा हि पितरः" इति। गी.
**ऊष्माणः** - शषसहाः। छा.
**ऊहः** - इदं प्रमाणं इत्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम्। गी. तर्कः। सर्वा. पदान्तरप्रक्षेपः। च. प्राकृतपदार्थकार्यापन्नवैकृतपदार्थसम्बन्धेन मन्त्रसामसंस्काराणां अन्यथाभावः। भाव. [अनुक्तांशस्यापि ग्रहः। र.]

## ऋ

**ऋक्षरजाः** - वालिसुग्रीवयोः पिता वानरेन्द्रः। रा.
**ऋग्वेदः** - ऋग्वेदविहितं कर्म। छा.
**ऋचः** - ऋङ्मन्त्राः। छा.

**ऋचन्ती** - स्तुवती। पा.

**ऋच्छति** - हिनस्ति। बृ.

**ऋजुः** - करणत्रयार्जवयुक्तः। रा. करणत्रयेऽप्यैकरूप्यवान्। रा. प्रजाच्छन्दानुवर्ती। रा.

**ऋजुत्वम्** - आश्रितेषु मनोवाक्कायवृत्तीनां एकरूपतया कौटिल्यरहितत्वं आश्रितच्छन्दानुगुणावस्थानत्वं वा। स्तो.

[**ऋजुरोहितम्** - शक्रशरासनम्। 'ऋजुरोहितमिच्छन्ति बुधाश्शक्रशरासनम्' इति अभिधानरत्नमाला। या.]

**ऋतम्** - अनुकूलं कर्म, तत्फलं वा। श. उञ्छशिलम्। भा. कर्म। तै. कर्म। श्री. अनभिसंहितफलं कर्म। श्रु. कर्मफलभूतलोकः। तै. कर्मफलम्। वेकौ. निर्विकारम्। भा. प्रधानम्। ऋच्छति गच्छति विकारमिति अचेतनम्, प्रधानम्। तै. सत्यभूतम् (ब्रह्म)। तै. सत्यरूपं ब्रह्म। क. सत्यपदवाच्यावश्यंभाविकर्मफलम्। क. सत्यवचनम्। तै. 'ऋ गतौ' सर्वत्र गतम्। तै. सुकृतं कर्म। श्री. सूनृतवाणी। तै. स्वरूपान्यथाभावलक्षणविकाररहितम्। तै. सत्यम्। तै.

**ऋतजः** - यज्ञोत्पन्नः कर्मफलभूतश्च (स्वर्गादिः)। क. ऋतेन सत्येन जायते लभ्यत इति सत्यलभ्यः। तै.

**ऋतजित्** - कश्चित् यक्षः। वि.

**ऋतत्वम्** - अपभ्रंशराहित्यलक्षणं शब्दसत्यत्वम्। तै.

**ऋतव्रतेभ्यः** - अदंभाचारेभ्यः। भा.

**ऋतसत्** - ऋते सत्यलोके सीदतीति; सत्यलोके वर्तमानः। क.

**ऋतसत्यौ** - चन्द्रसूर्यौ। भा.

**ऋतायते** - ऋतं परमात्मानं इच्छते (मह्यम्)। तै.

**ऋतायन्** - सूनृतं कुर्वन्। ऋतं कुर्वन्। बृ.

**ऋतुः** - सदाऽप्यपूर्वैः सर्वोल्लासकरैः उत्तरोत्तरैः गुणपर्यायैः ऋच्छतीति। सह.

**ऋतुमान्** - वसन्ताद्यृतुफलभोगशाली। छा.

**ऋतुलिङ्गानि** - पुष्पफलादीनि। वि.

**ऋते** - विना। रा.

**ऋत्वा** - प्राप्य। बृ.

**ऋत्विजः** - याज्ञे कर्मणि वृताः। रा.

**ऋद्धः** - कूलमुद्वहपार्वणपाथोनिधिरिव ऋद्धः समृद्धः। "ऋधु वृद्धौ"। सह. विभूति समृद्ध्या स्वयमपि समृद्धः। सह.

**ऋद्धिः** - कुबेरस्य पत्नी। वि.

**ऋषभः** - श्रेष्ठः। तै.

**ऋषयः** - ज्ञानवृद्धाः। अधि. तत्त्वदर्शिनः। मु. वेदाः। भा.

**ऋषिः** - अतीन्द्रियार्थद्रष्टा। प्र.ता. अदृष्टविशेषादतीन्द्रियार्थद्रष्टा। ता. कल्पाध्यायी। श्रु. चतुर्वेदी। वि. ज्ञानपारगः। ऋष गताविति धातोः 'इगुपधात्कित्' इतीन्। गत्यर्थो ज्ञानार्थकः। रा. द्रष्टा। बृ. द्रष्टा, आत्मावलोकनपरः। गी. मन्त्रकृत्। बृ. मन्त्रद्रष्टा। श्रीसू. [ज्ञानी। ई.]

**ऋषिऋणम्** - वागुपकर्तृषु ऋषिषु प्रत्युपकारानाचरणम्। रा.

**ऋषिकल्पः** - कल्पाध्यायी । वि.

**ऋषित्वम्** - सुप्तप्रबुद्धन्यायेन सुकृतवशात् प्रागधीतप्रस्मृतवेदभागप्रत्यक्षीकरणम् । श्रूयते हि "अजान् ह वै पृश्नींस्तपस्यमानन् ब्रह्म स्वयंभु अभ्यानर्षत् त ऋषयोऽभवँस्तदृषीणां ऋषित्वम्" । सर्वा.

## ए

**एकः** - अद्वितीयः । न्यासि. अविभक्तनामरूपः । भा. अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वेन एकः । भा. एकप्रकारवान् । न्यासि. देहवत् न अनेकोभयरूपः । वि. प्रधानः । मा. महिम्नि सजातीयसङ्ख्येयासम्भवात् अद्वैतं एति गच्छतीति । सह. समाभ्यधिकदरिद्रः । न्यासि. समाभ्याधिकरहितः । क. सहायान्तरनिरपेक्षः । या. साधारणः । श्रु.

**एकम्** - अद्वितीयम् । प्र.तै. अद्वितीयम्, सजातीयद्वितीयरहितम् । रा. अविभक्तनामरूपम् (अबहु) । न्यासिटी. उपचयापचयरहितम् । वि. उपायान्तरप्राप्यान्तरनिषेधः, तमेवैकं जानथेति । श्रीत. एकाकिनम् । रा. ज्ञानैकरूपम् । भा. नामरूपविभागरहितावस्थम् । श्रीत. प्रधानम् । श्रु. प्रधानतमम् । ई (कू). स्वसमानद्वितीयरहितम् । ई (वें). निस्समाभ्यधिकम् । भा. सजातीयम् । श्रु. समानम् । रा.

**एकं भवन्ति** - अन्तर्भवन्ति । बृ.

[**एकतद्वितत्रिताः** - ब्रह्मणो मानसपुत्राः ।]

**एकतामतिः** - एकशब्दानुविद्धप्रत्ययः । रत्न.

**एकत्वम्** - अवस्थारूपं प्रकृत्यादिगतं प्रलयकाले । इदञ्च स्वरूपैक्यविलक्षणम् । न्यासि. अवस्थाविशेषः संपिण्डितैरंशैरुत्पाद्यमानः । अवयव्यनारम्भवादेऽप्येकत्वारम्भ इष्यते । एकारम्भादेकत्वारम्भस्य लघुत्वात् । न्यासि. एकसंख्यावच्छेदः । एकसंख्यारूपो व्यावर्तकधर्म इत्यर्थः । त. एकक्रियान्वयेन समप्रधानतया समुच्चीयमानवस्त्वन्तरप्रतिपत्तिविधुरवस्तुमात्रप्रतिपत्तिविषयत्वम् । न्यासि. न तावदवयविगता संख्या । अवयविन एवाभावात् । निरवयवप्रकृत्यादौ प्रकृतित्वाद्यवस्थैवैकत्वम् । न्यासि. परमात्मनि प्रतिषिध्यमानमेकत्वं नाम प्रकृतिपुरुषाभ्यां स्वरूपैक्यम् । तत् प्रलयकालेऽपि नास्तीति । सुबा. भेदप्रहाणम्, नामरूपविभागशून्यत्वम्, न तु संख्या काचित् । न्यासि. रत्न. स्वप्रतियोगिमुख्यविशेष्यकत्वस्वाश्रयमुख्यविशेष्यकत्वोभयसम्बन्धेन भेदविशिष्टान्यज्ञानमुख्यविशेष्यत्वम् । रत्न. स्वप्रतियोगिवृत्तित्वस्वाश्रयवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यधर्मवत्त्वम् । रत्न.

**एकत्वधीः** - अभेदधीः । सर्वा. (आ).

**एकधा** - एकधैवानुद्रष्टव्यम् । एकतया, परमात्मशरीरतया, एकप्रकारेणेत्यर्थः । श्रु. सकृत् । रत्न. सह । रत्न.

**एकधाभावः** - जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षणकालुष्यादिराहित्येनावस्थानं सुषुप्तौ। कौ.

**एकनीडम्** - ऐकाधिकरण्यभाक्। तै.

**एकनेमिम्** - प्रकृत्याख्यैकनेमियुक्तम्। श्वे.

**एकपदी** - एकपदन्यासमात्रयुक्ता सरणिः। रा.

**एकपदे** - एकस्मिन्नेव स्थाने। सद्य इत्यर्थः। रा.

**एकपात्** - एकः पात् चतुष्पाद्विभूतिलक्षणे (?) एतद्विभूतिलक्षणः तुर्यांशोऽस्येति। सह.

**एकप्रतीतिः** - एकशब्दानुविद्धप्रतीतिः। न्यासि. एकजातीयत्वप्रतीतिः। न्यासि. एकाकारधर्मवत्त्वप्रतीतिः। न्यासि.

**एकभक्तिः** - न प्रयोजनान्तरे विभक्तभक्तिः। गद्य. [एकस्मिन्नेव भक्तिमान्; प्रयोजनान्तराभिलाषगन्धाभावेन त्वय्येकस्मिन्नेव (भगवत्येव) प्रीतिमानित्यर्थः। र.]

**एकभाजनम्** - अद्वितीयाश्रयः। रा.

**एकभूयम्** - परस्परसाह्यलक्षण एकभावः।

**एकरतिः** - एकरूपा रतिः। रतिः प्रतिरिच्छा वा। गद्य.

**एकरूपम्** - समाभ्यधिकरहितम्। वे.

**एकलः** - एकस्वभावः। श्री. छा.

**एकवाक्यत्वम्** - विभागे साकांक्षत्वम्। च.

[**एकविंशतिदुःखानि** - शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखं च। ई.]

**एकवेणी** - त्रिधा विभागं विना बद्धा वेणी। रा.

**एकसंख्याव्यवच्छेदः** - एकसंख्यारूपो व्यावर्तकधर्मः, एकमिति संख्यायाः द्व्यादिभ्यो व्यावृत्तिर्वा। त.

**एकसालः** - ग्रामविशेषः। रा.

**एकस्थम्** - एकदेशस्थम्।

**एकस्थहृदया** - एकाग्रचित्ता। रा.

**एकस्थानम्** - ऐकमत्यम्। रा.

**एकस्य** - अविभक्तनामरूपचिदचिद्विशिष्टतय. जगदुपादानकारणभूतस्य। भा.

**एकहंसः** - एक एव हन्ति गच्छतीति एकहंसः। बृ.

**एकांशः** - महिमैकदेशः। 'स्वरूपैकदेशावतारादिरूपांशव्युदासाय नियमनप्रकरणबलाच्च महिम्न इती'ति। ता.

**एका** - एकरूपा। वि. प्रधानभूता, निरयादिप्रापकनिग्रहनिवर्तनी वा (व्रातरक्षैकदीक्षे)। त.

**एकाकी** - न सद्वितीयः। गी.

**एकाक्षरम्** - प्रणवः। 'अक्षराणामकारोऽस्मि' इति पृथग्वक्ष्यमाणत्वात् एकमक्षरमित्यकारव्यतिरिक्तविषयम्। ओमित्येकाक्षरं ब्रह्मेति प्रणवेऽपि...। ता.

**एकाग्रमनाः** - सावधानः। रा.

**एकात्मा** - सर्वस्य चिदचिद्वर्गस्य अयमेक एव शेषी भोक्ता अभिमानी चेति। ता.

**एकादशकः** - एकादशसंख्यया परिमितः

"संख्याया अतिशदन्तायाः" इति कन्। सर्वा.

**एकानेकः** - कारणरूपेणैकः, कार्यरूपैरनेकः। वि.

**एकान्तः** - नियमः। दया.

[**एकान्ता** - प्रयोजनान्तरगन्धरहिता (भगवत्प्राप्तिः)। र.]

**एकान्तम्** - असाधारणम्। अति.

**एकान्तता** - एकरूपता। सर्वा.

**एकान्तिनः** - अनन्यदेवताकाः। सर्वा.

**एकान्ती** - यो मोक्षफलेन साकं फलान्तराण्यपि भगवत एवेच्छति सः। य. [भगवदेकसंश्रयणशीलो भागवतः। सच्च.]

[**एकायनः** - माध्वमतनिष्ठः। (श्रीश्रीशयोः प्राप्यत्वमनङ्गीकृत्य श्रीशमात्रस्य तदङ्गीकरणात्) ई.]

**एकायनम्** - उपादाता। (ग्रहीता)। बृ. एकायनशाखाम्। छा.

[**एकायनश्रुतिः** - पञ्चरात्रमूलभूतः वेदभागः। पाञ्च. पाञ्चरात्रसंहितामूलभूतवेदशाखा। सच्च.]

**एकार्थवृत्तित्त्वम्** - समभिव्याहृतपदान्तरोपस्थापिताकारान्तराधिकरणवृत्तित्वमेव एकार्थवृत्तित्वम्, न तु व्यक्तिद्वयावृत्तित्वम्। भाव.

**एकार्थसमवायः** - सामानाधिकरण्यम्। श.

**एकास्पदम्** - मुख्याधारम्। रा.

**एकीकरणम्** - अनुगमकम्। न्यासिटी.

**एकीभावः** - अतिसूक्ष्मतया अवस्थानम्। श्री. अतिसूक्ष्मतापत्तिः। श्रु. ऐक्यम्। नीति. भेदकाकारप्रहाणम्। मु.

**एकीभूतः** - एकत्वं प्राप्तः। मा(र). एकीभावं प्राप्तः। मा (कू).

**एकेन द्वाभ्यां त्रिभिरष्टभिर्वा** - जायमानदशाप्रसृतभगवत्कटाक्षेण, देवगुरुभक्तिभ्याम्, वाल्यपाण्डित्यमौनैः, अष्टभिर्योगाङ्गैः। श्वे.

**एकेन्द्रियसंज्ञा** - स्थितप्रज्ञस्य चतसृष्ववस्थासु तृतीयावस्थेयम् - "पक्केऽपि दोषशेषे अनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषन्तीं शेमुषीं प्रति बिभत्सेत् (?)। तत्र निरतिशयानन्दरूपमात्मानं पुरुषद्वेषिण्या योषित इव युवानं प्रदर्श्य प्रदर्श्य क्रमादात्मनि तोषं समुत्पाद्य तेन तोषविशेषेण दवीयसा च स्मृतिविधुरेण कालेन बाह्यविषयवासनाजालमुन्मूलयितुमीहेत। सेयमेकेन्द्रियसंज्ञा।" अन्यत् स्थिरधीरिति पदे द्रष्टव्यम्। ता. [शब्दादिविषयेभ्यो बाह्येन्द्रियाणां निवर्तनम्। (सांख्यमते)। र.]

**एकोदयः** - ऐककण्ठ्यम्। रा.

**एकोपाधिः** - (अनुगतजात्यनङ्गीकारात्) एकस्मृतिसमारोहः। न्यासि.

**एजत्** - कम्पमानम्। जाग्रदिति यावत्। मु. गच्छत् प्राणिजातम्। बृ.

**एजनम्** - कम्पनम्। श्री.क.भयम्। श्रु.

[**एडमूकाः** - श्रवणवचनशक्तिरहिताः।

"एडमूकौ न वाक्श्रुती" इति यादवः। या.]

**एतर्हि** - इदानीम्। बृ.

**एतर्ह्येव** - सम्प्रत्येव। भा.

**एतल्लोकं पृणानम्** - पृ पालनपूरणयोः। पूरयन्तं भुवम्। श्रु.

**एतावत्त्वम्** - इयत्ता। श्री. प्रकारः। बृ.

**एति** - गच्छति। बृ.

**एधः** - इन्धनम्। श्रु.

**एधि** - भव। छा.

**एलाधानम्** - नगरविशेषः। रा.

**एव** - अयं शब्दः साम्यवाची। न्यासि. एवकारो विरोधं स्फोरयति। वे. एवकारो विरोधव्यञ्जकः। त. एवकारेण नैरपेक्ष्यमव्यवहितत्वं च व्यज्यते। गीसं. ब्रह्मैव भवति। प्रकारैक्यादेवमुक्तिः। यद्वा एवकार इवशब्दार्थोपि। "इववद्वैवमेव" इति निघण्टु सद्भावात्, वैष्णवं वामनमालभेत विष्णुरेव भूत्वेमान् लोकानभिजयतीत्यादिप्रयोगाच्च। न ह्यत्र पशुयागमात्रेण विष्णुरेवासौ जातः। नापि स्पर्धमानस्य मोक्षाधिकारः। न च विष्णुरेव भवतीति तावदेव फलं निर्दिष्टम्। किन्तु इमान् लोकानभिजयतीति सांसारिकफलमुक्तम्। अतः पराक्रमादिगुणयोगेन विष्णुरिव भूत्वेमान् लोकानभिजयतीति वाक्यार्थः। एवं ब्रह्मैव भवतीति साधर्म्यमिति।

**एषः** - अयमिति प्रत्यक्षार्हः। सुन्दर.

**एष लोकः** - भूः। श्रु.

**एहि** - आगच्छ। बृ.

## ऐ

**ऐककण्ठ्यम्** - विस्पष्टमेकार्थपरत्वम्। व. [एकार्थबोधनतात्पर्यम्। सच्च.]

**ऐकशास्त्र्यम्** - एकग्रन्थत्वम्, साकांक्षत्वे सति एकार्थप्रतिपत्तिपरत्वम्। वा.

**ऐकात्म्यम्** - सर्वेषां आत्मनां एकपरमात्मात्मकत्वम्। भा.

**एकात्म्यप्रत्ययसारम्** - एकः प्रधानः आत्मा पूर्णः; एकश्चासौ आत्मा च एकात्मा; एकात्मैव ऐकात्म्यम् स्वार्थेष्यञ्। प्रत्ययः ज्ञानरूपः सारः आनन्दरूप इति। मा. एकात्मप्रत्ययगोचरम्। मा.

**ऐकान्तिकत्वम्** - अनन्यविषयत्वम्। गद्य. एकस्मिन्नेव नियतत्वम्। प्रयोजनान्तरानन्वयेन तदेकनियतत्वम्। गद्य.

**ऐकान्तिकी** - (भक्तिः) एकत्र अन्तो निश्चयः एकान्तः तन्निबन्धना भक्तिः। ऐकान्तिकत्वं नाम देवतान्तरफलान्तरपरित्यागेन प्राप्यप्रापकभूतैकनिष्ठत्वम्। ता.

**ऐकान्त्यम्** - अनन्यदेवताकत्वम्। गीसं.

**ऐक्यम्** - "श्रियो भगवदैक्यम्, द्वन्द्वरूपेणात्यन्तसमतया प्रकारैक्यात्, समस्तप्रपञ्चप्रतियोगिकैकशेषित्वाश्रयत्वात्, समस्तात्महविः प्रति उद्देश्यैकदेवतात्वादितो वा।" श्रीत. "साकल्येन संयोगः।" न्यासि.

**ऐक्षत** - अचिन्तयत्। बृ.

**ऐतदात्म्यम्** - एतदात्म्यं उपादानभूतेनान्तर्यामिभूतेन च ब्रह्मणा व्याप्यमित्यर्थः।

एतदात्म्यमेव ऐतदात्म्यम् । स्वार्थे ष्यञ् । एष आत्मा यस्येति पक्षेऽपि स्वार्थे ष्यञ आश्रयणीयत्वात् । छा. एतदात्मकम् । स्वार्थे ष्यञ् । सम्बन्धार्थे वा । एतदात्मसम्बन्धीत्यर्थः । वे. एतदात्मत्वम् । वे. एतदात्म इत्यर्थः । स्वार्थे ष्यञ् । भाव. एष आत्मा अन्तरात्मा यस्य तथाभूतम् । स्वार्थे ष्यञ् । भा.

**ऐतरेयः** - इतरपुत्रः । छा.

**ऐतिह्यम्** - शाब्दज्ञानम् । सर्वा. ऐतिह्यं तु प्रमाणमूलं चेदागमः । तदाभासमूलं चेत् तदाभासः । न्याप. उपदेशः । भा.

[**ऐदम्पर्यम्** - परमतात्पर्यम् । सच्च.]

**ऐन्द्रम्** - संग्रामेष्वनिवर्तिनां क्षत्रियाणां स्थानम् । वि.

[**ऐन्द्रव्याकरणपण्डितः** - हनूमान् ।]

**ऐरम्मदीयम्** - इरया अमृतेन माद्यन्ते यस्मिन् तत् ऐरम्मदीयम् । अमृतमयं सर इत्यर्थः । छा.

**ऐरावतः** - इन्द्रस्वामिको गजः । रा. सर्पः । वि.

**ऐलः** - पुरूरवाः । वि.

**ऐशः** - सर्वेश्वरस्वरूपानुबन्धी । वर.

**ऐशस्वभावम्** - सर्वेश्वरत्वानुरूपस्वरूपरूपगुणविभवादिकम् सर्वज्ञत्व सर्वशक्तित्वादिकं वा । सुन्दर.

**ऐश्वरम्** - ईश्वरत्वप्रयुक्तम् । वै.

**ऐश्वररूपम्** - ईश्वरत्वे सर्वप्रशासनेऽवस्थितं रूपम् । गी. ईश्वरत्वस्वभावाभिव्यञ्जकरूपम् । ता.

**ऐश्वर्यम्** - अचिद्द्रव्यपरिणामविशेषानुभवः अचित्तत्त्वानुभवः । गीसं. अणिमादिप्रादुर्भावः । (सांख्यमते) सर्वा. अणिमाद्यैश्वर्यम् । "अणिमामहिमा च तथा लघिमा गरिमा वशित्वमैश्वर्यम् । प्राप्तिः प्राकाम्यञ्चे"ति । अधिकारसंपत् । सुन्दर. अव्याहतिः । रत्न. अव्याहतेच्छं सवनियन्तृत्वम् । गद्य. अव्याहतेच्छं नियन्तृत्वम् (षाड्गुण्यान्तर्गतम्) श्रीत. नियन्तृत्वम् । भा. नियमनशक्तिः । न्याप. नियमनसामर्थ्यम् । य. प्रतिहतिराहित्येन सर्वनियन्तृत्वम् । दया. प्राकृतभोगः । न्यासिटी. भोगः । गीसं. (लक्ष्मीविषये) "अव्याहतिर्यदुद्यन्त्यास्तदैश्वर्यम्" । श्रीत. लीलाविभूतिनियमनम् । व. सौन्दर्यम् । वर. स्वव्यतिरिक्तसमस्तवस्तुनियमनसामर्थ्यम् । शर. स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम् । भा. स्वेतरसमस्तवस्तुनियन्तृत्वरूपम् ईश्वरत्वम् । अधि. [भूतभौतिकसृष्टिसंहारसमर्थत्वम् (अष्टैश्वर्येष्वन्यतमम्) । र.]

**ऐश्वर्यसाम्यम्** - श्रीश्रीशयोरुभयोरपि विशिष्टत्वात् । श्रीत.

**ऐहिकत्वम्** - एतज्जन्मभोग्यत्वम् । भाव.

## ओ

**ओम्** - अकारार्थायैवाहम्, नान्यस्मै, अत एवन मह्यमपीति । न्याद. ब्रह्म । न्यासि. आतं जगत् अस्मिन् (ब्रह्मणि) । मा(कू). प्रणववाच्यः । तै. "ओं तत्सदिति निर्देशो

ब्रह्मणस्त्रिविधःस्मृतः'' इति ब्रह्मपरः । वेकौ.

**ओकः** - स्थानम् । श्री.

**ओङ्कारः** - सकृदुच्चरितमात्रेणोर्ध्वं उत्क्रामयतीति ओङ्कारः । वेकौ. ऋषिविशेषः । रा. ओमित्याक्रियत इति । मा(कू). ब्रह्म । श्रु.

**ओजः** - इन्द्रियपटुत्वम् । भा. इन्द्रियबलम् । भा. इन्द्रियशक्तिः । भा. कान्तिः । तै.रा. परैः अनभिभूतत्वम् । भा. प्रवृत्तिसामर्थ्यम् । भा. बलम् । छा.रा.

**ओजस्तेजोद्युतिधरः** - एकं नाम । ओजः बलम्, तेजः पराभिभवनसामर्थ्यं, कीर्तिर्वा, द्युतिः औज्ज्वल्यम्, तानि धरतीति । सह.

**ओजीयः** - ओजस्तरम् (?) । बृ.

**ओदनः** - विनाश्यः । क.

[**ओलण्डितम्** - उत्क्षिप्तम्; ''ओलडि उत्क्षेपणे'' इति चौरादिकाद्धातोर्निष्ठायां रूपम् । या.]

**ओषध्यः** - फलपाकावसाना व्रीह्यादयः । वि.

## औ

**औज्ज्वल्यम्** - 'आदित्यवर्णं' 'दिवि सूर्यसहस्रस्य' इत्यादिषूक्तं भास्वरतमत्वम् । गद्य. भास्वरत्वम् । ता.

**औडुलोमिः** - कश्चिदाचार्यः । श्री.

**औत्पातिकः** - अशुभसूचकः । रा.

**औत्पत्तिकः** - नित्यः । च. सत्ताप्रयुक्तः । नित्यः । वे.

[**औत्पत्तिकम्** - स्वाभाविकम् । ई.]

**औत्सर्गिकम्** - बाधकापोद्यम् । च.

**औदार्यम्** - अपरिमितं दत्वाऽप्यतृप्तत्वम् । य. आत्मीयद्रव्यस्य परस्वत्वापादनपर्यन्तत्यागबुद्धिः । भा. इदंमियद्दत्तमित्यस्मरणशीलत्वम् । अष्ट. उपसत्तितारतम्यानुचिन्तनं विनैव चिन्तितार्थप्रदत्वम् । वर. गत्यलोकनादि श्रैष्ठ्यम् । भा. दातृप्रतिगृहीतृविभागविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम् । श्रु. आत्मात्मीयं दत्वापि 'ऋणं प्रवृद्धमिव म' इति स्थितिः । श्रु. पात्रलाघवं देयगौरवं चानादृत्य दायविभागन्यायेन प्रत्युपकारादि निरपेक्षं वितरणरसिकत्वम्, प्रभूतं दत्वाप्यतृप्तत्वं च । गद्य. दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वम् । श्रु. (भगवतः) पिशाचगोपालगोपिकादिभ्यः स्वात्मसमर्पणे कृतेपि कियद्दत्तमिति भावनम् । ता.

[**औन्नत्यम्** - तुङ्गता । या.]

**औपचारिकाः** - नीराजनादयः । ता.

**औपनिषदः** - उपनिषदेकसमधिगम्यः । उपनिषत्प्रतिपाद्यः । भाव.

**औपमन्यवः** - अयमेव प्राचीनशालः । छा. महाशालः महाकाश्यः, जाबालः । अग्नि. उपमन्युसुतः (प्राचीनशालः) । छा.

**औपयिकम्** - प्राप्तम् । रा. योग्यम् । रा.

**औपवास्यम्** - उपवासः । रा.

**औपवाह्यः** - समरोचितराजवाहनम् ।

गरु. उपवहनमात्रयोग्यं वाहनम् । रा. राजवाह्यः। रा.

**औपवेशिः** - उपवेशसुतः अरुणनामा गौतमः । अग्नि.

**औपादानिकी** - (प्राभाकरमते) उपादानप्रमाणसिद्धा; विध्याक्षेपसिद्धेत्यर्थः । वे.

**औरभ्रकः** - मेषाजीवी । वि.

**और्ध्वदैहिकम्** - देहादूर्ध्वकर्तव्यम् । रा.

**औषत्** - अदहत् । "उष दाहे" । बृ.

**औषधम्** - भवतीव्रविषापहं भेषजम् । सह.

## क

**कः** - कियान् । वि. सूर्यः । पा. ब्रह्म । पा. मलीमसेषु वसन्नपि कनति दीप्यत इति । सह.

**कम्** - जलम् । बृ. सुखम् । वि.पा.बृ.तै.

**ककुत्स्थः** - भगीरथनृपपुत्रः । रा.

**ककुदः** - प्रधानम् । रा.

[**ककुदम्** - गलपृष्ठम् ('पिडरि' इति द्राविड्यां प्रसिद्धम्) । सच्च.]

**कक्ष्यम्** - गोप्यम् । बृ.

**कक्ष्या** - गजबन्धनरज्जुः । रा. मध्यबन्धनार्था रज्जुः । रा. [गेहप्रकोष्ठम् । कञ्चुलिका । या.]

[**कङ्कटः** - कवचम् । या.]

**कङ्कतः** - केशमार्जनम् । रा.

**कङ्कपत्रान्** - बाणान् । रा.

**कङ्काः** - मांसादाः भयङ्कराकृतयः पक्षिविशेषाः । रा. स्थूलकायाः । रा.

**कङ्कालः** - अस्थिनिचयः । रघु.

**कचोल्लुञ्छनाः** - जैनाः । अधि.

**कच्छनीरः** - सर्पः । वि.

[**कञ्चुकम्** - वर्तुलालाबुः । र.]

**कटाक्षः** - अवलोकविशेषः । "यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते" । या. अपाङ्गदर्शनम् । या. ['यद्गतागतिविश्रान्तिवैचित्र्येण विवर्तनम्' इत्युक्तलक्षणस्तारकाव्यापारः । या.]

**कठिनभावः** - अयं स्पर्शविशेष एव न तु संयोगरूपः, स्पर्शनेनैव तदुपलब्धेः । न्यासि.

**कणः** - क्षुद्रतण्डुलः । वि.

**कण्टकः** - क्षुद्रशत्रुः । पा.

**कण्ठगम्** - मध्यमम् । रा.

**कण्ठिका** - कण्ठभूषणम् । स्तो.

**कण्ठ्यम्** - कण्ठाभरणविशेषः । सुन्दर.

**कण्डूः** - खर्जूः । पा.

**कण्डोलः** - पिटकविशेषः । रा.

[**कतकम्** - कालुष्यनिरासेन सलिले नैर्मल्यसंपादकं कतकवृक्ष बीजम् । या.]

**कतरेण चन** - केनापि । छा.

**कथम्** - किमर्थम् । रा. किम्प्रकारकम् । ता.

[**कथकाः** - प्रवक्तारः । सच्च.]

**कथा** - परस्परविरुद्धवादिनोः व्यवहारः । सर्वा. वादजल्पवितण्डाः । सर्वा. वादिप्रतिवादिवाक्यप्रबन्धः । श. विचारविषय-

गोचरो वादिप्रतिवादिवाक्यसन्ततिविशेषः। सा द्विविधा-वीतरागकथा विजिगीषुकथा चेति। न्याप.

**कथाङ्गानि** - सभ्यानुविधेयसंवरणं, वादिप्रतिवादिनियमः, कथाविशेषव्यवस्था, निरूप्यनिर्णय इति चत्वार्येव। वरदविष्णुमिश्रैस्तु "जल्पश्चतुरङ्गः अङ्गानि वादिप्रतिवादिसभापतिप्राश्निकाः" इत्युक्तम्। न्याप.

**कथितः** - "उक्तवक्ष्यमाणगुणवत्तया सर्वशास्त्रेषु प्रगीतः"। सह.

**कदनम्** - हिंसा। रा. हिंसनम्। रा.

**कदम्बः** - वृक्षविशेषः। रा.

**कदर्यः** - दानशून्यः। छा. लुब्धः। रा. स्वोदरपोषणमात्रपरः। भा.

**कद्रुद्राय** - क इवाचरति, स्रष्टेत्यर्थः। कन् चासौ रुद्रश्च तस्मै। तै.

**कद्रूकुमारः** - सर्पः। गरु.

**कनकम्** - चम्पकवृक्षः। पा.

**कनकसिन्धुः** - कावेरी। पा.

**कनकाङ्गदी** - अप्राकृतदिव्यभूषणः। सह.

**कनकापगा** - कावेरी। पा.

**कनखलम्** - ग्रामविशेषः। रा.

[**कनिष्ठिका** - अङ्गुलिविशेषः। सच्च.]

**कनीनिका** - तारका। तेजोमयी दृक्छक्तिरिति यावत्। बृ.

**कनीयान्** - निकर्षवान्।

**कन्तुकः** - कन्तुकस्तकारमध्यम इति धातुवृत्तिकारः। कं शिरः दुनोति नमनोन्नमनेक्षणादिभिरिति दकारमध्य इति क्षीरतरङ्गिणीकारः। या.

**कन्दराणि** - गृहाकारगुहाविशेषाः। रा. पाषाणसन्धयः। रा.

**कन्दुकः** - कन्तुको। द्र.

**कन्या** - अजातपुरुषसंबन्धा। रा. अनूढा नारी। रा. मनः, प्रकाशकत्वात्। कन दीप्तविति धातुः। श्रु.

**कपिः** - कपिरव्यय इत्येकं नाम। कं स्वरूपानुभवसुखनिर्वृतिं पाति पिबति वा। सह. [नालम्। सूर्यः। ई.]

**कपिकच्छूः** - कण्डूतिजनक ओषधिविशेषः। "कपिकच्छूश्च मर्कटी"त्यमरः। न्यासिटी.

**कपिलः** - "आदिविद्वान् सिद्ध इति कपिलमाहुः, 'ऋषिं प्रसूतं कपिलं महान्तम्' इति च श्रुतिः। ददृशुः कपिलं तत्र वासुदेवं सनातनमिति चाहुः। अयमपि परशुरामादिवत्"। ता. सांख्यतन्त्रप्रणेता। वेकौ. मुनिविशेषः। श्रु. मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वलवर्णतया पिङ्गलः। सह.

**कपिलाचार्यः** - कपिलश्चासावाचार्यश्च, निर्धूमाङ्गारवर्णतया कपिलः पिङ्गलश्चासौ मन्त्रवर्णात्, स्वतत्त्वसंविदाचयनात् आचार्यश्चेति। सह.

**कपीन्द्रः** - कपीनामिन्द्रः, कपिरूपधारिदेवानामीश्वरः। सह.

**कपीवती** - नदीविशेषः। रा.

**कपूयचरणाः** - कुत्सितकर्माणः। श्री.छा. न्यासिटी.

**कप्यासम्** - कं पिबतीति कपिः, आदित्यः, तेन अस्यते क्षिप्यते विकास्यत इति। कं पिबतीति कपिः नाळं, तस्मिन् आस्ते इति। कं जलम् आस उपवेश इति धातुरपिपूर्वकः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति वचनाद्पेरकारलोपः। कप्यासं सलिलस्थमित्युक्तं भवति। श्रु. आदित्यविकास्यमानम्। "कं पिबतीति कपिः आदित्यः, तेन अस्यते क्षिप्यते विकास्यत इति कप्यासम्। तथाह वाक्यकारः - आदित्यक्षिप्तं वा श्रीमत्त्वादिति। छा. नालस्थम्। कं पिबतीति कपिर्नालम्। तस्मिन्नास्त इति कप्यासम्। अपचितादपि पङ्कजात् नालस्थस्य पुण्डरीकस्य शोभातिशयशालित्वात् तादृशमिह विवक्षितम्। छा. सलिलस्थम्। "कं जलम्। आस उपवेशन इति धातुः अपिपूर्वकः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"रिति वचनादकारलोपः। के जले प्यास्त इति कप्यासम्। सलिलस्थमित्यर्थः। छा.

**कप्यासपुण्डरीकम्** - कं पिबतीति कपिस्सूर्यः, नालं वा सूर्येण अस्यते क्षिप्यते विकास्यते, नाले आस्ते इति वा कप्यासम्। के जले प्यास्ते इति वा "वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः।" अत्र "द्रमिडभाष्योदितेषु पट्स्वर्थेषु सिद्धान्तत्वेन भाष्यकारपरिगृहीतास्त्रयोऽर्थाः .... इदञ्च वरदगुरुभिस्तत्त्वसारे प्रपञ्चितम्" इति। ता.

**कबन्धः** - शिरश्शून्यमनुष्यकायः। रा.

**कबन्धम्** - शिरोरहिताधःकायमात्रम्। अधि.

**कमलः** - कुरङ्गः। पा.

**कमलम्** - हरिणविशेषः। पा.

**कम्बलः** - सर्पः। वि.

**कम्बुकन्धरः** - कंबुः शङ्ख इव कन्धरा ग्रीवा यस्य सः। सुन्दर.

**करः** - घनोपलः। 'करो घनोपले हस्ते शुण्डायां किरणे बलौ' इति रत्नमाला। या. स्वामिग्राह्यो भागः। भा.

**करकः** - वर्षोपलः। रा.

[**करञ्जः** - 'गञ्जाच्चेडि' इति द्राविड्यां प्रसिद्ध ओषधिविशेषः। सच्च.]

**करणम्** - इन्द्रियम्। श्वे. अधि. वर. इन्द्रियादि; (न तस्य कार्यं करणं चेत्यत्र)। श्रु. कर्मेन्द्रियम्। गी. क्रिया। श्री. यस्मिन् सति कार्यं भवत्येव तत्। सर्वा. शरीरम्; 'करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपि' इति निघण्डुः। अधि. साधकतमम्। अधि.य. स्वप्राप्तेस्साधकतमत्वात् क्रियते प्राप्तुः स्वप्राप्तिरनेनेति करणम्। ज्ञानकरणानां श्रवणनयनादीनां, क्रियोपकरणानां करचरणादीनां च एतच्छक्तिशोकरतः करणत्वम्। यथा "चक्षुश्च द्रष्टव्यं च नारायणः।" सह.

**करणभृत्** - जीवः। अधि.

**करणमन्त्रः** - होमसाधनतया विहितो मन्त्रः। वे.

[**करणाकरणम्** - महदादयः प्रकृतिविकृतयः। ई.]

**करणात्मकम्** - अनुष्ठानात्मकम्। वि.

**करणाधिपः** - जीवः।

**करमाली** - सूर्यः। रत्न.

**करम्बः** - भृष्टनिस्तुषधान्यचूर्णम्। वि.

**करम्बितम्** - सम्पृक्तम्। या.

**करालः** - दन्तुरः। रा.

**करालम्** - दन्तुरम्; विकृतम्; भीषणम्। ता. विकृतम्। विशालम्। या. स्वाभाविकः भयहेतुराकारः। व.

**करीषिणी** - कर्षवती मृद्वती वा। कर्षमृदोः मङ्गलावहत्वेन लक्ष्मीप्रियत्वम्। श्रीसू. गोमयादिसंयुता। तै.

**करुणम्** - सदयम्। रा.

**करुणवेदी** - कारुण्यज्ञः। रा.

**करुणा** - परानुग्रहः। स च स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षारूपः। अधि.

**करुणाः** - कारुण्यवन्तः। अर्शआद्यजन्तः। भा.

**करोति** - कुर्यात्। बृ.

**कर्कशः** - क्रूरः। रा.

**कर्णग्राहः** - कर्णधारः। रा. नाविकः। या.

[**कर्णताळः** - कर्णकलापः। "कर्णशब्दात्परस्ताळः कलापार्थस्तु दन्तिनाम्" इति यादवः। या.]

**कर्णपाशः** - प्रशस्तः कर्णः। वै.

**कर्णिका** - कर्णभूषणम्। वर.

**कर्णिनः** - शरविशेषाः। वि.

**कर्णी** - अंकुशाकाराग्रशरविशेषः। रा.

**कर्णीरथः** - यात्रारथः। पा.

**कर्तव्यत्वम्** - (लिङ्वाच्यम्) कर्तृव्यापारसाध्यत्वम्। न्याप.

**कर्ता** - उपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञः। अधि. धात्वर्थाश्रयः। आश्रयः। श्रु. निमित्तकारणम्। वि. नियोज्यो द्र. (भार्गवो रामः) तथाविधक्रोधहेतुं कार्तवीर्यं कृन्तति छिनत्तीति। "कृती छेदने"। सह. स्वतन्त्रः। अधि. स्वतन्त्रः, अधिकारी; फली। जीवोपि हि स्वयं स्वस्य यथा सुखदुःखाभिमानी, तथा तदतिशयेन वा तदवस्थाभिमानी हि भगवान्। यथा "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः। उत्सवेषु च सर्वेषु पितेव परितुष्यति।" "बहु स्यां प्रजायेय" इति च। पृथगभिमानित्वे हि न बहु स्यामिति स्यात्। सह. स्वधीपूर्वं प्रवर्तमानः। त.

**कर्तुम्** - उपादातुम्। ग्री.

**कर्तृत्वम्** - कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वम्। सर्वा. चिकीर्षाप्रयत्नवत्त्वम्। अधि. ज्ञानचिकीर्षापूर्वकप्रयत्नयोगित्वम्। ता. संकल्पज्ञानाश्रयत्वम्। य. [(चेतनाचेतनोभयसाधारणं) क्रियाश्रयत्वम्। (चेतनैकान्तम्) प्रयत्नाश्रयत्वम्। ज्ञानचिकीर्षप्रयत्नाश्रयत्वम्। र.]

**कर्तृत्वाभिमानः** - स्वतन्त्रकर्तृत्वाभाववति तथात्वज्ञानम्। च.

**कर्तृव्यापारः** - प्रयत्नः। श्रु.

**कर्दमः** - कर्दमनामकः प्रजापतिः लक्ष्मीपिता। श्रीसू.

**कर्पटखण्डः** - मलिनवस्त्रखण्डः । नि.

**कर्परः** - लोष्टभागः । गरु.

**कर्म** - क्रिया । न्यासिटी. चलनम् । कौ. चलनप्रत्ययविषयः । न्यासि. न विभागपूर्वकसंयोग एव कर्म । महाप्रवाहपतितनिष्कम्पमकरे चलतीत्यप्रत्ययात् । अतो विभागहेतुरतिरिक्तमेव । न्यासि. निरन्तरसंयोगसंतानः । न्यासि. वयन्तु ब्रूमः । अप्रत्यक्षकर्मवादस्तावत् प्रागुक्तदूषणादयुक्तः । प्रत्यक्षं तु कर्म दुरपह्नवम् । तत्र भाष्यादिष्वतिरेकविधिनिषेधादर्शनादर्थान्तराविरोधश्चोदासितत्वम् - इति । इदन्तु मन्यामहे अतिरेकेऽपि गुणवर्गान्न राश्यन्तरं कर्म, विभाजकाभावात् । न्याप. वस्तुतस्संयोग एवास्यान्तर्भावः । न्यासिटी. विभागपूर्वकसंयोगः । न्यासि. विभागपूर्वकसंयोगारम्भक्षणमात्रं तादृशक्षणसंतानो वा । न्यासि. संयोगसंतानः; संतानान्तर्गतैकैकसंयोगोऽपि । रत्न. सामान्यवत्त्वे सति संयोगविभागद्वयजनकत्वाभाववत् इति तार्किकलक्षणम् । न्यासि. भूतभावोद्भवकरो विसर्गः । गी. अग्निहोत्रादिकम् । बृ. उपासनम् । रा. नित्यनैमित्तिकादि । ई. यज्ञादि । वि. ईश्वराज्ञापरिपालनतदुल्लङ्घनजनितो गुणविशेषः । अधि. पुण्यपापादिलक्षणम् । कौ. पुण्यपापरूपम् । श्री.ता. पुण्यमपुण्यं च । गद्य. पुण्यापुण्यात्मकम् । श्रु. शासितुरीश्वरस्य निग्रहानुग्रहसंकल्पः । अधि. सुकृतदुष्कृतरूपम् । न्यासिटी. क्रियत इति कर्म कार्यम् । रा. कार्यम् । क्रियत इति कर्म; (जगद्विशेषणम्) । कौ. क्रियत इति कर्मेति कार्यतया कर्मशब्दितं पञ्चभूतात्मकं जगत् । श्वे. क्रियत इति कर्म सर्वं जगत् । श्री. [कर्मयोगः । र.]

**कर्मकर्तृविरोधः** - तत्क्रियाकर्तृत्वस्य, तत्क्रियाकर्मत्वस्य चैकस्मिन्वस्तुनि विरोधः । श.

**कर्मगतयः** - कर्मफलानि । भा.

**कर्मचितः** - लौकिककर्मलब्धः । त.

**कर्मचितः** - वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः । अग्नि.

**कर्मचोदना** - ज्योतिष्टोमादिकर्मविधिः । गी.

**कर्मज्ञानम्** - कर्मनिर्णयः । श्री.

**कर्मणा** - मनोव्यापाररूपेण भगवदुपासनयोगेन । 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्' इति सौत्रप्रयोगात् कर्मशब्दो मनोव्यापाररूपोपासनयोगेऽपि वर्तते । भा.

**कर्मणां भगवदर्पणम्** - फलसंगत्यागकर्तृत्वत्यागपूर्वकं भगवत्कैङ्कर्यतयाऽनुष्ठानम् । रा.

**कर्मत्यागः** - मदीयफलसाधनतया मदीयमिदं कर्मेति कर्मणि ममतायाः परित्यागः । गी.

**कर्मदेवाः** - अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः । तै.

**कर्मनाशः** - कर्मणां फलजननशक्तिविनाशः । मु.

**कर्मफलम्** - शुभाशुभं सुखदुःखम् । रा.

**कर्मफलनिष्ठं अस्थिरत्वम्** - स्वसमानाधिकरणसुखात्यन्ताभावसमानकालीनध्वंसप्रतियोगित्वम् । वा.

**कर्मफलनिष्ठाल्पत्वम्** - स्वसमानाधिकरणदुःखप्रागभावसमानकालीनत्वम् । वा.

**कर्मफलसंयोगः** - कर्मफलानुभवः । गी.

**कर्मयोगः** - असङ्गकर्मानुष्ठानम् । गी. उपदेशाज्जीवपरयाथात्म्यज्ञानवता शक्त्यनुसारेण फलसंगरहितानिषिद्धकाम्यनित्यनैमित्तिकरूपपरिगृहीतकर्मविशेषः । स तु देवार्चनातपस्तीर्थयात्रादानयज्ञादिभेदभिन्नः । य. कर्मात्मिका निष्ठा । नितिष्ठत्यस्मिन्नर्थे अधिकर्तव्ये अधिकारीति निष्ठा । नियता स्थितिरेव वा निष्ठा । यावत्फलं स्थिरपरिगृहीतमुपायानुष्ठानमित्यर्थः । गीसं. दैवमेवापरे यज्ञमित्यादिना विकल्पविहितेषु कर्मयोगावान्तरभेदेषु एकं यथारुच्यङ्गितया स्वीकृत्य अन्यानि नित्यनैमित्तिकानि तदङ्गतयोपसंहृत्य असङ्गकर्मानुष्ठानविशेषः । ई. नियमयुक्तः कर्मविशेषः । सर्वा.

**कर्मवासना** - उत्तरोत्तरपुण्यपापारम्भकपूर्वपूर्वपुण्यपापांशविशेषः । उत्तरोत्तरशरीरप्रेरणसमर्थस्मृतिहेतुः पूर्वपूर्वशरीरप्रेरणानुभवविशेषजनितसंस्कारो वा । वादित्रवादनादिसंस्कारवत् । ता. वेगादिसंस्कारः । सर्वा (आ). सजातीयकर्मान्तरारम्भरुचिः, परमपुरुषस्य प्रीतिरप्रीतिर्वा । न्यासिटी.

**कर्मविधूननम्** - उत्क्रमणकालिकः कर्मफलं नैव दास्यामीति संकल्पः । रत्न.

**कर्मविनाशः** - कर्मशक्तिनाशः । न्यासि. पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः । रत्न.

**कर्मविपाकेन** - कर्मफलेन । विपच्यत इति विपाकः फलम् । भा.

**कर्मशक्तिविनाशः** - यद्युपासनं समापयेत् फलं न दास्यामीति यद्यर्थोपहितफलप्रदानाभावसंकल्पाभावविशिष्टफलदित्सानिवृत्तिः । सा च फलसंकल्पाभावरूपविशेषणप्रतियोगिकाभावरूपविशिष्टाभावात्मिका । रत्न.

**कर्मसङ्गः** - रागादिहेतुकस्तद्विषयोपायसङ्गः । ता.

**कर्मसङ्गी** - कर्मयोगाधिकारी । ता.

**कर्मसङ्ग्रहः (त्रिविधः)** - त्रिविधं कर्म सङ्गृह्यते । गी. सङ्ग्रहशब्दस्य कर्मणि व्युत्पत्तिमाह - सङ्गृह्यत इति । कर्मैव सङ्ग्रह इति कर्मधारयः । कर्मणो वा सङ्ग्रहः । ता.

**कर्मसन्न्यासः** - ज्ञानयोगः । न्यासिटी.

**कर्मसमृद्धिः** - गुणफलरूपः प्रबलकर्मभिरप्रतिबन्धः । त. प्रबलकर्मभिरप्रतिबन्धः । त.

**कर्मसाद्गुण्यापादकानि** - कर्मसमृद्ध्युत्पादकानि । साद्गुण्यमिह समृद्धिः न तु वैकल्यनिवृत्तिः । त.

**कर्मसिद्धं देवत्वम्** - आजानसिद्धदेवत्वभिन्नम् । यद्वा त्रयस्त्रिंशद्देवतासायुज्यम् । बृ.

**कर्मसु असंगः** - तेषु कर्तृत्वाभिमानाभावः । भा.

**कर्माणि** - आकुञ्चनप्रसारणादीनि । ता. भोगसाधनानि । रा.

**कर्मातिशेषः** - कर्मावशिष्टकालः, कर्मानवरुद्धकालः । छा.

**कर्माधिकारवेला** - मयेदं कर्तव्यमित्यनुसन्धानदशा । ता.

**कर्माध्यक्षः** - कर्मसु प्रेरकः । श्वे. कर्मसु कर्तृत्वाभिमानी । भा.

**कर्मानुबन्धम्** - कर्मायत्तम् । भा.

**कर्मान्तिकः** - कर्मान्ते भृतिग्रहीता । रा.

**कर्मान्तिकाः** - किङ्कराः । रा.

**कर्मार्थत्वसिद्धिः** - (जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः । श्री.) कर्तृत्वव्युदासेन षष्ठ्याः कर्माख्यविशेषे पर्यवसानम् । त.

**कर्माश्लेषः** - कर्मशक्तिप्रतिबन्धः । न्यासि. उत्तरकर्मफलदित्साप्रतिबन्धः । रत्न.

**कर्मी** - जीवः । सर्वा (आ).

**कर्मेन्द्रियम्** - उच्चारणादिष्वन्यतमक्रियाशक्तमिन्द्रियम् । य.

**कर्मेन्द्रियत्वम्** - उच्चारणाद्यन्यतमजनकेन्द्रियत्वम् ।

**कर्मेन्द्रियाणि** - वाक्पाणिपादपायूपस्थानि पञ्चैव, न तु मनोऽपि सांख्यवत् । न्यासि.

**कर्षणम्** - उत्पादनम् । तर्षकर्षणीः अभिलाषोत्पादिका इत्यर्थः । वर.

**कलः** - मूकः । छा.बृ.

**कलम्** - मधुरम् । रा.

**कलधौतशैलः** - कैलासपर्वतः । ता.

**कललम्** - दुग्धदधिमध्यावस्था । सर्वा.

**कलरवम्** - अव्यक्तमधुराक्षरम् । वि.

**कलविकरणः** - कालविकरणः । कलाकाष्ठादिविकरणहेतुत्वात् कालविकरणत्वम् । कलविकरण इति ह्रस्वश्छान्दसः । तै.

**कला** - शैवमते मायाजन्या नृणां मलतिरस्कारेण कर्तृशक्तिव्यञ्जिका, कालनियतिरूपतत्त्वद्वयसहकारेणावनिपर्यन्तजनिका । न्यासि. कलातीतं द्र. उपाध्यधीनः कालः । सर्वा (आ).

**कलाचिका** - ताम्बूलोच्छिष्टधारकपात्रविशेषः । अच्यु. [पतद्ग्रहः । या.]

**कलातीतम्** - मुक्तरूपम् । पञ्चेन्द्रियाणि, पञ्च विषयाः, पञ्च भूतानि च कलाः । वि.

**कलापः** - हिमवत्पार्श्वे कश्चित् ग्रामविशेषः । वि. तूणीरम् । रा.

**कलासर्गकरम्** - विद्यासर्गकारणम् । श्वे.

**कलिः** - कलहः । वि.भा. विषयभोगविरोधिभिस्सह कलहः । भा.

**कलिकथकाः** - पापस्वरूपाः कुदृष्टयः । च.

**कलिङ्गनगरम्** - नगरविशेषः । रा.

**कलियुगम्** - देवमानेन वर्षसहस्रसंख्याकं युगम् । य.

**कलिलस्य** - कार्यब्रह्माण्डस्य । श्वे. कार्यस्य । श्वे.

**कलुषम्** - कालुष्यम् । वि.
[**कलुषमतिः** - अनादिमायातिरोधानेन यथावत् प्रकाशरहितः । र.]
**कलुषितः** - बद्धावस्थः (जीवः) । अधि.
**कल्कः** - श्वेताश्वः । दशा.
[**कल्ककैङ्कर्यम्** - "डम्भार्थं परपीडार्थं तन्निरोधार्थमेव वा । प्रयोजनान्तरार्थं वा कैङ्कर्यं कल्क इष्यते" । र.]
**कल्कम्** - असारभूतम् । आत्तसारम् । ऋजीषम् । श्रु.
**कल्कनम्** - रागादिदोषम् । भा.
**कल्पः** - चतुर्युगसहस्रम् । वैको. ब्रह्मदिनम् । पा. ब्रह्मायुः । कल्पक्षये अन्तिमब्रह्मदिवसावसान इत्यर्थः । कल्पानां क्षय इति वा विवक्षितम् । ब्रह्मायुःपरो वाऽत्र कल्पशब्दः । ता. भ्रान्तिज्ञानम् । सङ्कल्पो द्र.ता. श्रौतस्मार्तप्रयोगप्रतिपादनपरः । य.
**कल्पकः**- भ्रमाश्रयः ।
**कल्पनम्** - क्लृप्तिः । सृष्टिरित्यर्थः । श्री.
**कल्पनात्वम्** - विष्टिग्राहित्वम् । सर्वा.
**कल्पनापोढम्** - कल्पनास्वभावरहितम् । सर्वा (आ).
**कल्पवृक्षात्मिका** - (सिद्धिः) भारद्वाजाश्रमवत् । "कृते तु मिथुनोत्पत्तिः सिद्धिश्चापि रसोल्लसा । सकृद्वृष्टिमयी चान्या गृहवृक्षात्मिका परा ॥ पश्चात्सङ्कल्पसिद्धिश्च कल्पवृक्षात्मिका परा । प्रकामवृष्टिश्चाकृष्टपच्यसिद्धिस्तथाष्टमी" इत्यष्टसिद्धयः । वि.
[**कल्पसूत्राणि** - प्रतिनियताधिकारिविषयतया धर्मप्रतिपादकास्सूत्रविशेषाः । सच्च.]
**कल्पितम्** - अविद्यमानत्वेऽपि अस्तीति प्रतीतम् । असत्यमित्यर्थः । त. उत्कीर्णम् । श्रु. ध्यातम् । भा.
**कल्माषपादः** - सौदासो वीरसहः । रा. रघुपुत्रः सौदासः । रा.
**कल्यः** - पटुः । या. हितोपदेशदक्षः । भा.
**कल्यम्** - कल्याणम् । रा. चतुरम् । "कल्यो नीरोगदक्षयोः" इति विश्वः । या.
**कल्याणम्** - अनुकूलम्; आनन्दः । यद्वाऽनुकूलवेदनीयत्वात् सर्वे गुणाः कल्याणशब्दवाच्याः । वे. शुभाश्रयभूतम् । ई. स्वर्णम् । पा.
**कल्याणत्वम्** - अन्येषामप्यनुकूलत्वम् । भा.
**कल्याणाः** - (गुणाः) अखिलहेयप्रत्यनीकाः । आश्रयसम्बन्धेन शुभीभूता वा । रा.
**कल्याणानि** - सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि । श्री.य.
**कल्याणी** - गुणवती । रा.
**कल्याणैकतानः** - कल्याणगुणानामेवाश्रयभूतः । ता.
**कल्याणैकतानत्वम्** - कल्याणानां सर्वेषां साधारणाश्रयभूतविस्तारत्वं, प्रदेशभेदेन कालभेदेनाप्यकल्याणत्वरहितत्वम् ।

**कवयः** - काव्यकृतः। या. क्रान्तदर्शिनः। तै. क्रान्तदर्शिनः । जलसंचरणशीलाः पक्षिणः । पा. निरतिशयज्ञेयस्तत्साधनाभिज्ञाः। भा. विद्वांसः। गी. सूरयः। क्रान्तदर्शिनः, अकर्मवश्यत्वादसंकुचितज्ञानाः, सूरयश्च ज्ञानाधिकाः प्रसिद्धाः। श्रु.

**कविः** - अतीन्द्रियार्थसाक्षात्कारसमर्थः। मु. अप्रत्यक्षतत्त्वार्थसाक्षात्कारक्षमः। वर. कवनशीलः। सुन्दर. श्री. क्रान्तदर्शी। सह. वेकौ. शब्दायमानः । तै. सर्वज्ञः । गी. क्रान्तदर्शी। ता.

**कवितार्किकसिंहस्य** - परिपन्थिभूतानां कवीनां तार्किकाणां च सिंहवद्भयङ्करस्य, तेषु श्रेष्ठस्येति वा। या.

**कविधीचित्रम्** - कवीनां धीभिः कृतं काव्यादिकम्। सर्वा.

**कव्यम्** - पित्रर्थमन्नम्। या. पित्रर्थं द्रव्यम्। रा.

**कशिपोः** - शय्यायाः। भा.

**कश्मलम्** - मूर्छा। रा. [ दुःखम्।]

**कश्यपः** - मरीचिपुत्रो महर्षिः। रा.

**कषमाणम्** - कण्डूयमानम्। छा.

**कषायः** - कल्मषम्, रागादिश्च। त. पापम्। रागादिर्वा । श्रु. भगवद्दर्शनप्रतिबन्धकपुण्यपापात्मकः कर्मोपाधिः। भा.

**कष्टं विषादम्** - अत्यन्तविषादम्। रा.

## का

**का** - संसारसागरनिमग्नैः स्वोत्तारणाय प्रष्टव्या। तथा 'कतमा का या सा सत्या' इति। श्रीसू. सुखस्वरूपा, आनन्दमयस्यापि भगवतः आनन्दहेतुः (लक्ष्मीः)। श्रीसू.

**काकतालीयम्** - यादृच्छिकम्। रा.

[**काकणी** - क्षुद्रधान्यांशः। र.]

**काकलिकः** - करपत्रेण नानाकाष्ठदलनकारी। रा.

**काकुत्स्थः** - ककुत्स्थकुलजो रामः। रा.

**काक्षसेनिः** - कक्षसेनसुतः। छा.

**काठिन्यम्** - निर्विरलसंयोगप्रयुक्तस्पर्शः। न्यासि.

[**काणः** - एकचक्षुर्विकलः। र.]

**काणादाः** - वैशेषिकाः।

**कात्** - कं जलं अत्तीति कात् ऋषिः। पा.

**काननानि** - महावनानि। रा.

**कानीयसाः** - कनीयांसः। स्वार्थेऽण्। अल्पीयांस इति यावत्। बृ.

**कान्तः** - कमनीयः। सह. स्वयं सौन्दर्यसौकुमार्यादिगुणैः कान्तः अभिरूपः। सह.

**कान्तारम्** - दुर्गमं वर्त्म। या.

**कान्तिः** - देवस्त्रीविशेषः। रा. 'मन्मथाप्यायितच्छाया शोभा कान्तिरुदाहृता'। वि. शोभाविशेषः। 'मन्मथाप्यायनकरी शोभा कान्तिर्निगद्यते' इति यादवः। या.

**कान्दिशीकः** - भयद्रुतः। कां दिशं कक्षीकुर्वीत, न कांचिदपि दिशं प्राप्नुयात्। सर्वा.

**कापथम्** - कुमार्गम्। रा.

**कापेयः** - कपिगोत्रः। छा. [वानरचेष्टावान्। वि.]

**कामः** - अतिमात्रसङ्गः । ता. अभिलषितार्थः । प्र. इच्छायाः काष्ठाप्राप्तदशा । ता. इच्छाविषयभूतः । गी. इच्छाजन्योऽभिनिवेशः । वि. ऐहिकं सुखम् । रा. काम्यमानः अर्थः । मा. स्वच्छन्दवृत्तिस्वाभाव्यम् । रा. कामनाविषयः । बृ. काम्यमानः पुत्रादिः । बृ.श्री. विषयाभिलाषः । बृ. कामकारितं (निषिद्धम्) । छा. सङ्गस्य विपाकदशा । पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति सा दशा । गी. शीलौदार्यदयादिभिरात्मगुणैः निकामकमनीयत्वात् कामः । एतद्गुणबिन्दुना हि मदनोपि जगदुन्मादयति । सह. अर्थतुष्टिः । वि. रिरंसा । वि. श्रद्धायाः सुतः । वि. इच्छा । श्रु. विषयानभुक्त्वा अवस्थातुमशक्तिः । भा. संनिहितेषु विषयेषु अननुभूत्वा(?) अनवस्थितिः । भा. प्रपन्नेभ्यो निरतिशयानन्दप्रदानेच्छा । स्वेच्छा । रा.

**कामम्** - काम्यम् । वि.

**कामम्** - यद्यपि । रा.

**कामकामः** - काम्यन्त इति कामाः फलानि; फलकामः । नि.

**कामकामी** - यः शब्दादिभिर्विक्रियते । गी. कामान्कामयितुं शीलं यस्य स कामकामी. । ता.

**कामकारः** - अभीष्टनियोगकर्ता । रा. इच्छा । रा. कामकर्तृकं प्रेरणम् । ता. स्वच्छन्दानुगुणमार्गः । गी. स्वच्छन्दकरणम् । रा. स्वेच्छा । रा.

**कामंकामम्** - णमुलन्तं पदं । सङ्कल्प्येत्यर्थः । श्रु. णमुलन्तं पदम् । सङ्कल्प्य सङ्कल्प्य । क.

**कामकृत्** - कामं अन्यदपि भोगमोक्षादिकं काम्यं स्वयमेव करोतीति । सह.

**कामक्रोधपरायणाः** - कामक्रोधैकनिष्ठाः । गी. क्रोधस्य परमप्राप्यतयाऽभिमानविषयत्वाभावात् कामक्रोधयोरैकाग्र्यमात्रं विवक्षितम् । अयनशब्दोऽत्र आश्रयपरः । ता.

**कामक्रोधौ** - (मम काममात्रेण सर्वं सम्पत्स्यत इति कामम्; मम येऽनिष्टकारिणः तान् सर्वान् हनिष्यामीति च क्रोधं संश्रिताः । गी.) भगवत्प्रसादादेवेष्टप्राप्त्यनिष्टपरिहारावित्यस्य विपरीतौ कामक्रोधौ । ता.

**कामजटाः** - कामानां मूलभूतवासनाः । भा.

**कामतः** - भक्त्या । रा.

**कामदेवः** - सर्वकामदाता । सह.

**कामधुक्** - काम्यन्त इति कामाः इष्टार्थाः तान् दोग्धि प्रपूरयतीति सा । भा.

**कामपालः** - दत्तकामरक्षकः । सह.

**कामप्रदः** - स्वकामेभ्यः अन्यकामेभ्यश्च यथार्हं कामं काम्यं प्रददातीति । सह.

**कामरागः** - काम्यविषयरागः । ता.

**कामलायनः** - कमलसुतः । छा.

**कामवत्सा** - यस्य यस्य यो यः कामः तस्य तस्य तेन तेन कामेन वत्सभूतेन वत्सला । श्रीसू.

**कामवर्जनम्** - फलसङ्गराहित्यम् । गी.
**कामवृत्तः** - कामेन वृत्तं यस्य सः स्वैरवृत्त इत्यर्थः । रा. यथेच्छव्यापारः । रा.
**कामवृत्तम्** - कामव्यापारः । रा.
**कामवृत्तत्वम्** - कामतो वृत्तं यस्येति व्युत्पत्त्या लोकशास्त्रानादरेणापरीक्षित-यथेष्टकारित्वम् । स्तो.
**कामहा** - स्वगुणदर्शिनां कामं विषयान्तरस्पृहां हन्ति इति । सह.
**कामाः** - अपेक्षितार्थाः । क. अभिमत-वस्तूनि । रा. इच्छाविषयाः । कौ. काम्यमानाः । क. काम्यमानाः अभीष्टाः । रा. काम्यन्त इति कामाः कल्याणगुणाः । श्री.श्रु.छा.तै. काम्यन्त इति व्युत्पत्त्या स्वेन स्वाश्रितैश्च भोग्याः विभूतयः । काम्यमाना विषयाः शब्दादयः । क. काम्यन्त इति कामाः शब्दादयो विषयाः । गी. काम्यन्ते इति कामाः शब्दादयो विषयाः । गी. काम्यन्ते इति कामा इष्टसम्पत्तयः । श्री. काम्यन्त इति भोगोपकरणाः स्रक्चन्दना-दयः । रा. [कल्याणगुणाः । वि.]
**कामात्मानः** - कामप्रवणमनसः । गी. कामेष्वात्मा मनः येषां ते इति व्यधिकरण-बहुव्रीहिरिति भावः । ता.
**कामाधिकारः** - कामनया अधिक्रियत इति वा, कामेन अधिकारो यत्रेति वा कामाधिकारः, काम्यकर्म । तदधिकारित्वं [illegible], यद्वा तच्छास्त्रम् । ता.
**कामान्** - पुरुषार्थान् । भा.
**कामिनः** - विरहिणः । रा.
**कामिनाम्** - विषयासक्तधियाम् । भा.
**कामिन्यः** - असवर्णेऽपि रताः । स्वैरिण्यः सवर्णमात्रे रताः । पुंश्चल्यः सर्वत्र अतिचञ्चलाः । भा.
**कामी** - कामाः प्रदेयार्थाः अतिशयिता अस्य सन्तीति । सह.
**कामेप्सुः** - फलप्रेप्सुः । गी.
**कामोपभोगपरमाः** - प्रयोजनतायाऽभि-मतेषु कामोपभोग एव परमो येषां ते । ता.
**कामोपभोगार्थम्** - विषयानुभवार्थम् । ता.
**काम्यः** - प्रार्थनीयः । रा.
**काम्यम्** - कामसाधनम् । तै.
**काम्या** - इच्छा । रा.
**काम्याधिकारी** - स्वर्गस्वाराज्यपशु-पुत्रादिकामनाविशिष्टः । अधि.
**कायः** - शरीरस्य मध्यप्रदेशः । ता. स्पर्शः (बौद्धमते) । श्री.
**कायम्** - शरीरम् । रा.
**कायेन** - प्राजापत्येन । वि.
**कारकविभक्तिः** - पदान्तरयोगमनपेक्ष्य विहिता विभक्तिः । श्रु.
**कारणम्** - दैवततया, तैस्तैस्तद्वतः तत्तत्कारयतीति वा, तै स्तैस्तत् कार्यतेऽने-नेति वा, कारणम् । सह. नियतपूर्वसत् । श. प्रकृतिः । वि. प्रयोजकम् । नि. प्रयोजनम् । वि. फलम् । रा. व्यवस्थापकम् । रा. साधनम् । वि. [मूलप्रकृतिः । वि.]

**कारणरूपम्** - यत् सूक्ष्ममक्षरमव्यक्तं तत्। वि.

**कारणापत्तिः** - लयः। श्रु.

**कारण्डकः** - महापक्षी। रा.

**कारण्डवः** - जलकुक्कुटः। रा.

**कारुणिकः** - यः स्वार्थनिरपेक्ष एव परोज्जिजीवयिषया प्रवर्तते। ता.

**कारुणिकाः** - स्वार्थनिरपेक्षपरदुःख-निराचिकीर्षवः। भा.

**कारुण्यम्** - करुणैव कारुण्यम्। चतुर्वर्णादित्वात् स्वार्थे ष्यञ्। या. दैन्यम्। रा. परदुःखासहिष्णुत्वम्। श्रु. परदुःखदुःखित्वम् (?)। रा. परानिष्टनिराचिकीर्षा। व. स्वार्थ निरपेक्षा परदुःखासहिष्णुता। ता. स्वार्थानपेक्षपरदुःखनिराचिकीर्षा। य. निरुपाधिकपरदुःखनिराचिकीर्षा। नि. अनुद्दिष्टस्वप्रयोजनान्तरा परदुःखनिराकरणेच्छा। गद्य. [परहितप्रवणता। र.]

**कार्तवीर्यः** - माहिष्मतीनगराधिष्ठाता हैहयो नृपः। रा.

**कार्त्स्न्यम्** - प्रकृतैकदेशाबहिष्कारः। श.

**कार्पण्यम्** - आकिञ्चिन्यानुसन्धानम्। श्रीसू. अतीतपुत्रादिमरणादिस्मृतिनिमित्तं दैन्यम्। भा. कृपाजनककृपणवृत्तिनिरतत्वम्। नि. "त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः। अङ्गसामग्र्यसंपत्तेरशक्तेश्चापि कर्मणाम्। अधिकारस्य चासिद्धेः देशकालगुणक्षयात्। उपाया नैव सिध्यन्ति ह्यपाया बहुलास्तथा। इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते"। नि. त्याज्यस्य अपरित्याग इत्येके। दयाजनकदीनवृत्तिनिरतत्वमित्यपरे। ता. [कृपणवृत्तिः। र.]

**कार्यम्** - कृतिसाध्यम्। नी.अधि. कृत्युद्देश्यं कृतिसाध्यम्। नी. नियतोत्तरसत्। श. महान्। वि. शरीरम्, न तस्य कार्यं करणं चेत्यत्र। श्रु. शरीरम्। श्वे. संस्थानविशेषभाक्। नी.

**कार्यकारणकर्तृत्वम्** - कार्यं शरीरं, कारणानि ज्ञानकर्मात्मकानि समनस्कानीन्द्रियाणि, तेषां क्रियाकारित्वम्। गी.

**कार्यकारणभावः** - पौर्वापर्यनियमः। श्रु.

**कार्यकारणोभयावस्थः** - कार्यत्वकारणत्वरूपोभयावस्थाविशिष्टः। ता.

**कार्यता** - अवस्थान्तरापत्तिः। श्री.गी.नी. कारणभूतद्रव्यस्यावस्थान्तरापत्तिः। श्री.

**कार्यत्वम्** - एकस्य द्रव्यस्य अवस्थान्तरापत्तिः। श्री. (द्रव्यस्य) आगन्त्ववस्थायोगित्वम्। सर्वा (आ). उत्पत्तिमत्त्वम्। भाव. कृतिसाध्यत्वम्। श्रु. प्रागसत्त्वविशेषितं सत्त्वम्। सर्वा प्राक्पश्चाच्चासतः मध्यकालवर्तित्वम्। अधि.

**कार्यनियोगः** - कार्यसंघटनम्। रा.

**कार्यमानुषः** - (धर्मसंस्थापनादि) कार्येणमानुषः। वि.

**कार्यरूपम्** - यत् स्थूलं क्षरं व्यक्तं च तत्। वि.

**कार्याकार्यव्यवस्थितिः** - उपादेयानुपा-

देयव्यवस्था । गी. कार्याकार्यशब्दौ तत्त्वातत्त्वयोः प्रदर्शनार्थावित्यभिप्रायेणोपादेयादिसाधारणशब्दः । उपादानमत्र यथाशास्त्रं मनसा स्वीकरणम् । ता.

**कार्याख्यानम्** - अप्राप्ताख्यानम् । श्री.

**कार्यी** - कार्यार्थी । रा.

**कालः** - अतीतादिव्यवहारहेतुः । वा. अनाद्यन्ताजस्रक्षणपरिणामी मुहूर्ताहोरात्रादिविभागयुक्तः सर्वेषां परिणामपरिस्पन्दहेतुः । नी. अवस्थान्तरापन्ना प्रकृतिः । नी. अस्तिभविष्यतीत्यादिव्यवहारहेतुः अणुरूपो द्रव्यविशेषः (जैनमते) । श्री. मार्गः । अर्चिरादिः अहःप्रभृतिसंवत्सरान्तरकालाभिमानिदेवताभूयस्तया मार्गोपलक्षणार्थः । गी. आत्मा । रा. आयुः । नि. ईश्वरः । रा. उपाधिकृतविभागैरब्दादिव्यवहारविषयः । सर्वा. कलयतां प्रधानभूतः । गी. क्षणलवादिव्यवहारहेतुः । न्याप. गुणत्रयरहितो जडविशेषः । य. चिदचित्संकलनवान् । सह. दैवम् । रा. मायातोऽन्यः । न तु शैवमत इव मायाजन्यतत्त्वम् । अयमनादिरनन्तो विभुत्वात्; विभूतिद्वयव्यापी निर्विकारः सविकार एव वा । न्यासि. मृत्युः । रा. यमः । रा.

**कालम्** - मरणम् । वि.

**कालकर्म** - कालस्य मृत्योः कर्म कालकर्म । मरणरूपक्रियेति यावत् । यद्वा काले कर्म । परिपक्वक्रियेत्यर्थः । रा.

**कालकालः** - कालस्यापि नियन्ता । श्वे. कालस्यापि पाचकः । श्वे. मृत्योरपि मृत्युः । रा.

**कालकेयाः** - असुरविशेषाः । रा.

**कालगमनम्** - मैथुननिवृ(र्वृ)त्तिः । छा.

**कालचक्रम्** - यमस्यायुधविशेषः । रा.

**कालचिन्तकाः** - कालमेवेश्वरं मन्वानाः । भूतानां प्रसूतिं कालं मन्यन्ते ये ते । मा. (कू.)

**कालता** - परत्वादिनिर्वाहकता । सर्वा.

**कालदण्डः** - यमस्मायुधविशेषः । रा.

**कालधर्मः** - कालोचितो धर्मः । रा. मरणम् । रा.

**कालनेमिनिहा** - कलिकल्मषहा । कालस्य नेमिं तत्तुल्यां अविद्यां कलिकल्मषं निहन्ति अपहन्तीति । सह.

[**कालपञ्चकम्** - अभिगमनोपादानेज्यास्वाध्याययोगाः । पाञ्च.]

[**कालपञ्चकविभागः** - (भोजराजकृतः) सङ्गवः, समः, विष्णुप्रियः, धर्मः, विरागः, इति । पाञ्च.]

**कालपरिच्छेदः** - अत्र कालेऽस्ति अत्र तु नास्ति इति । ता. उत्पत्तिविनाशभागित्वम् । श्री.

**कालपरिच्छेदराहित्यम्** - ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् । वा.

**कालपरीणामः** - ईश्वरस्य चेतनकर्मानुगुणप्रवृत्तिविशेषः । रा.

**कालयति** - वशीकरोति । भा.

**कालरात्रिः** - प्रलयकालोत्थितसर्वसंहारशक्तिः । रा. सर्वभूतापहारिणी काचन शक्तिः । रा.

**कालविप्रकर्षः** - भिन्नकालत्वम् । न्यासिटी.

**कालातीतः** - कालात्ययापदिष्टो हेत्वाभासः । न्याप.

**कालात्मा** - आकलनस्य वा आकलयितॄणां वा सर्वेषामात्मेति । सुबा. आदित्यादिक्षेत्रज्ञशरीरतया कालचक्रनिर्वाहकः । सुबा.

**कालात्ययापदिष्टः** - बाधितः, हेत्वाभासः । न्याप.

**कालात्ययापदेशः** - संशयकालमतीत्य व्यतिरेकनिश्चयकाले उपदिष्टहेतुः । श.

**कालान्तकौ** - यमस्य मूर्तिभेदौ । रा.

**कालापरिच्छेदः** - इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वम् । श्रु.तै. सर्वकालवृत्तित्वम् । न्यासिटी. सर्वकालव्यापित्वम् । भाव.

**कालापिनः** - केचन शाखिनः । श्रु.

**कालावच्छेदः** - इदमिदानीं, नान्यदेति । वे.

**कालिकपरत्वम्** - अधिकपरिस्पन्दवत्कालसंबन्धः । न्यासिटी.

**कालिका** - मेघसमूहः । रा. मेघपङ्क्तिः । दया. कालमेघः । 'कालिका तु नवाम्बुदः' इति वैजयन्ती । या.

**कालिकाः** - नीलवर्णाः स्त्रियः । पूतनाप्रमुखा इति यावत् । शक्तय इत्येके । रा.

**कालिकापरत्वम्**-न्यूनपरिस्पन्दवत्कालसम्बन्धः । न्यासिटी.

**कालिन्दी** - ध्रुवसन्धिनृपसुतभरतनृपपुत्रस्यासितस्य भार्या । रा.

**कालेयकः** - रक्तचन्दनवृक्षः । रा.

[**कालोत्तरसंहिता** - पाञ्चरात्रसंहिताविशेषः । सच्च.]

**काल्पनिकम्** - अपारमार्थिकम् । श्रु.

**काल्यम्** - प्रातः । रा. यथाकालप्राप्तम् । रा.

**काशः** - शुभ्रपुष्पदर्भविशेषः । रा. [शरत्कालविकासी तृणजातिविशेषः । या.]

**काशकुशावलंबनम्** - काशस्य कुशत्वेन कुशस्थानेऽवलंबनम् । अमुख्यमित्यर्थः । श्रु.

[**काश्मीरागमप्रामाण्यम्** - एकायनशाखाया अपौरुषेयत्वप्रतिपादनपरः ग्रन्थविशेषः । पाञ्च.]

**काष्ठा** - पञ्च क्षणाः । भा.

**काहलः** - कांस्यवादित्रविशेषः । पा. वाद्यविशेषः । पा.

## कि

**किम्** - सर्वेप्सितार्थसाधकबुभुत्सूनां निरुपाधिकप्रष्टव्यः । सह.

**किङ्करः** - स्वामिसभादेशापेक्षी तच्चोदितकरी । गद्य.

**किञ्चित्कारः** - व्यापारविशेषः । सर्वा (आ).

**किणः** - विरोपितव्रणसंरूढत्वक्। गरुद. [ज्याघातस्फोटद्यूतासिलतादिजन्यः शुष्कव्रणः। सच्च.]

[**किण्वम्** - सुराप्रकृतिद्रव्यम्। ई.]

**किण्वादिः** - यवाङ्कुरादिरिति केचित्। सर्वा (आ).

**किनाटम्** - दार्वस्थिभागादुद्गतवल्कः। बृ.

**किमर्थाः** - किंप्रयोजनाः। श्रु.

**किमुत** - किमु वक्तव्यम्। या.

**किराटाः** - वणिजः, संहत्यव्यापारिणः। भा.

**किरातकः** - स्वल्पशरीरः। 'पृश्निरल्पशरीरस्स्यात् किरातः' इति हलायुधः। रा.

**किरीटः** - मकुटविशेषः। "किरीटकरण्डिकाभेदेन द्विधा हि मकुटजातिः। तत्र किरीट उत्कृष्टधार्यः"। ता.

[**किलिकिञ्चितम्** - शुष्करुदितहासत्रासक्रोधभीत्यादीनां संकरः। या. कश्चित् रतिभावविकारः। "क्रोधाभिलाषहर्षादेः सङ्करः किलिकिञ्चितम्"। या.]

**किल्बिषम्** - संसारः। गी.

**किल्बिषत्वम्** - अपयशोरूपमालिन्यम्। रा.

**किशोरः** - अश्वबालकः। रा.

**किशोरी** - बालबडवा। रा.

**किष्किन्धा** - वालिपालिता नगरी। रा.

**किष्कुः** - चतुर्विंशत्यङ्गुलात्मको हस्तः। रा.

## की

**कीटः** - क्रिमिविशेषः। अति.

**कीदृग्विधम्** - अनीदृशम्। सुन्दर. अपरिच्छेद्यवैभवम्। सुन्दर.

**कीनाशः** - धर्मराजः। कर्षक इति वा। वेकौ.

**कीर्तनम्** - तत्तद्गुणविभवचेष्टितादिगर्भाणां तदसाधारणनामधेयानां सङ्कीर्तनम्। गीसं. भगवन्नामोच्चारणम्। वे.

**कीर्तिः** - औदार्यादिगुणनिमित्ता प्रथा। रा. ख्यातिः। बृ. दानादिजन्या प्रथा। त. विद्यैश्वर्यादिकृता प्रथा। श्रीसू. परत्वविषयप्रथा। श्रु. पराक्रमकृता प्रथा। रा. स्त्रीविशेषः। 'कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमे'त्युक्ताः स्त्रियः भगवच्छक्तयः। अन्यत्र तु तत्तदभिमानविशेषात्तत्तच्छब्दः। ("तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च") ता.

## कु

**कुक्षिः** - इक्ष्वाकुनृपपुत्रः। रा.

**कुञ्चिका** - अयः कुशीविशेषः। पा.

**कुञ्जः** - लतागृहम्। रा.

**कुटिका** - नदीविशेषः। रा.

**कुटिकोष्ठिका** - नदीविशेषः। रा.

**कुटीचकः** - स्वाश्रमधर्मप्रधानः। भा.

**कुटुम्बः** - गार्हस्थ्याश्रमः। भाव.

**कुट्टिमः** - निबद्धभूमिः। रा.

**कुण्डः** - जीवति भर्तरि जारजः। वि.

**कुण्डली** - यथोचितनित्यदिव्यभूषणः। सह.

**कुतः** - केन प्रमाणेन। छा.

**कुतपः** - दिवसस्याष्टमो मुहूर्तः। "मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः। रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः। पापं कुत्सितमित्याहुः तस्य सन्तापकारिणः। अष्टावपि यतस्तस्मात् कुतपा इति विश्रुताः"। वि.

**कुतर्कः** - प्रमाणरुद्धस्तर्कः। श्रु.

[आनुमानिकभ्रमहेतुः। र.]

**कुतर्काः** - प्रमाणविरुद्धा मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रान्ताः (तर्काः)। श्रु.

**कुत्सा** - जुगुप्सा। रा.

**कुथः** - चित्रकंबलः। रा.

**कुदृष्टयः** - असमीचीनन्यायवादिनो मृषावादिप्रभृतयः। वै.

**कुन्दः** - जितपूर्वपूर्वज्ञानवैराग्यादिभूमिकेभ्यः उत्तरोत्तरां परभक्ति परज्ञानादिभुवं ददातीति। अथवा (कुं) विदारितं पापं शोधयतीति। दैप् शोधने। सह. मुकुन्दः। 'कुन्दं माध्ये च कुन्दो ना निधिभेदमुरद्विषोः। या.

**कुन्दरः** - कुं मुक्तिभुवं ददातीति वा कुन्दकुसुमवन्नैर्मल्याद्वाकुन्दं परतत्त्वज्ञानम्। तत् राति ददातीति कुन्दरः। अथवा कुमिति निपातः। निपातनान्मान्तत्वम्। पापार्थो (र्थे?) निपातितः। पापं दारयतीति कुन्दरः। सह.

**कुपथः** - कुत्सितपथः। भाव.

**कुबेरः** - जगच्छरीरो भगवान्; कुः जगत् बेरं शरीरं यस्य सः। रा.

**कुमुदः** - कौ प्रकृतिमण्डल एव महात्मभिः सह मोदत इति। सह. प्राकृतमण्डलभूमिस्थभोक्तृभोजनकरणेन मोदवान्। सह.

[**कुभावः** - तात्पर्यभ्रमः। र.]

**कुम्बा** - चक्रस्य नाभिः। 'स्त्री नेमिर्ना प्रधिश्चक्रप्रान्ते कुम्बा तु नाभिका। अराः स्थितास्तयोर्मध्ये' इति वैजयन्ती। या.

**कुम्भः** - शिरःपिण्डः। सुन्दर. काम्यत इति, कौ क्षेत्रायतनादिलक्षणायां भूमौ भातीति वा। सह.

**कुम्भकः** - प्राणापानगत्योः रोधः। गी. वायोरूर्ध्वाधोगमननिवारणेन अवस्थापनम्। ता.

**कुम्भकम्** - वायोः स्थापनम्। वि. [पूर्णकुम्भवत् वायुग्रहणमोचने विना अचलतया स्थितिः। ई.]

**कुम्भघटः** - सूक्ष्मवदनो घटः। रा.

**कुम्भीनसी** - मधुभार्या राक्षसी रावणस्य धर्मतः स्वसा लवणासुरमाता। रा.

[**कुरुविन्दाः** - कुल्माषाख्याः ईषत्प्रभायुक्तधवळपाषाणखण्डविशेषाः। या.]

**कुरून्** - कर्तॄन्। छा.

**कुर्वत्त्वम्** - (कारणस्य) भाविकार्यानुगुणव्यापारवत्त्वम्। सर्वा.

**कुर्वीय** - करवाणि। बृ.

[**कुलटा** - जारिणी। र.]

**कुलम्** - गृहम्। ता. गृहम्। 'कुलमन्वय-संघाते गृहपर्याश्रमेष्वपी'ति(?) निघण्टुः। रा. यूथम्। रा.

**कुलत्रयम्** - कन्यासंबन्धि वंशत्रयम्। 'मातुः कुलं पितृकुलं यत्र चैव प्रदीयते' इत्युक्तम्। रा.

**कुलवान्** - क्षेत्रबीजशुद्धिमान्। रा.

[**कुलसमयः** - कुलसङ्केतः परश्चूडत्वादिः। र.]

**कुलायम्** - स्थूलशरीरम्। बृ.

**कुलाये** - नीडे। बृ.

**कुलिङ्गशकुनिः** - विदारितास्यसिंहदन्त-श्लिष्टमांसग्राही पक्षिविशेषः। दया.

**कुलिङ्गा** - नदीविशेषः। रा.

**कुलिशम्** - इन्द्रस्यायुधविशेषः। रा.

**कुलीनाः** - सत्कुलोत्पन्नाः। रा.

**कुल्माषः** - ईषत्पक्वमाषयावकादिः। वि. कुत्सितो माषः। ('कुल्माषादञि'ति निर्देशात् कुत्सितमाषार्थे कुल्माषशब्दस्य साधुत्वम्।) छा. माषविशेषः। श्रु.

**कुल्याः** - कुलक्रमागताः। भा.

**कुवलेशयः** - जीवनियन्ता। कौ कुत्सितं वा वलन्ते संसारे भ्राम्यन्तीति कुवलाः जीवाः देहेन्द्रियादीशाश्च (अभिमानात्) तान् तथा नियच्छन् यातीति। सह.

[**कुवासना** - कुबुद्धिरूपप्रत्यक्षभ्रमहेतुः। र.]

**कुवित्** - शश्वत्। तै.

**कुशः** - ज्येष्ठो रामपुत्रः कुशनिर्मृष्टतया तथाभिहितः। रा.

**कुशमुष्टिः** - लूनकुशानामग्रभागः (कुशाः)। रा.

[**कुशकाशावलम्बनन्यायः** - प्रवाहेण आकृष्यमाणस्य अत्यन्तासाधककुश-काशावलम्बनाशावत् इत्यर्थः। र.]

**कुशलम्** - इष्टरूपस्वर्गपुत्रपश्वन्नाद्यादि-फलम् (कर्म)। गी. देवार्चनादिमङ्गलाचर-णम्। तै. पुण्यम्। भा. भक्तितत्त्वज्ञानादि। व.

**कुशलाः** - आत्महिताहितविवेकिनः। भा. धर्मकाममोक्षाः। भा.

**कुशलानुशिष्टः** - कुशलेनाचार्येणानु-शिष्टः। भाव.

**कुशावती** - रामपुत्रस्य कुशस्य प्रधान-नगरी। रा.

**कुश्रिः** - वाजश्रवसो गौतमः। अग्नि.

**कुसुमोत्कचाः** - कुसुमोत्कटाः। रा.

**कुहकम्** - शाठ्यम्। इन्द्रजालादि वा। वि.

**कुहकाः** - क्रूराः। वि. [वञ्चकाः। या.]

**कुहना** - छद्म। सर्वा.

**कुहनायुक्तयः** - छद्मसम्बन्धिन्यो युक्तयः हेत्वाभासच्छलजातिरूपाः। सर्वा.

**कुहूः** - अङ्गिरसो भार्यायां स्मृतौ जाता। वि.

[**कुहेतुः** - अनुमाभ्रमः। र.]

## कू

**कूटः** - अयस्कारकूटसदृशः आयुध-विशेषः। रा. कपटव्यापारः। रा.

**कूटम्** - दृश्यमानगुणकमन्तर्दोषं वस्तु कूटम्। कूटरूपकम्। कूटसाक्ष्यम्, इत्यादौ कूटशब्दः प्रसिद्धो लोके। तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवत् मायाव्याकृताद्यनेकशब्दवाच्यतया ... प्रसिद्धं यत्, तत् कूटम्। गी. (शां).

**कूटस्थः** - निर्विकारः साधारणो वा। श्रु. देवाद्यवस्थासु अनुवर्तमानसर्वसाधारणज्ञानैकाकारात्मनि स्थितः। गी. कूटे तिष्ठतीति कूटस्थः, कूटशब्दः परिशुद्धात्मनि औपचारिकः। ता.

**कूटस्थम्** - 'कूटशब्दनिर्दिष्टमायाध्यक्षभूतम्। कूटवत् राशिवत् स्थितं वा। कूट इव निश्चलं वृद्धिक्षयादिरहितं वे'तिपरे। अनेकेषां संतन्यमानानां पुरुषाणां साधारणो हि पूर्वः पुरुषः कूटस्थः। तद्वत् साधारणत्वादात्मस्वरूपं कूटस्थम्, सर्वसाधारणम्, तत्तद्देवाद्यसाधारणाकारासंबद्धमित्यर्थः।

**कूटस्थत्वम्** - मायानिष्ठत्वम्, साधारण्यम्, निर्विकारत्वं वा। स्वयमविक्रियमाणस्यापि कूटस्य यथा स्वसंसर्गिणामयः प्रभृतीनां विकारहेतुत्वं तद्वत्। ता.

**कूटस्थाय** - स्वरूपतः स्वाभावतश्च निर्विकाराय। भा.

**कूटयोगिनः** - दांभिकयोगिनः। भा.

**कूटसाक्ष्यम्** - साक्ष्यं जानन्नप्यवदन् अन्यथा वदन् वा कूटसाक्षी। वि.

**कूटे** - आश्रये। भा.

**कूणिता** - मदेन संकुचिता (दृक्)। पा.

**कूणिताक्षः** - आकुञ्चितनयनः। रघु.

**कूबरः** - युगंधरः 'कूबरस्तु युगंधर' इत्यमरः। रा. युगंधराख्यकीलकविशेषः। पा.

**कूर्पदृशः** - सूक्ष्ममतयः। भा.

**कूर्मः** - उन्मीलनहेतुः, (प्राणभेदः)। सर्वा (आ).

**कूश्माण्डाः** - उपदेवभेदाः। वि. कूश्माण्डैर्जुहुयादित्यादिना विहितहोमः। नि.

## ए

**कृकलः** - (प्राणभेदः) क्षुधासाधनः। सर्वा (आ).

**कृच्छ्रम्** - एकभक्तेत्यादिना उक्तम्। नि. दुःखम्। रा.

**कृच्छ्रतरम्** - कष्टतरम्। रा.

**कृच्छ्री** - दुःखितः। छा.

**कृतः** - कृतनामधेयः द्यूतशास्त्रप्रसिद्धः चतुरंकः। भाव. कर्तुमिष्टः। रा.

**कृतम्** - उक्तम्। रा. उपकारः। रा. अच्यु. कर्म। कृतशब्दस्य भावार्थव्यक्त्यै कर्मणेति प्रतिपदम्। (नास्त्यकृतः कृतेन)। त. कर्म। श्रु.मु. कार्यम्। (कृताकृतादित्यत्र) भाव. चिन्तितम्। कृतिरनेकार्थः। रा.

[**कृतकम्** - भूर्भुवस्सुवर्लोकाः। ई.]

**कृतकर्मा** - कृतकृत्यः। रा. दुर्मार्गगामिविप्रलिप्सया स्वयमप्यनुष्ठिततदाचारः। म्रह.

[**कृतकाकृतकम्** - महोलोकः। ई.]

**कृतक्षणः** - कृतोत्सवः; लब्धावसरो वा। रा.

**कृतक्षणाः** - अवसरप्रतीक्षाः। रा.

**कृतघ्नत्वम्** - परमोपकारकेण कृतं अनन्तं अपकारं अपन्हुत्यापकारेष्वपि प्रवृत्तत्वम्। स्तो.

**कृतज्ञः** - अर्थिषु नियमानन्तरानुसारेण स्वकृतं तादात्विकप्रत्याख्यानमकृत्यवत् जानातीति। गद्य. विस्मृतयथोक्तनिरुपाधिकदास्यनिर्ममत्वानां अनाद्यविद्याध्यारोपितस्वातन्त्र्यप्रवृत्तानां संसारिणां कृतं सुकृतं आनुकूल्यलवं जानातीति। सह. सुकृतमेव जानातीति सः। सह. सिद्धान्तवेदी। रा.

**कृतज्ञत्वम्** - परकृतोपकारज्ञानवत्त्वम् (उपकारलेशमपि बहुमन्यत इति तात्पर्यम्) कदाचित् स्वकृतं आश्रितप्रार्थनाभङ्गं प्राप्तावसरे तदपेक्षितपूरणाय सानुशयज्ञानवत्त्वं वा शिरसा याचतस्तस्य न कृतं वचनं मयेति। स्तो. सकृदञ्जलिकर्तुरपि अनुबन्धिपर्यन्तसंरक्षणाय तत्कृतानुदर्शनम्। अवसरे संश्रितापेक्षितकरणाय स्वकृतप्रत्याख्यानानुदर्शित्वं वा। गद्य.

[**कृतत्वम्** - (कृतचक्रधारीत्यत्र) स्मृतिसिद्धप्रतिष्ठार्चनादिसंस्कारसंस्कृतत्वम्। (सच्च).]

**कृतधियः** - आपातप्रतीतार्थनिर्णयौपयिकविचारसमर्थाः। अधि.

**कृतनाशः** - विद्यमानध्वंसः। नीति.

**कृतबुद्धिः** - अवहितबुद्धिः। वि.

**कृतयुगम्** - देवमानेन चतुर्वर्षसहस्रसंख्याकं युगम्। य.

**कृतलक्षणः** - उपादेयलक्षणकर्ता। 'चक्रांकिताः प्रवेष्टव्या यावदागमनं मम। नामुद्रिताः प्रवेष्टव्याः यावदागमनं मम। सह.

**कृतवित्** - अनादिकालार्जितपुण्यपापवशान्नित्यसंसारिणं मां ब्रह्मानुभवयोग्यं कृतवानिति सदाचार्ये कृतज्ञतावान्। न्यावि.[कृतं उपकारं वेत्तीति कृतवित्। र.]

**कृतविप्रणाशः** - कृतस्य जन्मान्तरानुभाव्यफलार्थमनुष्ठितस्य यागादेः विप्रणाशः निष्फलत्वम्। रत्न. विनापि प्रायश्चितं स्वकृतकर्मणः फलोपभोगाभावः।

**कृताकृतः** - क्रियमाणः। श्रु. द्वौचधर्मौ संसारस्य प्रवर्तको निवर्तकश्च तत्र प्रवर्तकस्य अनित्यफलप्रदत्वेनोपचारात् कृतः, निवर्तकस्य नित्यफलप्रदत्वेन अकृतश्चेति स एव। सह.

**कृताकृतम्** - क्रियमाणम्। श्रु.

**कृतागमः** - कृतः प्रणीतः आगमः बुद्धार्हतादिसामयिकशास्त्रमनेनेति। सह. नानाशास्त्रव्यञ्जकः। सह.

**कृतात्मनः** - पूर्णस्य। भा.

**कृतात्मा** - कृतकृत्यात्मा। भाव. कृतार्थात्मा। छा. योगी। रा. शिक्षितमनस्कः। रा. सुशिक्षितबुद्धिः। रा.

**कृतात्मानः** - लब्धात्मसत्ताकाः। मु.

**कृतान्तः** - ईश्वरः। रा. दैवम्। रा. निर्णयः।

गी. अन्तशब्दो निश्चयपरतया नैघण्टुकैः पठितः । स एव बुद्धिपूर्वसम्पादिततया कृतशब्देन विशेष्यत इत्यभिप्रायः । सिद्धान्तः तत्तदभ्युपगतार्थः । ता. प्राक्तना-दृष्टम् । रा.

**कृतान्तकृत्** - कृतान्तं अन्तकाभं हिरण्याक्षं कृतवान् । वाराहस्मृतिपुराणयोः स्वसिद्धान्तकरणाद्वा । सह.

**कृतायविजिताय** - कृतनामा अयः द्यूतसमयप्रसिद्धश्चतुरङ्कादयः तत्र विजितं जयो यस्य सः अथवा विजितं विजयः तस्मा इत्यर्थः । छा.

**कृतार्थः** - निष्पन्नसर्वपुरुषार्थः । रा. निष्पन्नधनः । रा. [पूर्णमनोरथः । या.]

**कृतार्थभावः** - चेतस्तृप्तिः । या.

**कृतास्त्रः** - शिक्षितास्त्रः । रा.

**कृतिः** - उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसन्धाने मनसो नियमनरूपा। छा. संसारिणां सुकृतं प्रसन्नादेवास्मात् क्रियत इति । सह.

**कृतित्वम्** - आश्रितकार्यपरिपूरणेन कृतकृत्यत्वम् । अष्ट. उपकर्तृत्वम् आश्रितरक्षणेन कृतकृत्यत्वं वा । विहितकर्तव्यनिरपेक्षत्वं वा धर्मसंस्थापकानुष्ठानत्वं वा । आदिकर्मणि क्तः, कृतं कर्तव्यत्वेनोपक्रान्तं, आश्रितानां यद्धितं तत्सर्वं पूर्वमेवानेन प्रयोजककर्त्रा प्रारब्धमित्यर्थः । स्वेन कृतं परोपकारं प्रत्यपि स्वस्यैव शेषित्वं वा । गद्य. साक्षात्कर्तृव्यापारत्वम् । नि.

**कृती** - उचितकारी। अधि. स्वार्थकर्तव्यविशेषरहितः "न मे पार्थास्ति कर्तव्य"मिति। उपकारवान्वा धर्मप्रवर्तनार्थम् अनुष्ठानवान्वा । स्तो.

**कृत्तः** - विश्लिष्टः । भाव.

**कृत्यम्** - कर्तव्यकार्यम् । रा. कर्तुं योग्यम् । रा.

**कृत्यधीनात्मलाभत्वम्** - कृतिसाध्यत्वम् । वा.

**कृत्याः** - भेद्याः, "अलब्धवेतनो लुब्धो मानीचात्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात् तथा भीतश्च भीषित ।।" इति नीतिशास्त्ररीत्या । वि.

**कृत्याकरणम्** - स्ववर्णादिनियतधर्मस्य प्राप्तकाले शक्तेनाननुष्ठानम् । गद्य.

**कृत्युद्देश्यम्** - कृतिप्रयोजनम् । नीति.

[**कृत्रिमम्** - कारणेन निर्वृत्तम् । या.]

**कृत्रिमारिः** - कृतापकारः । वि.

**कृत्वा** - उपक्रम्य । बृ. **मत्वा** । 'इति कृत्वा इति मत्वेत्यर्थः' । ता.

**कृद्युक्तत्वम्** - कृदन्तप्रतिपाद्यार्थान्वितस्वार्थबोधकत्वम् । वा.

**कृपणः** - दीनः । रा. शोच्यः । बृ. संसारी । गी.

**कृपा** - आन्तरो विषादः । ता. अत्र कृपा स्वार्थनिरपेक्षता परदुःखासहिष्णुता च द्विधेति सूचिता । वै. परदुःखासहिष्णुता । रा. स्वार्थनिरपेक्षत्वे सति परदुःखासहिष्णुत्वम् । न्यावि.

**कृपालुः** - स्वार्थनिरपेक्षपरदुःखासहिष्णुः स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षुर्वा । भा.

**कृशः** - तूलानिलाद्यतिशायिना लघिम्ना सर्वत्राव्याहतगत्वरः । सह.

**कृशानुः** - सूर्यः । अति.

**कृशाश्वः** - प्रजापतिष्वेकः । रा.

**कृषिः** - सस्योत्पादनं कर्षणम् । गी. रूढिं व्युत्पत्तिं चानुसृत्य फलतः स्वरूपतश्च कृषिं दर्शयति - सस्यो .... णमिति । ता.

[प्रयत्नः । ई.]

**कृष्टपच्यम्** - कृष्यादिनिष्पन्नं अन्नम् । भा.

**कृष्णः** - आश्रितसंसारकर्षणादिभिः कृष्णः । 'कृषिर्भूवाचकशब्दो णश्च निर्वृतिवाचकः' । ता. कर्षतीति कृष्णः भक्तदुःखकर्षकः । ता. कर्षति कृषतीति वा एकान्तलीलारसतो नितान्तं निर्वृतो भवतीति । "कृषिर्भूवाचकशब्दो णश्च निर्वृतिवाचकः" सह. भूकर्षकः । सह. भूनिर्वृतिहेतुः । "कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः" इति निर्वचनात् । रा. निर्वृतिहेतुः । 'कृषिर्भूवाचकशब्दो णश्च निर्वृतिवाचकः' । ता. सर्वलोककर्षणकर्ता तथाच "कृषिर्भूवाचकः शब्दो णश्च निर्वृति वाचकः" इत्यादि । स्तो.

[**कृष्णद्वैविध्यम्** - नीलं श्याममिति । श्यामं विष्णुक्रान्तादि । पाञ्च.]

**कृष्णम्** - तमोगुणमयम् । भा.

[**कृष्णमन्त्रकल्पः** - कुण्ठिनमहर्षिप्रोक्तो ग्रन्थविशेषः । सच्च.]

**कृष्णपिङ्गलम्** - कृष्णापिङ्गलवर्णवान् भगवद्विग्रहस्य अतसीपुष्पसङ्काशतया प्रतिपादनात् अतसीपुष्पस्य मयूरग्रीवासदृशतया कृष्णपिङ्गलवर्णत्वात् कृष्णपिङ्गलत्वोपपत्तिः । तै. लक्ष्मीशोभासंप्रयुक्ततया कृष्णपिङ्गलम् । तै.

**कृष्णागतिः** - धूमादिका । अत्र कृष्णपक्षान्वयाद्वा, अशुद्धिविवक्षया वा अभिमन्तृस्वरूपस्याभिमन्तव्ये आरोपादेर्वा गतेः कृष्णत्वम् । ता.

**कृसरः** - तिलौदनः । रा.

**क्लृप्तिः** - व्याकरणम् । श्री. सृष्टिः । अधि.

## के

**केतकः** - वृक्षविशेषः । रा.

**केतनम्** - आमन्त्रणम् । वि. स्थानम् । वि.

**केतवः** - प्रज्ञारूपाः । वि.

**केदारिका** - उत्पत्तिभूमिः । नि.

**केयूरम्** - भुजशिरोव्यापिफणाकारशिखरयुक्तं बाहुभूषणम् । रा.

**केवलः** - उदासीनः, फलाभिसंधिपूर्वककर्तृत्वाभाववान् । श्वे. तादात्विकस्वयत्ननिरपेक्षः । गद्य.

**केवलम्** - अद्वितीयम् । रा. कृत्स्नम् । रा. सत्त्वादिगुणरहितम् । (कापिले) भा.

**केवलगुणिचिन्तनम्** - आनन्दत्वादिविशिष्टस्वरूपचिन्तनम् । श्रु.

**केवलान्वयी** - अत्यन्ताभावाप्रतियोगी । च.

**केशवः** - "क इति ब्रह्मणो नाम" इति निरुक्त्या ब्रह्मरुद्रोत्पादकः। स्तो. "क इति ब्रह्मणोनाम ईशोऽहं सर्वदेहिनाम् आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान्" "ब्रह्मेशरक्षकत्वादिभिः केशवः"। ता. परमात्मा। "क इति ब्रह्मणोनाम" इत्युक्तेः। वेकौ. "क इति ब्रह्मणोनाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्"। मधुरावाराणसीक्षेत्रद्वय-निकायः क्लेशापहो देवः केशवशब्दोदा-हृतः आर्षनिर्वचनात्। कः ब्रह्मा च ईशश्च केशौ द्वन्द्वः तावङ्गभूतावस्य स्त इति वा, यतस्तौ अस्मात् सम्भविष्यतः ततः केशौ वसतः अस्मिन्निति वा, वक्ष्यते च निर्वचनान्तरं तदनुरोधात् केशिनमवति हिनस्तीति वा। सह. प्रशस्तस्निग्धनीलकु-टिलकुन्तलः। सह. [केशिवधोपलक्षित-सर्वदुष्टदमनस्वभावः। केश (व) शब्देन "अंशवो ये प्रकाशान्ते" "यदादित्य गतं तेजः" इत्याद्युक्ता अंशव उच्यन्ते। तद्वत्त्वात् केशवः। पाञ्च.]

**केशान्तः** - केशयोः ब्रह्मरुद्रयोः अन्तः। अन्तो द्र.तै. ब्रह्मरुद्रयोः कारणभूतः। तै.

**केशिकाचार्याः** - रागविशेषे आचार्या विद्याधरविशेषाः। रा.

**केशिनी** - ग्रामविशेषः। रा. नदीविशेषः। रा.

**केशिहा** - केशिनामकासुरहन्ता। सह.

**केशौ** - तेजसी। "सूर्यस्य तपतो लोकान् अग्नेः सोमस्य चोभयोः। अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः। वि.

**केसरी** - हनुमन्मातुरञ्जनया भर्ता वानरोत्तमः। रा.

## कै

**कैकयः** - केकयस्यापत्यम् (अश्वपतिः)। छा.

**कैकेयः** - कैकेयोऽयमश्वपतिः क्षत्रियः कैकय उक्तः छान्दोग्ये केकयस्यापत्यं कैकयः इति। छा. अत नामद्वयश्रवणात् दशरथपत्न्यपि कैकेयी कैकयीति द्वेधा ख्यायते। अग्नि.

**कैङ्कर्यम्** - किंकरस्य वृत्तिः। गद्य.

**कैलासः** - कुबेरावासगिरिः। रा.

**कैवर्तः** - धीवरवृत्तिः। वि.

**कैवर्तकः** - धीवरः। रा.

**कैवल्यम्** - अपरिग्रहत्व। भा. आत्यन्तिकदुःखप्रशमनम्। भाव. चेतनरूपात्मतत्त्वानुभवः। गीसं. प्रकृति-वियुक्तात्मानुभवः। य. प्रकृतिसम्बन्ध-राहित्यम्। भा. मोक्षः। श्रु. सूक्ष्माचित्संसर्गवतैवात्मना स्वानन्द-मात्रानुभवः। न्यासि. स्वरूपविशेषः। श.

**कैवल्यपतये** - कैवल्यं प्रकृतिसंबन्धरा-हित्यं मोक्षः इति यावत्। तस्य पतिः तस्मै मोक्षप्रदाय, अनेन मुक्तनित्यजीवव्यावृत्तिः। भा.

**कैवल्यमोक्षः** - दुःखहेतुभूतदेहेन्द्रियाद्य-

त्यन्तविलयात् मोक्षपदवाच्यं कैवल्यम् । न्यासि.

**कैवल्यस्थानम्** - योगिनाममृतं स्थानं स्वात्मसंतोषकारिणामित्युक्तम् । रत्न.

**कैवल्ये** - आत्मनि । केवल एव कैवल्यः आत्मा । भा.

**कैशिकी** - इन्द्रसम्बन्धिनी श्रीः । रा.

## को

**कोटीरः** - शिरोभूषणविशेषः । रा.

**कोटीरम्** - किरीटम् । पा.

**कोणः** - वादनदण्डः । रा. [वीणादि-वादनदण्डः । या.]

**कोमलगण्डः** - सुकुमारकपोलः । स्तो.

**कोरदूषः** - कोद्रवः । वि.

**कोलम्** - विभीतकफलम् । छा.

**कोलाहलः** - निरर्थकशब्दसमूहः । च.

**कोविदारः** - वृक्षविशेषः । रा.

**कोविदारध्वजः** - इक्ष्वाकुवंश्यानां ध्वजविशेषः । रा.

**कोशः** - गुप्तप्रदेशः । पा. निधानस्थानम् । तै. स्थानम् । सुबा.

## कौ

[**कौतुकम्** - हर्षः प्रतिसरसूत्रम् । या.]

**क्रोडीकारः** - अङ्गीकारः । सच्च.

**कौतस्कुताः** - कुतः कुत इति वदन्तः । कुयुक्तिमात्रैकशरणाः । वै. तार्किकाः । सर्वा.

**कौतुकमंगलम्** - कौतुकहेतुभूतमङ्गला-चरणम् उत्सवार्थमङ्गलानुष्ठानं वा । रा.

**कौली** - कुलक्रमागता । रा.

**कौलीनम्** - लोकवादः । रा.

**कौलेयकाः** - श्वान; श्वोपजीविनो म्लेच्छाः । श्रु.

**कौशाम्बरम्** - कौशेयवस्त्रम् । रा.

## क्र

**क्रकचकः** - करपत्राख्यः खड्गविशेषः । सुन्दर.

**क्रतुः** - अध्यवसायः । बृ. उपासनम् । न्यासिटी. ब्रह्मोपासनम् । छा. सङ्कल्पः । 'क्रतू अध्वरसङ्कल्पौ' इति वैजयन्ती । या. सप्तसोमसंस्थाराध्यः । सह. अग्निष्टोमादि-सप्तसोमसंस्थैः क्रियते इति (आराध्यः) क्रतुः । नि.

**क्रतुमयः** - उपासनप्रचुरः । भाव. (क्रतुप्रधानः) उपासन प्रधानः । छा.

**क्रथितम्** - भिन्नम् । सुन्दर.

**क्रमः** - अङ्गाङ्गिभावेनोपयोगः । अधि. अनुष्ठानम् । नि. आनन्तर्यम् । श्री. ईदृश्या नित्यविभूत्या क्रमते स्फीतो भवतीति । सह. क्रमिकता; व्यक्ताक्षरत्वम् । रा. चरणविक्षेपः, शक्तिः । शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः । इति नानार्थरत्नमा-लायाम् । पा. पारम्पर्यम् । वि.

**क्रमप्रमाणानि** - श्रुत्यर्थपाठप्रवृत्तिमुख्य-काण्डाः । श्रु.

**क्रममुक्तिः** - भोगानामनुभवेन विलम्बेन मोक्षः । त.

**क्रव्यात्** - आममांसभक्षः । या.

## क्रि

**क्रिमि** - खातशरीरम्। ई.

**क्रिमिभोजनः** - यातनाविशेषः, क्रिमिभिः भुज्यन्ते यत्र सः। वि.

**क्रिमिशः** - क्रिमिषु शीयते यत्र सः। (यातनाविशेषः)। वि.

**क्रियमाणः** - आनुकूल्यसंकल्पादिमत्त्वेऽपि देशकालादिवैगुण्यात् पूर्वनियुक्तदूरस्थदुर्निवारभृत्यादिमुखेन वा उपक्रान्तोऽपरिसमाप्तश्च।

**क्रिया** - कर्मयोगः। गद्य. वर. जात्यनुप्राणितस्य विशेषकः साध्यो धर्मविशेषः। न्यासि. पञ्चमहायज्ञाद्यनुष्ठानम्। (विवेकविमोकेत्यत्र) श्री.य. लीलासङ्कल्पः। 'क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे। आरम्भोपायशिक्षासु चिकित्सानिष्कृतिष्वपि' इति विश्वः। पा.

**क्रियाकल्पः** - क्रियाप्रयोगप्रतिपादकं कल्पसूत्रम्। रा.

**क्रियाकार्यम्** - क्रियारूपं कार्यम्। भाव.

**क्रियागुणाः** - संसारहेतुगुणाः। श्रु.

**क्रियागुणैः** - यागादिक्रियालक्षणैर्गुणैः। श्वे.

**क्रियाद्वैतम्** - परेब्रह्मणि मनोवाक्कायैः सर्वकर्मसमर्पणम्। भा.

**क्रियाभियोगः** - कार्योद्योगः। रा.

**क्रियावञ्चनम्** - प्रहेलिकाप्रभेदः। पा.

**क्रियावान्** - अननुसंहितफलक्रियानुष्ठानशाली। मु.

**क्रियासमभिहारः** - पौनःपुन्यम्। त. पौनःपुन्यं भृशार्थो वा।

**क्रियोत्तीर्णम्** - क्रियाव्यतिरिक्तम्। भाव.

## क्री

**क्रीडा** - उद्यानादिजन्या प्रीतिः। श्रु.छा. प्रीतिविशेषप्रभवः स्वयंप्रियो व्यापारः। सर्वा.

**क्रूरः** - क्रूरकर्मा। रा.

## क्रो

**क्रोडः** - भुजान्तरम्। रा.

[**क्रोडीकारः** - अङ्गीकारः। सच्च.]

**क्रोधः** - असहिष्णुता। भा. प्रियविश्लेषाप्रियागमनहेतुभूतचेतनान्तरगतदुःखहेतुभूतस्वमनोविकारः। गी. क्रोधलक्षणे प्रियविश्लेषादिः त्रैकालिकः सर्वत्र क्रोधोत्पत्तिदर्शनात्। अचेतनेषु वातातपकण्टकादिषु बाधकेष्वपि क्रोधाभावात् चेतनेत्युक्तम्। यस्तून्मत्तः तत्रापि कुप्यति सोपि चेतनत्वाध्यवसायेन। अन्तरशब्देन स्वदुःखहेतुस्वमनोविकारव्यावर्तनम्। स हि तथाविधो निर्वेदरूपः स्यात्। क्रोधादात्महननाद्यपि परपीडाभिसन्धिगर्भम्। मनोविकारोत्र रजस्तमस्समुन्मेषकृतः व्यापारविशेषः। तदधीनो ज्ञानविशेष इह तच्छब्देनोपचर्यते। ता. कामविरोधे सति तदसहिष्णुतारूपश्चित्तविकारः। भा. विषयविरोधिषु निरसनेच्छा। ता. [परपीडाफलचित्तविकारः। परपीडाकरचित्तविकारः। र.]

**क्रोधकृत्** - (भार्गवो रामो ध्वन्यते) पूर्वं नरपतिभ्यः क्रोधं करोतीति। सह.

**क्रोधहा** - (अत्र भार्गवो रामो ध्वन्यते) (क्रोधं हन्तिस्मेति क्रोधहा) त्रिस्सप्तवारं नरपतिनिरासकरं क्रोधं काश्यपप्रार्थनामात्रेण हतवान् इति। सह.

**क्रोधागारम्** - प्रणयकलहादिना क्रुद्धाः स्त्रियो यत्र वसन्ति तत् क्रोधागारम्। रा.

**क्रोशः** - निरक्षरध्वनिः। रा.

## क्रौ

**क्रौञ्चः** - क्रौञ्चद्वीपस्थो गिरिः। वि.

**क्रौञ्चम्** - क्रौञ्चपक्षिनादसमं गानम्। छा.

## क्लि

**क्लिन्नम्** - आर्द्रम्। रा.

## क्ली

[**क्लीबः** - नपुंसकः। र.]

## क्ले

**क्लेदनम्** - आर्द्रीकरणम्। भा.

**क्लेशः** - पारलौकिकदुःखम्। रा.

**क्लेशाः** - अविद्यास्मितादयः पञ्च। ता. अविद्यास्मितारागद्वेषाभिनिवेशाः। गद्य. श्रु. स्तो.

## क्लो

**क्लोमानः** - हृदयस्य अधः प्रदेशवर्ती उत्तरमांसखण्डः। बृ. क्लोमान इति एकस्मिन् व्यत्ययात् बहुवचनम्।

## क्व

**क्वणः** - गीतम्। अति.

**क्वनु** - कस्मिन् देशे। बृ.

## क्ष

**क्षणः** - क्षणिकपदार्थः। (बौद्धमते) श्रु. कालविशेषः। अल्पकालः। या. त्रयो निमेषाः। भा. वस्तु। (बौद्धमते) सर्वा (आ). स्वलक्षणं वस्तु। (सौगतमते) सर्वा (आ).

**क्षणभङ्गः** - स्वोत्पत्तिद्वितीयक्षणवृत्तिध्वंसप्रतियोगी। श.

**क्षणिकत्वम्** - (वस्तूनां) अपूर्वोत्तरत्वम्। सर्वा. उत्पत्त्यनन्तरक्षणविनाशित्वम्। (सौगतमते) सर्वा (आ).

**क्षत्ता** - द्वास्थः, सारथिर्वा। वि. राजान्तःपुररक्षकः प्रतिलोमजातिविशेषः। (वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते। जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम्। छा.

**क्षत्रम्** - क्षत्रियम्। बृ. प्राणः "त्रायते हैनं प्राणः क्षणितोरिति" इति निर्वचनम् "क्षणु हिंसाया"मित्यस्मात् "इन् सर्वधातुभ्य" इति इन्। क्षणिः हिंसा। तस्मात् पञ्चम्यर्थे तोसुन् प्रत्ययः। हिंसातः त्रायते ह्येनं प्राण इत्यर्थः। शस्त्रादिहिंसायामपि प्राणसद्भावे पुनर्मांसेन पूर्णं भवतीत्यर्थः। बृ. अचरम्। (कठवल्यां) वेकौ.

**क्षत्रधर्मः** - रौद्रशाठ्यसहितक्षत्रियधर्मः।

'क्षत्रधर्मो महारौद्रः शठकृत्य इति स्मृत' इति महाभारते राजधर्मे । रा.

**क्षत्रबन्धवः** - क्षत्रियाः । क्षत्रेण वर्णेन बध्यन्त इति । भा..

**क्षत्रविद्या** - धनुर्वेदः । छा.

**क्षत्राणि** - क्षत्रियाणि ।

**क्षत्रियत्वम्** - उद्रिक्तरजोगुणवत्त्वम् । रत्न.

**क्षत्रियपांसनाः** - क्षत्रियाधमाः । रा.

**क्षत्रियमधस्तात्** - क्षत्रियस्याधस्तात् "ततोन्यत्रापि दृश्यते" इति द्वितीया । बृ.

**क्षन्ता** - अपराधसहिष्णुः । सुन्दर.

**क्षपणकाः** - जैनाः । अधि.

**क्षमः** - निखिलभारसहनवान् । "क्षमूष् सहने" पचाद्यच् । संह.

**क्षमम्** - अभ्युदयसाधनम् । रा. हितम् । रा.

**क्षमा** - अपराधसहनम् । रा. अपराधसहिष्णुता । रा. दुःखसहिष्णुत्वम् । वे. दुस्सहविविधापराधमर्षणम् । भू. "क्षमा द्वन्द्वसहिष्णुता" । भाव. मनोविकारहेतौ आक्रोशताडनादौ सत्यप्यविकृतमनस्त्वम् । गी. मणिमन्त्रादिभिः स्फोटसामग्र्या इव प्रबलविवेकेन कोपसामग्र्याः दुर्निवारायाः स्तम्भनम् । ता. निग्रहनिवृत्तिरूपः प्रसादविशेषः । [परनिमित्तपीडानुभवेऽपि परेषु चित्तविकाररहितता । र.]

**क्षमिणां वरः** - गजेन्द्रदर्शनेन धृतात्मतया क्षमिणां तितिक्षूणां वरः । सह.

**क्षमी** - असह्यापराधसहनशीलः । वर.

**क्षयः** - कर्मणि क्रियमाणेऽर्थविनाशः । गी. गृहम् । रा. प्रळयः । सुन्दर.

**क्षरम्** - अचिद्वर्गम् । "क्षरं प्रधानम्" इति । श्वे. "क्षरमतीत" इति तत्स्वभावगन्धानाघ्रातत्वमुच्यते । ता.

**क्षरः** - क्षरणस्वभावः । गी. नश्वरः । ता. जीवशब्दाभिलपनीयब्रह्मादिस्तंबपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि । गी.

**क्षरन्ति** - निष्पादयन्ति । तै.

## क्षा

**क्षात्रम्** - क्षत्रधर्मः । रा.

**क्षात्रधर्मः** - दुष्टनिग्रहपूर्वकप्रजापालनरूपधर्मः । रा.

**क्षान्तिः** - अक्रोधः । भा. परैः पीड्यमानस्याप्यविकृतचित्तता । भा.गी. शिक्षणक्षमस्यापि आगसः सहिष्णुता । वर. सापराधजनसहिष्णुता । भा.

**क्षामः** - अवान्तरक्षये नक्षत्रान्तरैः क्षीणः । सह. स्वयोगाभिमुख्यमात्रेण योगभ्रष्टा अपि दुर्गं तरितुं क्षमन्तेऽस्मादिति । सह.

**क्षारम्** - लवणादि । वि.

**क्षितिक्षमावान्** - क्षमया पृथिवीसम इत्युक्तरीत्या पञ्चाशत्कोटिविस्तीर्णायाः पृथिव्या यावती क्षमा तावती तवैकस्यास्तीति भावः । नित्ययोगे मतुप् । रा.

**क्षितीशः** - सर्वेशत्वेऽपि आर्तिभूयिष्ठत्वात् भूयिष्ठं भूमेरीशः । सह.

**क्षीयते** - नश्यति । बृ.

**क्षीरी** - अश्वत्थोदुम्बरादिः । रा.

**क्षुत्** - अन्नेच्छा । श्रीसू.

**क्षुद्रः** - अकिञ्चनः । सुन्दर. उपायदारिद्र्य-हेयपुरुषार्थकार्पण्यादियुक्तः । स्तो. क्षुद्र-कर्मकारी । रा. क्षुद्रपुरुषार्थतृप्तः । सुन्दर. दुष्टः। रा.

**क्षुद्रशीलः** - नीचस्वभावः । रा.

**क्षुपः** - ह्रस्वशाखाशिफायुक्तो वृक्षविशेषः । रा.

**क्षुभ्यन्तः** - न्यायापरामर्शनिबन्धन-मिथ्यादर्शनवन्तः । च.

**क्षुरधानम्** - क्षुरकोशः । क्षुरो धीयते अस्मिन्निति । बृ. क्षुरो धीयतेऽस्मिन्निति क्षुरधानं क्षुरकोशः । कौ.

**क्षेत्रम्** - प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धम् इन्द्रियाश्रयभूतम् इच्छाद्वेषसुखदुःखविकारि भूतसंघातरूपं चेतनसुखदुःखोपभोगाधार-त्वप्रयोजनम् । गी. पृथिव्यादिसङ्घातः । गी. भूतसङ्घातः । ता. शरीरम् । श्रु.

**क्षेत्रज्ञः** - अवयवशः सङ्घातरूपेण च य एतत् क्षेत्रं वेत्ति सः । गी. 'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभेतानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इत्युक्तोऽ-न्तरात्मा । सुबा. क्षेत्रं जानातीति; परमात्मा । श्रु. क्षेत्रज्ञोऽक्षर एव चेति विष्णुसहस्रनाम-पाठोऽप्यत्रोपोद्बलकः । जीवः । भाव. जीवात्मा । सुबा. विपश्चिद्भ्यो मुक्तेभ्यः स्वानुभवं दातुं तदेकान्तं क्षेत्रं जानातीति । सूर. वासुदेवः । च. वेकौ.

**क्षेत्रज्ञशक्तिः** - बद्धात्मरूपा शक्तिः । रत्न.

[**क्षेत्रमाहात्म्यम्** - भगवत्क्षेत्रप्रभाव-प्रतिपादकः श्रीवराहपुराणान्तर्गतो भागः । सच्च.]

**क्षेत्रिभावः** - त्रिगुणात्मकप्रकृतिद्रव्यमय-शरीरवर्तित्वम् । अधि.

**क्षेमः** - प्राप्तस्य परिरक्षणम् । गी. लब्धर-क्षणम् । या. लब्धस्य परिपालनम् । वेकौ. पा.रघु.रा. श्रुतस्यार्थस्य धारणम्, अनुष्ठानं, सत्पात्रे प्रतिपादनं वा । दया. शान्तेः पुत्रः । वि.

**क्षेमम्** - पारत्रिकं सुखम् । मुक्तिम् । भा.

**क्षेमकृत्** - निवृत्तानां ज्ञानादिसंकोचनवि-मोचनं क्षेमं करोतीति । सह.

**क्षेमप्रापणम्** - मोक्षः । श्रु.

**क्षेमशूराः** - गृहशूराः । भा.

**क्षेमाणाम्** - सात्त्विकान्नादीनाम् । भा.

**क्षोणीध्रः** - पर्वतः । वर.

**क्षोदीयान्** - अतिक्षुद्रः । अति.वै.श्रीस्त.

**क्षोभः** - विकारः । वै.

**क्षोभणः** - वन्धनार्हानन्यान् बन्धनीं च प्रकृतिं क्षोभयति चालयतीति । सह.

**क्ष्वेलमानः** - सिंहनादं कुर्वन् । वि.

**क्ष्वेल्या** - नर्मणा । भा.

## ख

**खम्** - अपरिच्छिन्नम् । बृ. इन्द्रियम् । क.सि.

[**खंजः** - एकपादविकलः । र.]

**खड्गः** - आयुधविशेषः । रा.
**खण्डपरशुः** - गिरीशः । रघु. रौद्रसंग्रामखण्डनपरशुकः । सह.
**खनित्रम्** - मूलकन्दखननसाधनं कुद्दालादि । रा.
**खरे** - घोरे । म.
**खर्वटम्** - एकतो यत्र तु ग्रामो नगरं चैकतस्स्थितम् । मिश्रन्तु खर्वटं नाम नदीगिरिसमाश्रितम् । वि.
**खर्वाटः** - खलतिः । वि.
**खलः** - परोद्वेजकः । भा.
**खलकुलः** - कुळुत्थः । बृ.
**खलु** - प्रसिद्धम् । बृ.
[**खिन्नवृत्तिः** - वृत्तिकृशः । पाञ्च.]
**खिलम्** - असमर्थम् । भा.
[**खिलानि** - कार्त्स्न्येनानुपलब्धानि प्रकीर्णानि श्रुतिवाक्यानि । सच्च.]
**खेदः** - परदुःखदुःखित्वम् । दया.
**खेलम्** - सुन्दरम् । या.
**खेलगतिः** - खेला सविलासा गतिर्यस्याः सा । या.
**ख्यातयशस्त्वम्** - यद्वंशोधीत्य वेदान् इत्याद्युक्तप्रकारेण अनुकूलप्रतिकूलरूपसर्वजनप्रसिद्धकीर्तित्वम् । स्तो.
**ख्यातिः** - उत्तरप्रतीतिविषयः । नीति. पूर्वज्ञानवासना । वि.

## ग

**गकारार्थः** - (भगवानित्यत्र) नेता गमयिता स्रष्टा गकारार्थस्ततः स्मृतः । वेकौ.
**गगनम्** - गगनवदपरिच्छेद्यम् (ब्रह्म) ।तै.
**गजपुष्पी** - नागपुष्पी नाम लता । रा.
**गणः** - परिवारः । रा. बन्धुवर्गः । बृ.
**गणनम्** - व्यवहारः । अति.
**गणनाथतल्लजाः** - कुमुदकुमुदाक्षादयः । सुन्दर.
**गणशः** - गणरूपेण । बृ. संघशः । रा.
**गण्डशैलः** - स्थूलोपलः । सुन्दर.
**गतम्** - गमनम् । रा.
**गतचेतः** - कर्तव्याकर्तव्यमूढमनः । रा.
**गतचेताः** - दुखितः । रा.
**गतभीत्त्वम्** - विरोधिभूयस्त्वदर्शनजनितभयरहितत्वम् । स्तो.
**गतयः** - सिद्धयः । रा.
**गतरसम्** - त्यक्तस्वाभाविकरसम् । गी.
**गतिः** - अयनम्; प्राप्यमित्यर्थः । छा. उपायः । रा. गद्य. कीर्तिः । रा. गन्तव्यः । ता. गम्यत इति गतिः प्राप्यमित्यर्थः । रा. प्राप्यः । सह.गी.श. प्रम्यः परमात्मा । वेकौ. प्राप्यम् । श्रु. परमप्राप्यम् । रा. गम्यत इति गतिः, प्राप्यस्थानम् । गी. प्राप्यस्थानम्, 'गतिर्भर्ता प्रभुस्साक्षी'ति । मार्गः, 'शुक्लकृष्णे गती ह्येते' इति । गी. परायणम् । रा. प्रकारः । अधि. प्रवृत्तिः । श्रु. बुद्धिः । या. रक्षकः । रा. गम्यत इति । लोकः । रा. शरणम् । रा. सुखम् । रा. [उपेयः । ज्ञानम् (प्रपदननिदिध्यासनगती) । र.]
**गतिम्** - उपायभूतम् । स्वरूपम् । भा.

**गतिसत्तमः** - धर्मप्रत्ययिततमः । सह.

[**गतिसामान्यन्यायः** - "गति-सामान्यात्" इति सूत्रोक्तः सर्वोपनिषद्वाक्यानां गतेः प्रतिपादनप्रक्रियायाः साम्यात् इत्येवंपरा न्यायः । सच्च.]

**गतिसामान्यम्** - प्रवृत्तिसामान्यम् । श्रु.

**गतोच्छ्वासा** - गतप्राणा मूर्च्छितेति यावत् । रा.

**गतोत्सवः** - नष्टहर्षः । रा.

**गत्या** - प्राप्यप्रापकभूतेन । भा.

**गदा** - विष्णोरायुधं बुद्धेरभिमानिदैवतम् । वि.

**गदाग्रजः** - गदनाम्नोऽग्रजः । सह.

**गदाधरः** - गदाधिपत्नीं कौमोदकीं धारयतीति । सह.

**गन्धः** - आमोदः, लेशः, गर्वः । या. सौरभम् । पुण्यमिति यावत् । अति.

**गन्धतन्मात्रम्** - अब्जन्यं पृथिवीतत्त्वोपादानम् । सुबा.

**गन्धतन्मात्रत्वम्** - गन्धवत्तन्मात्रत्वम् । वा.

**गन्धद्वारा** - गन्धो द्वारं व्यञ्जकं स्वप्रतीत्युपायभूतं यस्यास्सा । तै.

**गन्धद्वाराम्** - गन्धशब्देन लक्ष्मीसमाराधनोपकरणभूतानि गन्धपुष्पधूपदीपनैवेद्यानि सर्वाण्युपलक्ष्यन्ते । तानि यस्याः प्राप्तौ द्वाराणि उपायास्तां यद्वा पुण्यकर्मसम्भूतस्य यशसः प्रापिकाम् । श्रीसू.

**गन्धर्वः** - गां पृथिवीं धारयतीति जगद्धारकः परमात्मा । तै. गां वाचं धयन् पिबन् गायन् यो जज्ञे सः । वि.

**गन्धाः** - अगरुप्रभृतयः । रा.

**गभस्तिनेमिः** - भास्वरसहस्रारचक्रः । सह.

**गभीरः** - महागम्भीरः । सह.

**गभीरम्** - अमन्द्रध्वननम् । या. महत् । वै.

**गभीरत्वम्** - प्रभुत्वप्रकाशस्थितिविशेषः । शर.

**गभीरभावः** - निम्नभावः । या.

**गभीरात्मा** - चतुर्मुखमुखानामप्रधृष्यगाम्भीर्यः । सह.

**गमनम्** - देशाद्देशान्तरप्राप्तिः, संयोगविशेषः । न्यासि. संयोगानुकूलक्रिया । वा.

**गमनिका** - सार्थक्यसंपादनसरणिः । अधि.

**गमयाञ्चकार** - निनाय । बृ.

**गमयिता** - नेता; स्थितिकर्तेत्यर्थः । सङ्गमयिता; संहर्तेत्यर्थः । श्रु.

**गरुडध्वजः** - तार्क्ष्य एव ध्वजो यस्य सः । तद्धि सर्वेश्वरस्यासाधारणं चिह्नम् । सह.

[**गरिमा** - शरीरतः स्पृहणीयताभवनम् (अष्टैश्वर्येष्वन्यतमम्) । र.]

**गर्जनम्** - स्तोत्रानुमोदनम् । वि.

[**गर्जितम्** - अहंकारकृतः शब्दविशेषः । या.]

**गर्धः** - अभिकाङ्क्षा । ई (कू).

**गर्भः** - पुत्रः । रा. दृष्टनष्टबीजान्वेषणम् ।

न्यासिटी. भाक्तृवर्गपुञ्जभूता चेतनप्रकृतिः । गी.

**गर्भम्** - जलम् । रा.

**गर्भतुम्बः** - वृत्ताकारो गर्भपिण्डः । रा.

[**गर्भनिर्भाग्याः** - गर्भोत्पत्तिप्रभृति भाग्यहीनाः । ई.]

**गर्भभूताः** - प्रजातुल्याः । रा.

**गर्वः** - अहंकारः । च. इदमहं करिष्यामीति बुद्धिः । नि. उत्कृष्टपरिभवादिहेतुः (गुण-विशेषः) । ता.

**गलोपरिगर्जितम्** - अहृदयम् । च.

**गवाह्निकम्** - गोः एकाहतुष्टिकरणं तृणादिना आप्यायनम् । वि.

**गवीथुकः** - कुसुम्बसदृशबीजाः । वि.

**गवेधुकाः** - गोधूमाः । छा.

**गव्यं पयः** - पायसम् । वि.

**गहनः** - दुरवगाहः । सह. सर्वेषां ज्ञानायतनभोगतदुपकरणस्वरूपेषु तदभिन्नतन्त्राभिमानात्मके महागुणे गहनः अतिभूमिः । "सहैव सन्तं न विजानन्ति देवाः" । सह.

**गहनम्** - क्लेशम् । वि. दुर्विज्ञानम् । गी. ज्ञानता दुष्प्रवेशत्वं गहनत्वम् । ता. दुष्प्रवेशम् । रा. वनम् । गहनं काननं वनमित्यमरः । रा. विषमम् । बृ.

**गह्वरेष्ठः** - अन्तर्यामी । क.

**गह्वरेष्ठम्** - आत्मान्तर्यामिणम्, परमव्योमनिलयं वा । श्रु.

**गाः** - उक्तिः । गायतेः सम्पदादिक्विप् । यद्यपि तस्य गाने प्रसिद्धिः, तथापि 'गै शब्दे' इति सामान्येनानुशासनात् 'सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः' 'गीतश्चायमर्थोऽङ्गिरसा' इत्यादिप्रयोगदर्शनाच्च उक्तिमात्रमपि तदर्थः । या.

**गात्रसंश्लेषणम्** - गाढालिंगनम् । रा.

**गान्धर्वम्** - गीतशासनम् । वि. गन्धर्वलोकः । परिचर्यारतात्मनां शूद्राणां मरणानन्तरकालिकं स्थानम् । वि. देवोचितं गानम् । रा. संगीतशास्त्रम् । रा.

**गाम्भीर्यम्** - आपद्यक्षोभः । रा. क्षोभकारणे सत्यपि अविकार्यत्वम् । रघु. दुखगाहाभिप्रायत्वम् । भा. भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वम् । य. भक्तानुग्रहवदान्यत्वादेः आमूलतो दुरवगाहत्वम् । आश्रितापराधेषु प्रतिगृहीतृनिकर्षादिषु च सतोपि स्वज्ञानस्य गोपनेन दुर्ज्ञानत्वं वा । गद्य. संप्रदानलाघवदीयमानगौरवानपेक्षत्वम् । श्रु. स्वान्तर्गतपदार्थाप्रकाशकत्वम् । रा.

[**गायकः** - शारीरगानकृत् । वैणिकः । या.]

**गायत्री** - गयांस्तत्रे इति गायत्री । 'तत्रे' इति "त्रेङ्पालने" इत्यस्माल्लिटि रूपम् । गयाः प्राणाः । प्राणा वै गया इति श्रुतिः । बृ. परमात्मा । अत्र गायत्रीशब्देन न प्रसिद्धा गायत्र्यभिधीयते । तस्या भूतादिपादचतुष्टयसंबन्धाभावात् । 'एतावानस्य महिमे'ति पुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च । अपि तु

परमात्मा । यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्दः प्रयुज्यमानः तत्सादृश्यविशिष्टानुष्ठानार्थः तथा गायत्रीशब्दो ब्रह्मणि प्रयुज्यमानः तत्सादृश्यानुसन्धानार्थः । छा.

**गारुत्मतम्** - मरतकमणिः । पा.

**गावः** - केशाः । रा. रश्मयः । वि.

**गिरित्र** - गीर्वेदान्तः । तत्र त्रायते पाल्यते, प्रतिपाद्यत इति तत्प्रतिपाद्यत्वं गिरित्रशब्दार्थः । श्वे.

**गिरिशन्त** - गिरिशं तनोतीति गिरिशंतः, रुद्रस्य स्रष्टेत्यर्थः । श्वे.

**गीः** - अर्थाभिधायिनश्शब्दा गिरः । गी. गिरामिति न शब्दमात्रं, समुद्रघोषादिषु तत्प्रयोगाभावात् । अत एव नाक्षरमात्रम् । ता.

**गीतकानि** - मातृकाप्रबन्धादीनि । वि.

**गुञ्जा** - काकचिञ्चीमणिः । गो.

**गुडाकेशः** - "निद्रालस्ये गुडाका स्यात्" इति गुडाका निद्रा, तस्या ईशः गुडाकेशः प्रबुद्धस्वभाव इत्यर्थः । पिण्डितकेश इति वा । ता.

**गुणः** - अंगम् । श्रु. "अकर्म असंयोगी" । न्यासि. उत्कर्षः । रा. इष्टहेतुः । च. कर्मान्यत्वे सति जातिमात्राश्रयइति तार्किकलक्षण् । न्यासि. गुणशब्देन गुणत्रयविशिष्टा प्रकृतिरुच्यते । सुन्दर. गुण्यते सदाऽनुसंधीयत इति व्युत्पत्त्या सौशील्यम् । रा. गुणैकरूपत्वमात्रादेव सत्त्वादिषु गुणशब्दस्य मुख्यत्वम् । ज्ञानादिषु गौणत्वं नित्यपारतन्त्र्यात् । न्यासि. नित्यपारतन्त्र्यमेव गुणशब्दप्रवृत्तिनिमित्तमिति ज्ञानमपि मुख्यगुण एवेत्यन्ये । न्यासि. जात्यनुप्राणितस्य विशेषकस्सिद्धो धर्मविशेषो गुणः । न्यासि. जात्यनुप्राणितस्य धर्मिणो विशेषकस्सिद्धपदार्थः । न्यासि. यो यदाश्रितस्वभावः स तस्य गुणः । न्यासि. य. वादशब्दवत् सामान्यविशेषोभयपरो गुणशब्दः । ज्ञानसत्त्वादिसर्ववृत्ति सामान्यम् । सत्त्वादिमात्रवृत्तिर्विशेषः । न्यासि. सत्कारः । रा. सौन्दर्यादिदिव्यविग्रहगुणः । गद्य. सौशील्यम् । गुण्यते आवर्त्यते पुनःपुनः आश्रितैरनुसन्धीयत इति । रा. [औपचारिकः । ई.]

**गुणतत्त्वम्** - गुणपरिणामभूतदेहम् । भा.

**गुणधियाम्** - विषयासक्तधियाम् । भा.

**गुणदोषौ** - सुखदुःखे । भा.

**गुणप्रवाहः** - गुणैः सत्त्वादिभिर्निमित्तभूतैः प्रवहते प्राप्नोतीति संसारः । भा.

**गुणफलम्** - अङ्गफलम् । श्रु.

**गुणभावः** - आधेयत्वविधेयत्वशेषत्वरूपमप्राधान्यम् । श्रीत.

**गुणभूता**- परतन्त्रभूता, अयुतसिद्धविशेषभूतेत्यर्थः । श्रु.

**गुणभृत्** - स्वसङ्कल्पेन सर्वं स्वगुणभूतसर्वावस्थं कुर्वन् बिभर्तीति । इदमस्य प्रकृष्टमीशितृत्वम् । सह.

**गुणभोक्तृ** - सत्त्वादीनां गुणानां भोगसमर्थम् । गी.

**गुणमयी** - सत्त्वरजस्तमोमयी। गी.
**गुणवत्** - उत्कर्षवत्। रा.
**गुणवादः** - गौणी वृत्तिः। सि.
**गुणवृत्त्युपलभ्यः** - गुणपरिणामात्मकमनोवृत्त्युपलभ्यः। भा.
**गुणसंख्यानम्** - गुणकार्यगणनम्। गी.
**गुणसारत्वम्** - गुणप्रधानत्वम्। न्यासिटी.
**गुणस्य कल्याणत्वम्** - मोक्षपर्यवसायितत्त्वज्ञानादिमंगलावहत्वं स्वयं नित्यानुकूलत्वं च। गद्य.
**गुणाः** - मोक्षहेतुभूता अमानित्वादिका गुणाः। गी. सत्त्वरजस्तमांसि। श्वे. स्वभावविशेषाः (असाधरणधर्मविशेषा इति यावत्)। ता. बन्धकारणत्वेन गीताः सत्त्वादयः प्रकृतिधर्माः। स्तो.
**गुणात्मकः** - कल्याणगुणात्मकः। वि.
**गुणानामाकरः** - समस्तकल्याणगुणसमृद्धिमान्। रा.
**गुणान्वितः** - सत्त्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादिसंस्थानपिण्डसंसृष्टः। गी.
**गुणान्वितकर्माणि** - प्रारब्धत्वगुणयुक्तानि कर्माणि। श्वे.
**गुणाशी** - गुणभोक्ता। वि.
**गुणाष्टकम्** - अपहतपाप्मत्वविजरत्वविमृत्युत्वविशोकत्वविजिघत्सत्वापिपासत्व सत्यकामत्व सत्यसंकल्पत्व रूपब्राह्मगुणाष्टकमात्मनः। सुबा.
**गुणी** - तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। श्वे.
**गुणेशः** - ज्ञानादिषाड्गुण्यपूर्णः। श्वे. सत्त्वरजस्तमसां नियन्ता। श्रु.
**गुप्तः** - तद्गौरवज्ञैः पूर्वगुरुभिः सुरक्षितः। सह.
[**गुम्भः** - सन्दर्भः। र.]
**गुरवः** - महान्तः। रा.
**गुरुः** - अग्रजः। रा. "आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः। मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थदः शुचिः। गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः। एवंलक्षणसंपन्नो गुरुरित्यभिधीयते। रा. स्तो. गुशब्दस्त्वन्धकारस्स्यादित्युगन्धकारनिरोधी। यद्वा गुरुशरीरक आदिगुरुश्च। गद्य. तत्त्वहितपुरुषार्थोपदेष्टा सर्वाज्ञाननिवर्तकश्च। तथा हि; 'गुशब्दस्त्वन्धकारः स्यात्' इति। स्तो. ब्रह्मादीनामपि वेदोपदेष्टा। सह. हितकृत्। भा. [वेदाध्यापकः। र.]
**गुरुम्** - हितप्रवर्तकम्। भा.
**गुरुत्वम्** - अनुमेयगुणविशेषः। तोलनादिदशायां स्पार्शनप्रत्यक्षोपपादनमपि। न्यासि. शक्तिविशेषो वा, विलक्षणधर्मिस्वरूपं वा; न त्वतिरिक्तगुणः। स्वतःपतनहेतुस्वभावः। न्यासि. हितैककारित्वम्। भा.
**गुरुर्गुरुतमः** - एकं नाम। गुरुतमो गुरुः, गरीयान् गुरुः; अशेषविद्यापरमाचार्यः। "स पूर्वेषामपि गुरुः" इति हैरण्यगर्भाः। (मत्स्यावतारः)। सह.
**गुरुवर्तकः** - गुरुवचनानुसारी। रा.

**गुरुवर्ती** - गुरुशुश्रूषकः । रा.

**गुरुवासिनः** - ब्रह्मचारिणः । वि.

**गुरुशुश्रूषा** - पादसंवाहनादिरूपा गुरुपरिचर्या । रा.

**गुरोः कर्मातिशेषेण** - गुरुशुश्रूषानवरुद्धकालेन । भाव.

**गुर्वी** - अतिशयिताभिमानवती । अति.

**गुलिकः** - सर्पविशेषः । गरु.

**गुल्मिनः** - कक्षवृक्षाः । रा.

**गुहः** - गूहति रक्षतीति । सह. वञ्चकः । गोपायतीति गुहः । रा.

**गुहाः** - देवखातबिलानि । रा.

**गुहाशयः** - गुहायां जीवे शेत इति, हृदयकुहरे वा शेत इति, सः । भा. हृदयगुहाशयः । श्वे. [प्राणिनां हृदयगुहासु शयानः । या.]

**गुहाहितः** - हृदयगुहावर्ती । क.

**गुहाहितम्** - हृदयगुहागतम् । हृदयवर्तिनम् । श्रु.

**गुह्यः** - पञ्चोपनिषन्निगूढः । सह.

[**गुह्यकः** - दुष्टग्रहविशेषः । सच्च.]

**गुह्यम्** - दुर्विज्ञानम् । तै. साक्षादुपनिषद्वेद्यम् । रा.

**गुह्यविद्या** - मन्त्रवादविशेषः । वि.

**गुह्याः** - उपदेशाः, ब्रह्मविषयकोपनिषद्रहस्योपदेशाः । छा.

**गूढः** - तिरोहितः । क.

**गूढम्** - तिरोधायककर्मरूपाविद्यादिना तिरोहितम् । श्र.

**गूढजत्रुः** - अस्पष्टभुजसन्ध्यस्थिः । रा.

**गूढाय** - तमोमयाय । भा.

**गृञ्जनम्** - लशुनविशेषः । वि.

**गृध्रसरः** - काञ्चीपुरसमीपस्थे तिरुप्पुट्कुळिक्षेत्रे पुण्यतीर्थविशेषः । पर.

**गृष्टीनाम्** - प्रथमप्रसूतानां (गवाम्) । भा.

**गृहगर्धिनः** - गृहस्थाः । रा.

**गृहवृक्षात्मिका** - काचन सिद्धिः । इच्छया गृहवृक्षोद्गमः तदा भवति । वि.

**गृहस्थस्य ब्रह्मचर्यव्रतम्** - ऋतोरन्यत्र स्त्रीसंगमत्यागः । रा.

**गृहातिगृहाः** - गृहानतीत्य दूरे स्वैरविहारार्थं निर्मिता गृहाः । रा.

**गृहीतः** - दृष्टः । तै.

**गृहे** - कलत्रे । भा.

**गृह्येत** - आस्वाद्येत । या.

**गेयम्** - तारमन्द्रकृतक्रमम् । वि. स्वरविशे-षसमन्वितं गानम् । रा.

**गेष्णः** - गानम् । अव्युत्पन्नो गेष्णशब्दः । छा.

**गेहयोः** - कलत्रवेश्मनोः । भा.

[**गेही** - गृहस्थः । र.]

**गोचरः** - संचारः । रा.

**गोजः** - भूम्यां जातः । क.

**गोत्रिकम्** - अव्याकृतम् । ततोऽपि (नामिकादपि) आद्यं शक्तिरूपेणावस्थितम् । जैनमते; घातिकर्म चतुर्विधं, वेदनीयं नामिकं गोत्रिकमायुष्कं चेति । बृ.

**गोत्वम्** - संस्थानविशेषः । न्यासि.

**गोदोहः** - नाडिकायाश्चतुर्भागः । वि.

**गोधा** - ज्याघातवारणम् । रा.

**गोनायः** - गोनेता । छा.

**गोपतिः** - अशेषच्छन्दोभाषावेषवाङ्‌निर्वाहकः । अशेषच्छन्दोभाषावेषाणां वाचां पतिः स्वांगी निर्वाहक इति । सह. भोगभूमेः स्वर्गस्य पतिः । सह. रुद्रः । वृषभपतिः शिवः । रा.

**गोपनगरम्** - कृष्णारण्यम्, अद्य 'तिरुक्कोवलूर्' इति प्रसिद्धम् । दे.

**गोपाः** - गोप्ता । गुपू रक्षणे असुप्रत्ययान्तः । छा. रक्षकाः । रा. रक्षिता । श्वे.

**गोप्ता** - कर्मफलचक्ररक्षिता । सकलविद्यारक्षकः । सह. स्वसंबन्धिनां रक्षकः । रा.

**गोप्तृत्ववरणम्** - इदमुपायत्वप्रार्थनायामन्तर्गतम्, न पृथग्भूतमित्येकः पक्षः । गोपायिता भवेत्याकारकम् । न्याद.

**गोप्रतारः** - सरयूनदीस्थस्तीर्थविशेषः । रा.

**गोबलीवर्दन्यायः** - सामान्यशब्दसन्निधौ प्रयुक्तस्य विशेषशब्दस्य अवैयर्थ्याय सामान्यशब्दस्य उपात्तविशेषेतरपरत्वम् । वे. उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य अविरोधेऽपि वैयर्थ्यपरिहाराय संकोचः । श्रु. [गामानय बलीवर्दमानयेत्युक्ते गोपदेनैव बलीवर्दलाभसम्भवात्, बलीवर्दपदवैयर्थ्यं स्यात्; तद्वारणाय गोपदस्य बलीवर्दान्यगोपरत्वमिति भावः । र. 'गामानय बलीवर्दञ्चानय' इत्यादौ बलीवर्दपदावैयर्थ्याय गोपदस्य तदितरगोपरत्वाश्रयणफलको न्यायः । सच्च.]

**गोमती** - नदीविशेषः । रा.

[**गोमायुः** - सृगालः । या.]

**गोमुखः** - मातलिपुत्रो जयन्तयन्ता । रा.

**गोमेघः** - यज्ञविशेषः । रा.

**गोरक्ष्यम्** - पशुपालनम् । गी. गौः रक्ष्या यत्र तत् कर्म गोरक्ष्यमित्यभिप्रायेणाह पशुपालनमिति । रक्ष्यमिति भावार्थे वा । रक्षणमित्यर्थः । गौरक्ष्यमिति वा पाठः । गां रक्षतीति गोरक्षः । तस्य कर्म गौरक्ष्यं पशुपालनम् । वणिजः कर्म वाणिज्यमितिवत् । एवं विशः कर्म वैश्यम् । 'गुणवचनब्रह्मणादिभ्यः कर्मणि च' इति ष्यञ्प्रत्ययः । ता.

**गोवाटम्** - गोक्षेत्रम् । वि.

**गोविदां पतिः** - गाः वेदगिरः विदन्ति ये तेषां ज्ञानिनां पतिः । ज्ञानयज्ञाराध्यतया पाता इति । सह.

**गोविन्दः** - लब्धभूमिकः । सह. स्तूयमानोपकारतया भक्तानां गाः स्तुतिगिरः विन्दति लभत इति । सह. शोकापनोदनयोग्यवाक्छाली, गोशब्दनिर्दिष्टाया भुवो भारावतारणार्थं प्रवृत्तो वा । ता. [गां विन्दतीति, भगवान् । सच्च.]

**गोवृषेन्द्रः** - रुद्रवृषभः । रा.

[**गोहनः** - धेनूनां हिंसकः । सच्च.]

**गोहितः** - प्रकृतिहितः, गोः संसारबीजावापक्षेत्रीभूतप्रकृतेः हितः कार्यकरतया स्थापकः । सह.

**गौः** - करमाली । किरणः । न्यासि. प्रकृतिः । वर. प्रकृतिः गौण्या वृत्त्या । श्वे. प्रकृतिः कामदोग्धृत्वादिसादृश्याद् गौण्या वृत्त्या गौरित्युच्यते । म. भूमिः । रा. रश्मिः । रविः । पा. वरुणपुत्राणां बलाध्यक्षः कश्चित् । रा. सरस्वती । न्यासि. सलिलम् । न्यासि.

**गौणम्** - प्राकृतम् । वर.

**गौतमः** - गोत्रतो गौतमः । छा.

**गौरः** - शुद्धः । तै.

**गौरक्ष्यम्** - गोरक्ष्यं । द्र.

**गौरवम्** - प्रतिपत्तिः । बहुमानः । रा.

**गौरी** - वरुणस्य पत्नी । वि.

**ग्रन्थयः** - अविद्यारागादयः । छा. धर्माधर्मरागद्वेषमोहादयः, कर्मोपनीताश्च त्रिगुणविकारभेदाः । ग्रन्थ्यते एभिः क्षेत्रीति ग्रन्थयः । त.

**ग्रन्थिः** - बन्धस्य अशैथिल्यकरः ग्रथनविशेषः । श्रु.

**ग्रसिष्णु** - अन्नादीनां भौतिकानां ग्रसिष्णु । गी.

**ग्रहः** - इन्द्रियम् । गृह्णाति आत्मानं स्ववशं करोति इति ग्रहः । पचाद्यच् । बृ. पात्रविशेषः । श्रु. [ज्ञानम् । प्रतिग्रहः । र.]

**ग्रहणम्** - निरोधः । बृ. राहुकेतुभ्यां ग्रासः ।

**ग्रामणीः** - नित्यसिद्धानां ग्रामं समाजं नयतीति ग्रामणीः । सह.

**ग्रामण्यः** - ग्रामनेतारः । बृ. यक्षाः । वि.

**ग्राम्येहा** - प्रवृत्तिकर्म । भा.

**ग्रावा** - काठिन्यसामान्याद् ग्रावा; पुंल्लिङ्गमि[त्य]र्थः । बृ.

**ग्राहकत्वम्** - लौकिकप्रत्यक्षजनकत्वम् । सर्वा (आ).

**ग्राहकाभिमानः** - अहं जानामीति ग्राहकत्वेनाभिमानः । श्रु.

**ग्राहकावभासः** - इन्द्रियजन्यघटादिविषयग्राहिवित्तिषु आत्मनो ग्रहीतृत्वेन रूपेणावभासः । सि.

**ग्राह्यग्राहकसंवित्तिभेदः** - ज्ञेयज्ञातृज्ञानभेदः । न्यासिटी.

**ग्लहम्** - पणम् । भा.

**ग्लानिः** - अनुत्साहः । भा.

**घटकश्रुतिः** - "यस्य पृथिवी शरीरम्" इत्यादिश्रुतिवाक्यानि । वे.

**घटप्रध्वंसाभावः** - कपालत्वम् । श्रु.

**घटप्रागभावः** - पिण्डत्वम् । श्रु.

**घटविनाशः** - कपालत्वावस्थापत्तिः । श्री.

**घनः** - निबिडः । रा.

**घनम्** - अज्ञानावृत्तम् । मा. त्रिष्वपि दिग्द्वंद्वेषु यत्र न्यूनत्वम्, तत् परिमाणम् । न्यासि.

**घनगर्भः** - अशनिः । रा.

**घनत्वम्** - निबिडत्वं, संयोगविशेषः, महत्त्वं वा । सर्वा (आ).

**घर्मः** - उष्णम्; आतपः । वि.

**घषः** - घोषः, स्वगुणकीर्तनम् । तै.

**घषोत्कः** - स्वगुणकीर्तनोत्सुकः । तै.

**घातः** - क्लेशः । रा.

**घुष्टिः** - प्रसिद्धिः । पा.

**घुसृणम्** - कुङ्कुमम् । न्यासिटी.

**घूर्णनम्** - इतस्ततो विवर्तनम्। रा.
**घृणयः** - किरणाः। तै.
**घृणा** - जुगुप्सा। रा.
**घृतम्** - रस्यं ब्रह्म। "घृतं मिमिक्षे। अत्र घृतशब्देन रस्यं ब्रह्मोच्यते"। तै.
**घृताशीः** - घृतं सेचनं स्वगुणैः जगदाप्यायनम्, तत्र वा गोपगृहगव्ये वा आशीः इच्छा अस्येति। सह.
**घोषणा** - डिण्डिमाख्यो वाद्यविशेषः। पा.
**घ्राणम्** - रसाग्राहकगन्धग्राहकेन्द्रियम्। वा. शब्दादिपञ्चके गन्धमात्रग्रहणशक्तमिन्द्रियम्। न्यासि.

## च

**चकृषः** - कृतवतः। क्वसन्तात् षष्ठी। कौ.
**चक्रम्** -आज्ञा बलं वा। वि. भगवदायुधम्। मनोऽभिमानिदैवतम्। वि.
**चक्रकम्** - स्वनिर्वाह्यपदार्थनिर्वाह्यपदार्थनिर्वाह्यत्वम्। श.
**चक्रगदाधरः** - पञ्चशक्तिमयनित्यदिव्यायुधः। सह.
**चक्रवर्ती** - निर्वाहकः, कर्ता कारयिता च। दया.
**चक्रवालम्** - प्राकारमण्डलम्। रा.
[**चक्राब्जाध्यायः** - सुदर्शनपाञ्चजन्यस्वरूपादिनिरूपणपरः पाञ्चरात्रसंहिताध्यायविशेषः। सच्च.]
**चक्री** - यथोचितनित्यदिव्यायुधः। सह.
**चक्षुः** - चष्ट इति सः, परमात्मा। बृ. रूपमात्रग्रहणशक्तमिन्द्रियम्। य. शब्दादिपञ्चके रूपमात्रग्रहणशक्तमिन्द्रियम्। न्यासि. स्पर्शाग्राहकरूपग्राहकेन्द्रियम्। वा.
**चक्षुश्चितः** - वाक्चित इतिवत्। अग्नि.
**चक्षुष्यः** - अभिरूपः। चक्षुषे हित इत्यर्थे 'शरीरावयवाच्चे'ति यत्। छा.
**चङ्क्रमणम्** - इतस्ततः सञ्चारः। क्रमुधातोः 'नित्यंकौटिल्ये गतौ' इति यङन्ताल्ल्युट्। या.
**चञ्चलम्** - एकत्रावस्थापयितुमशक्यम्। गी.
**चञ्चूर्यमाणम्** - मुहुर्मुहश्चलत्। रा.
**चटुलत्वम्** - क्रियावत्त्वम्। सर्वा (आ).
**चणकः** - हरिमन्थनः। वि.
**चण्डदण्डः** - तीक्ष्णदण्डनम्। रा.
[**चण्डद्रव्यम्** - (शैवमते) चण्डाय दत्तं द्रव्यम्। सच्च.]
**चण्डातकम्** - अर्धोरूकांशुकम्। गरु.
**चतुरश्रः** - स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं गमनेऽपि, क्षुद्रकीटाय ग्राहाय कोपेऽपि, युक्तकारी। आश्रितार्थः सम्भ्रमो हि साम्प्रतम्। चतस्रः अश्रयः अस्येति चतुरश्रः युक्तकारी। सह. [चतस्रो अश्रयः कोटयः अस्येति विग्रहे "सुप्रातसुश्वसुदिवेत्यादसूत्रेण चतुरश्रशब्दो निपातितः। या.]
**चतुरश्रत्वम्** - केवलविरुद्धदिगन्तांशेभ्यो दूरत्वसामीप्यसाम्यम्। न्यासि.
**चतुरात्मा** - अधिकारितारतम्येन प्रादुष्कृ-

तस्थूलसूक्ष्मजाग्रदादिचातुरात्म्यस्फुटीकरणात्, चत्वारः आत्मानोऽस्येति । सह. वासुदेवसङ्कर्षणानिरुद्धप्रद्युम्नरूपा आत्मनः स्वरूपाणि अस्येति । सह.

**चतुर्गतिः** - उपासकाभियोगतारतम्यकृतक्रमात् चतस्रो गतयः प्राप्तयोऽस्मिन्निति । सह.

**चतुर्दंष्ट्रः** - व्यूहमूलेन परेण रूपेण चायं महापुरुषलक्षणविशिष्टतया चतस्रो दंष्ट्रा अस्येति । चतुर्दंष्ट्रत्वं महापुरुषलक्षणम् । यथा ''चतुर्दशसमद्वन्द्वः चतुर्दंष्ट्रश्चतुर्गतिः'' (रामा) इति । सह.

[**चतुर्दश साक्षिणः** - ''आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥'' इति स्मृतिः । या.]

**चतुर्धातुवादः** - चतुस्तत्त्ववादः । सर्वा.

**चतुर्बाहुः** - निरुपाधिकपररूपेण देवक्यामवततार; चत्वारो बाहवोऽस्येति । सह.

**चतुर्भावः** - षोडशात्मनि चतुर्व्यूहे अधिकृतजगद्व्यापारशास्त्रदानादिस्थूलसूक्ष्मव्यूहप्रयोजनपुञ्जव्यञ्जनात् चत्वारः उक्तचतुर्व्यूहप्रभवा भाव भावनाः प्रयोजनाभिव्यञ्जनानि अस्येति । सह.

**चतुर्भुजः** - चत्वारो भुजा बाहवः अस्येति । सह.

**चतुर्भुजम्** - श्रीकृष्णरूपम् । वसुदेवसूनोश्चतुर्भुजमेव रूपम् ....इत्युच्यते । गी.

**चतुर्मुखः** - भगवता ब्रह्माण्डमारभ्य स्वनाभिपङ्कजनासिकामनश्चक्षुर्वागण्डश्रवणरूपस्थानेष्वन्यतमेन सकलतदण्डवर्तिचेतनभरितविग्रहतया स्वप्रसादादुत्पादितः ब्रह्मा । न्यासि.

**चतुर्मूर्तिः** - बलभद्रवासुदेवप्रद्युम्नानिरुद्धाख्याश्चतस्रो मूर्तयो यदुकुलेऽप्यस्येति । सह.

**चतुर्वर्गः** - सामादयश्चत्वार उपायाः । रा.

**चतुर्विंशतितत्त्वमयम्** - शरीरम् । तत्त्वानां मध्ये उत्तरोत्तरस्य पूर्वपूर्वतो भागसृष्टेरेवेष्टत्वात् पूर्वपूर्वस्य कारणस्य कार्येऽपि वृत्तेः सर्वतत्त्वमयत्वम् । तन्मात्राणां निश्शेषपरिणामपक्षे च गुणपञ्चकेन सह चतुर्विंशतितत्त्वमयत्वम् । अन्यो वाऽभिप्रायः । न्यासि.

**चतुर्विंशतिस्तत्त्वानि** - त्रिगुणद्रव्यमेव पूर्वावस्थोपमर्दकावस्थाभेदाच्चतुर्विंशतितत्त्वात्मकम्, मूलप्रकृतिर्महानहङ्कार इन्द्रियाणि तन्मात्राणि भूतानि चेति । न्यासि.

[**चतुर्विधफलानि** - भ्रष्टैश्वर्यस्य पुनः प्राप्तिः, अपूर्वैश्वर्यप्राप्तिः, केवलात्मानुभवः, मोक्षश्चेति । र.]

**चतुर्विधभक्ताः** - आर्तो जिज्ञासुरर्थार्थी ज्ञानी च । गी.

**चतुर्वेदवित्** - चतुर्वेदैः चतुरो वेदान् अधीयानैः जानानैर्वा विद्यते यदुकुलोद्भवः परविभूतिकणिकामात्रतया ज्ञायत इति । सह.

**चतुर्व्यूहः** - विभवेऽपि समस्तव्यस्तषाड्गुण्यव्यवस्थतया चत्वारो व्यूहा अस्येति। चतुर्विधा व्यूहा व्यूहमूर्तिभेदा अस्य। सह. [सङ्कर्षणप्रद्युम्नानिरुद्धवासुदेवाः। पाञ्च.]

**चतुर्होतारः** - यज्ञाः। वे.

**चतुश्शृङ्गः** - चतुर्वेदप्रतिपाद्यः। शृङ्गशब्देन ज्ञापको वेद उच्यते। तै.

**चतुश्श्लोकीपञ्चमपक्षः** - पूर्वग्रन्थबलात् देवीस्वरूपस्वभावादेः पतीच्छानिरपेक्षत्वस्य, पतिवत् स्वतस्सिद्धत्वस्य प्रदर्शकोऽयम्। श्रीत.

**चतुश्श्लोक्यर्थः** - चतुरध्याध्यर्थो यः सः। श्रीत.

**चतुष्कलः** - चतुरवयवः। पुरतः खुरद्वयं पृष्ठतः पार्ष्णिद्वयञ्चेति चत्वारोऽवयवाः एकैकस्मिन् पादे द्रष्टव्याः। छा.

**चतुष्कोटिविनिर्मुक्तम्** - सतः असतः सदसतः अनुभयात्मकाच्च भिन्नम्। श.

**चतुष्पथः** - शृङ्गाटकम्। रा.

**चतुष्पात्** - चत्वारः पादाः अंशाः स्वरूपभूता यस्य स परमात्मा। पादशब्दस्य 'संख्यासुपूर्वस्ये'त्यन्तलोपः। सर्वजीवनियामकतया तत्तद्देहेषु चतूरूपतया तिष्ठतीत्यर्थः। मा. (कू).

**चन** - अपि। बृ. अपि। एकञ्चन एकमपि। छा.

**चन्दनाङ्गदी** - चन्दनानि आह्लादनानि अङ्गदादीनि भूषणान्यस्येति। सह.

**चन्द्रकान्ता** - लक्ष्मणकुमारस्य चन्द्रकेतोः प्रधाननगरी। रा.

**चन्द्रकेतुः** - लक्ष्मणस्य कुमारः। रा.

**चन्द्रमाः** - आदित्यानन्तर आतिवाहिकः।

**चन्द्रहासः** - शिवदत्तोः रावणखड्ग। रा.

**चन्द्रा** - "चदि आह्लादने" निरतिशयानन्दरूपा आनन्दस्वरूपा आनन्दगुणका आनन्दविग्रहा चेत्यर्थः। श्रीसू.

**चन्द्राम्** - सर्वाह्लादकारिणीम्। औणादिको रक्प्रत्ययः। तापत्रयतप्तान् स्वसमाश्रयणोन्मुखानाह्लादयन्तीम्। श्रीसू.

**चन्द्रांशुः** - मन्तॄणां क्लमहरणतया चन्द्रा आह्लादनाः तस्यैव वा अंशवः तेजांसि अस्येति। ?.ह.

**चपलः** - चंचलचित्तः। धैर्यरहितः। रा.

**चपेटा** - प्रसृतसंहताङ्गुलीककरतलम्। गरुद.

**चमत्कारः** - आनन्दजनकव्यापारविशेषः। गरुद. सामर्थ्यम्। या.

**चमसः** - चम्यतेऽनेनेति चमसः, भक्षणसाधनपात्रविशेषः। श्री. सोमयागपात्रविशेषः। रा. भक्षणसाधनम्। ऊर्ध्वबिलतिर्यग्बुध्नपात्रे प्रसिद्धमिदं पदम्। 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' 'इतीदं तच्छिरः' इति श्रुतिबलात् शिरःपरम्। श्वे.

[**चमूषत्** - चम्वां (नित्यसूरि) परिषदि सीदति निषीदतीति; नित्यसूरिपरिषन्मध्वर्ती। भगवत्सेनाधुरन्धरः। सच्च.]

**चम्पकः** - वृक्षविशेषः। रा.

**चरम्** - देहित्वे (सति) चरम्। गी. पादाद्यधीनसञ्चारवत्। ता.

**चरकाः** - अध्ययनार्थं व्रतचरणाः । बृ.

**चरणम्** - आचारः, शीलं, वृत्तम् । श्री. चर्यते अनुष्ठीयते इति कर्म । भाव. कर्म । चर्यते इति व्युत्पत्तेः । अधि. वेदावान्तर-शाखा यद्वा पूर्वाचारः । वि. सुकृतदुष्कृते । श्री. [सुदर्शनम्; रथचरणाकारत्वात् । सुदर्शनम्; परगतिसाधनत्वात् । सच्च.]

[**चरणसमयः** - शाखासंकेतः, आपस्तम्बादिसूत्रादिनिष्ठानां स्वशाखा-सूत्रोक्तधर्मानुष्ठानसंकेतः । र.]

**चरन्** - तिरस्कृत्य वर्तमानः । गी. चरतिरत्र गत्यर्थ आक्रमणरूपगतिपरः, भक्षणार्थो वा संहारपरः, इत्युभयथापि तिरस्कारार्थत्वं विवक्षितम् । ता.

**चरितार्थः** - प्राप्तप्रयोजनकः । सर्वा (आ).

**चरेत्** - आगच्छति । छा.

[**चर्षणीन्द्राः** - भगवद्भक्ताः । विचक्षणा-ग्रेसरा योगिवर्याः । ज्ञानवन्तः प्रकाशवन्तः । सच्च.]

**चलम्** - प्रणतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति । सह.

**चलत्वम्** - पातभयेन चलनहेतुत्वम् । गी.

**चलनम्** - व्यापारः । श्रु.

**चला** - लक्ष्मीः । वि.

**चाक्रायणः** - चक्रस्य सुतः । चक्रस्य गोत्रापत्यमित्यर्थे अश्वादित्वात् फञि चाक्रायण इति रूपम् । छा. चक्रस्य गोत्रापत्यं, नडादिभ्यः फक् । बृ.

**चाक्षुषः** - चक्षुरुपकरणकः । श्रु.छा. पुरुषः। चक्षुषि सन्निहितः चाक्षुषः । चाक्षुषः पुरुष इति म्रियमाणो जीव उच्यते । बृ.

**चाक्षुषनिर्झरः** - अश्रुप्रवाहः । अति.

**चाटु** - प्रीतिचेष्टा । वि.

**चाणूरान्ध्रनिषूदनः** - विरोधिनं चाणूर-नामानम् अन्ध्रमल्लं निषूदितवानिति । सह.

[**चातकः** - अंबुदैकान्ती पक्षिविशेषः । या.]

**चातकाः** - जलधरैकान्तिनः शकुन्ताः । या.

[**चातुर्थिकम्** - लौकिकरोगः । वातरोगविशेषः । ई.]

**चातुरात्म्योपासनानि** - सद्विद्यादिवत् परभक्तिविशेषरूपाणि वासुदेवसंकर्षण-प्रद्युम्नानिरुद्धात्मकचातुरात्म्यविषयकाणि । न्यासिटी.

**चातुर्यम्** - अतिशंकाशमनदोषगोपनादि-रूपमजडक्रियत्वम् । गद्य. आश्रितदोषगो-पनम् । य. कृत्यवस्तुषु दक्षता । रा. शुभा-श्रयप्रकाशनाद्ययत्नोपायैः विमुख-वशीकरणविस्रंभजननसंश्रितदोषाच्छादन-विरुद्धानुकूलीकरणादिषु कुशलत्वम् । गद्य.

**चातुर्वर्ण्यम्** - चत्वारो वर्णाः । रा.

**चान्द्रायणम्** - शुक्लप्रतिपद आरभ्य क्रियमाणोपवासनियमः । नि.

**चापलम्** - विषयलौल्यम् । रा.

**चामीकरम्** - स्वर्णम् । रा.

**चारणम्** - चारविषयीकरणम् । सम्यग्दर्शनमित्यर्थः । रा.

**चारणाः** - पूर्वाचार्याः । चारयन्ति धर्मान् इति । रा.

**चाराः** - स्वजनवृत्तान्तजिज्ञासया प्रधान-प्रेरिताः प्रणिधयः । रा.

**चारित्रम्** - आचारः । रा. पातिव्रत्यम् । रा.

**चारित्रवत्सलः** - आचारैकपरः । रा.

**चारी** - नृत्तसमये युगपत्कृतमङ्घ्रिजङ्घोरुकटिकर्म । एकपादप्रचार इति तु शारदातनयः । या.

**चार्वाकवादः** - निर्हेतुकत्ववादः । सर्वा (आ).

**चिक्लीतः** - कश्चित् भगवदन्तः पुररक्षकः । तथा च पौराणिकाः पठन्ति 'पद्मो गदो निधिः शङ्खश्चतुर्दन्ती गजस्तथा । कल्याण-सर्पपञ्चास्याश्चिक्लीतो गृहरक्षकाः' । इति । श्रीसू.

**चिच्छायापत्तिः** - (चिति अन्तःकरण-च्छायापत्तिः) चितः अन्तःकरणे छायापत्तिः । न्यासिटी.

**चित्** - चैतन्यगुणयोगि वस्तु । नी. चेतते जानातीति चित् चैतन्याश्रयः । सर्वा (आ). स्वप्रकाशः । च.

**चितः** - आर्जितः । छा. जीवाः । अधि.

**चितितन्मात्रम्** - ज्ञानमात्रस्वरूपम् । छा.

**चित्तम्** - ज्ञानम् । (सौगतमते) । सर्वा (आ). **ज्ञानम् अस्य अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययैरुत्पत्तिः । (सौगतमते)** । बृ. ज्ञानसन्तानः **(बौद्धमते)** । श्रु. चिन्तावृत्तिविशिष्टं मनः । न्यासि. चिन्तावृत्तियुक्तं मनः । ता. चिन्तावृत्तिमन्मनः । सुबा.गी. अध्यवसायाभिमान-चिन्तावृत्तिभेदात् मन एव बुद्ध्यहंकार-चित्तशब्दैर्व्यपदिश्यते इति शारीरकभाष्ये व्यक्तमुक्तम् । ता. बुद्धिः । भाव. प्राप्तकालानुरूपातीतानागतविषयप्रयोजन-चिन्तारूपप्रवृत्तिविशिष्टं मनः । चेतयति-धात्वर्थोऽपि स एव । विषयप्रयोजन-निरूपणम् । **चित्तान् लोकान्** चितान् उपचितानित्यर्थः । छा. भगवद्विषयकप्रेमा । तै. विज्ञानसन्ततिः (बौद्धमते) । सर्वा.

[**चित्तचक्षुषी** - मनः नेत्रं च । अत्र चित्तस्य प्राण्यङ्गत्वाभावात् नैकवद्भावः । या.]

**चित्तविक्षेपः** - असम्भावना विपरीत-सम्भावना च । श.

**चित्तविज्ञानम्** - नीलादिविषयोल्लेखि विज्ञान् (बौद्धमते) । न्यासिटी.

[**चित्तवृत्तिः** - तात्पर्यम् । र.]

**चित्तीकृतः** - चित्तविषयीकृतः । भा.

**चित्यः** - चयननिर्वर्त्योऽग्निः । रा.

**चित्रः** - एतन्नामको राजा गार्ग्यायणिः । कौ.

**चित्रम्** - आश्चर्यभूतम् । आलेख्यम् । या. एकसंघातवर्तिरूपसमुदायविशेषः । न्यासि. प्रत्येकमविद्यमानमपि तच्चित्ररूपं तन्तुषु संहतेषु दृश्यत एव, चित्रा इमे तन्तव इति । अस्तु वा चित्रं नाम एको रूपविशेषः । सि. विस्मयनीयम् । श्रीसू.

**चित्रपटः** - शुक्लकृष्णरक्ततन्तुसङ्घातोपादानः। गी.
**चित्रभानुप्रिया** - स्वाहाशब्दः। गरुद.
**चित्ररथः** - गन्धर्वराजः।
[**चित्रशिखण्डी** - भगवच्छास्त्रप्रणेता महर्षिः। सच्च.]
**चित्रा** - आश्चर्यावहा। रा.
**चित्त्वम्** - स्वयंप्रकाशत्वम्। श्रु. जडव्यावृत्तत्वम्। नी.
**चिदचित्प्रकारम्** - अपृथक्सिद्धिसंबन्धेन चिदचिद्विशिष्टम्। रत्न.
**चिद्रूपता** - स्वयंप्रकाशता। श्री.
**चिन्तनम्** - स्मृतिसन्ततिरूपम्। न स्मृतिमात्रम्। असकृदावृत्तसन्तत स्मृतिः। श्री.
[**चिन्तयन्ती** - "चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणीम्" इत्यादिना विष्णुपुराणोक्तं कृष्णभक्ता काचित् गोपिका।]
**चिन्ता** - अपेक्षितबुभुत्सा यथा "चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः" इत्यत्र। सुबा. चिन्ता कर्तव्यविषया। आशा तु फलविषया। ता. स्मरणम् 'मानसं विष्णुचिन्तन'मिति प्रयोगात्। सुबा. स्मृतिसन्ततिः। भ.
**चिन्मात्रात्मा** - स्वयंप्रकाशः। श्रु.
**चिरम्** - विलम्बः। छा. भाव.
**चिरन्तनसरस्वती** - वेदः। च.
**चिरलोकः** - चिरस्थायी लोकः। तै.
**चिरलोकलोकाः** - चिरलोको लोको येषां ते पितरः।
**चिरायमाणः** - विलम्बं कुर्वन्। रा.
**चीर्णम्** - आचरितम्। वि. संपादितम्। भा.
**चुबुकम्** - अधराधःप्रदेशः। सुन्दर.
**चुम्बकशिला** - अयस्कान्तावान्तरभेदः। न्यासिटी.
**चूडाललामः** - प्रशस्तचूडा। सुन्दर.
**चूर्णरजः** - सूक्ष्मं रजः। वि.
**चेत्** - यदि। श्रु.
**चेतः** - चेतोऽभिमानी प्रत्यगात्मा। रा. तत्त्वानुसन्धानरूपज्ञानम्। ता. बुद्धिः। गी.
**चेतनः** - ज्ञानाश्रयः। च. चैतन्यवान् जीवः। गद्य.
**चेतनत्वम्** - ज्ञानाश्रयत्वम्। य. चैतन्यगुणयोगः। श्रु.
**चेतनवर्गः** - बद्धमुक्तनित्यरूपत्रिविधजीववर्गः। श्रीत.
**चेतना** - शब्दाद्यनुभवरूपं ज्ञानम्। भा.
**चेतनात्मा** - ज्ञातृस्वरूपः। वि.
**चेतनाधिष्ठितत्वम्** - चेतनप्रेरितत्वम्। न्यासि.
**चेतयते** - चित्तं द्र.। छां.
**चेता** - चिञ् चयने। सर्वप्रपञ्चनिर्माता। श्वे.
**चेतोंऽशुः** - जीवः। ज्ञानाख्यरश्मियुक्तः। मा. (कू).
**चेतोभिः** - ज्ञानेन्द्रियव्यापारैः। भा.
**चेतोमुखः** - विशुद्धचेतोग्राह्यः। मा(र). ज्ञानरूपमुखः ज्ञानरूपसर्वावयवः। मा(कू).

**चेष्टा** - चेतनप्रवृत्तिः । ता. चेष्टाशब्देन पञ्चात्मा वायुरभिधीयते तद्वृत्ति वाचिना । गी. प्राणशरीरसंयोगासमवायिकारणक्रिया । वा. पञ्चवृत्तिप्राणः । श्रु. प्रयत्नवदात्मसंयोगासमवायिकारणकक्रिया । न्यासि. संस्कारः । बृ.

**चेष्टितम्** - आश्रितरक्षणावतारः । स्तो.

**चैकितायनः** - चिकितायनसुतः । चिकितायनशब्दादपत्यार्थे ऋषित्वादणि चैकितायनः । छा.

**चैतन्यम्** - स्वस्वरूपादिज्ञानम् । दया.

**चैतन्यस्वभावः** - चेतना ज्ञानम् । तद्भावः चैतन्यं ज्ञानत्वम् । तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः । श्रु.

**चैतन्यस्वभावता** - ज्ञानधर्मकत्वम् । श्रु.

**चैत्तम्** - चित्ताभिन्नसुखादयः (सौगतमते) । बृ. चित्तानुबन्धिकं रागद्वेषादिकम् (बौद्धमते) । सर्वा. रागादिकम् । (बौद्धमते) । श्रु. विज्ञानस्कन्धव्यतिरिक्तं स्कन्धचतुष्टयम् । (बौद्धमते) । भाव.

**चैत्यः** - देवतावासभूतचतुष्पथस्थमहावृक्षः । रा.

**चैत्यम्** - अभिप्रायम् । भा. चैत्यवृक्षस्थानम् । रा. देवायतनम् । रा.

**चैत्यः प्रासादः** - नगरप्रधानभूतः प्रासादः । रा.

**चैत्रगृहाः** - चतुष्पथगृहाः । रा.

**चैत्ररथम्** - कुबेरोद्यानम् । रा.

**चोदना** - धात्वर्थविशेषविधिः । श्री. प्रवर्तकवचनम् । ता. लिङ्लोट्तव्यप्रत्ययादिशिरस्कः क्रियावाची शब्दः । अधि. विधिः । च.

**चोद्यम्** - अनुपपत्त्युद्भाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनम् । श्रु.

**चोरम्** - (अन्तःकरणस्य), मनोहरम् । सुन्दर.

**चौर्यम्** - अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयताबुद्धिं कृत्वा तेन स्वात्मपोषणम् । गी. "तेन स्वात्मपोषणम्" इति चौर्यस्य फलम् अन्यदीये स्वकीय-ताबुद्धिकरणमित्येव लक्षणम् । ता.

## छ

**छटा** - पूरः । सुन्दर.

**छन्दः** - अनुष्टुप्त्रिष्टुबादिप्रतिपादनपरम् । य. इष्टम् । इच्छा । कौ. इच्छा । बृ. (अकारान्तः) इच्छा । रा. कर्मविनियुक्तो वैदिको मन्त्रः । छां. स्वेच्छा । रा. स्वैरसंचारः । पा.

**छन्दतः** - यथेष्टम् । श्रु.

**छन्दपथः** - स्वच्छन्दगमनयोग्या उपवीथी । रा.

**छन्दांसि** - गायत्र्यादीनि । बृ. रहस्यमन्त्राः । भा.

**छन्दितः** - प्रचोदितः । वि.

**छलम्** - अविवक्षितशब्दार्थारोपेण दूषणम् । न्याप. अविवक्षितशब्दार्थारोपणम् । य. कल्पितदूष्यमसदुत्तरम् । वक्तुरविवक्षित-

मर्थमारोप्य तद्दूषणं छलमित्यर्थः । तत् त्रिधा वाक्छलमुपचारच्छलं सामान्यच्छलं चेति । न्याप. कल्पितदूष्यदूषणाभिधानं दूषण-समर्थमपि असिद्धम् । सर्वा.

**छागनीतिः** - 'छागो वा मन्त्रवर्णात्' इत्य-धिकरणोक्तः सामान्येन श्रुतस्य सन्निहित-विशेषपरत्वमिति न्यायः । पद.

**छागलः** - अजः । वि.

**छादिताकूतम्** - गूढाशयम् । अधि.

**छाया** - कान्तिः । वि.

**छायापत्तिः** - प्रतिबिम्बः, अध्यासो वा । न्यासिटी.

[**छायापथः** -ज्योतिश्चक्रमध्यवर्ती तिरश्चीनः प्रचुरनक्षत्रगणो रेखाविशेषः । या.]

**छायामयः** - छायाशरीरकः । बृ.

**छायावैगुण्यम्** - कान्तिवैकल्यम् । रा.

**छिद्रम्** - अनवधानं, रन्ध्रम् । रा. अनिष्ट-प्राप्तिरन्ध्रम् । (तन्महच्छिद्रमित्यत्र) । श्रु. अपराधः । ''छिद्रं रन्ध्रापराधयोः'' । रा.

**छिद्रकुम्भः** - करकः । रा.

**छिन्नद्वैधः** - शीतोष्णादिद्वन्द्वैर्विमुक्तः । गी.

**छिन्नसंशयः** - सौशील्यप्रथया स्वविषयया सुज्ञानदुर्ज्ञानसुसाधदुस्साधसुलभ-दुर्लभत्वादिसंशयः छिन्नोऽनेनेति । सह.

## ज

**जक्षणम्** - भक्षणम् । हसनम् । जक्षभक्ष-हसनयोरिति धातुः । बृ.

**जङ्गमाः** - सञ्चारिणः । या.

**जङ्घन्यमानः** - भृशं हन्यमानः । मु.

**जङ्घालः** - वेगवान् । पा.

**जगत्** - अचेतनम् । वै. अन्यथात्वं गच्छत् । ई. (कू.) स्वरूपतो धर्मतो वा अन्यथात्वं गच्छत् भोग्यभोक्तृरूपं वस्तुजातम् । ई. (वे) जीववर्गः । गच्छतीति व्युत्पत्तेः । रा.

**जगज्जनकत्वम्** - इदं भगवतीव श्रियामपि साक्षात् चेतनाचेतनसर्वकारणत्वरूपमेव । श्रीत.

**जगतस्सेतुः** - कर्मसु अकृताभ्यागमकृत-विप्रणाशप्रसंगपरिजिहीर्षया जगतः सेतुः । तद्वत् सदसद्वर्गासंभेदहेतुः । सह.

**जगती** - उर्वी । ई. भूमिः । या.

**जगदादिजः** - जगदादिभूतासु त्रिमूर्तिषु अन्यतमत्वेन जात इति । सह.

**जगदीशाना** - लक्ष्मीः । एतदैश्वर्यस्य भगवदैश्वर्यस्येव सर्वविषयकत्वप्रतीते-स्सर्वशरीरित्वादिकमप्यस्याः सिद्धम् । श्रीत.

**जगद्धात्री** - भूमिः । या.

**जगद्धेतुः** - श्रीश्रीशौ मिलितौ जगद्धेतू । श्रीत.

**जगद्व्यापारः** - निखिलचेतनाचेतन-स्वरूपस्थितिप्रवृत्तिभेदनियमनम् । श्रीत.

**जगन्मयः** - व्यक्ताव्यक्तप्रपञ्चरूपः । वि.

**जगन्मयौ** - तच्छरीरकत्वेन तत्प्रचुरौ । भा.

**जटावाटी** - श्लिष्टकेशपङ्क्तिः । पा.

**जडः** - अस्वप्रकाशः । च.

**जडम्** - अन्याधीनप्रकाशम् । त. अमिश्रसत्त्वरहितम् । य. अस्वयंप्रकाशम् । न्याप. परप्रकाश्यम् । वे. परत एव भासमानम् । न्यासि. स्वनिरूपितविषयताशून्यत्वमात्रमेव जडत्वमित्यादि । रत्न. स्वगोचरज्ञानत एव प्रकाशमानम् । सर्वा.

**जडकारी** - जडवत्कर्ता । वि.

**जडत्वम्** - अस्वप्रकाशत्वम् । वा. दृश्यतैकस्वरूपत्वम् । श्रु. परेणैव प्रकाश्यमानत्वम् । अष्ट. ज्ञानव्यतिरिक्तत्वम् । अचित्त्वमित्यर्थः । श्रु.

**जडव्यावृत्तत्वम्** - स्वाधीनप्रकाशत्वम् । नी.

**जनः** - कश्चन ऋषिः । छा. चेतनः । वै. जननवान् । ता. जनिमान् अत एव संसरन् । ई (कू). पामरः । या. शार्कराक्ष्यो वैश्वानरोपासकः । अग्नि.

**जनम्** - उत्पत्त्युन्मुखम् । भा. जननम् उत्पत्तिमिति यावत् । बृ.

**जनजन्मादिः** - जनानां जन्मन आदिः निमित्तं प्रयोजनमिति । सह.

**जननः** - तदनुभवक्षमकरणयुक्तानन्यानपि जनयतीति । सह.

**जननम्** - उत्तरदेहपरिग्रहः । अधि. शरीरसम्बन्धः । बृ. सत्ता । सर्वा (आ).

**जनपदः** - राजधानी । बृ.

**जनयितवै** - जनयितुम् । तुमर्थे 'इतवै' प्रत्ययः । बृ.

**जनविद्या** - आयुर्वेदः । छा.

**जनसंसदि अरतिः** - जनसंसदि अप्रीतिः । गी.

**जनस्थानम्** - दण्डकारण्यैकदेशः, यत्र खरादयोऽवसन् । रा.

**जनार्दनः** - प्रतिकूलजनानाम् अर्दयिता नरकादिगमयिता । अनुकूलजनैस्स्वाभिलषितम् अर्द्यमानः याच्यमान इति वा । ता. रक्षाप्रतिपक्षान् जनान् अनपेक्षोऽर्दयतीति । सह.

[**जनासः** - जनाः । 'आज्जसेरसुक्' इति छान्दसोऽसुक् । सच्च.]

**जनिः** - अवतारः । पद. देहसंसर्गः । ता. जन्म । अति.

**जनिता** - उत्पादकः । तै.

**जनित्री** - समष्टिसृष्टिकरी । श्रु.

**जनेश्वरः** - सर्वसंप्लावनोज्ज्वलैश्वर्यमहौघतया जनानाम् ईश्वरः । सह.

**जन्तुः** - चेतनः । प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण इतिनामपाठात् । श्रु. जीवः । पा. जीवात्मा । वर. देहविशिष्टात्मा । वि. शरीरी । ता.

**जन्म** - उत्पद्यमानावस्था । सुबा. उपादानावस्थाविशेषः । सर्वा. नित्यनैमित्तिकप्राकृतरूपम् । श्रु. प्रागसिद्धस्य आत्मलाभउत्पत्तिः । त. विचित्रदेहसंपत्तिः । आ.

[**जन्मभिक्षुः** - जन्मत आरभ्य दरिद्रः । र.]

**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्** - सशरीरत्वे जन्ममृत्युजराव्याधिदुःख-

रूपस्य दोषस्य अवर्जनीयत्वानुसन्धानम्। गी.

**जन्ममृत्युजरातिगः** - जन्म जननं च मृत्युः मरणं च जरा पलितभावश्च जन्ममृत्युजराः ता अतिगच्छति अतिक्रामतीति। सह.

**जन्ममृत्युप्रहाणिः** - जन्ममृत्युप्रापककर्मणां क्षान्तमितिसंकल्परूपा प्रकृष्टा हानिः। श्वे.

[**जन्यः** - शंखः। सच्च.]

**जपः** - उपांशूच्चारणम्। वे. मन्त्रावृत्तिः। भा.

**जम्बूः** - वृक्षविशेषः। रा.

**जम्बूप्रस्थः** - ग्रामविशेषः। रा.

**जम्बूमार्गः** - गङ्गातीर्थविशेषः। वि.

**जयः** - आश्रितविधेयः। आश्रितैः जीयते विधेयीक्रियतइति जयः। सह. परस्य स्ववशे स्थापनम्। वि. वशीकरणम्। मु.

[**जय (देव !)** - जयतिधातुः उत्कर्षप्राप्त्यर्थकोऽकर्मकः। या.]

**जयम्** - जयाभिमानिदेवताम्। जयन्तं वा; तलोपश्छान्दसः। सुबा.

**जयन्तः**-आस्तिक्यवादिनः संविदात्मत्वप्रपञ्चमिथ्यात्वादिमिथ्यावादैर्जितवान्। सह. इन्द्रकुमारः। रा.

**जयन्ती** - रोहिणीसहिता श्रावणमासस्य कृष्णाष्टमी; 'जयं पुण्यं च तनुते जयन्तीं तेन तां विदुः' इति पौराणिकैर्निरुक्ता। पृषोदरादित्वात् साधुः। या. रोहिणीसहितश्रावणमासकृष्णाष्टमी। गो.

**जय्यः** - प्राप्यः। बृ.

[**जयाख्यसंहिता** - श्रीपाञ्चरात्रसंहिताविशेषः। सच्च.]

[**जरन्** - जीर्णः। ''जीर्यतेरतृन्'' इति सूत्रेण भूतार्थे अतृन् प्रत्ययः। या.]

**जरयितुम्** - आत्मसात्कर्तुम्। रा.

**जरा** - वयोहानिः। तै.

**जरामर्यम्** - जरया वयोहान्या म्रियते समाप्यते। तै.

**जरायु** - (गर्भपरिवेष्टनम्)

**जरायुः** - स्थूलगर्भपरिवेष्टनसिराः। छा. गर्भाशयः। वि.

**जरामरणमोक्षः** - प्रकृतिवियुक्तात्मस्वरूपदर्शनम्। गी.

**जर्तिलाः** - अरण्यतिलाः। छा. वनतिलाः। वि.

**जलम्** - शीतस्पर्शवत्, निर्गन्धत्वे सति रसवत्, अपाकजशुक्लरूपवत् सांसिद्धिकद्रवत्ववद्वा। वा.

**जलक्रिया** - तर्पणम्। रा.

**जलजः** - शंखः। सुन्दर. वै.

**जलत्वम्** - निर्गन्धत्वे सति विशिष्टरसवत्त्वम्। य.

**जलाशयः** - जलप्रवाहः। रा.

**जल्पः** - उभयपक्षोपन्यासतत्प्रतिक्षेपवती कथा। स्वपक्षप्रामाण्यप्रतिपक्षाप्रामाण्यनिश्चयार्थो व्यवहारः। न्यात. वितण्डाद्वयमेव व्यत्यस्तं जल्प इति वदन्ति। पक्षद्वयसाधनवती विजिगीषुकथा। न्याप.य. विजीगीषु कथा। श. शुष्कप्रलापः। सर्वा.

[**जल्पाकः** - सदसि वाग्मी । या.]

**जल्पितम्** - वचनम् । भावे क्तः । रा.

**जबनः** - झटिति दूरस्थसंबन्धक्षमः । श्रु. पाणिपादाद्यभावेऽपि तत्कार्यकारी । (अपाणिपादो जवन इत्यत्र) । श्वे.

**जहल्लक्षणा** - शक्यार्थाविषयकबोध-जनिका वृत्तिः । च.

**जह्नुः** - अभक्तेष्वात्ममाहात्म्यमपह्नुते इति । सह.

**जागरणम्** - (अज्ञान) निद्रायाः क्षयीकरणम् । क.

**जागरितस्थानः** - जागरितं स्थानं यस्य स जाग्रद्दशार्वाहकः । मा.(र). यत्र स्थित्वा जागर्ति तत् जागरितम् । जागरितमेव स्थानम् यस्य स चक्षुस्स्थानः । मा.(कू).

**जागृवांसः** - अस्खलितविज्ञानाः । वे. [सदातनप्रकाशशीलाः । ई.]

**जातरूपधरः** - जातमात्रस्य मनुजस्य यद्रूपं तद्रूपधरः । श.

**जातवेदाः** - जातानि सर्वाणि वेत्तीति सर्वज्ञः । तै. परं ब्रह्म जातानि वेदांसि वेदा यस्मात् सः । प्र. रङ्गनाथः । "ज़ातास्त्वदर्थं वेदाश्च जातवेदास्ततोर्हसि" । पा. लक्ष्मीपतिः जातं स्वतस्सिद्धं वेदः धनं वा ज्ञानं वा यशो वा यस्य सः । स्वतः सिद्धं सार्वज्ञ्यसर्वैश्वर्यादिकं साक्षाल्लक्ष्मीपतेरेव । परमात्मसूक्ते जातवेदश्शब्दः परमात्मनि प्रयुज्यते 'जातवेदसे सुनवाम सोमम्' इति । श्रीसू.

**जातिः** - अनेकेषां धर्मिणामन्तरङ्गो धर्म-विशेषः । न्यासि. गर्भान्निर्गतस्य मनुष्यत्वा-दिजात्यभिमानः । (सौगतमते) । बृ. येन निरूपिते वस्तुनि प्रायशो विशेषाकांक्षा-शान्तिः । द्रव्यस्य धर्मिणोऽन्तरङ्गो धर्मविशेषः । न्यासिटी. संस्थानम् । श्रु. नी. सिद्धमपि दूषणासमर्थम् । सर्वा. स्कन्ध-प्रादुर्भावः (बौद्धमते) । श्रु. स्वव्याप्तदूषणम् असदुत्तरम् । य. स्वव्याघातकमुत्तरम् । मर्यादालङ्घनाभ्युपगमपूर्वकमुत्तरम् । स्वव्यापिदूषणम् । न्याप. स्वव्याहता वाक् । त.

**जातिदुष्टम् (अन्नम्)** - लशुनादि । त.

**जातिशब्दः** - जातिवाचकशब्दः । च.

**जातिसंस्थानमाला** - जातितद्व्यञ्ज-कानवस्था । सर्वा.

**जातिसंकरः** - स्वसामानाधिकरण्य, स्वाभावसामानाधिकरण्य, स्वसमानाधि-करणाभावप्रतियोगित्वैतत्त्रितयसंबन्धेन जातिविशिष्टजातित्वम् । रत्न.

**जातु** - सर्वदा । ता.

**जानपदः** - जनपदप्रभवः । बृ.

**जानश्रुतिः** - जनश्रुतस्यापत्यम् । भाव. छा.

**जानुपदाग्रहस्ताः** - ज़ानुनी च पदाग्रे च हस्तौ च ते । अवयवानां षट्त्वसङ्ख्याऽत्र विवक्षिता । तैः षड्भिर्विना चङ्क्रमणा-सम्भवात् । अत एव न प्राण्यङ्गलक्षण एकवद्भावः । 'अधिकरणैतावत्त्वे च' इति

वृत्तिपदार्थसङ्ख्याविवक्षायां निषेधात्। या.

**जाबालः** - जबालासुतः। छा.

**जायमः** - कुलस्त्रियः। भा.

[**जामदग्न्यः** - परशुरामः। जमदग्नेरनन्तरापत्ये गोत्रापत्यत्वारोपेण "गर्गादिभ्यो यञि" ति गोत्रप्रत्ययस्साधुः। या.]

**जायत** - अजायत। जायतेत्यत्र अडभावश्छान्दसः। छा.

**जायमानः** - स्वेच्छया जायमानः। वेकौ.

**जायस्व म्रियस्वेति भवन्ति** - पुनःपुनर्जायन्ते म्रियन्ते। छा.

[**जालकम्** - मौक्तिकप्रचुरशिरोभूषणविशेषः। या.]

**जालम्** - जालवद्बन्धकमहदादिकार्यवर्गम्। श्वे.

**जालवान्** - प्रकृतिशब्दितमायारूपवागुरायुक्तः। श्वे.

**जाल्मः** - जडः। वि.

[**जाह्नवेयः** - गङ्गाया अपत्यं भीष्मः। या.]

**जिगीषा** - वशीकरणेच्छा। रा.

**जिज्ञासुः** - प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः। न्यासि. भा. गी. [केवलात्मानुभवप्राप्तीच्छुः। र. आत्मप्राप्तिकामः।]

**जिज्ञासुक्लृप्तः** - प्रेप्सुसाध्यः। तै.

**जिज्ञास्यम्** - विचार्यम्। श्रु.

**जितकाशी** - जयेन प्रकाशते। रा.

**जितक्रोधः** - जितसुरकर्मकासुरक्रोधः। स.

**जितमन्युः** - शरणागतगजेन्द्रद्वेषिणे जलकीटाय यः क्रोधः स तद्वधानन्तरं जितोऽनेनेति। सह.

**जितश्रमा** - श्रमजिता। या.

**जितसंगः** - जितान्तःकरणः। भा.

**जितसङ्गदोषाः** - जितगुणमयभोगसङ्गाख्यदोषाः। गी.

**जितात्मा** - जितमनाः। गी.

**जितामित्रः** - कामक्रोधादिजेता। सह.

**जितासनः** - आसनकृतायासरहितः। भा.

**जितेन्द्रियः** - विकारहेतौ सत्यपि निर्विकारचित्तः। रा.

**जिनन्ति** - जयन्ति। बृ.

**जिष्णुः** - जयशीलः। बृ.

**जीवः** - अणुत्वे सति ज्ञानाश्रयः स्वव्यधिकरणसंकल्पजन्यकृतिमान्वा। अमुत्वविशिष्टावगतिमान्। तद्वत्त्वं तस्य लक्षणम्। सर्वा. अल्पपरिमाणो ज्ञाता। न्यासि. अविद्यया अन्तःकरणेन वाऽवच्छिन्नचैतन्यम्। (वाचस्पतिमते)। ईश्वरप्रतिबिम्बभूतः। (विवरणमते)। ईश्वरशेषो ज्ञाता। न्यासिटी. ज्ञानदर्शनसुखवीर्यगुणाः। (जैनमते)। श्री. परतन्त्रचेतनः। न्याप. भागवतजीवनदाता। जीवयतीति जीवो भागवतान् आत्मनाशाद्व्यावर्त्यस्वपरिचर्यया जीवयतीति। सह. [अणुत्वे सति चेतनत्वं, स्वतः शेषत्वे सति चेतनत्वं (एवमादि) तस्य लक्षणम्।]

**जीवघनः** - यस्य कर्मनिमित्तं देहित्वं सः। श्री.

**जीवजम्** - गर्भवेष्टनलक्षणजरायुजं पुरुषपश्वादि। छा. जरायुजम्। श्रु.
**जीवत्वम्** - अणुत्वे सति चेतनत्वम्। स्वतःशेषत्वे सति चेतनत्वम्। य. अणुत्वे सति चेतनत्वम्। अष्ट.
**जीवनः** - स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयतीति। सह.
**जीवनम्** - प्राणस्थितिहेतुः। प्राणनम्। भूतेषूपजीवनीयं रूपम्। ता. शरीरसंबन्धः। श.
**जीवननिमित्तकर्म** - नित्यकर्म। श.
**जीवन्मृतः** - "स्वधर्माद्यः परिभ्रष्टः विप्रैर्यश्च बहिष्कृतः। स जीवन्नेव लोकेस्मिन् मृत इत्यभिधीयते" इति स्मृतेः। वि.
**जीवभूतः** - जीवलोके वर्तमानः। गी.
**जीवलक्षणम्** - चेतनत्वे सति स्वत आधेयत्वम्, न तु आधेयत्वमात्रं "स्वतश्शेषत्वादिकव्द्" इति तत्त्वत्रयाधिकारानुरोधात्। एवञ्च न श्रीर्जीवः। तस्याः स्वाभाविकाधेयत्वाभावात्। चेतनत्वे सति स्वतो नियाम्यत्वं न तु नियाम्यत्वमात्रं शेषत्वादिवत्। चेतनत्वे सति स्वतःशेषत्वं तत्त्वत्रयाधिकारोक्तं न शेषत्वमात्रं, भागवतशेषत्वं वहति भगवत्यतिव्याप्तेः। श्रीत.
**जीवसमष्टिः** - जीवसमूहः। वे.
**जीवस्य सम्पत्तिः** - (सता सोम्य तदा संपन्नो भवतीत्यत्र) बहिर्मुखज्ञानप्रसरविरहितजीवरूपेणावस्थानम्। श्रु.
**जीवस्वाभाविकरूपम्** - अपहतपाप्मत्वसत्यसंकल्पत्वादि ब्राह्मरूपम्। न्यासि.

**जीवातुः** - भक्तम्। जीवनौषधम्। या.
**जीवितम्** - जीवनम्। प्राणाः। रा.
**जीवेन आत्मना** - जीवशरीरकेण मया। छा.
**जीवो विनश्यति** - जीवो न पश्यति। बृ.
**जुगुप्सेत** - निन्देत्। छा.
**जुघुक्षतः** - गूहितुमिच्छतः। सुन्दर.
**जुषमाणा** - भक्तप्रिया। श्रीसू.
**जुषाणा** - प्रीयमाणा। श्रीसू.
**जुष्टः** - अनुगृहीतः वे. प्रीतिविषयीकृतः। प्रीयमाणः। श्री. आदिकर्मणिक्तः। श्रु. प्रीतिविषयीकृतः। सि.त.श्वे.
**जुष्टम्** - प्रीयमाणम्। श्रु.
**जुष्टा** - (विघ्ननिवारणाय) उपास्यमाना। तै.
**जुष्टाः** - प्रीतिपूर्वकं समीक्षिताः। श्रीसू.
**जुहुराणम्** - कुटिलम्। "हुर्च्छा कौटिल्ये" इत्यस्मात् कानचि रूपमिदम्। बृ. कुटिलम् (हवृ कौटिल्ये) बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्यवत्तया बाधमानं प्राप्तिप्रतिबन्धकम्। ई.
**जृम्भणम्** - जृम्भणास्त्रम्। सुन्दर.
[**जृम्भा** - वायुविशेषेण मुखव्यादानम्। या.]
**जृम्भितः** - भग्नः। रा.
**जृम्भितम्** - भग्नम्। रा
[**जैत्रघोषणा** - जैत्रस्य नायकस्य जयप्रख्यापकग्रन्थविशेषरूपा घोणा। वाद्यविशेषः। "निस्साणो जैत्रघोषणा" इति यादवः। या.]

[**जैत्री** - जयशीला। या.]
**जेता** - स्वाभिप्रायेषु अवस्थापयिता। सह.
**जैमिनिः** - कश्चिदाचार्यः। श्री.
**जैमिनीयम्** - जैमिनिप्रोक्तं शास्त्रम्। वा.
**जैबलिः** - जीबलसुतः जीबलशब्दादत इञि जैबलिः। (प्रवाहणः क्षत्रियो राजा च)। जीबलस्यापत्यम्। छा. जीबलस्य अपत्यम्। बृ.
**जैबम्** - जीवसम्बन्धि। श्रु.
**जोक्** - उज्ज्वलः। श्रु.
**जोग्जीवति** - व्याध्यादिभिः अनुपहतो यावद्ब्रह्मप्राप्ति जीवति। भा.
**जोषः** - प्रीतिः "जुषीप्रीतिसेवनयोः" इति धातोः। ता.

## ज्ञ

**ज्ञः** - पण्डितः। रा.
**ज्ञपनम्** - तोषणम्। मारणतोषण-निशामनेषु मित्त्वात् ज्ञाधातोः ह्रस्वः। छा.
**ज्ञातम्** - निर्णीतम्। मीमांसापूर्वभाग-ज्ञातस्य। त.
**ज्ञातव्यम्** - विचार्यम्। ("ब्रह्म ज्ञातव्य-मित्युक्तं भवति" श्री.) त. विचारयोग्यम्। श्रु.
**ज्ञातव्यत्वम्** - विचार्यत्वम्। भाव.
**ज्ञाता** - भासमानं वस्तु यस्मै भाति सः। श्रु.
**ज्ञाती** - बन्धुः। रा.
**ज्ञातृत्वम्** - अहन्त्वम्। श्रु. ज्ञानगुणाश्रय-त्वम्। श्री. ज्ञानक्रियाकर्तृत्वम्। कर्तृत्वमिह आश्रयत्वम्। त. ज्ञानक्रियाकर्तृत्वम्। भा. नी. स्वस्य परस्य चावभासप्रतिसंबन्धित्वम्। श्रु.
**ज्ञानम्** - अजडम्। स्वयंप्रकाशमित्यर्थः। दया. आत्मयाथात्म्यापरोक्षम्। गी. आत्मावलोकनम्। इन्द्रियम्, ज्ञायतेऽनेनेति व्युत्पत्तेः। श्रु. ज्ञायते अनेनेति इन्द्रियम्। क. इन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः। गी. कस्यचिद्व्यावहारानुगुण्ये निरपेक्षहे-तुत्वमेतत्पदप्रवृत्तिनिमित्तम्। न्यासि. जडविलक्षणम्। ता. ज्ञानयोगः। वर गद्य. ज्ञानात्मकम् आत्मस्वरूपम्। भा. ज्ञानपद-व्युत्पत्तिनिमित्तं धात्वर्थभूतक्रियाविशेषत्वं, भावेल्युडन्तत्वात्। न्यासिटी. ज्ञानैकाकारम्। ज्ञायतेऽनेनात्मेति ज्ञानम्, आत्मज्ञानसा-धनम्। गी. तत्त्वज्ञानम् भावाष्टकान्तर्गतम् (सांख्यमते)। सर्वा (आ). ध्यानम्। गी. नित्यासङ्कुचितज्ञानैकाकारम्। तै. न्यासिटी. श्री. परमात्मा। (प्रज्ञाच तस्मात्प्रसृता पुराणीति श्रुत्युक्तरीत्या ज्ञानप्रसरणहेतुः परमात्मा ज्ञानशब्देनोच्यते) ज्ञायते अनेनेति व्युत्पत्तिः। मु. बुद्धिः। क.श्री. परावरतत्त्व-याथात्म्यज्ञानम्। गी. मनसः परिणामः। मोक्षे धीः। वि. लौकिकज्ञानम्। रा. वस्तु-याथात्म्यावबोधः। गी. विचारः। (पूर्ववृ-त्तात् कर्मज्ञानात्)। त. शास्त्रम्। सर्वा. सत्यं ज्ञानमित्यत्रान्तोदात्तत्वबलात् ज्ञानकर्तृ इत्यर्थः। न्यासि. (भगवतः) सर्वसाक्षा-त्काररूपम्। य. साक्षात्कारः। 'सा विद्या

या विमुक्तये', 'संज्ञायते येन तदस्तदोष'मित्यादिषूक्तं परस्वरूपरूपादिज्ञानम्। स्तो.

[**ज्ञानी** - भगवत्प्राप्तिकामः। ई.]

**ज्ञानखले** - वेदविरुद्धज्ञानेन मूर्खे। भा.

**ज्ञानगम्यः** - परविद्यागम्यः। सह.

**ज्ञानगम्यम्** - अमानित्वादिभिः ज्ञानसाधनैः (उक्तैः) प्राप्यम्। गी.

**ज्ञानगुणः** - नित्यपारतन्त्र्यात् गौणो गुणव्यपदेशः। न्यासि.

**ज्ञानचक्षुषः** - पिण्डात्मविवेकविषयज्ञानवन्तः। गी.

**ज्ञानं ज्ञात्वा** - ओदनपाकं पचतीतिवत्। ता.

**ज्ञानतन्त्रम्** - अध्यात्मशास्त्रम्। वि.

**ज्ञानत्वम्** - नित्यासंकुचितज्ञानस्वरूपत्वं तादृशज्ञानगुणकत्वं च। अधि. स्वयंप्रकाशत्वम्। श्रु.

**ज्ञानदर्शनप्राप्तयः** - शास्त्रतोऽर्थनिर्णयः, अर्जुनकृतश्रीविश्वरूपसाक्षात्कारवत् दर्शनम्, भगवत्प्राप्तिश्च।

**ज्ञाननिवर्त्यत्वम्** - ज्ञानजन्यनिवृत्तिप्रतियोगित्वम्। श.

**ज्ञाननिष्ठं नित्यासंकुचितत्वम्** - निरवच्छिन्नविषयतासमानाधिकरणस्वनिरूपितबिषयतानिरूपितनिरवच्छिन्नावच्छेदकत्वसंबन्धावच्छिन्नाभावाप्रतियोगित्वम्। वा.

**ज्ञानपथैः** - इन्द्रियैः। भा.

**ज्ञानबलक्रिया** - ज्ञानबलाभ्यां सहिता सृष्टिसंहारादिलक्षणक्रिया। श्वे.

**ज्ञानमान्द्यम्** - ज्ञानस्याल्पविषयत्वम्। ता.

**ज्ञानमुत्तमम्** - उत्तमम् अत्युत्कृष्टं, सर्वः परो वैष्णवो धर्मो ज्ञायतेऽस्मिन्निति ज्ञानमिति। सह.

**ज्ञानयोगः** - आत्मचिन्तनम्। न्याप. कर्मयोगान्निर्मलान्तः करणस्य ईश्वरशेषत्वेन प्रकृतिवियुक्तस्वात्मचिन्तनम्। य. ज्ञानात्मिका निष्ठा। नितिष्ठत्यस्मिन्नर्थे अधिकर्तव्ये अधिकारीति निष्ठा। नियता स्थितिरेव वा निष्ठा। यावत्फलं स्थिरपरिगृहीतमुपायानुज्ञानमित्यर्थः। गीसं.

**ज्ञानयोगव्यवस्थितिः** - प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा। गी.

**ज्ञानविज्ञानसंपन्नः** - ज्ञानस्वरूपो ज्ञानगुणकश्च। ज्ञानश्चासौ विज्ञानसंपन्नश्चेति कर्मधारयः। रा.

**ज्ञानव्यपाश्रयः** - आगमोत्थज्ञाने प्रतिष्ठितः। त. शास्त्रश्रवणजन्यब्रह्मज्ञानवान्। ई.

**ज्ञानसङ्कोचः** - परावरतत्त्वविषययथावस्थितज्ञानप्रसराभावः। गद्य.

**ज्ञानसद्भावभूतः** - सम्यक्ज्ञानस्वरूपः। वि.

**ज्ञानसम्बन्धः** - ज्ञानसंयोगो विषयेषु ज्ञानस्य द्रव्यत्वात् द्रव्येषु संयोगरूपः। अन्यत्र संयोगिनिष्ठतारूपः। न्यासि.

**ज्ञानस्य परत्वम्** - याथार्थ्यापरोक्षत्वरूपः प्रकर्षः। श्रु.

**ज्ञानस्य स्वाभाविकत्वम्** - इन्द्रियादिनैरपेक्ष्यम् । श्रु.

**ज्ञानस्वरूपः** - ज्ञानमेव स्वाभाविकः धर्मः यस्य । श्रु.

**ज्ञानस्वरूपम्** - ज्ञानात्मकम् । ज्ञानशब्देन प्रत्यगात्मा गृह्यते । वस्तुवृत्त्या अपरिच्छिन्नानुकूलज्ञानैकस्वरूपम् । वि.

**ज्ञानाकारः** - ज्ञानेऽध्यस्तस्तत्तादात्म्यापन्नोऽपरमार्थरूप इति योगाचारोक्तरीतिः । न्यासि.

**ज्ञानाकारकर्म** - क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसंधानयुक्ततया ज्ञानाकारम् । न्यासि.

**ज्ञानात्मकत्वम्** - स्वयंप्रकाशत्वम् । न्यासि.

**ज्ञानात्मा** - ज्ञानरूपः । वि.

**ज्ञानालीकलयः** - ज्ञानालीकयोरुच्छेदः । अलीकविषयज्ञानसंतानोच्छेद इति यावत् । रत्न. (प्रज्ञाकारमतो मोक्षः) समस्तालीकविषयज्ञानसंतानोच्छेद इत्यर्थः । न्यासिटी.

**ज्ञानावरणीयम्** - (कर्म) (जैनमते) सम्यक्ज्ञानान्न मोक्ष इति विपर्ययः । बृ.

**ज्ञानिनः** - भगवच्छेषतैकरसात्मयाथात्म्यज्ञानिनः । भगवच्छेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च भगवांस्तु असंख्येयकल्याणगुणगणैः परतर इत्येवं ज्ञानवन्त इत्यर्थः । भा.

**ज्ञानी** - ज्ञानयोगनिष्ठः । सुन्दर. भगवच्छेषतैकरसात्मस्वरूपवित् भगवन्तमेव परमप्राप्यं मन्वानः । गी.भा. भगवच्छेषतैकरसात्मस्वरूपविन्, प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यत् भगवन्तं प्रेप्सुः भगवन्तमेव परमप्राप्यं मन्वानः । गी.

**ज्ञानेन्द्रियम्** - ज्ञानप्रसरणशक्तमिन्द्रियम् । य.

**ज्ञानेन्द्रियत्वम्** - ज्ञानप्रसरणहेतुत्वे सति इन्द्रियत्वम् । वा.

**ज्ञानेन्द्रियाणि** - चक्षुः श्रोत्रघ्राणरसनत्वङ्मनांसि षट् । न्यासि.

**ज्ञेयम्** - प्राप्यम् । गी.

**ज्ञेयत्वम्** - विषयतासंबन्धेन ज्ञानम् । वा.

**ज्यानिः** - नाशः । बृ.

**ज्यायसाः** - ज्यायांसः, भूयांसः । बृ.

**ज्यायस्त्वम्** - प्राचीनत्वम् । भाव. प्रामाणिकत्वम् । श्री. सर्वेश्वरत्वम् । मु.वे.

**ज्यायान्** - अधिकमहिमशाली । छा.

**ज्येष्ठः** - स्वात्मना सूरिभिश्च सदानुभवेऽपि अदृष्टपारमहाविभूतितया अतिशयेन प्रशस्यः । सर्वेभ्यः पूर्वभावितया अतिशयेन वृद्धः । सह. वृद्धः । 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशविधानात् प्राणः । गर्भस्थपुरुषे प्राणव्यापारप्रवृत्त्यनन्तरभावित्वादिन्द्रियप्रवृत्तेः प्राणस्येन्द्रियापेक्षया ज्यैष्ठ्यम् । छा.

**ज्येष्ठसाम** - ब्रह्माध्यायी अभ्यारोहमित्यादिपरिभाषितः सामविशेषः । वि.

**ज्येष्ठा** - दुस्सहपत्नी । श्रीसू.

**ज्यैष्ठ्यम्** - प्रवृद्धत्वम्। ज्य चेति प्रशस्य-शब्दस्य ज्यादेशः। श्रु.

**ज्योक्** - उज्ज्वलः। व्याध्यादिभिरनुपहतः छा.

**ज्योग्जीवति** - यावद्ब्रह्मप्राप्ति व्याध्यादिभिरनुपहत उज्ज्वलो जीवति। छा.

**ज्योतिः** - कार्यस्योत्पादनद्वाराऽभिव्यञ्जकं कारणद्रव्यमिह विवक्षितम्। तमःप्रतिद्वन्द्वि। दीप्तिः। श्रु. तेजः। दीपवत्प्रकाशकम्। तै. निरतिशयदीप्तियुक्तादित्यपुरुषः। श्वे. परं ब्रह्म। श्री. परमात्मा। छा. परव्योमारोहण-निश्श्रेण्याः प्रथमं पदमर्चिः। द्योत्य(त?) तेऽस्मादिति। सर्वा. (प्रकाशकं) इन्द्रियम्। मु. प्रकाशकम्। प्र.गी.ब्रह्म। श्री. सर्वप्र-काशकदीप्तिमत्। प्र. स्वप्रकाशत्वम्, स्वप्रकाशकज्ञानस्वरूपः। तै. स्वयंप्रकाश-दिव्यमङ्गलविग्रहविशिष्टं परं ब्रह्म। अच्यु.

**ज्योतिरादित्यः** - दिव्याश्चर्यापूर्वज्योति-र्मयादित्यः। सह.

**ज्योतिरुपक्रमा** - ज्योतिः ब्रह्म; उपक्रम-शब्दः कारणत्वार्थकस्सन् आत्मत्वं लक्षयति। तथा च ब्रह्मात्मिकेत्यर्थः। श्वे. (यथा श्रीभाष्यं ब्रह्मकारणिकेत्यर्थेऽनुपप-त्त्यभावेऽपि सूत्रोत्थापकशङ्कापरिहारौचि-त्याय ब्रह्मात्मकत्वपर्यवसानमत्र विवक्षितम्। देवात्मशक्तिं स्वगुणैर्निरूढा-मित्युपक्रमानुसारात्।) अत्र उपक्रम इत्यादिवाक्यभङ्ग्या ज्योतिः उपक्रमे निरूपणारम्भे यस्यास्सा ज्योतिरुपक्रमेति विग्रहान्तरमपि सूच्यत इव।

**ज्योतिर्गणेश्वरः** - नित्यसूरिगणेश्वरः। सह.

**ज्योतिर्मयः** - ज्ञानमयः। मु.

**ज्योतिषम्** - दैवकी द्र.या. अध्ययनतद-र्थानुष्ठानकालनिर्णयात्मकम्। य.

**ज्योतिषां ज्योतिः** - प्रकाशकानां प्रकाशकः। बृ.

**ज्योतिष्मन्तो लोकाः** - अग्निसूर्यादि-लोकाः। छा.

**ज्योतींषि** - दीपादित्यमणिप्रभृतीनि। गी.

**ज्योत्स्ना**- प्रभा। वि.

**ज्योत्स्नी** चन्द्रिकया अन्विता रात्रिः। रा.

**ज्वरः** - चिन्तासन्तापः। रा.

**ज्वलन्ती** - अनुकूलाननुकूलास्वादताप-करदिव्यज्योतिः स्वरूपा। श्रीसू.

## झ

**झाटः** - संसर्गः। कान्तारम्। "झाटो निकुञ्जे कान्तारे व्रणसम्मार्जनेऽपि च' इति विश्वः। पा.

**झिल्लिका** - भूतलाद्यन्तरितकीटविशेषः। रा.

## ड

**डम्भः** - कार्पण्यम्। यस्य ख्यातिलाभ-पूजार्थम् आचरणम्। न्यावि. [धार्मिकत्वख्यापनाय धर्मानुष्ठानम्। र.]

[**डाकिनी** - दुष्टग्रहविशेषः। सच्च.]

**डिम्भाः** - बालिशाः। सर्वा.

## ण

**ण्यः** - ब्रह्मलोके स्थितः अर्णवः । छा.

## त

**तक्षः** - ज्येष्ठो भरतस्य पुत्रः । रा.

**तक्षशिला** - तक्षस्य भरतपुत्रस्य प्रधाननगरम् । रा.

**तगरः** - वृक्षविशेषः । रा.

**तच्छेषत्वम्** - तन्निष्ठातिशयाधायकत्वम् । वा.

**तज्जन्यत्वम्** - तद्धेतुकत्वम् । सर्वा.

**तज्जालन्** - तदधीनोत्पत्तिस्थितिलयकम् । जायत इति जम् । लीयत इति लम् । जलशब्दौ डप्रत्ययान्तौ । अनितीत्यन् । अनिति जीवतीत्यर्थः । क्विबन्तो विजन्तो वाऽयं शब्दः । तस्य जलान् तज्जलान् । छा.

**तटस्थलक्षणम्** - कादाचित्कासाधारणधर्मः । च. शब्दप्रवृत्तिनिमित्तत्वशून्योऽसाधारणधर्मः । रत्न.

**तटाकः** - मनुष्यखातं सरः । वि.

**तटित्** - विद्युत् । श्री.

**तत्** - तदा, तस्मिन् विषये । छा. तथा । गी. 'यथा, इत्यस्य प्रतिनिर्देशत्वात् तच्छब्दः प्रकारपरामर्शीत्याह -तथा शृण्विति । ता. 'स वः कः किं यत् तत् पदमनुत्तमम्' इति तच्छब्दो हि ब्रह्मवाची प्रसिद्धः । गी. भगवन्नामसहस्रे 'यानि नामानि गौणानि विख्यातानि महात्मनः' इति प्रक्रमात् 'नाम्नां सहस्रम्' इति निगमनाच्च यत्तदादिशब्दानां सर्वनामतया व्यापिनामपि विशेषतः साक्षात् परब्रह्मनामत्वं सिद्धमिति भावः । ता. भक्तानां स्वज्ञानभक्तिं तनोतीति । सह. [ब्रह्म । 'यत्तत्पदमनुत्तमम्', 'तदिति वा तस्य महतो भूतस्य नाम' इत्यादिदर्शनात् । सच्च.]

**ततः** - तत्र, तेषु । बृ. विषयसङ्गाद्धेतोः । गी.

**तत ऊर्ध्वम्** - ज्ञातांशातिरिक्तम् । छा.

**ततम्** - व्याप्तम् । न्यासिटी. शेषित्वेन व्याप्तम् । गी.

**तत्क्रतुः** - तथोपासीनः तथैव प्राप्नोति । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति इति श्रुतेः" । श्री.

**तत्क्रतुन्यायः** - यथाक्रतुरस्मिन् इति न्यायः । न्यासिटी. "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुत्युक्तः 'यथोपासनं फललाभः' इति न्यायः । अधि. यथोपासनं फलप्रतिपादकन्यायः । श.

**तत्क्षणत्वम्** - भावकालत्वम् । सर्वा.

**तत्तादृशम्** - वीप्सिततच्छब्दोपपदाद् दृशेः कन् प्रत्ययः । ....भोजराजस्त्वत्र तत्पदवीप्सामनङ्गीकृत्य तुल्यशब्दसमानार्थतत्तुल्यशब्दवत् तादृशशब्दसमानार्थस्तत्तादृशशब्दोऽप्यस्त्यखण्ड इत्याह. । या.

**तत्पदम्** - तच्चरणम् । पद्यत इति व्युत्पत्त्या पदं मुक्तप्राप्यतया सिद्धं परमपुरुषस्याप्राकृतं स्थानं स्वरूपं वा । गीसं.

**तत्परः** - तत्प्रतीतीच्छया उच्चरितः । श.
**तत्परम्** - प्रधानाभिप्रायवत् । सर्वा.
**तत्परतः** - ततः परत्वेन, तात्पर्येण, भक्त्या । न्यासिटी.
**तत्परायणः** - तदेव परमप्रयोजनमिति मन्वानः । गी.
**तत्त्वम्** - अतीतकालसम्बन्धः । सर्वा. अनारोपितम्; प्रमितं वा । रत्न. अर्थस्थितिः । श्रु. दधिदुग्धयोरिव दधिसारः चिदचितो-र्व्याप्तिप्रयोजनाभ्यां सारांशः । सह. द्रव्यम् । न्यासिटी. पदार्थसामान्यम् । सर्वा. परमार्थबुद्धिः । रा. पुरुषार्थः । गद्य. प्रामाणिकः पदार्थः । गीसं. प्रामाणिकार्थः । अधि. यथार्थम् । रा. याथात्म्यम् । भा. सत्यम् । वै. स्वरूपम् । ता.
**तत्त्वजातम्** - चितत्त्वचित्तत्त्वेश्वरतत्त्व-रूपतत्त्वजातम् । श्रीत. अनारोपिताकारेण बुद्धिः । स्तो.
[**तत्त्वज्ञानम्** - यथार्थज्ञानम् (बुद्धेः अष्टस्वङ्गेषु अन्यतमम्) । र.]
**तत्त्वज्ञानार्थचिन्तनम्** - तत्त्वज्ञानप्रयोज-नचिन्तननिरतत्वम् । गी.
**तत्त्वतः** - यथावस्थितम् । गी. संशय-विपर्ययरहितम् । ता. संशयविपर्यय-राहित्येन । गद्य.
**तत्त्वतः प्रवेशः** - परिपूर्णप्राप्तिः । यथाव-स्थितसर्वाकारेणानुभव इत्यर्थः । तेन व्यूह-विभवादिमात्रप्राप्तिव्यवच्छेदः । ता.
**तत्त्वतो बुद्ध्या** - अबाधितबुद्ध्या । रा.
[**तत्त्वत्रयम्** - चिदचिदीश्वराः । ई.]
**तत्त्वदर्शी** - साक्षात्कृतात्मस्वरूपः । गी.
**तत्त्वनिर्णयः** - श्रीवात्स्यवरदगुरुविरचितो विशिष्टाद्वैतग्रन्थः कश्चित् । न्यासि. [यादवप्रकाशमतानुसारी नारायणार्य-पण्डितप्रणीतो ग्रन्थविशेषः । सच्च.]
**तत्त्वबोधाभिलाषी** - स्वरूपसाधनपुरु-षार्थविषयसम्यक्ज्ञानमाकांक्षन् । न्यावि.
**तत्त्वभावः** - अन्तःकरणं, तत्त्वं भावय-तीति । क. तत्त्वाविर्भावः । श्वे. तत्त्वाविर्भावः, साक्षात्कारः । श्रु.
**तत्त्वभेदः** - प्रामाणिकार्थविशेषः । अधि.
**तत्त्वरत्नाकरः** - श्रीपराशरभट्टार्यानु-गृहीतः असंपूर्णः, तमोविचारघट्टे 'अत्र तत्त्वविदः प्राहु'रिति श्लोक एव विघ्नितो ग्रन्थविशेषः । न्यासि.
[**तत्त्वसारः** - श्रीमन्निगमान्तदेशिक-प्राचार्यैः நடாதூர் அம்மாள் इति द्राविड्यां प्रसिद्धैर्वरदगुरुभिरनुगृहीतो विशिष्टाद्वैतदर्शनानुसारी ग्रन्थविशेषः । सच्च.]
**तत्त्ववित्** - तत्त्वमात्मनो वेत्तीति । सह.
**तत्त्वस्य कर्म** - नारायण एव तत्त्वं तस्य समाराधनं कर्म नित्यनैमित्तिकलक्षणम् । श्वे.
**तत्त्वानि** - अचिच्चिदीश्वररूपाणि षड्विं-शतिसंख्याकानि । अधि.
**तत्त्वालोकः** - यथार्थाध्यवसायः । सर्वा.
**तत्त्वेन** - परमार्थतः । रा.

**तत्सहायिनी** - तेन सह अयते गच्छतीति। वि.

**तत्साकांक्षत्वम्** - तदुत्थाप्याकाङ्क्षा-निवर्तकत्वे सति तन्निवर्तनीयाकांक्षोत्थापकत्वम्। वा.

**तत्साहित्यम्** - तद्भिन्नत्वे सति तदधिकरणवृत्तित्वम्। रत्न.

**तत्स्वाभाव्यापत्तिः** - तत्सादृश्यापत्तिः। श्री.

**तथाविधत्वम्** - स्वाभाविकत्वम्। श्रु.

**तथ्यम्** - अबाधितबुद्धिगोचरः। अधि.

**तदङ्गम्** - तदसाधारणम्। श्रु.

**तदधिष्ठाता** - स्वेच्छाधीनतत्प्रवृत्तिकः। च.

[**तदनम्** - तेन अनिति तदधीनस्थितिमत्। ई.]

**तदन्तर्व्याप्तिः** - तदधिकरणवृत्त्याभावाप्रतियोगित्वम्। रत्न.

**तदपेक्षयाऽनुवर्तमानत्वम्** - तद्विषयकप्रतीविषयत्वे सति तदविषयकप्रतीतिविषयत्वम्, स्वाविषयकप्रतीतिविषयतद्विषयकप्रतीतिविषयत्वम्। रत्न.

**तदात्मा** - तदधीनस्वरूपस्थितिप्रवृत्तिकः। श. च.

**तदात्वे** - तत्काले। या.

**तदाधायकत्वम्** - तदवच्छेदकत्वम्। वा.

**तदेकप्रियः** - स एव प्रधानतया नित्यं प्रियो यस्य स तथोक्तः। गद्य.

**तदेकानुभवः** - तस्मिन्नेकस्मिन्नेव प्रधानतया अनुभवो यस्य स तथोक्तः। गद्य.

**तदेकोपायतायाच्ञा** - प्रार्थनापूर्वकभरन्यासः। न्यावि.

**तदेव** - तत्रैव। छा.

**तदेष श्लोकः** - तच्छब्दः प्रसिद्धिपरः। एष वक्ष्यमाणः श्लोकः प्रसिद्ध इत्यर्थः। छा.

**तद्गतम्** - तदनुभवाभावे शिथिलीभवत्। तस्मिन् समर्पितं वा। गीसं.

**तद्गुणसंविज्ञानत्वम्** - विशेष्यनिष्ठविषयतानिरूपितविषयतावच्छेदकावच्छिन्नविषयतानिरूपितविशेषणनिष्ठविषयताप्रयोजकत्वम्। वा.

**तद्भावभावः** - तद्भाव इव भावा यस्य स तत्समानस्वभावः, तस्य भावः। भाव.

**तद्भावभावितः** - तद्भावनावासितः। यद्वा तस्मिन् भावो भावितो येन सः। ता.

**तद्व्यपदेशः** - तद्वाचिशब्दः। श्री.

**तनु** - सूक्ष्मम्। अति.

**तनुः** - इन्द्रादिः। गी. मूर्तिः। अति.

**तनूपमा** - तन्वी अल्पा उपमा यस्याः सा असदृशी। तै.

**तन्तुः** - सन्ततिः। तै.

**तन्तुनाभः** - लूताख्यः कीटविशेषः। श्वे.

**तन्तुवर्धनः** - पापरुचिभिस्तन्तुं संसारतन्तुं वर्धयति सन्तनोतीति। सह.

**तन्त्रम्** - अनेकप्रधानोद्देश्यकसकृदंगानुष्ठानम्। भाव. पृथक् प्रयुक्तिशक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये च सकृत्करणम्। च. [पाञ्चरात्रशास्त्रम्। सच्च.]

[**तन्त्रसिद्धान्तः** - "नवानामपि पूर्तीनां

प्राधान्यं यत्र कथ्यते । मूर्तयो द्वादशाङ्गानि तेषामेव तथापरे । प्रादुर्भावगणाश्चापि मूर्त्यन्तरगणा अपि । प्रादुर्भावान्तरयुताः सदिग्देवैः सहायुधैः । मूर्तिमद्भिश्च देवीभिः लक्ष्म्यादिभिरपि स्फुटम् । तत्तन्त्रसिद्धान्ताह्वानम् ।'' पाञ्च. ''तन्त्रसंज्ञं हि सिद्धान्तचतुर्वर्गफलप्रदम्'' । र.]

[**तन्त्रान्तरसिद्धान्तः** - सौम्यसिंहादिभूयिष्ठवक्त्रभेदैश्चतुर्मुख । द्वित्र्यादिमुखभेदा वा मूर्तिरेकैव पूज्यते । संवृता परिवारैस्स्वैः विना वा सर्वकामदा । यत्तु तन्त्रान्तरं तत्स्यात् चतुर्थं चतुरानन । पाञ्च. ''तन्त्रान्तरं तु सिद्धान्तं वाञ्छितार्थफलप्रदम्'' । र.]

**तन्त्रीः** - वीणा । रा.

**तन्द्रितः** - उदासीनः । ता.

**तन्मयत्वम्** - आत्मनि तत्तादात्म्यम्, तत्प्राचुर्यम्, तदेकविषयचित्तत्वम् । वि. भेदकाकारास्फुरणत्वम् । मु.

**तन्मयाः** - तत्समानाकाराः । श्वे.

**तन्मात्रम्** - भूताव्यवहितसूक्ष्मावस्थाविशिष्टद्रव्यम् । न्यासि. शब्दतन्मात्रादि आकाशादिकारणम् । सुबा.

**तन्यतुः** - पर्जन्यः । बृ.

**तपः** - अनशनप्रभृतिकायक्लेशः । रा. अनशनादिरूपम् । भा. आलोचनम् । ता. आलोचनरूपज्ञानम् । तै. उपवासादि । वि. कायक्लेशः । श्री.वे.रा. कायशोषणम् । तै. कृच्छ्रचान्द्रायणद्वादश्युपवासादेः भगवत्प्रीणनकर्मयोग्यतापादनस्य करणम् । गी. कृच्छ्रचान्द्रायणादि । सुबा. कृच्छ्रादि । वे. चान्द्रायणादि । रा. ज्ञानम् । श्वे.मु. ज्ञानम् । तप आलोचन इति धातोरसुन्प्रत्ययः । 'यस्य ज्ञानमयं तपः' । रा. तप आलोचने । तत्त्वनिरूपणं तपः । सुबा. तपःप्रधानसंन्यासाश्रमः । मु. न्यासः । तस्मान्न्यासमेषां तपसामतिरिक्तमिति श्रुतिः । रा. परमात्मसङ्कल्पः । तै. परमात्मा । भाव. पर्यालोचनरूपं ज्ञानम् । श्री. ब्रह्म । मु.छा. ब्रह्म । तपो हि ब्रह्म इति श्रुतिः । रा. ब्रह्म । ''परमं यो महत्तपः'' इति प्रसिद्धेः । श्री. भोगनियमनरूपः शास्त्रसिद्धः कायक्लेशः । गी. भोगनियमनरूपः शास्त्रप्रसिद्धः कायक्लेशः । भा. मनसश्चेन्द्रियाणां च ऐकाग्र्यम् । मु.श्वे. वर्णाश्रमोचिततत्तद्धर्मानुष्ठानम् । भा. वेदः । तपो हि स्वाध्याय इति श्रुतिः । रा. वैखानसपारिव्रज्ये, वानप्रस्थसन्न्यासाश्रमौ । उभयोरप्याश्रमयोस्तपः प्रधानत्वात्, तपःशब्दो हि कायक्लेशे रूढः । छा. व्याकरणम् । तथोक्तं वाक्यपदीये ''आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः । प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः'' इति । रा. शरणवरणम् । शास्त्रीयो भागसङ्कोचः । ता. शास्त्रीयो भोगसंकोचरूपः कायक्लेशः । गी. बाह्यादिमूलक्लेशस्य तपस्त्वव्यवच्छेदाय शास्त्रीय इति । शास्त्रीयस्यैव कायक्लेशस्य व्याध्यादिवशाद-

क्लेशात्मकत्वे तपस्त्वं नास्तीति कायक्लेश इत्युक्तम्। ता. संकल्पः। अग्नि. सङ्कल्पः। 'यस्य ज्ञानमयं तपः' इति तपः सर्ववेदनज्ञानमुच्यते। श्रीसू. स्रष्ट-व्यालोचनम्। मु. [कृच्छ्रचान्द्रायण-द्वादश्युपवासादेः भगवत्प्रीणनकर्म-योग्यतापादनस्य करणम्। र.]

**तपति** - स्वकार्योत्साही भवति। छा.

**तपसा** - मनःप्रणिधानात्मकेन। भा.

**तपस्विना** - शोच्येन। 'तपस्वी तापसः शोच्य' इति विश्वः। रा.

**तपस्विनी** - शोचनीया। देशकालाद्यने-कनियमवतीति भावः। श्रु.

**तपस्वी** - ज्ञानी। गी. दीनः। 'मुनिदीनौ तपस्विनौ' इति वैजयन्ती। या. शोचनीयावस्थः। रा.

**तपांसि** - तपःप्रधाना उपरितनभागाः। क.

**तपोधनः** - प्रपत्त्येकधनः। 'तस्मान्न्यास-मेषां तपसामतिरिक्तमाहु'रिति श्रुतेः। रा.

**तपोयज्ञाः** - कृच्छ्रचान्द्रायणोपवासादिषु निष्ठाकारिणः। गी.

**तप्तः** - तप आलोचने। सृज्यवर्गपर्यालो-चनवान्। श्रु. ...

**तप्तकुम्भः** - नरकयातना; यत्र तैलकुम्भेषु पच्यन्ते पापिनः। वि.

**तप्तहाटकम्** - द्रुतकनकम्। रा.

**तमः** - अज्ञानम्। रा.अति.नी. अति-सूक्ष्मप्रकृतिः। श्रु. अतिसूक्ष्मं प्रधानतत्त्वम्। सुबा. अतिसूक्ष्माचिद्वस्तु। श्री. अन्धकारः, तमोगुणः। नी. गुरुत्वादिहेतुभूतः स्वभाव-विशेषः। श्री. पृथिवीविशेषत्वमेव तमसो युक्तम्। न्याप. प्रकृतिः। छा.श. प्रकृति-तत्त्वम्। नी. प्रमादमोहनिदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यम्। न्यासि. प्रलय-कालस्थपरमाकाशः। नी. मूलप्रकृतिः। श्वे. मूलप्रकृतिभूततमोऽतिरिक्तं तेजः प्रभृतिवत् सृष्टिसंहारगोचरभूतं तत्त्वान्तरं पृथिव्यां शक्यान्तर्भावम्। नेदमालोकाभावमात्रं रूपमात्रं वा। न्यासि. यत्र चिद्गर्भत्वमचि-त्त्वमपि विवेक्तुमशक्यं तदवस्थमतिसूक्ष्मं प्रधानम्। सुबा. यथार्थज्ञानावरणम्। वे. विभक्ताविभक्तात्मना द्विविधं, मूलप्रकृतिः। न्यासि. सम्यक्प्रकाशविरुद्धमज्ञानं विपरीतज्ञानञ्च, गुणमयी प्रकृतिर्वा। स्तो. [प्रकृतिमण्डलम्। र. भूतलनिहित-बीजस्थानीयमविभक्तं प्रकृतितत्त्वम्। ई.]

**तमसः परम्** - सूक्ष्मावस्थप्रकृतेः परम्। गी.

**तमसः परमः** - प्राकृतमण्डलस्य परस्तात् अप्राकृते श्रीवैकुण्ठे विद्यमानः। ''आदि-त्यवर्णं तमसः परस्तात्' इति श्रुतेः। रा.

**तमसः परस्तात्** - तमःपारवर्ति। तै.

**तमसा** - वाल्मीक्याश्रमसमीपगा नदी। रा.

**तमसि** - तमोगुणे। म.

**तमिस्रम्** - तमः। या.

**तमोद्वारम्** - भगवद्विपरीतज्ञानहेतुः। गी.

**तमोनुदः** - जगन्मूलकारणं तमोऽधिष्ठाता नारायणः। वेकौ.

**तमोमात्रः** - तमोगुणांशः । वि.

**तमोऽन्धम्** - अज्ञाननिवर्तकम् । तमः संसृतिरुचिजनकं अज्ञानम् अन्धयति तिरोधापयति निवर्तयतीति । भा.

**तरः** - बलं वेगो वा । 'तरसी बलरंहसौ (?)' इति यादवः । या.

**तदक्षवः** - मृगादना महाव्याघ्राः । रा.

**तरक्षुः** - क्षुद्रव्याघ्रः । रा.

**तरणम्** - प्राप्तिः । श्री. व्यपोहनम् । निरवशेषमुल्लङ्घनम् । ई.

[**तरणे प्रकर्षः** - (प्रतर्तवे इत्यत्र) अपुनरावृत्तिलक्षणमात्यन्तिकत्वम् । **सच्च.**]

**तरलः** - चञ्चलः । भास्वरः । **या.** हारमध्यगो मणिः । रा.

**तरसे** - बलाय । तै.

**तरस्वी** - बलवान् । रा.

**तरुणी** - आरब्धयौवना । रा.

**तर्कः** - अनुमानम् । सर्वा.श्रु. प्रमाणानुग्राहकतर्कः । श्रु. अर्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम् । श्री. अधि. यदि वह्निर्नस्यात्तर्हि धूमोपि न स्यादित्यादिप्रमाणानुग्राहकविचारविशेषः । वर. वस्तुस्वरूपविषयः कारणविशेषविषयो वा एवमेव भवितुमर्हतीत्येवंरूपः प्रमाणानुग्राहक ऊहः । श. व्याप्यांगीकारे अनिष्टव्यापकप्रसञ्जनम् । सर्वा. व्याप्यङ्गीकारेण व्यापकानिष्ठप्रसञ्जनम् । न्याप. य. [युक्त्यनुचिन्तनम् । र.]

**तर्कपादः** - (ब्रह्मसूत्रे) द्वितीयाध्यायस्य द्वितीयः पादः । त.

**तर्काङ्गपञ्चकम्** - प्रसञ्जकप्रसञ्जनीयव्याप्ति प्रतितर्काप्रतिघातप्रसञ्जनीयविपर्ययपर्यवसानप्रसञ्जनीयानिष्टत्व परपक्षासाधकत्वरूपं तर्कस्याङ्गपञ्चकम् । न्यासिटी.

**तर्कावस्करः** - एकार्थपरत्वभङ्गादिः (अवस्करः मलम्) । "वर्चस्कोऽवस्करः" इति निपातनात् । च.

**तर्जनम्** - नासग्रेऽङ्गुलिन्यासनयनभ्रामणदर्शनप्रभृतिमुखचेष्टाभिर्भीजननम् । रा.

[**तर्जनी** - अंगुलिविशेषः । सच्च.]

[**तर्तवे** - तर्तुम् । सच्च.]

**तर्तव्यम्** - प्राप्तव्यम् । श्रु.

**तर्पणम्** - (अपाम्) लोकवृत्तिहेतुत्वम् । भा.

**तर्पयन्ती** - कान्तिशाल्याकारमधुरशीतलविलोकनामृतपरंपरया तापत्रयतप्तं प्राणिजातमाह्लादयन्ती । श्रीसू.

**तर्पितः** - पूरितः । वि.

**तर्षः** - अर्थकामतृष्णा । भा.पिपासा । रा.

**तर्षम्** - अभिलाषम् । वर.

**तलम्** - क्षमातले भूतले । तलशब्दः स्वरूपवाची । वा. ज्याघातवारणम् । रा. [खड्गमुष्टिः । या.]

**तलत्वम्** - कठिनदेशत्वम् । सर्वा (आ).

[**तलप्रहारः** - चपेटाघातः । या.]

[**तल्लम्** - तस्मिन् लीयमानम् । ई.]

**तल्लोकापत्तिः** - तद्देशप्राप्तिः । श्री.

**तव भरोऽहम्** - मद्व्यापारनिरपेक्षमहं रक्षणीयः । न्यावि.

**तव्यसे** - तपस्विने । तै.

**ताण्डिनः** - छन्दोगाः । श्रु. अधि.

**तात्पर्यच्छलम्** - सामान्यच्छलम् । न्याप.

**तात्पर्यवृत्तिः** - तात्पर्यात् आगता वृत्तिः, तत्परत्वरूपा वा । श्रु.

**तादात्म्यम्** - अन्तर्यामिरूपेण आत्मतयाऽवस्थानम् । वि. अभेदः, संबन्धविशेषः । नी.

**तादृशः** - स इव दृश्यत इति तादृशः । तत्सदृश इत्यर्थः । यद्वा 'तादृशादयो रूढिशब्दाः । नैवात्र दर्शनक्रिया विद्यते' इति काशिकावचनात् तादृशशब्दो रूढ्या तत्प्रकारत्वार्थः । या.

**ताद्विध्यम्** - तद्विधत्वम् । श्री.

**तान्तिः** - ग्लानिः । अते.

**तान्त्रिकाः** - पदवाक्यप्रमाणज्ञाः । अधि.

**तापत्रयम्** - आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम् । श.

**तापत्रयी** - तापानाम् आध्यात्मिकाधिभौतिकाधिदैविकाख्यानां त्रयी । वर.

**तापस्यम्** - तापसयोग्यं कर्म । रा.

[**तामसः** - तमोगुणविशिष्टः । या.]

[**तामसत्यागः** - "नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागः तामसः परिकीर्तितः ।" र.]

**तामसम्** - 'यच्छास्त्रं परमात्मानं वामदेवमुमापतिम् । तमःप्रवर्तकं वक्ति तत्तामसमुदाहृतम् ॥' वेकौ.

**तामसयज्ञः** - विध्यादिगहितो यागः । "विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥" इति वचनात् । रा.

**तामसा भावाः** - अविवेकादयः । 'अविविक्तन्तथामोहः प्रमादस्वप्नतन्द्रिताः ।' ता.

**तामसी** - संहारहेतुभूततमोऽधिष्ठात्री । वि.

**तामसी बुद्धिः** - सर्वांशे विपरीतबुद्धिः । श्रु.

**तामसी माया** - अन्धकारोत्पादिका विचित्रशक्तिः । रा.

**तारः** - प्राणिनः संसारात् तारयति उत्तारयतीति । सह. सन्निधानाच्च सर्वसंसारभयात्तारयतीति । "गर्भजन्मजरामरणसंसारसागरमहाभयात्तारयतीति तस्मादुच्यते तारः" (अथर्वशिरसि) । सह. सर्वेभ्यो दुःखमयेभ्यः सन्तारयतीति तारः । वेकौ.

[प्रणवः (ओमित्येकाक्षरम्) । र.]

**तारम्** - प्रणवप्रतिपाद्यं ब्रह्म । पा.

**तारणः** - आधिभौतिकेभ्यो वैरिचोरव्याध्यादिभयेभ्यस्तारयतीति । सह.

**तारतम्यम्** - अपकर्षसमानाधिकरण उत्कर्षः । रत्न. तरतमभावः प्रत्ययानुकरणादर्थलाक्षणिकात् ष्यञ् । सर्वा(आ).

**तारा** - अक्ष्णः कनीनिका । दया. वालिभार्या वानरी । रा.

**तारा:** - कनकमौक्तिनि । पा.
**ताराय** - (संसार) उत्तारकाय । वि.
**तारेय:** - तारापुत्रोऽङ्गदः । रा.
**तार्किका:** - तर्केण दीव्यन्तीति तार्किका वादिनः । 'तेन दीव्यती' ति ठक्प्रत्ययः । या.
**ताल:** - कालेन नृत्तगीतवाद्यक्रियामानम् । पा. मृदुपर्णः श्रीतालः । रा.
**तालजङ्घा:** - ध्रुवसन्धिनृपसुतभरतपुत्रस्य असितस्य शत्रवः । रा.
**तालावचारा:** - तालैरवचरन्ति जीवन्तीति, नर्तकादयः । रा. सूत्रधाराः । तालं गृहीत्वाऽवचरन्तीति । रा.
**तावत्** - प्रथमं तावत् प्रथमत एव । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इति नैघण्टुकाः । श्रु. प्रथमम् । रा.
**तिग्मम्** - क्रूरम् । रा.
**तितिक्षया** - अपराधिषु सहनेन । भा.
**तितिक्षव:** - मूर्खेष्वपि क्षितिवत्सहनशीलाः । भा.
**तितिक्षा** - क्षमा । बृ. द्वंद्वाप्रतिहतत्वम्, द्वंद्वसहनम्, द्वंद्वसहिष्णुता, शस्त्रघातादिप्रयुक्तव्यथासहनम् । भा.
**तितिक्षु:** - दुर्निवाराणि द्वन्द्वानि सहमानः । त.
[**तिथिपुष्पाणि** - कदळीपद्मलक्ष्मीसिन्धुवारद्रोणप्रियङ्गुमालतीपाटलकेतकजातिमल्लिकामहाजातिपलाशाश्वत्थपत्राणि तिथीनां आनुपूर्व्येण पुष्पाणि । पाञ्च.]
**तिन्दुकान्** - स्फूर्जकाख्यान् वृक्षान् । रा.
**तिमिध्वज:** - शम्बरासुरः । रा.
**तिमिरम्** - उत्पातकालिको धूमः । रा. नयनदोषः । सर्वा (आ).
**तिमिशान्** - नेमिवृक्षान् । रा.
**तिरश्चीनम्** - तिर्यक्तन्तुविशेषाः पर्यङ्कस्य । कौ.
**तिरश्चीनवंश:** - मध्वपूपस्य आधारभूतः तिर्यक्प्रसारितो वंशः । छा.
**तिरस्कार:** - अनादरः । तथा च नैघण्टुकाः "अनादरः परिभवः परीभावस्तिरस्क्रिया" इति । ता.
**तिरोधानम्** - धीप्रसरप्रतिबन्धः । श्रीत. क्षेत्रज्ञानां भगवत्स्वरूपविषयज्ञानप्रसरनिषेधः । तत्तद्भेदकधर्मग्रहणनिवारणं वा । गद्य. प्रकाशनाशः । न्यासिटी. प्रकाशनिवारणम् । प्रकाशनिवृत्तिः । वे. प्रकाशनिवृत्तिः, वस्तुप्रकाशनिवृत्तिः । श्री.
**तिरोधाननिवृत्ति:** - प्रकाशो द्र.
**तिरोभाव:** - सङ्कोचः, नाशः । वि.
**तिर्यञ्च:** - मृगपक्षिसरीसृपादयः तिर्यग्योनयः । न्यासि.
**तिर्यञ्चम्** - पश्वादितिर्यग्रूपम् । श्वे.
**तिर्यक्स्रोत:** - वायुः । वि.
**तिर्यग्वाहा** - दक्षिणोत्तराभिमुखप्रवाहा गण्डकीशोणभद्रादिः । रा.
**तिलका:** - क्षुरकवृक्षाः । रा.
**तिल्य: (इल्य:)** - ब्रह्मलोके एतन्नामकः कश्चिद्वृक्षः । इल्य इति पाठान्तरम् । छान्दोग्ये तदश्वत्थस्सोमसवन इति **सोमसवनसंज्ञ-**

कोऽश्वत्थ उक्तः । कौ.

**तिष्ठन्** - अनुतिष्ठन् । तेषु तिष्ठन्ताननुतिष्ठन् । वि.

**तिष्ठासेत्** - निष्ठां लभेत । उपासीतेति यावत् । बृ.

**तिष्यः** - कलिः । रा.

**तिस्रो विद्याः** - त्रयीवार्तादण्डनीतयः । रा.

**तीक्ष्णः** - क्रूरहृदयः । रा.

**तीक्ष्णाः** - अतिशैत्यातितैक्ष्ण्यादिना(?) दुरुपयोगाः । गी. तीक्ष्णानि प्रयोगक्षणप्रभृतिप्रतिकूलतमानि द्रव्याणि । ता.

**तीर्त्वा** - प्राप्य । वेदान्तं तरतीतिवत् । श्वे.

**तीर्थम्** - जलावतरणम्, नदीतटाकादेरवतारमार्गः । रा. जलावतारप्रदेशः । या. शास्त्रविहितो न्यायः । बृ. शुद्धिकरं गङ्गादिजलम्। वै. [पावनम् । र.]

**तीर्थकरः** - श्रुतिस्मृत्यादिसत्संप्रदायप्रवर्तकः । गंगापुष्करादिसर्वपुण्यतीर्थहेतुः। सह.

**तीर्थपादः** - भगवान् । तीर्थौ पवित्रौ पादौ यस्य । गंगादितीर्थाश्रयो वा । भा.

**तीर्थानि** - नीतिशास्त्रोक्तानि मन्त्र्यादीनि । रा.

**तीव्रानुकूल्यम्** - आत्मनस्स्वाभाविकमिदम् । तत्र तीव्रत्वं वैषयिकसुखापेक्षयोत्कृष्टत्वम् । तद्विशिष्टानुकूल्यग्रहणं योगे मुक्तौ च । रत्न.

**तु** - तुशब्दश्चार्थे । तुशब्दोऽवधारणार्थः । ग्रा. तुशब्दः शंकानिवृत्त्यर्थकः । कौ. [विशेषद्योतकमव्ययम् । अवधारणार्थकः शब्दः । ('दभुक्षणे तु भिजे' इत्यत्र) । सच्च.]

**तुङ्गः** - पुन्नागविशेषः । रा.

**तुच्छः** - सर्वदा सर्वत्राभावप्रतियोगी । च.

**तुच्छत्वम्** - प्रमाणसम्बन्धानर्हत्वम् । श्री.

**तुच्छे** - अभावे । भा.

**तुन्नवायः** - सौचिकः । रा.

**तुमुलम्** - निरन्तरम् । रा.

**तुरम्** - तूर्णम् । शीघ्रम् । छा.

**तुरगसवनम्** - अश्वमेधाख्यः क्रतुविशेषः । व.

[**तुरीयधाम** - व्यूहत्रयात् चतुर्थं तेजः । परमपदम् । जाग्रदादिपदत्रयात् वासुदेवसंज्ञं चतुर्थं तेजः । मुक्तप्राप्यं परमपदम् । सच्च.]

[**तुर्यम्** - कर्मवश्यानां प्राप्यानां स्थानत्रयात् (?) विलक्षणं सर्वस्मात्परमित्यर्थः। सच्च.]

**तुर्यः** - जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसंबन्धरहितः । भा.

**तुल्यं दर्शनम्** - अनैकान्तिकमित्यर्थः । श्री.

**तुल्यकुल्याः** - सदृशवंश्याः । रा.

**तुल्यनिन्दात्मसंस्तुतिः** - आत्मनि मनुष्यत्वाद्यभिमानकृतगुणागुणनिमित्तस्तुतिनिन्दयोः स्वासंबन्धानुसन्धानेन तुल्यचित्तः । गी.

**तुषारः** - शिशिरः । 'तुषारो हिमभेदेऽपि शीकरे शिशिरेऽपि च' इति विश्वः । या. शीतः । सर्वा.

**तुष्टः** - अधिकृताधिकारात् परत्वादपि अतिशयेन समस्तमनुष्याद्यधिकारयोर्दाशरथित्वजगत्पालनयोर्लाभेन प्रीतः । तुष्यति प्रीणातीति तुष्टः । "पितरं रोचयामास तदा दशरथं नृपम्" इत्यादि । सह.

**तुष्टिः** - अलंबुद्धिः । वि. सर्वेषु दृष्टेषु तोषस्वभावत्वम् । सर्वत्र संतोष एव ह्यात्मनः स्वारस्विकः प्राप्तः । प्रातिकूल्यभावनाद्युपाध्यधीनं हि वैरादिकम् । इदञ्च मैत्र्यादिषु मुदिताख्यं चित्तपरिकर्म । ता. यदृच्छलाभसन्तोषः । भा.

**तूलिका** - आलेख्यकूर्चिः । या.

**तृणोपलः** - तृणग्राही उपलः तृणोपलः (शाकपार्थिवादिः) सर्वा (आ).

**तृतीयधाम** - परमपदम् । तै.

**तृतीयसवनम्** - तत्फलं स्वर्गः । छा.

**तृतीयं स्थानम्** - पापकर्माणः । छा.

**तृतीयस्थानम्** - यूकमक्षिकादयः । भा.

**तृप्तिः** - क्षुत्पिपासादिनिवृत्तिः । वि. पूर्तिः । च.

**तृष्णा** - असन्तोषः । भा. लब्धेऽपर्याप्तधीः । वि. वाक्कायचेष्टा (बौद्धमते) । श्रु. शब्दादिसर्वविषयस्पृहा । गी. सुखदुःखप्राप्तिपरिहारार्था विषयोपादानेच्छा । (सौगतमते)। बृ.

**तृष्णासङ्गसमुद्भवम्** - तृष्णासङ्गहेतुभूतम् । गी.

**तेजः** - अनभिभवनीयता । ता. अन्यानपेक्षता, अप्रधृष्यता । भा. अभिमानः । ता. अस्वाधीनसहकारिनिरपेक्षत्वं, पराभिभवनसामर्थ्यं वा । गद्य. उष्णस्पर्शवत्, भास्वररूपवद्वा । वा. उष्णस्पर्शवत्त्वे सति भास्वररूपवत् । य. गर्वः, पराभिभवासहनमिति यावत् । रा. तपोयोगादिजनितः प्रभावः । वि. तैलघृतादिकं तेजश्शब्देनोच्यते । छा. दाहकत्वशक्तिः । ता. दीप्तिः । तै. पराक्रमः । 'तेजो धाम्नि पराक्रमे' इति विश्वः । या. पराभिभवनसामर्थ्यम् । ता.भा.न्याप.रा. वेकौ. य. पराभिभवनसामर्थ्यं पराधीनसहकार्यन्तरनैरपेक्ष्यं वा । दया. पराभिभवनसामर्थ्यं; प्रशासनम् । श्रु. पराभिभवनसामर्थ्यम्; नियमनशक्तिविशेषः । 'तेजोंशसंभव' मित्यत्र 'ममाचिन्त्यशक्तेर्नियमनशक्त्येकदेशसंभव' मिति भाष्यम् । 'कोऽयमात्राभिभवो नाम ? तत्र च कथमंशसद्भाव' इत्यत्राह ममेति । अचिन्त्यशक्तेरित्यनेन सर्वगोचरत्वाभङ्गुरत्वाघटितघटनत्वादिसिद्धिः । ता. पराभिभवसामर्थ्यम् । पराधिक्षेपासहनं वा । रा. पराभिभवासहिष्णुत्वम् । वि. परिभवनासहनम् । रा. परैरनभिभवनीयत्वम् । भा. परैरनभिभवनीयता । गी. प्रतापः । रा.तै.ता. प्रागल्भ्यम् । ता. सर्वसंहरणसामर्थ्यम् । प्र. सहकार्यनपेक्षा । श्रीत. ["अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् । या.]

**तेजसोहम्** - ब्रह्मप्रकाशाच्छादकम्; ब्रह्मप्रकाशहन्तारम् । म.

**तेजस्वि** - वीर्यवत्तरम्। तै.

**तेजस्वी** - बलवान्। रा. वीर्यवत्तरः। क.

**तेजितम्** - आहिततैक्ष्ण्यम्। अति.

**तेजोमात्राः** - तेजोमय्यो मात्राः तेजोमात्राः। प्रकाशकांशा इत्यर्थः। इन्द्रियाणीति यावत्। बृ. भूतसूक्ष्मांशाः। श्रु.

**तेजोवृषः** - सुहृत्पालनलक्षणं तेजो वर्षतीति। सह.

**तेने** - विस्तृतवान्। प्रकाशितवान्। प्रतिपादितवान्। भा.

**तैजसः** - पञ्चाग्निविद्यानिष्ठः। (तेजस्सम्बन्धी तेजउपासकः; पञ्चाग्निविद्यानिष्ठ इति यावत्)। बृ. महत्तत्त्वजन्यो राजसोऽहङ्कारस्तत्त्वविशेषः। सुबा. राजसः। श्री. राजसा-हङ्कारः। न्यासिटी.

**तैलद्रोणी** - ओषधिसंस्कृततैलपूर्णः पात्रविशेषः यत्र मृतकायः सुरक्ष्यते। तैलपूरितकटाहः। रा.

**तैलसंरोधः** - तैलद्रोणी। रा.

**तोकम्** - शिशुम्। भा.

**तोकवती** - पुत्रवती। भा.

**तोकाय** - अपत्याय। तै.

**तोमरः** - आयुधविशेषः। रा.

**तोमरम्** - बाणशल्यम्। वि.

**तोयान्ता** - (मही) तोयेनान्तः नाशः यस्याः सा। वि.

**तोरणः** - ग्रामविशेषः। बहिर्द्वारम्। रा.

**तोषः** - तुष्टिजन्यो हर्षः। वि.

**तौ[illegible]तिताद्याः** - कौमारिलाद्याः। सर्वा.

**त्यक्तमानः** - छन्दानुवर्तनं कथं कुर्यामित्यभिमानवर्जितः। न्यावि.

**त्यक्तसर्वपरिग्रहः** - आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितः। न्यासिटी.

**त्यक्त्वा** - असन्निहितं कृत्वा। गी.

**त्यजन्** - त्यक्ता। ता.

**त्यत्** - अन्यत् (विलक्षणम्)। अमूर्तम्। चाक्षुषप्रत्यक्षायोग्यम्। बृ.

**त्यम्** - यत् देवाश्च प्राणाश्च तत् त्यम्। कौ.

**त्यस्य** - अन्यस्य। बृ.

**त्यागः** - अनादरः पूर्णकामत्वप्रयुक्तः। आत्मपर्यन्तवदान्यत्वं वा। भा. आत्महितप्रत्यनीकपरिग्रहमोचनम्। गी. प्रपदनाङ्गभूताकिञ्चन्यपुरस्कारविरुद्धोपायान्तराशाप्रहाणम्। नि. लोभराहित्यम्। सत्पात्रे दानम्। भा. [आत्महितप्रत्यनीकविमोचनम्। र. आत्महितविरोध्यैहिकामुष्मिकरूपानुबन्धत्यागः। र.]

**त्रय आमयाः** - वातपित्तश्लेष्मरूपा व्याधयः। रा.

**त्रयी** - कर्मविद्या स्वर्गादिफला। भा.

**त्रयीमयत्वम्** - सर्ववेदमयविग्रहत्वम्। स्तो.

**त्रयीविद्या** - त्रयीविहितं कर्म। छा.

**त्रयीविद्याप्रवेशः** - वैदिककर्मप्रारंभः। छा.

**त्रयो गुरवः** - मातपितरौ आचार्यश्च। रा.

**त्रयो मन्त्राः** - उत्साहप्रभुमन्त्रशक्तयः। ऋग्यजुस्सामरूपा वेदाः। रा.

**त्रस्तरी** - परिहासः। सर्वा.
**त्राणम्** - अनिष्टनिवर्तनपूर्वकेष्टप्रापणम्। गी.
**त्रासः** - मणिदोषः। प्रतिपक्षाद्भीतिः। सर्वा. रत्नदोषः। पा.
**त्रिककुद्धाम** - त्रिककुत् त्र्यवयवं त्रिपाद्विभूतिलक्षणं धाम स्थानं यस्य। सह.
**त्रिककुब्धाम** - त्रिककुद्धाम द्र.। सह.
**त्रिकर्मकृत्** - यजनाध्ययनदानकृत्। पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा। श्रु.क.
**त्रिकालात्** - कालत्रयपरिच्छिन्नात्। श्वे.
**त्रिकोणम्** - गोमुखम्। श्रु.
**त्रिगुणः** - कामक्रोधलोभरूपगुणत्रययुक्तः। श्वे.
**त्रिगुणम्** - गुणत्रयात्मकम्। वि. त्रयो गुणाः सुखदुःखमोहात्मका अस्येति (प्रकृतिः)। भा. (मूलप्रकृतिः) रजोगुणकत्वतमोगुणकत्वादिकं तल्लक्षणम्। न्यासि.
**त्रिगुणतनुभृतः** - सृष्टिस्थितिसंहारहेतुभूतरजस्सत्त्वतमः प्रचुरदेहशालिनः। अधि.
**त्रिणाचिकेतः** - 'अयं वाव यः पवते' इत्याद्यनुवाकत्रयाध्यायी। श्रु.क. 'मधु वाता' इति त्र्यर्चाध्यायी। वि.
**त्रिदशाध्यक्षः** - स एव, ब्रह्मादेः प्रलयापत्सखत्वात्। सह.
**त्रिदिवम्** - त्रिपाद्विभूतिम्। रा.
**त्रिधा** - 'भोक्ता भोग्यं प्रेरितारञ्च मत्वे'ति चिदचिदीश्वरभेदेन त्रित्वम्। म.
**त्रिधामा** - त्रीणि धामानि दुग्धाम्बुधिरविमण्डलपरमपदरूपाणि स्थानान्यस्येति। या. [''अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्'' इत्युक्तस्थानत्रयवान्। र.]
**त्रिपदः** - भोग्यभोक्तृनियन्तृणि तत्त्वानि ज्ञाप्यतया पदान्यस्येति त्रिपदः। यथा - 'सत्त्वानामुपकाराय प्रधानं पुरुषं परम्। दर्शयिष्यामि लोकेषु कापिलं रूपमास्थितः॥' इति। सह.
**त्रिपदीम्** - सावित्रीम्। भा.
**त्रिपात्** - त्रिपात्त्वञ्चाप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैः। त्रिपात्त्वञ्च भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिः नित्यैः, भगवदनुभवमात्रपरैश्च नित्यसिद्धैः, मुक्तैश्चात्मभिः। न्यासिटी. पादत्रयम्। छा.
[**त्रिपाद्विभूतिः** - श्रीवैकुण्ठलोकः। ई.]
**त्रिपुटीप्रत्यक्षम्** - ज्ञातृज्ञेयज्ञप्तिरूपांशत्रयविषयकप्रत्यक्षम्। च.
**त्रिमधुः** - ''मधुवाता ऋतायत'' इति त्र्यर्चाध्यायी, तद्व्रतः। छान्दोग्योक्तमधुविद्यानिष्ठो वा। वि.
**त्रिमूर्तिसाम्यम्** - ब्रह्मविष्णुरुद्राः परस्परभिन्नास्त्रय ईश्वरत्वेन समा इति। न्यासिटी.
**त्रिमूर्त्युत्तीर्णम्** - त्रिमूर्त्यतिरिक्तं पुरुषान्तरं चिन्मात्रं वा परतत्त्वमित्युत्तीर्णपक्षः। रत्न.
**त्रिमूर्त्यैक्यम्** - ब्रह्मादीनां त्रयाणां शरीरभेद एव, नात्मभेदः रामकृष्णाद्यवतारवदित्यैक्यपक्षः। रत्न.

**त्रियुगभूयम्** - षाड्गुण्यम् । अति.

**त्रिरुन्नतम्** - उरःकण्ठप्रदेशेषून्नतम् । श्वे.

**त्रिलोकधृत्** - त्रीन् लोकान् धरतीति । सह.

**त्रिलोकात्मा** - भक्तानुग्रहाय त्रीन् लोकान् सातत्येन गच्छतीति । सह.

**त्रिलोकेशः** - प्राग्ज्योतिषपुरस्थो देवः आर्षोक्त्या विश्वेश्वरपदाभिधेयतया त्रिलोकानामीश इति । सह.

**त्रिवर्गः** - धर्मार्थकामाः । अधि.श.रा. धर्मार्थकामसमूहः । प्रभुमन्त्रोत्साहात्मकं शक्तित्रयम् । रा.

**त्रिवर्त्मा** - देवयानपितृयाणकष्टगतिरूप-मार्गत्रययुक्तः । श्वे.

**त्रिवर्त्मानम्** - सत्त्वरजस्तमोरूपगुणात्मकवर्त्मयुतम् । म.

**त्रिविधब्रह्म** - भोक्तृशरीरकत्वं भोग्यशरीरकत्वम् अपहतपाप्मत्वादिविशिष्टसत्यज्ञानादिस्वरूपत्वमिति विधात्रयविशिष्टं ब्रह्म । श्वे.

[**त्रिविधचेतनाः** - बद्धाः मुक्ताः नित्याश्च । र.]

[**त्रिविधपुष्पाणि** - सात्त्विकराजसतामसरूपेण । शुक्लानि सात्त्विकानि । रक्तानि राजसानि । कृष्णानि तामसानि । पाञ्च.]

[**त्रिविधाचेतनाः** - प्रकृतिः कालः शुद्धसत्त्वं च । र.]

**त्रिविधापचारः** - भगवदपचारभागवतापचारासह्यापचाररूपः । अति.

**त्रिविधोपासनम्** - स्वेन रूपेण चिद्विशिष्टतया अचिद्विशिष्टतया च ब्रह्मोपासनम् । कौ.

**त्रिविष्टम्** - स्वर्गलोकः । रा.

**त्रिवृत्** - अक्षरत्रयग्रथितम् । त्रयाणाम् अकारोकारमकाराणां वृत् वर्तनं यत्र । भा.

**त्रिवृतम्** - सत्त्वरजस्तमोगुणैस्त्रिप्रकारम् । श्वे.

**त्रिवृत्करणम्** - त्रयाणां तेजोऽबन्नानाम् एकीकरणम् । अधि.. पञ्चीकरणं द्र. पृथिव्यप्तेजसामन्योन्यसम्मेलनम् । च.

**त्रिवृत्कृतत्वम्** - अन्योन्यसंयुक्तत्व् । श्रु.

**त्रिवृत्स्तोमः** - सामवृत्तिविशेषः । वि.

**त्रिवेदीमध्यदीप्तः** - त्रयाणां वेदानां समाहारस्त्रिवेदी, तस्या मध्ये दीप्तः प्रतिपाद्यतया प्रकाशमानः । या.

**त्रिशंकुः** - पृथुनृपपुत्रः । रा.

**त्रिशूलम्** - आयुधविशेषः । रा.

**त्रिषष्टिवर्णता** - वर्णानां मातृकागतानामेवैवंरूपता यथाकथञ्चित् मोक्षधर्मादौ गीयते । न्यासि.

**त्रिसत्यम्** - प्रकृतिकालपुरुषास्त्रयस्सत्या यस्य सः । भा.

**त्रिसर्गः** - गुणत्रयसृष्टः प्रपञ्चः । सृज्यत इति सर्गः । कर्मणि घञ् । त्रयाणां सत्त्वरजस्तमसां सर्गः । भा.

**त्रिसामा** - स्वगायकबृहद्रथन्तरवामदेव्यप्रधानसामकत्वात् । सह.

**त्रिसूत्रम्** - सृष्टिस्थितिसंहारात्मकसूत्रशब्दितक्रियायुक्तम् । म.

**त्रिस्थानम्** - हृदयकण्ठमुखात्मकानि वर्णोत्पत्तिस्थानानि। रा.

**त्रिस्थिरः** - त्रिषु स्थानेषु स्थिरः। "उरश्च मणिबन्धश्च मुष्टिश्च नृपतेस्थिरः" इति सामुद्रिके। रा.

**त्रेतायुगम्** - देवमानेन त्रिसहस्रसंख्याकवर्षं युगम्। य.

**त्रैगुण्यम्** - त्रयो गुणास्त्रैगुण्यं सत्त्वरजस्तमांसि; सत्त्वरजस्तमःप्रचुराः पुरुषाः त्रैगुण्यशब्देनोच्यन्ते। गी. त्रयो गुणाः। स्वार्थे ष्यञ्। भाव. सुखदुःखमोहात्मकत्वेन सत्त्वरजस्तमोरूपगुणत्रयात्मकत्वम्। अधि.

**त्रैलोक्यम्** - त्रयो लोका बद्धमुक्तनित्याः। "त्रैलोक्यं पुण्डरीकाक्ष"इति कार्यकारणभावेण शरीरात्मभावेन वा सामानाधिकरण्यम्; यद्वोपलक्षणतया भूम्यन्तरिक्षादिकं त्रैलोक्यपदेनोच्यते। ता.

**त्रैविद्यम्** - ऋग्यजुस्सामरूपास्तिस्रो विद्याः। गी. तिस्रो विद्याः समाहृता इति द्रष्टव्यम्। द्विगुसमासत्वात् त्रिविद्यमित्येकवद्भावनपुंसकत्वे। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्यस्य 'पात्रादिभ्यः प्रतिषेधो वक्तव्य' इत्यपवादः। ता.

**त्वक्** - शब्दादिपञ्चके स्पर्शमात्रग्रहणशक्तमिन्द्रियम्। न्यासि. स्पर्शनेन्द्रियम्। सुबा.

**त्वगिन्द्रियम्** - स्पर्शमात्रग्रहणशक्तमिन्द्रियम्। य.

**त्वत्पदवीम्** - त्वद्याथात्म्यम्। भा.

**त्वदनन्यभावत्वम्** - त्वदेकविषयचित्तवृत्तित्वम्। स्तो.

**त्वन्मया** - त्वदुपादाना। वि.

**त्वष्टा** - निर्मितं त्वक्षति तनूकरोति, त्वेषति दीपयति नामरूपव्याकरणेन व्यक्तावयवं करोतीति वा। सह. यज्ञशिरः। बृ.

**त्वाष्ट्रः** - त्वष्टृपुत्रो विश्वरूपः त्रिशीर्षः। कौ.

**त्सरुः** - खड्गमुष्टिः। रा.

## द

**दंशाः** - वनमक्षिकाः। रा.

**दंशितः** - कञ्चितः। संनद्धः। रा.

**दंसः** - कर्म। सकारान्तोऽयं दंसश्शब्दः। बृ.

**दक्षः** - क्षिप्रमागन्ता। सह. (दस्युवधे) दक्षते शीघ्रकारीति। दक्ष वृद्धौ शीघ्रार्थे च। सह.

**दक्षसुताः** - देवाः। रा.

**दक्षिणः** - क्षिप्रमागत्य धिङ्मां दूरगतोऽहं त्वा(?)मिति सान्त्वनैर्गजेन्द्रस्यानुकूलः। सह. दाक्षिण्यवान्। समर्थः। रा.

**दक्षिणम्** - ऋजुभाषिणम्। रा.

**दक्षिणत्वम्** - सुमेरुव्यवहितदिक्संयोगः। रत्न.

**दक्षिणा** - स्वस्मिन् परस्मिंश्च तुल्यहिता। रा. दक्षिणां दिशम्। ... दक्षिणादाजित्याजन्तोऽयं शब्दः। छा.

**दक्षिणाः** - कुशलाः। रा.

**दण्डः** - इक्ष्वाकोः पुत्रः क्षत्रियविशेषः।

रा. वेदधर्मक्षेमङ्करनृपतिमुखेन दण्डनीत्या दुष्टान् दाम्यति उपशमयतीति । सह. सेनाविशेषः । हिंसा । रा.

**दण्डकम्** - वनविशेषः । दण्डनाम्न इक्ष्वाकुसुतस्य यद्राज्यं शुक्रशापात् पांसुवर्षेण विनाशितं सदरण्यमभूत् तदेव दण्डकमित्युच्यते । रा.

**दण्डकारण्यम्** - दण्डकं द्र. । रघु.

**दण्डनीतिः** - अर्थफला विद्या । भा. अर्थशास्त्रम् । वि.

**दण्डप्रहरणः** - यमः । रा.

**दण्डमाणवः** - पलाशदण्डधारी ब्रह्मचारी । रा.

[**दण्डाङ्गप्रणामः** - "पादौ हस्तौ प्रसार्यैव शेते भूमौ च दण्डवत् । स दण्डाङ्गप्रणामस्स्यात्" । पाञ्च.]

**दत्तम्** - दानम् । छा.

[**दत्तशिष्टम्** - कारिसंप्रदानावशिष्टमन्नम् । सच्च.]

**दधाति** - उत्पादयति । श्वे.

**दधातु** - ददातु । श्रीसू.

**दध्रे** - अवस्थितवती । बृ.

**दन्तकारः** - दन्तैः पुत्रिकापीठशिबिकादिकारी । रा.

**दन्तवीणाः** - शीतासहिष्णुतया कम्पमानदन्ता दन्तवीणाशब्देनोच्यन्ते । या.

**दन्तिः** - गजाननः । तै.

[**दन्तुरम्** - निम्नोन्नतम् । र.]

**दभ्रम्** - अल्पम् । के. [अल्पम् । या.]

**दमः** - अन्तःकरणनियमनम् । गी. अन्तरिन्द्रियनिग्रहः । पा. इन्द्रियनिग्रहः । रा. दमनम् । इन्द्रियनिग्रहः । बाह्यकरणानामनर्थविषयेभ्यो नियमनम् । दमशमशब्दयोरेकैकस्यापि सर्वनियमनाभिधानसामर्थ्येऽपि पौनरुक्त्यपरिहाराय सहप्रयोगे विषयभेदे वक्तव्ये नियमनक्रमेण दमशमयोर्बाह्यान्तरकरणविषयत्वोक्तिः । ता. बहिरिन्द्रियनियमनम् । बृ. बाह्येन्द्रियनिग्रहः । भा. बाह्येन्द्रियजयः । तै. वे. मनसो विषयौन्मुख्यनिवृत्तिसंशीलनम् । गी. मनोनियमनम् । सुबा. [इन्द्रियनिग्रहः । मनसो विषयौन्मुख्यनिवृत्तिसंशीलनम् । र.]

**दमनः** - दीप्तिमन्दाकिनीभिः भवदाहं दाम्यति दामयति उपशमयतीति । सह.

**दमनम्** - शिक्षणम् . अधि.

**दमयिता** - स्वयं रावणादीन् ताच्छील्येन दमयतीति । सह.

**दम्भः** - परवञ्चनहेतुभूतो व्यापारविशेषः । धार्मिकत्वख्यापनाय धर्मानुष्ठानं वा । अच्यु. परप्रतारणम् । वञ्चनम् । भा.

**दम्यः** - तरुणवत्सः । रा.

**दरम्** - अल्पम् । श्रु. (अव्ययम्) अल्पम् । या.

**दरी** - गुहाविशेषः । रा.

**दर्दुरः** - मलयसन्निकृष्टश्चन्दोत्पत्तिस्थानभूतो गिरिः । रा.

**दर्पः** - लक्ष्म्यास्सुतः । वि. [कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः । र.]

**दर्पदः** - शत्रुशमनदुर्जयद्वारवतीकरण-शङ्खपद्मनिधिसुरतरु सुधर्माहरणादिना निर्भरीकृतेभ्यो यादवेभ्यो मधुपानादिना दर्पं ददातीति। सह.

**दर्पहा** - गोवर्धनोद्धरणपारिजातापहरण-बाल(ण)दोष्षंडखण्डनादौ देवानां दर्पमात्रं हतवानिति। सह.

**दर्शनम्** - उपभोगः। श्रु. चक्षुरिन्द्रियम्। रत्न. दर्शनसमानाकारज्ञानविषयीकरणम्। मु. नेत्रम्। रा. प्रत्यक्षसमानाकारः साक्षात्कारः। वर. मतम्, मानसज्ञानम्, सौन्दर्यम्। रा. स्वारसिकी लोकदृष्टिः प्रत्यक्षश्रुतिर्वा। (...दर्शनान्निर्वचनाच्च)। त. [ज्ञानम्। सच्च.]

**दर्शनरूपता** - प्रत्यक्षतापत्तिः। त.

**दर्शनसमानाकारत्वम्** - साक्षात्कारत्व-व्यञ्जकविषयितावत्त्वम्।

**दर्शनावरणीयम्** - (जैनमते) आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानम्। बृ.

**दर्शितः** - दृष्टः। ण्यन्तात् दृशेः निवृत्तप्रेरणात्कर्मणि क्तः। भा.

**दर्शिवान्** - दृष्टवान्। क.

**दया** - दुःखासहिष्णुत्वम्। गी. दुःखनिराकरणेच्छेत्यर्थः। ता. निरुपाधिकपरदुःखप्रहाणेच्छा। श्री. परदुःखनिराचिकीर्षा। दया. परदुःखापाचिकीर्षा। वर. परदुःखासहिष्णुता। अष्ट. परदुःखासहिष्णुत्वम्। वे. प्रपत्त्युल्लसिता रक्षणेच्छा। गद्य. भूतहितैषित्वम्। भाव. सर्वेषां चेतनानां कदाचित् संसारनिवृत्तिः कारयितव्येतीच्छा। व. स्वप्रयोजनानापेक्षं परदुःखासहत्वम्। सुबा. स्वार्थनिरपेक्षत्वे सति परदुःखासहिष्णुता। श. स्वार्थनिरपेक्ष परदुःखासहिष्णुत्वम्। श्रु. स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा। त.ता.श. स्वार्थनिरपेक्षा परदुःखासहिष्णुता। बृ. श्री. श्रु.

**दयालुः** - अबुद्धिपूर्वमपि कंचिद्व्यापारं व्याजत्वेन स्वीकृत्य महापराधिनां संरक्षणे साकांक्षः। व. निर्हेतुककृपाप्रवाहभरितः। न्यावि. परदुःखासहिष्णुः। सुन्दर. [परदुःखदुःखी। परदुःखासहिष्णुः। ई.]

**दयालुत्वम्** - स्वप्रयोजनान्तरमनपेक्ष्य परदुःखनिराकरणेच्छावत्त्वम्। स्तो.

**दयितम्** - दयाऽस्य संजातेति तम्। भा.

**दर्पः** - कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः। र.

**दर्शनम्** - ज्ञानम्। सच्च.

**दवथुः** - तापः। रा.

**दशः** - पक्षी। रा.

**दशा** - अवस्था। श्रु.

**दशाङ्गुलम्** - दशगुणम्; महाप्रमाणमिति भावः। वि. पञ्चभूतपञ्चतन्मात्रारूपदशावयवयुक्तम्। श्वे.

**दशाभागः** - अवस्थाविशेषः। रा.

**दशार्धवृत्तिः** - तामिस्रादिपञ्चवृत्तिः; तामिस्रांधतामिस्रमोहमहामोहतमोरूपाः पञ्चाविद्यावृत्तयः। भा.

**दस्रौ** - अश्विनौ। बृ.

**दहरः** - सूक्ष्मः। छा.
**दहरम्** - अल्पम्। तै. अल्पपरिमाणम्। श्रु.
**दहरविद्या** - दहराकाशशब्दितपरमात्मप्रतिपादकविद्याविशेषः। छा. परभक्तिविशेषः। न्यासि.
**दह्रम्** - हृदयपुण्डरीकम्। भा.
**दाक्षिण्यम्** - परच्छन्दानुवर्तनम्। रघु. सरलत्वम्। पा.
**दाक्ष्यम्** - क्रियावत्त्वम्। क्षिप्रकारित्वम्। रा. सर्वक्रियानिर्वृत्तिसामर्थ्यम्। गी.
**दाडिमः** - वृक्षविशेषः। रा.
**दाधार** - दधार। भाव.
**दानम्** - आत्मीयस्य धनस्य परस्वत्वापादनपर्यन्तस्त्यागः। गी. न्यायसिद्धद्रव्यस्य यथाविधि परसात्करणम्। त. न्यायार्जितधनस्य पात्रे प्रतिपादनम्। गी. न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम्। त. परस्वत्वापादनपर्यन्तः त्यागः। भाव. लोभराहित्यम्। श्रु. स्वकीयभोग्यानां परस्मै प्रतिपादनम्। गी. परकीयव्यवच्छेदाय स्वकीयेति। हेयव्यवच्छेदाय भोग्येति। ता. दैप् शोधने। स्नानादिना शुद्धिः। सुबा. [न्यायार्जितधनस्य पात्रे प्रतिपादनम्। र.]
[**दानप्रतिग्रहयोर्मन्त्रः** - "दानं ददद्भिर्यैरुक्तं अच्युतः प्रीयतामिति। प्रतिग्रहीतृभिश्चैवं न ते मद्विषयोपगाः" इति [illegible] आह"॥ पाञ्च.]
**दान्तः** - गुरुभिः शिक्षितः। जितमनस्कः। तपःक्लेशसहः। दन्तनिर्मितः। रा. जितेन्द्रियः। दया. तपःक्लेशसहिष्णुः। देह. निगृहीतेन्द्रियः, बहिरन्द्रियनिग्रहशाली, विषयचापलरहितः। रा. विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः। त. विषयनिवर्तितबाह्येन्द्रियः। न्यावि. दन्तविकारः। रा.
**दान्तिकाः** - दन्तविकृताः। रा.
**दाम** - पाशः। बृ. रज्जुः। सुन्दर.
**दामोदरः** - सकललोकाधारतया आर्षवचनानुसारात् दामानि लोका उदरे अस्येति वा, तदनुसाराद्देवसुखशंसित्वदमगुणयोगाद्वा, इत्थं लक्ष्मीस्पृहणीयचातुरीकत्वेऽपि संश्रितवात्सल्यात्, यशोदादामनिगलितजलतया (दामनिगळितजडतया?) दामानि रज्जवः उदरे अस्येति वा दामोदरः। सह.
**दारक्रिया** - उद्वाहः। रा.
**दारसंग्रहः** - गृहस्थाश्रमः। रा.
[**दारुकः** - भगवतः श्रीकृष्णस्य सारथिः। या.]
**दारुणः** - क्रूरकर्मकारी, क्रूरस्वभावः। रा. बाह्याभ्यन्तरारिदारणात् दारुणः। सह.
**दाल्भ्यः** - दल्भगोत्रः। दल्भशब्दात् गोत्रापत्ये गर्गादित्वाद्यञ्। छा.
**दाशविध्यम्** - दशविधत्वम्। गुणवचनत्वात् ष्यञ्। सर्वा(आ).
**दाशार्हः** - दाशः दानम्; भक्तैः स्वस्मै स्वात्मनिवेदनरूपम्, तेभ्यो वा स्वात्म-

समर्पणरूपम्, अर्हतीति । कृष्णत्वे दशार्हाणामपत्यत्वाद्वा । सह.

[**दासः** - क्रयविक्रयार्हः । ई.]

**दासत्वम्** - चेतनमात्रवृत्तिधर्मविशेषः । स्तो. शेषत्वप्रतिपत्त्यर्हत्वे सति इष्टविनियोगार्हत्वम् । श्रीसू. [स्वपरमप्रयोजनभूतस्वप्रतिसन्धानार्हपरगतातिशयाधायकत्वम् । र.]

**दासीनिष्कः** - दासीयुक्तो निष्को दासीनिष्कः । छा.

**दासीभूतः** - भूतशब्दोऽत्र साम्यवाची; पितृभूत इतिवत् । दाससदृश इत्यर्थः । न्यासिटी.

**दास्यम्** - कैङ्कर्यम् । वर.

**दिक्** - दिग्वर्ती । सर्वा दिशः - सर्वदिग्वर्तिनः । छा. विशिष्टाद्वैतिमते दिक्तत्त्वमन्यन्नास्ति । प्राक्त्वादिभेदनिर्वाहकोपाधिभिरेव निर्वाहात् । न्यासि. सूर्यपरिस्पन्दयुक्ताकाशस्यैव प्राच्यादिव्यवहारोपपत्तौ दिगिति न पृथक्कल्पनम् । य.

[**दिङ्मोहः** - प्राच्यादिषु प्रतीच्यादिभ्रमः । या.]

**दिग्द्वन्द्वम्** - प्राचीप्रतीच्यौ, दक्षिणोत्तरे इत्यादि । न्यासि. रत्न.

**दिग्धः** - विषलिप्तो बाणः । रा.

**दितम्** - खण्डितम् । ना.

**दिधक्षा** - दग्धुमिच्छा । रघु.

**दिनकरसुता** - यमुनानदी । गो.

**दिलीपः** - अंशुमन्नृपपुत्रः । रा.

**दिवम्** - दिवशब्दोऽपि स्वर्गवाचकोऽस्ति । तथा च प्रयोगसुभूतिचन्द्रेणोदाहृतः । या.

**दिवा** - स्वर्गेण, दिवसे वा । छा.

**दिवागृहम्** - दिवाविनोदनस्थानम् । रा.

**दिवि** - अप्राकृतलोके । श्वे.

**दिविक्षित्** - द्युलोकनिवासी । छा.

**दिविस्पृक्** - (व्यासावतारे) परविद्यया दिवि च परमपदे स्थितं स्वतत्त्वरहःस्पृशतीति । सह.

**दिव्यः** - द्युसम्बन्धी । मु.

**दिव्यः पुरुषः** - पुरुषशब्दस्य मनुष्यपरत्वव्यावृत्त्यर्थं दिव्य इत्युक्तम् । अयमण्डोत्पन्नः परमपुरुषान्तर्यामिको ब्रह्मा । सुबा.

**दिव्यम्** - अप्राकृतम् । गी. सुन्दर. अप्राकृतम् । दीप्तम् । दिवि भवम् । परमव्योमनिलयम् । दिव्यं कल्याणम् । 'नान्तोऽस्ति मम दिव्याना'मित्यत्र 'दिव्यानां कल्याणीना' मिति, "विभूतीरात्मनश्शुभाः" इति चोक्तेः । गी. विलक्षणसंस्थानवत् । परमव्योमवर्ति । अप्राकृतम् । ता. [रजस्तमोरहितं शुद्धसत्त्वमयम् । र.]

**दिव्यं चक्षुः** - 'मनोऽस्य दिव्यं चक्षुः' । सकलेन्द्रियविषयमननसाधनत्वान्मनो दिव्यं चक्षुरित्युच्यते । मनशब्दाभिहितं दिव्यं स्वाभाविकं चक्षुः ज्ञानम् । छा.

**दिव्यत्वम्** - अप्राकृतत्वम् । स्तो.

विलक्षणसन्निवेशत्वम्। श्रु. [अत्यद्भुत-सन्निवेशत्वम्। र.]

**दिव्यधाम** - वैकुण्ठाख्यः अप्राकृतः नित्यः दिव्यः भगवद्विमानः। स्तो.

**दिव्या** - आश्चर्यकरी शुद्धसत्त्वमयी। अधि.

**दिव्या महर्षयः** - सनकादयः। नित्यसूरयो वा। "यत्र ऋषयः प्रथमजा ये पुराणाः" इति श्रुतेः। रा.

**दिशः** - न तान् (ब्रह्मादीन्) गजेन्द्रवदन्त-रङ्गीकरोति; किन्तु आज्ञापयतीति। इगुपधत्वात् कः। सह.

**दिष्टः** - परलोकाय निर्दिष्टः। छा.

**दिष्टम्** - अदृष्टम्। प्रारब्धम्। भा. कर्म। छा.

**दिष्टाग्निहोत्रम्** - मृताग्निहोत्रम्। भाव.

**दिष्टान्तः** - जीवितकालावसानम्; मरण-मिति यावत्। दिष्टस्य दैवकल्पितकालस्य अन्तः समाप्तिः। रा.

**दिष्ट्या** - यदृच्छया। रा.

**दीक्षा** - दृढसङ्कल्पः। त. पञ्चसंस्कारादि-संपत्तिः। भा. यागारम्भे कर्तव्यकर्मविशेषः। यथो. संकल्पः। श्रीस्तु. संकल्पविशेषः। श्रीत.

**दीक्षितः** - कृतसंकल्पः। सुन्दर. कृतव्रतः। या.

**दीनः** - मलिनमनस्कः। रा.

**दीप्तत्वम्** - यत् किञ्चित् केनचिद् गुणेन दीप्तं तदस्य विशेषेण मूर्तिरिति। सह.

**दीप्तिः** - 'सौकुमार्यं मृदुत्वं च लावण्यं दीप्तिरुच्यते। मन्मथाप्यायितच्छाया शोभा कान्तिरुदाहृता। तात्कालिको विशेषस्तु विलासो गतिरुच्यते"। वि. स्फूर्तिः (श्रुतिशिरसिविदीप्ते)। त.

[**दीप्तित्रयम्** - (सूर्यस्य) अमृताचन्द्रा-शुक्राख्याः पुराणोक्तास्तिस्रः प्रभाः। या.]

**दीर्घदर्शी** - दूरकालभाव्यनर्थदर्शी। रा.

**दीर्घसूत्री** - अभिचारादिकर्म कुर्वन् परेषु दीर्घकालवर्त्यनर्थपर्यालोचनशीलः। गी. 'सूत्र सूत्रणे' इति धातुः। सूत्रणं चिन्तनम्। ताच्छील्यार्थप्रत्ययः। ता.

**दीर्घिका** - कृत्रिमाऽल्पा सरित्। रा.

**दुःखम्** - अनभिमतप्राप्तिजन्यं व्यसनम्। रा. तत्तद्विषयेषु पापजन्यमनोवृत्तिः। यत्र विषयज्ञाने पापं प्रातिकूल्यं जनयति तत् दुःखम्। वि. परमते दुःखजनकतयाऽभ्युप-गतमेवैतन्मते दुःखम्। न्यासि. प्रतिकूलवे-दनीयम्। तत्र सुखतत्साधनादिकमपि विष-सम्पृक्तमधुवत् प्रभूतानर्थानुषङ्गित्वात् दुःखमेव मुमुक्षुणा भाव्यमिति तस्यापि प्रतिकूलवेदनीयत्वम्। न्याप. प्रतिकूलानु-भवः। प्रतिकूलत्वमात्रमेव दुःखलक्षणम्। ता. वैषयिकदुःखत्वं ज्ञानस्य विषयाधीन-मिति प्रतिकूलत्वाविशेषात् विषयोऽपि दुःखशब्दवाच्य एव। न्यासि. संसारः। बृ. स्वतः प्रतिकूलतया दुस्सहम्। स्तो. मरणक्लेशाः (सौगतमते)। बृ.

**दुःखता** - प्रतिकूलता। छा.

**दुःखभावना** - दुःखमिश्रत्वभावना। नि.

[**दुःखमयम्** - दुःखमूलत्वेन, दुःखमिश्रत्वेन, दुःखोदर्कत्वेन च दुःखप्रचुरमित्यर्थः। र.]

**दुःखयोनिः** - दुःखोदर्कः। गी.

**दुःखसङ्गः** - दुःखे सुखभ्रान्त्या सङ्गः। ता.

**दुःखसंयोगवियोगः** - दुःखसंयोगस्य वियोगो यत्र। ता.

[**दुःखविघाताः** - (त्रयः) "आस्था, स्वास्थ्यम्, प्रज्ञा" इति केचित्। अध्यात्मिकाधिदैविकाधिभौतिकरूपदुःखत्रयविघातः, इति अन्ये।]

**दुःस्वप्ननाशनः** - स्वात्मानं गजेन्द्रं तच्च सरः स्मरतां भाव्यनिष्टसूचनं दुःस्वप्नं नाशयतीति। सह.

**दुरतिक्रमः** - सर्वेषामपि स्वपादमूलमतिक्रम्य गत्यन्तरविरहात् तैरतिक्रमितुमशक्य इति। सह.

**दुरतिक्रमा** - दुःखेनातिक्रमणीया। भगवत्प्रपत्तिरहितैर्लङ्घयितुमशक्यैव। ता.

**दुरत्यया** - अनतिक्रमणीया। क. दुरतिक्रमा। गी.

**दुरन्तम्** - दुष्टः हेयः अन्तः स्वरूपं यस्य तथोक्तम्। 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती। या.

**दुरन्तत्वम्** - प्रायश्चित्तानवसरातिघोरविपाकत्वम्। स्तो.

**दुरन्तभावम्** - अनवधिकभक्तिम्। भा.

**दुरात्मा** - दुष्टान्तःकरणः, दुर्बुद्धिः, दुस्स्वभावः। रा.

**दुराधर्षः** - गाम्भीर्यातिशयेन अम्भोधिवत् अनभिभवनीयः। सह. दुर्जयः। रा.

**दुराधर्षम्** - दुराक्रमम्। रा.

**दुराधर्षा** - दुर्धर्षणा। तै. प्राप्तुमशक्या। श्रीसू.

**दुराराध्यम्** - भक्तिप्रपत्तिव्यतिरिक्तोपायेन दुष्प्रसाद्यम्। भा.

**दुरारिहा** - दुर्मार्गगामिनो दुरारिणः, तान् त्रयीमार्गत्याजनादिभिस्तैस्तैरुपायैर्हतवान्। सह.

**दुरावासः** - (पापिभिः) दुष्करस्तत्पदावास इति। सह.

**दुराशा** - विषयेच्छा। वि.

**दुरितम्** - बन्धकं पुण्यमपि दुरितशब्देनोच्यते। प्रतिबुद्धं प्रति अनिष्टफलप्रदत्वाविशेषात्। सर्वा. [(दुरितं विधूयेति मन्त्रे) सांसारिकं पुण्यं पापं च। 'न सुकृतं न दुष्कृतम्' इत्युक्त्वा 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति पाप्मशब्देनोपसंहारात्। सच्च.]

**दुरिष्टम्** - विकलो यागः अभिचारो वा। वि.

**दुरुक्तान्** - दुरुक्तानि वचनलक्षणरहितानि वाक्यानि। श्रीसू.

**दुरुत्तरत्वम्** - लंघयितुमशक्यत्वम्। गद्य.

**दरुद्गीथम्** - वेदनहीनमुद्गीथम्। श्री.छा.

**दुरोणसत्** - दुरोणं गृहम् आगत्य वर्तमानः। तै. गृहगतः। दुरोणं गृहम्। क.

**दुर्गः** - अविद्याद्यावरणैर्दुष्प्रवेशः। दुःखेन गच्छन्ति अत्रेति। सह.

**दुर्गम्** - जलप्राकारमरुगिरिवनात्मकम् । वि.

**दुर्गताः** - अगतिकाः । रा.

**दुर्गतिः** - दुष्टकार्यप्राप्तिः । रा. निरयः । अनिष्टमात्रं वा । ता.

**दुर्गमः** - नेत्रदुर्बलानामिव मध्याह्नभास्करः अप्रधृष्यतेजाः, दण्डापूपिकया दुर्गमः । सह.

**दुर्गमम्** - विषयम् । रा.

**दुर्गहा** - दुरितानि हन्ति इति । तै.

**दुर्गाम्** - अन्यैर्दुरासदाम् । रा.

**दुर्गाणि** - दारिद्र्यादीनि । रा. दुरितानि । तै. दुष्प्रवेशस्थलानि । रा.

[**दुर्ग्रहाः** - दुष्टग्रहाः राह्वादयः । अदृश्यग्रहा राहुकेतवः अन्यत्रोपरागसमयादिति ज्योतिर्विदः । सर्वदाप्यदृश्या एव ते । भूच्छायाविशेषवैवर्ण्यमेव तमोमण्डले दृश्यमित्यपि केचित् । या.]

**दुर्घटम्** - परमार्थत्वप्रयुक्तोपपत्त्यनपेक्षम् । वे.

**दुर्घटत्वम्** - उपपत्तिनिरपेक्षत्वम् । श्रु.

**दुर्जयः** - सुरनरादिशक्त्या दुश्शकवशीकरणतया जेतुमशक्यः । सह.

**दुर्दर्शम्** - द्रष्टुमशक्यम् । श्रु.

[**दुर्दर्शनम्** - भगवच्चक्रम् । तदुक्तं पौष्करे "ब्रह्मरुद्रेन्द्रदेवानामस्य रश्मिचयश्च यः । अपहल्लोचनानां वै सुदूराच्च निरीक्षणात् । तेनेदं भुवि विख्यातं नाम्ना दुर्दर्शनं द्विज ॥' इति । सच्च.]

**दुर्धरः** - तादृग्भुजबलेन संवर्तसमुद्रवेगो बालक्रीडासैकतसेतुभिरिव परैर्दुर्वारवेग इति । बाललीलादिप्रसङ्गेषु मत्तमाङ्गवत् नन्द-यशोदाभ्यां धर्तुमशक्यः । दुरात्मनां वा दुर्धरः । सह.

**दुर्निष्प्रपतरम्** - खलन्ताद् दुर्निष्प्रपत-शब्दादातिशायनिके तरप्प्रत्यये छान्दसे तशब्दलोपे दुर्निष्प्रपतरमिति रूपम् । यद्वा "आतो युच् । छन्दसि गत्यर्थेभ्यः" इति विहितखलर्थयुजन्त एवायं शब्दः । रेफरूपवर्णविकारश्छान्दसः । छा.

**दुर्निष्प्रपततरम्** - दुःखनिष्क्रमणतरम् । श्री.

**दुर्मतिः** - विपरीतमतिः । गी.

**दुर्मर्षणः** - प्रतीपैः दुष्करं मर्षणं धर्षणम् अस्येति । सह.

**दुर्मानित्वम्** - निकृष्टमप्यात्मानं 'ईश्वरोऽहमहं भोगी' इत्यादिप्रकारेण अत्युत्कृष्टतया मन्यमानत्वम् । स्तो.

**दुर्वर्णम्** - रजतम् । पा.

**दुर्वासाः** - अत्रिपुत्रस्तपस्वी ।

**दुर्विभाव्यम्** - अरूपादिमत्त्वात् अतर्क्यम् । वि.

**दुर्व्याहृतम्** - परुषभाषणम् । रा.

**दुर्लङ्घत्वम्** - उभया (वादिप्रतिवाद्युभया) भ्युपेयत्वम् । सर्वा.

**दुर्लभः** - अन्यमनस्कैः अजितेन्द्रियैः लब्धुं प्राप्तुमशक्यः । सह.

**दुष्करवियोगस्वभावत्वम्** - दुर्मोचत्वम् । न्यासिटी.

**दुष्कृतम्** - अनिष्टफलदित्सारूपपरमात्माप्रीतिः । कौ. [(तरति दुष्कृतानीत्यत्र) भगवत्समाराधनानर्हताहेतुभूतं पापम् । सच्च.]

**दुष्कृतकर्मा** - महापातकी । रा.

**दुष्कृतिनः** - पापकर्माणः । गी.

**दुष्कृतिहा** - दुष्कृतिनं ब्रह्मविदपचारादपुण्यकर्माणं ग्राहं हन्ति स्मेति । सह.

**दुष्टात्मा** - दुष्टबुद्धिः । रा.

**दुष्पूरम्** - दुष्प्रापविषयम् । गी.

**दुष्वप्नियम्** - दुस्स्वप्नजनितभयम् । तै.

**दुस्सहम्** - आभिमुख्येन स्थातुमशक्यम् । रा.

**दुस्साक्षी** - कूटसाक्षी । रा.

**दुस्स्पर्शः** - कण्डूतिजनको गुल्मविशेषः । न्यासिटी.

**दूः** - मुख्यप्राणः । दूरं हि अस्य मृत्युः । बृ.

**दूरम्** - अत्यन्तम् । क.

**दूरस्थम्** - अमानित्वाद्युक्तगुणरहितानां विपरीतगुणानां पुंसां स्वदेहे वर्तमानमप्यतिदूरस्थम् । गी. दूरस्थत्वं दुर्ग्रहत्वम् । ता.

**दूर्वा** - तृणविशेषः । अति.

**दूषणः** - खरस्या बलाध्यक्षः । रा.

**दूषणजातिः** - प्रतिधर्मसमाधिः । जातिर्द्विविधा साधनजातिर्दूषणजातिश्च । तत्र साधनजातिर्महाविद्या, दूषणजातिः प्रतिधर्मसमाधि(द?)ः । सर्वा.

**दृक्** - नेत्रम् । बुद्धिः । रत्न.

**दृढः** - स्थूलः बलवांश्च । सह.

**दृढयोगः** - दृढः परिपक्वः यमनियमाद्यष्टाङ्गयोगो यस्य । रा.

**दृढव्रतः** - अन्तरङ्गैरप्यप्रकम्प्याश्रितरक्षादीक्षः । निश्चलसंकल्पः । रा. दृढसङ्कल्पः । गी.

**दृतयः** - चर्मभस्त्रिकाः । भा.

**दृप्तः** - अदृप्तो द्र. । सह. आर्तप्रपन्नभिन्नः प्रपन्नः । न्यासि. गर्विष्ठः । बृ. प्रारब्धकर्मानुभवन् एतद्देहावसानसमये मोक्षमपेक्षमाणः । य. विलम्बाविलम्बौ अनादृत्य फलसिद्धिमात्रसक्तः । तस्यां वेलायां विनयस्वापराधभयशून्ये. वा । शरीरावसाने मुक्तिकामः । यद्वा स्तोभहेलनादिरूपेण शरणागतोऽस्मीति ब्रुवाणः । रा.

**दृप्तत्वम्** - उत्कटत्व् । रा.

**दृष्टभोगाः** - ऐहिकसुखानि । अधि.

**दृष्टश्रुतात्** - ऐहिकामुष्मिकात् । भा.

**दृष्टश्रुताभ्याम्** - ऐहिकामुष्मिकसुखाभ्याम् । भा.

**दृष्टहानम्** - दृष्टयोरन्वयव्यतिरेकयोर्हानम् । सर्वा (आ).

**दृष्टान्तः** - निश्चितसाध्यवान् । नी. व्याप्तिदर्शनस्थानम्, व्याप्त्यधिगमस्थानम् । न्याप.

**दृष्टार्थतत्त्वज्ञः** - दृष्टार्थश्चासौ तत्त्वज्ञश्च । यद्वा दृष्टार्थतत्त्वश्चासौ ज्ञश्चेति । रा.

**दृष्टिः** - अनुभूतिः । अधि. आयतिक्षमसूक्ष्मेक्षणम् । रा. दर्शनसाधनम् । कौ.

**दृष्टिविधिः** - अतस्मिन् तद्दर्शनविधिः ।

श. अन्यत्रान्यगुणारोपेणानुसन्धानविधानम्। अधि. मनो ब्रह्मेत्युपासीतेत्येवंरूपविधिः। न्यासि.

**दृष्टे** - प्रत्यक्षसिद्धे। सर्वा.

**दृष्टोपाधिः** - अन्वयव्यतिरेकसिद्ध-कारणकः। सर्वा (आ).

**दृशा** - भक्त्या। भा.

**दृश्यम्** - प्रत्यक्षम्। वि. [दर्शनमात्रेण हृदयोल्लासप्रदम्। "तद्दृश्यं दृष्टमात्रं यत् कुर्यादुल्लासिकां नवाम्" इति वैजयन्ती। या.]

**दृश्यतैकस्वभावत्वम्** - स्वप्रकाशता-शून्यत्वम्। भाव.

**दृश्यत्वम्** - नियमेन ज्ञानान्तराधीनसिद्धि-त्वम्। श्रु.

**देवः** - अनुपमकान्तिमान्। रघु. अपेक्षित-प्रदानानुगुणविचित्रजगत्सृष्टिस्थितिसंहारान्तः-प्रवेशनियमनस्वाश्रितविमोचनादिविलक्षण-क्रीडायुक्तः। ई. उपास्यः। मा. कल्याण-गुणविशिष्टः। वै. क्रीडाप्रवृत्तः। गी. क्रीडा-शीलः। मा. गमनशीलः, दीव्यति गच्छति इति। प्र. दीप्यमानः। कौ. द्योतमानः। तै. बृ. द्योतमानस्वरूपः। रघु. द्योतनादिगुण-युक्तः। प्र. निरुपाधिकद्योतनादिकल्याण-गुणविशिष्टः सर्वेश्वरः। श्रीसू. परमात्मा। 'देव एको नारायणः' इति श्रुतेः। श्रु. प्रकृष्टगम-नवान्। रघु. मायापाशेन व्याघ्रवराहादिवत् जीवान् बद्ध्वा दीव्यति क्रीडतीति। सह. मूर्खः। (देवानां प्रियो मूर्ख इत्यत्र)। मूर्खाणां च प्रियो मूर्ख एव भवतीति कैयटे अभिधानात्। च. विजिगीषुः। व्यवहर्ता। रघु. सकल-कल्याणगुणविशिष्टः। वर.

**देवम्** - द्योतमानम् (नपुंसकलिङ्गम्)। गी. द्योतमानं स्वप्रकाशज्ञानानन्दादिरूपम्। श्वे.

**देवऋणम्** - इन्द्रियाण्यधिष्ठाय जितेन्द्रिय-त्वसम्पादनेनोपकर्तृषु देवेषु प्रत्युपकाराना-चरणम्। रा.

**देवकी** - दैवकी द्र.। या.

**देवकीनन्दनः** - देवक्याः, देवको नाम क्षत्रियः तदपत्यभूताया वसुदेवभार्यायाः, नन्दनः तनयः कृष्णः। सह.

**देवगर्भः** - देवकुमारः। रा.

**देवगृहम्** - वायुः। ज्योतिर्मयकृत्स्नवैमा-निक देवतागणस्य वायुपाशधृतत्वात् वायोर्देवगृहत्वात्। श्रु.

**देवजातानि** - देवसमूहाः। बृ.

**देवजुष्टा** - चतुर्मुखशिवशतमखादिदेवैः अनन्तगरुडादिदेवोत्तमैः स्वपदलाभाय तदनुगुणसमृद्धये आनन्दानुभवाय च यजनभजननमनादिना सेव्यमाना। निरुपाधिकक्रीडनादिमता 'दिव्यो देव एको नारायणः' इत्युक्तदेवेन निरतिशयप्रीति-विषयीकृता। श्रीसू.

**देवज्ञाः** - परदेवतापारमार्थ्यविदः। वै.

**देवता** - हविरुद्देश्यार्थः। मन्त्रार्थः। वेकौ.

**देवतात्वम्** - कर्माराध्यत्वम्। श्रु.

[**देवतान्नम्** - ''देवताराधनार्थं यत्नतस्साधितं तत्समर्पणपर्यन्ततद्व्यवहारवदन्नम्। 'प्राक्साधितं च यागार्थं देवतान्नं प्रयत्नतः। तत्समर्पणपर्यन्तं यावद्देवान्नमुच्यते।' इति पौष्करवचनात्''। सच्चं.]

**देवताऽभिमतिः** - इदं द्रव्यं मद्यागायोपयुक्तं भवत्वित्यादिसंकल्पः। रत्न.

**देवतामयी** - इन्द्रियाधीनभोगा। श्री.क.

**देवत्रा** - देवेषु। ''देवमनुष्ये''त्यादिना सप्तम्यर्थे त्राप्रत्ययः। बृ. देवेषु। देवमनुष्येत्यादिना सप्तम्यास्त्राप्रत्ययः। छा.

**देवत्वम्** - देवनसम्बन्धः। सृष्टिस्थितिसंहारमोक्षदानादिलीलावत्त्वम्। श्रीत.

**देवदत्तः** - प्राणभेदो जृम्भणहेतुः। सर्वा (आ).

[**देवद्रव्यम्**- देवसंबन्धिवस्त्राद्यलङ्कारादि। सच्च.]

**देवदेवः** - मनुष्यादीन् कल्याणगुणैरतिवर्तमानानि दैवतानि स्वगुणैस्तथाऽतिवर्तमानः। 'प्रथमदेवशब्दो जातिविशेषवाची। द्वितीय उत्कर्षविशेषविषयतयौपचारिकः'। ता.

**देवद्विजगुरुप्राज्ञपूजनम्** - देव...ज्ञानां सन्निधौ तत्तदुचितः शास्त्रोदित आचार इह पूजनमित्युच्यते। यथा 'प्रशस्तमङ्गल्यदेवायतनचतुष्पथादि प्रदक्षिणमावर्तेत मनसा वा तत्समग्रम्' इत्यादि। ता.

**देवनम्** - विहरणादिरूपं, वल्लभासहितस्यैव। श्रीत.

**देवपथः** - देवालयः। रा. देवैरातिवाहिकैः नीयमानः पन्थाः। छा.

**देवभृत्** - ब्रह्मादिभर्ता। सह.

**देवमधु** - वस्वादीनां देवानां मोहहेतुत्वात् मधु। छा.

**देवमार्गः** - अपानद्वारम्। उपनिषदि वायुलोके देवलोकशब्दप्रयोगात् देवशब्दो वायुवाची। रा.

**देवयजनम्** - यज्ञभूमिम्। देवाः इज्यन्ते अस्मिन्निति तत्। भा.

**देवयानम्** - तदाख्यो मार्गः।

**देवयानी** - ययातिभार्या शुक्रदुहिता। रा.

**देवरथः** - सूर्यरथः। बृ.

**देवरथाह्वयम्** - सूर्यरथस्य गत्या अह्ना यावद्देशपरिमाणं परिच्छिद्यते तत् देवरथाह्वयम्। बृ.

**देवर्षयः** - मन्त्रदर्शिनो देवा देवर्षयः।

**देवलकः** - ''वृत्त्यर्थं पूजयेत् देवं त्रीणि वर्षाणि यो द्विजः। स वै देवलको नाम सर्वकर्मसु गर्हितः''। आ. [पूजकः। ई.]

**देवलोकः** - 'देवानां पूरयोध्ये'त्युक्तं परमपदम्। रा. वायुः। ''योऽयं पवते एष देवानां गृहाः'' इति श्रुतेः। बृ.

**देवविद्या** - देवतोपासनप्रकारविद्या। गान्धर्वशास्त्रम्। छा.

[**देवसंविभागः** - देवार्चनम्। पाञ्च.]

**देवसुषिः** - देवताधिष्ठानभूतं द्वारच्छिद्रम्। छा.

**देवसेना** - स्कन्दभार्या। वि.

[**देवस्वम्** - देवसंबन्धि ग्रामादि। सच्च.]

**देवाः** - इन्द्रियाणि । कौ.बृ.छा.श्रु. न्यासिटी. वे.मु. इन्द्रियाधिष्ठातारः । भा. जीवस्य प्राणाः । श्री. द्योतमानाः । बृ. भगवत्प्रतिमाः। भा. मनस्सहितानि इन्द्रियाणि। वि. लोकपालाः। रा. सुरासुरयक्षराक्षसादयो देवयोनयः। न्यासि.

**देवागारम्** - देवपूजागृहम्। रा.

**देवात्मशक्तिम्** - नारायणात्मिकां शक्तिं प्रकृतिम्। श्वे.

**देवानां प्रियः** - मूर्खः। रत्न. मेषः। अज्ञ इत्यर्थः। श्रु.

**देवी** - कन्तुकेनेव सङ्कल्पमात्रो(?) दंश्चनाकुञ्चनादिमता (जनेन) संक्रीडमाना। जगदुत्पत्तिस्थितिलयादिना क्रीडन्ती। जगन्निर्माणनर्मरसिका। जगन्निर्माणरसिका। जगत्सृष्ट्यादिकर्मनर्मविनोदैः स्वप्रेयांसं भगवन्तम् अनुक्रीडन्ती। श्रीसू.

**देवेन्द्रः** - देवानामीशिता परमात्मा। वेकौ.

**देवेशः** - देवानां यथार्हविनियोगक्षमः, तेषां स्वामी। सह.

**देशः** - आश्रयः। श्रु.

**देशना** - उपदेशः। च.

**देशनैरतन्तर्यम्** - भिन्नदेशसंयोगाभावः। न्यासि.

**देशपरिच्छेदः** - अत्रैव देशेऽस्ति, अत्र तु नास्ति इति। ता.

**देशपरिच्छेदराहित्यम्** - द्रव्यनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नाभावाप्रतियोगित्वम्। वा.

**देशभूतषाड्गुण्यप्रसरः** - हेतुहेतुमतोरभेदोपचारात् षाड्गुण्यप्रकाशहेतुत्वान्नित्यविभूतेः षाड्गुण्यप्रसरता। रत्न.

[**देशसमयः** - विष्णुभक्तिपराः। "विष्णुभक्तिपरा देवाः" "अभय" मित्याद्युक्तगुणगणशालिनः। र.]

**देशापरिच्छेदः** - "इहेदं नान्यत्र" इति परिच्छेत्तुमशक्यत्वम्। तै.श्रु. सर्वदेशवृत्तित्वम्। न्यासिटी. सर्वदेशव्यापित्वम्। भाव.

**देशावच्छेदः** - इदमत्र नान्यत्रेति। वे.

**देशिकः** - आराधकः। भा. उपदेशकृत्। वि.

**देश्यः** - ईषदसमाप्ताविति देश्यप्रत्ययः। सदृशप्राय(?)ः। अति.

**देहभेदे** - प्राकृतदेहभिन्नशुद्धसत्त्वमयदेहे। श्वे.

**देहवद्भिः** - देहात्माभिमानयुक्तैः।गी. देहवत्त्वं सनकादीनामपि सम्भवतीत्याशङ्क्य देहात्माभिमानयुक्तैरित्युक्तम्। ता.

**देहसमुद्भवाः** - देहाकारपरिणतप्रकृतिसमुद्भवाः। गी.

**देहात्माभिमानः** - स्थूलोऽहं कृशोऽहमित्यादिः। न्यासिटी.

**देहित्वम्** - शेषि(देहि?)त्वायोगव्यवच्छेदः। श्रीत.

**दैन्यम्** - अनुत्साहः। रा.

**दैर्घ्यम्** - एकदिगार्जवावच्छेदेनाधिक्यम्। न्यासि. मूलापेक्षया अग्रस्य दूरत्वम्। न्यासिटी.

[**दैवप्रकृतयः** - विष्णुभक्तिपराः । "विष्णुभक्तिपरा देवाः" "अभय"-मित्याद्युक्तगुणगणशालिनः । र.]

**दैवम्** - उत्पातज्ञानम् । छा. देवता. । स्तो. (यज्ञम्) देवार्चनरूपम् । गी. देवसम्बन्धि, तत्संबन्धित्वञ्च तदर्चनरूपत्वम् । ता. परमात्मा अन्तर्यामी । गी. प्राचीनकर्मरूपं भाग्यम् । दैवतम् । देवता । ता.

**दैवकी** - देवकस्यापत्यं दैवकीति वृद्धिपाठः साधुरित्यात्रेयः । अवृद्ध एव प्रसिद्धः । तथा यमकरत्नाकरे च प्रयोगो दृश्यते । सम्भवति चाणुप्रत्ययान्तत्वेऽप्य-वृद्धित्वं ज्योतिषवत् । संज्ञापूर्वकविधित्वेन वृद्धिशास्त्रस्यानित्यत्वात् । या.

**दैवतम्** - परं ब्रह्म । श्रु. परमाचार्यैः । रा.

**दैवतदैवतम्** - दैवतानामपि सकलकार्य-निर्वहणक्षमो भगवान् । रा.

**दैवयन्त्रितम्** - दैवाधीनम् । भा.

**दैशिकपरत्वम्** - अधिकसंयोगघटितसं-युक्तसंयोगपरम्परावन्मूर्तावच्छिन्नदिक्सम्बधः। न्यासिटी. दिगनङ्गीकारे तादृशमूर्तसंयोग एव। रत्न.

**दैशिकापरत्वम्** - न्यूनसंयोगघटितसंयु-क्तसंयोगपरम्परावन्मूर्तावच्छिन्नदिक्संयोगः। न्यासिटी. तादृशमूर्तसंयोगमात्रं वा । रत्न.

**दैवी** - देवेन निर्मिता दैवीति तद्धितार्थः । "दिवु क्रीडा" इत्यादि धातौ देवशब्द-निष्पत्तिः । सात्त्विकी । ता.

**दोषः** - अनिष्टहेतुः । च. विकृतिः । रा.

**दोषत्वम्** - विपरीतज्ञानहेतुत्वम् । श्रु.

**दोषा** - दोषापदमव्ययमित्यमरसिंहादिभि-रुक्तम् । 'ततः कथाभिः समतीत्य दोषामा-रुह्य सैन्यैः सह पुष्पकं सः' इति भट्टि-प्रयोगादनव्ययमप्याहुः । या.

**दोषाः** - क्लेशकर्मविपाकाशया योग-सूत्रोक्ताः । श्रु. (न्यासू) प्रवृत्तिहेतवः, संग्र-हाद्रागद्वेषमोहाः । न्याप. रागद्वेषादयः । रा.

**दोहः** - फलम् । छा.

**दोहलम्** - इच्छा । या. इच्छाविशेषः । दशा. "दोहलं दोहदं छन्दः" इतीच्छा-पर्यायेष्वमरकोशशेषः । या.

**दौरात्म्यम्** - दुःस्वभावः । रा. रागद्वेषादिकम् । भा.

**दौर्मनस्यम्** - मानसदुःखम् । श्रु. मानस-दुःखम् (सौगतमते) । बृ. विषादम् । भा.

**दौष्कुलेयः** - दुष्कुले भवः । रा.

**दौहृदम्** - इच्छा । रा. गर्भः । रा.या.

**द्युतिः** - देवस्त्रीविशेषः । रा. [बहिरा-लोकः । या.]

**द्युतिधरः** - द्युतिम् इन्द्राभिभावुकामतिमा-नुषीं दीप्तिं धरतीति । सह.

**द्युम्नोदाः** - कान्तिदः । तै.

**द्युव्याप्तत्वम्** - द्युपरिच्छिन्नत्वम् । भाव.

[**द्यूतम् (द्विविधम्)** - लीलाद्यूतम् पणबन्धद्यूतञ्चेति । पांच.]

**द्योतकत्वम्** - लक्षणातात्पर्यग्राहकत्वम् । रत्न.

**द्योत्यम्** - विशेषणसम्बन्धानर्हम् । सर्वा.

**द्यौः** – अप्राकृतस्थानम् । न्यासिटी. समष्टिव्यष्टितत्त्वबहिर्भूतः अप्राकृतस्थानविशेषः । छा. स्वर्गः । प्र.

**द्रढिष्ठः** – दृढतरः । व्यवस्थितस्वभावः । तै. दृढतरः । शरीरबलवान् । श्रु.

[**द्रप्सः** – भगवद्विभूत्येकदेशः । सच्च.]

**द्रवत्वम्** – जलत्वपर्यवसितसंस्थानविशेष एव । स्यन्दननिदानम् । पृथिव्यप्तेजोवृत्ति । न्यासि.

**द्रविणम्** – सर्वसमृद्धिः । श्रीसू.

[**द्रविडनिगमः** – वकुलधरमहर्षिदृष्टो द्रविडभाषामयः संहिताविशेषः । सच्च.]

**द्रविणप्रदः** – शास्त्रतदर्थरूपद्रविणप्रदाता । सह.

**द्रव्यम्** – अवस्थावत् । सर्वा. आगन्तुकधर्माश्रयः । न्याप. उपादानम् । न्यासि. य. जातिगुणक्रियाधर्मकम् । जातिगुणक्रियाविशिष्टम् । न्यासि. दशावत् । विकारधर्मवदित्यर्थः । विकाराश्रयः । सर्वा. संयोगि । न्यासि. संख्याकारकान्वययोग्यम् । (वैयाकरणमते) । रत्न.

**द्रव्यत्वम्** – अवस्थावत्त्वम् । वा.

**द्रव्ययज्ञाः** – द्रव्यैः यज्ञा येषां ते । यद्वा-द्रव्यात्मका यज्ञा येषां ते । ता.

**द्रव्यषट्कम्** – चिदचिदीश्वरधर्मभूतज्ञानकालनित्यविभूतिरूपम् । सर्वा.

**द्रव्याद्वैतम्** – आत्मजायासुतबन्धुधनभोग्यभोगोपकरणानामैक्यम् । भा.

**द्रष्टव्यः** – अन्वेषयितव्यः । परिपालनीयः । रा.

**द्रष्टा** – प्रमाणादिवशेन दृश्यानां प्रदर्शकः । ता. रूपसाक्षात्कर्ता । श्रु. रूपसाक्षात्कारवान् । न तु चक्षुर्जन्यज्ञानवान् । तादृशज्ञानस्य परमात्मन्यसंभवात् । बृ.

**द्रष्टृ** – रूपादिसाक्षात्कर्तृ । बृ.

**द्रष्टृदृश्यसंकरः** – दृश्ये द्रष्टृतादात्म्यभ्रमः । न्यासिटी.

**द्रुहिणः** – विरोधिनिरसननिपुणः । ब्रह्मा । रघु.

**द्रेक्काणः** – राशेः त्र्यंशः । वि.

**द्रोणम्** – शिवद्वयम् । रा.

**द्रौणिः** – अश्वत्थामा । वेकौ.

**द्वन्द्वम्** – नियुद्धम् । रहस्यम् । रा. सुखदुःखे । श.

**द्वन्द्वत्रयम्** – अर्थधर्मौ, धर्मार्थौ, कामार्थौ वा । रा.

**द्वन्द्वमोहः** – द्वन्द्वरूपो मोहः द्वन्द्वमोहः । गी. मोहशब्दस्य करणे व्युत्पत्या द्वन्द्वे प्रयोगः । ता.

**द्वन्द्वारामः** – द्वन्द्वेषु आ समन्तात् रमत इति । भा.

[**द्वयम्** – "श्रीमन्नारायणे"त्यादिखण्डद्वयविशिष्टो मन्त्रः । अत्र खण्डद्वयेन उपायोपेयरूपार्थद्वयप्रतिपादनात् अस्य मन्त्रस्य द्वयमिति प्रसिद्धिः । र.]

**द्वयाः** – द्विविधाः । श्रु. द्विविधाः । "द्वित्रिभ्यां तयस्यायज्वे" त्ययच् प्रत्ययः । बृ.

**द्वापरयुगम्** – देवमानेन द्विवर्षसहस्रपरिमितं युगम् । य.

**द्वारम्** - मार्गः, हेतुः । गी. प्रवेशहेतुर्हि द्वारम् । तेनापि प्राप्तिमात्रहेतुत्वं विवक्षितम् । ता.

**द्वारदर्शी** - मार्गप्रदर्शको द्वारपालकः । रा.

**द्वारपाः** - द्वारपालका आतिवाहिका वा । छा.

**द्वास्स्थः** - द्वारि नियुक्तः । रा.

**द्वित्वादि** - द्वित्वादिहेतुना व्यवहारनियम-हेतुना चापेक्षाबुद्ध्चैव द्वित्वव्यवहारोप-पत्तिरिति अपेक्षाबुद्धिविशेषविषयत्वमेव द्वित्वादि । न्यासि.

**द्विवर्गः** - अर्थकामौ । च.

**द्विरदशिखरी** - हस्तिशैलः काञ्चीक्षेत्रे विराजमानः । व.

**द्विरदाः** - द्विदन्ताः । रा.

**द्विविधस्संतानः** - सदृशसंतानो विसदृशसन्तानश्चेति बौद्धाः । न्यासिटी.

**द्वीपी** - महाव्याघ्रः । रा.

**द्वेषः** - अप्रीतिः । भा. ज्ञानविशेषः । न्यासि. प्रतिकूलविषयजिहासा । सर्वा.

**द्वेष्यः** - जन्मत एव अनिष्टेच्छुः । गी.

**द्वैतम्** - परमात्मनि प्रतिषिध्यमानं द्वैतं भेदः चिदचिद्गतधर्मवैचित्र्यम् । सुबा. पृथक्त्वम् । श्रु. पृथगात्मानं प्रेरितारञ्च मत्वेत्यादि-श्रुतयः विशेषणविशेष्यभेदविवक्षया द्वैतमित्याहुः । मं. मिथ्याज्ञानम् । 'द्वि' इति भावप्रधानम्; द्वित्वेन वस्तुतत्त्वापेक्षयाऽ-न्यात्मकत्वरूपद्वितीयप्रकारेण इतं ज्ञातं वस्तु द्वीतं, द्वीतस्येदम् । मा.

[**द्वैधम्** - भेदः । रा.]

**द्वैधीभावः** - द्वयोः परस्परं विरुध्यतोः उभयत्र दत्तपदता । या.

**द्वैमात्रः** - सपत्नीपुत्रः । रा.

**द्वैवर्गिकः** - चार्वाकः । श.

**द्व्यणुकम्** - जालालोकविलोकनीयत्र-सरेणावेव मात्रया भेदमवलम्ब्य द्व्यणुक-त्र्यणुकादिव्यपदेशः प्रमाणग्रन्थेषु । न्यासि.

**द्व्यात्मकत्वम्** - आकारद्वययोगित्वम् । नी. [**द्व्यष्टवर्षवधूगमः** - युवतीसम्भोगः । ई.]

## ध

**धत्ते** - विषयीकरोति । भा.

**धनम्** - स्वर्णादिधातुः । रा.

**धनञ्जयः** - प्राणभेदः । पोषणकरः । सर्वा. हेमरत्नादिकं अधःकरोतीति । सह.

**धनमात्रा** - अल्पधनम् । छा.

**धनसनयः** - धनानां सनिः लाभः येषां ते धनसनयः । छा.

**धनस्य पूर्णा** - भोगोपकरणैः पूर्णा । छा.

**धनाध्यक्षः** - कोशरक्षाधिकृतः । रा.

**धनुर्धरः** - उपासकानां कण्टकोद्धरणाय स्वयमेव धनुः कार्मुकं धरतीति । सह.

**धनुर्वेदः** - अस्त्रशासनम् । वि. सुरनरेन्द्रा-दयो धनुरादिकं तत्तच्छास्त्रप्रवर्तकेऽस्मिन् विन्दन्तीति । सह.

**धनेश्वरः** - शीघ्रं धनप्रदाता । सह.

**धन्यः** - देवकीजन्मधनलाभवान् । सह. [कृतार्थः । या. धनं लब्धा । ई.]

**धन्यम्** - धनहेतुः । धनं प्रयोजनम् अस्येति

विग्रहे ''स्वर्गादिभ्यो यत्'' इत्युत्पन्नः यत्प्रत्ययान्तश्शब्दः । च.

**धन्या** – सुकृतिनी । या.

**धन्वी** – नित्यनिरतिशयपौरुषानुरूपं दिव्यं शार्ङ्गं धनुः नित्यमस्येति । सह.

**धमनिः** – नाडी । पा. सिरा । छा.

**धरणी** – निश्चलतया अवस्थानवती । धृङ् अवस्थाने । तै.

**धरणीधरः** – अन्यदपि धारकं धारयति । ''उद्धृतासि वराहेण'' । धारकान्तरोपलक्षणीं भुवं धरतीति । सह.

**धरमाणः** – जीवितं धारयन् । रा.

**धराधरः** – धरं गोवर्धनगिरिम् आधारतीति । सह.

**धर्मः** – अलौकिकश्रेयस्साधनम् । पा.य. रा. उपायः । क.श्रृ. कर्मयोगः । अति. गतिमतां गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी (जैनमते) । श्री. धर्मदेवता । रा. धर्मशब्दो भगवत्प्रीतौ मुख्यः । कर्मव्यापारो हि धर्मशब्दार्थः । स च प्रसाद एव । अथवा धर्मपदमलौकिकश्रेयस्साधनत्वं गुणं निमित्तीकृत्य प्रवर्तते । ...अतो यागादीनां ब्रह्मणश्च प्रीतिद्वारकश्रेयस्साधनताया अलौकिक्या विद्यमानत्वात् धर्मशब्दो यागादिब्रह्मसाधारणः । .... अथवा अलौकिकश्रेयस्साधनताया धर्मशब्दप्रवृत्तिनिमित्तत्वात् ब्रह्मण एव तत्साधनत्वात् प्रसादस्य च व्यापारमात्रत्वात् तादृशश्रेयःकर्तृत्वस्य प्रवृत्तिनिमित्तत्वाद्वा ब्रह्मैव धर्मशब्दस्य मुख्यार्थः । च. धृतिसाधनम् । ता. धृतिहेतुः । त. प्रीतिपर्यायधृतिवाचके धातौ करणविवक्षया व्युत्पन्नोऽत्र धर्मशब्दः । ता. मोक्षसाधनभूतोपासनम् । यंत्तु आर्याः क्रियमाणं प्रशंसन्ति सः । स्तो. यागादिजनितः अष्टाङ्गयोगाभ्यासजनितश्च अभ्युदयनिश्रेयसहेतुभूतो गुणविशेषः (सांख्यमते) । सर्वा. यागादिसाध्यमदृष्टम् । वि. विहितं कर्म । नि. विहितक्रियासाध्यतयाऽभिमतः सर्वप्रशासितुरीश्वरस्यानुग्रहाख्यबुद्धिविशेषः । न्याप. श्रेयस्साधनम् । सर्वा. श्रेयस्साधनभूतः । बृ. स्वरूपातिरिक्तविशेषः । च. सर्वधरणशीलः । अभ्युदयनिश्रेयसाभ्यां सर्वं साक्षात् धरतीति । सह.

**धर्मकृत्** – सर्वजनधार्मिकीकरणधर्मकर्ता । सह.

**धर्मगुप्** – दत्तावप्यर्थकामौ दुर्विषयान्निवर्त्य ताभ्यां हितधर्मरक्षणात् । सह.

**धर्मत्वम्** – वेदबोधितश्रेयस्साधनताकत्वम् । वा.

[**धर्मद्रवः** – गङ्गानदी । या.]

**धर्मध्वजः** – दाम्भिकः । भा.

(वृत्तये लोकवञ्चनार्थं धर्मानुष्ठानतत्परः । या.)

**धर्मध्वजम्** – धर्मलिङ्गम् । वस्तुतो धर्मरहितमित्यर्थः । रा.

**धर्मध्वजिनः** – उत्तमवेषधारिणः । भा.

**धर्मनिग्रहः** – धर्महानिः । रा.

**धर्मनिष्ठः** - धर्मे निष्ठा स्थितिः यस्य, धर्मरूपा निष्ठा यस्येति वा, धर्मे नितिष्ठतीति वा व्युत्पत्त्या यथावस्थितकर्मयोगतत्परिकरार्हः। स्तो.

**धर्मनेत्रः** - धर्मात्मकज्ञानसाधनः। रा.

**धर्मभूतज्ञानम्** - स्वयंप्रकाशाचेतनद्रव्यत्वे सति सविषयम्। य.

**धर्मयूपः** - धर्मतत्त्वं शिरोऽवयवतया यौति मिश्रयतीति। सह.

**धर्मवर्धनम्** - ग्रामविशेषः। रा.

**धर्मविदुत्तमः**-स्वस्यवसिष्ठमार्कण्डेयादिशिष्यत्वेऽपि धर्मज्ञाने तदुपजीव्यतया धर्मवित्सु धर्मज्ञेषु, तेभ्यो वा, उत्तमः उत्कृष्टतम इति। सह.

**धर्मव्यतिक्रमः** - विहितनिषिद्धव्यतिक्रमः। नि.

**धर्मव्याधः** - जुगुप्सितावरवर्णं प्राप्तोऽपि संसिद्धिप्रापकपूर्वाभ्यासबलवान् कश्चित्। न्यासि.

**धर्मशास्त्रम्** - यानि पुनः साङ्ख्ययोगपाशुपतपञ्चरात्राणि तान्यपि धर्मशास्त्रभेदा एव। न्याप.

**धर्मसन्तानः** - धर्मवृद्धिः। रा.

**धर्मसंयोगः** - विहितधर्मानुष्ठानम्। रा.

**धर्मसेतुः** - धर्मस्य सेतुरिव मर्यादास्थापकः। रा.

**धर्मस्कन्धः** - धर्मसाधकमार्गः। आश्रमरूपो मार्गः। छा.

**धर्मस्कन्धाः** - धर्माश्रया आश्रमाः। श्रु.

**धर्मात्मा** - धर्मे आत्मा मतिर्यस्य सः। रा.

**धर्माधर्मौ** - विहितनिषिद्ध क्रियासाध्यतयाऽभिमतौ आज्ञावतो राज्ञ इव सर्वप्रशासितुरीश्वरस्यानुग्रहनिग्रहाख्यबुद्धिविशेषरूपौ भाष्यादिषु बहुषु प्रदेशेषु प्रपञ्चितौ। न्याप.

**धर्माध्यक्षः** - लोकाध्यक्षो द्र.

**धर्माप(व?)हम्** - ज्ञानानुकूलपुण्यप्रवर्तकम्। श्वे.

**धर्माविरुद्धः कामः** - स्वदारप्रीत्यादिः। ता.

**धर्मी** - प्रसिद्धोऽपि धर्मोऽस्य सर्वसाधारणधर्मोपकरणमिति। सह.

**धर्म्यम्** - कर्मसाध्यं शरीरादि। क. धर्मादनपेतम्। गी.

**धर्षणम्** - बलात्कारः। रा.

**धर्षणा** - तिरस्कारः। रा.

**धवान्** - चिरिबिल्वान्। रा.

**धाटीभटः** - उद्धतगतिविशिष्टो योधः। दशा.

**धाता** - अचित्समष्टिभूतायां प्रकृतौ चित्समष्टिभूतं विरिञ्चाख्यं गर्भं दधातीति। स्वयं च धर्माचार्यकेण दधातीति। सह. ईश्वरः, धारकः। वि. परमात्मा। तै. श्रु. पोषकः। रक्षक इत्यर्थः। रा. भगवान्। क. महापुरुषः नारायणः। श्वे. सर्वस्रष्टा परमात्मा। तै. हिरण्यगर्भः सर्वस्य स्रष्टा अण्डान्तर्वर्तिसमस्तविधाता।

**धातुः** - धारकः। क.

**धातुरुत्तमः** - स्रष्टुः चतुर्मुखब्रह्मणः उत्तमः उत्कृष्टतमः । सह.

**धातुवादः** - रसवादः । पा.

**धात्री** - माता । वि. माता; उपमाता । या.

[**धातृत्वम्** - स्रष्टृत्वम् । र.]

**धानाः** - बीजानि । छा.बृ.

**धापयन्ति** - पाययन्ति । बृ.

**धाम** - गृहम् । अति. तेजोमयं स्वरूपं दिव्यविग्रहो वा । वै. नियमनस्थानम्; अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं **परमं धाम** परमं नियमनस्थानम् । गी. प्रकाशः । प्रकाशश्चेह ज्ञानमभिप्रेतम् । संहारनश्वरचराचरबीजाधारनौकर्णधारत्वेन तस्य **धाम** स्थानमिति । ''चराचराधारतया धामेति परिचक्षते'' । सह. स्थानम् । कौ. स्वप्रकाशज्योतिर्मयं वस्तु । या. [प्रभावः । मन्दिरम् । या.]

**धामधाम** - तेजसां स्थानम् । वि.

**धारणम्** - मनसः शुभाश्रये अवस्थापनम् । भा.

[**धारकम्** - शरीरधारणहेतुः । ई.]

**धारणा** - आत्मनि अचञ्चलमनःस्थितिः । शर. ''एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते'' । वेकौ. [भगवति मनसो निश्चलत्वेनावस्थानम् । ई.]

**धारावाहिज्ञानम्** - नीरन्ध्रनिर्यातद्युमणिमयूखवदेकरूपं, सन्तन्यमानदीपवदनेकरूपं वा ज्ञानम् । न्यासि.

**धार्मिकः** - धर्मचारी, धर्मस्वरूपः, (रामः) वर्णाश्रमाचारसमाराध्यः । रा.

**धार्मिकान् विदधत्** - पुत्रपौत्रादीन् धर्मे नियुञ्जानः । छा.

**धावताम्** - विचिन्वताम् । भा.

**धिया** - संकल्पेन । बृ.

**धिष्ण्यम्** - स्थानम् । वि.

**धिष्ण्यानि** - विमानानि । वि.

**धीः** - चिन्ता । श्रु. गीसं. प्रतिपुरुषनियतं सर्वगोचरस्वभावमपि संसारावस्थायां कर्मणा संकुचितमिन्द्रियाधीनप्रसरणं जीवज्ञानम्, अन्यज्ञानञ्च । न्यासि. प्रमाणजन्यज्ञानमात्रम् । बृ.

**धीत्वम्** - कस्य चित्प्रकाशात्मता । त. विषयप्रकाशकत्वम् । श्रु.

**धीमहि** - ध्यायेम । तै.

**धीमान्** - ऊहापोहक्षमधीशाली । मु.

**धीरः** - आपद्यपि चाञ्चल्यरहितः । नि. देहतदनुबन्ध्यादिषु आसक्तिरहितः । भा. धीमतामग्रेसरः, प्रकृत्यात्मविवेककुशलः । गी. प्रज्ञाशाली । मु. वी(धी)रोऽत्र पराक्रमे ग्लान्यादिविकाररहितः । ता. सुखदुःखसमः । भा.

**धीरत्वम्** - धीविशेषवत्त्वम् । ता. ['स्फुरत्प्रभावगंभीरं धीरमित्युच्यते बुधैः' इत्युक्तलक्षणश्चक्षुर्विकारविशेषः । या.]

**धीराः** - धीमतामग्रेसराः । वे. धीमन्तः । ई.क. प्रज्ञाशालिनः । बृ. शीतोष्णसुखदुःखद्वंद्वसहनशीलाः । भा.

**धुन्धुमारः** - त्रिशंकुनृपपुत्रः । रा.
**धुर्यः** - "भुवनभृत" इति तन्मन्त्रवर्णात् धुरं भुवनभारं वहतीति । सह.
**धूपकः** - गृहादिषु धूपवासकः । रा.
**धूमः** - धूमाभिमानिनी देवता । बृ.
**धूमधूम्रात्मनाम्** - अज्ञानावृतमनसाम् । भा.
**धूमध्वजः** - अग्निः । सि.
**धूमादिमार्गः** - पितृयाणम् । कौ.
**धूमोर्णा** - यमस्य पत्नी । वि.
**धूम्राक्षः** - रावणसचिवेष्वन्यतमो राक्षसः । रा.
**धृतराष्ट्रः** - कश्चित् गन्धर्वः । वि.
**धृतात्मा** - आत्मदानेन धृता आत्मानः अनेनेति । सह. धारयिता । वि.
**धृतिः** - अपराधोद्घाटनेऽपि अनुकम्पावत्त्वम् । वर. आपदि अदुःखित्वम् । भा. आरब्धायाः क्रियायाः विघ्नोपनिपातेऽपि धारणम् । आरब्धे कर्मणि यावत्कर्मसमाप्ति अवर्जनीयदुःखधारणम् । गी. आरब्धे कर्मणि विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यम् । भा. गी. दाक्ष्यात् धृतेर्विशेषो विघ्नोपनिपातेऽपीति दर्शितः । प्रवृत्तिसामर्थ्यात् प्रवृतापरित्यागो ह्यन्य एव । ता. धीप्रतिष्ठा । वि. धैर्यम्, इन्द्रियजयः, द्वन्द्वसहिष्णुता वा । भा. नियमनजननधार्ष्ट्यम्, प्रभावः । रा. प्रीतिः । बृ. विघ्नोपनिपातेऽपि कृत्यसमापनसामर्थ्यम् । भा. विधृतिः । श्रु. धृतिगृहीतया बुद्ध्या विवेकविषयया बुद्ध्या । गी. प्रकान्तादशिथिलत्वरूपाया
**धृतेर्हेतुमाह** - विवेकविषययेति । ता. सौख्यम् । धारणम् । या. [महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् । र.]
**धृतिमान्** - निरतिशयानन्दः 'धृतिस्तुष्टिस्सन्तोषः' इति कोशः । रा.
**धेनुः** - सर्वकामदोग्ध्री । तै.
**धेनुका** - गजग्रहणसाधनभूता करेणुः । रा.
**धैर्यम्** - अकम्प्यचित्तत्वम् । अचञ्चलता । केनाप्यप्रकम्प्यत्वम् । क्षोभके सत्यप्यक्षोभ्यत्वम् । रा. अत्यन्ताभिमतवियोगप्रसङ्गेऽप्यभिन्नप्रतिज्ञत्वम् । अतर्कितोपनतेऽपि बलवति प्रतिपक्षे सावज्ञदृढचित्तत्वं वा । युद्धे स्वगृह इव प्रवेशसामर्थ्यम् । भा. ज्ञानकौशलम् । क. शत्रुभिर्धर्षणे तृणवन्मन्यमानत्वम् । श्रु. अभग्नप्रतिज्ञत्वम् ।य. अलौल्यम् । वि.
**ध्यानम्** - धृतस्य मनसो वृत्तिसन्ततिः । भा. अनुचिन्तनम् । गीसं. ज्ञातव्यविषयनिरन्तरप्रत्ययः । रा. तैलधारावदविच्छिन्नस्मृतिसन्ततिः । त. वेकौ. तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपम् । ता. तैलधारावदविच्छिन्नस्मृतिसन्तानः । श्री. प्रत्ययावृत्तिरूपचिन्ता । सर्वा. विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनम्, चिन्तनम् । श्री. ध्यैचिन्तायामिति हि धातुः । संकल्पः । श्रु. [निरन्तरस्मृतिसन्ततिरूपा धारणा । ई.]
**ध्यानक्रियाभ्याम्** - संकल्पसर्गादित्यापाराभ्याम् । म.

**ध्यानभिक्षुकः** - परिव्राट्। च.
**ध्यानयोगः** - ध्यानमेव योगः। ध्यानेन वा योगः। ता.
**ध्यानविधिः** - ध्यानमेव योगः। ध्यानेन वा योगः। ता.
**ध्यानविधिः** - ओमित्यात्मानं ध्यायीतेति विधिः। अधि.
**ध्यानापादांशाः** - ध्यानमापन्नाः ध्यानापादाः ध्यानापादानां ध्यातॄणामंशाः सदृशाः। यथा ध्यातारोऽवचनाः एवं महान्तोऽप्यवचनतया ध्यातृसादृश्यं प्रतिपद्यन्ते। छा.
**ध्रियते** - अवतिष्ठते। धृङ् अवस्थान इति धातुः। बृ.
**ध्रुवः** - ज्योतिश्चक्राधारतया परिदृश्यमान औत्तानपादिः। सुन्दर. स्थिरः। अनाशी। बृ. तानविशेषः। भा. परिणामरहितः। रा. अनन्तपरिणामादपि अविकुर्वाणतया ध्रुवति, स्वरूपात् अप्रच्याव्यो भवतीति। स खलु तुङ्गपदप्रदानेन अर्वाचीनं ध्रुवमपि ध्रुवीचकार, ध्रुवति सर्वव्यवस्थापकतया स्थिरीकरोति। अतो ध्रुवः। अस्य सर्वव्या (व्यवस्था) पकत्वं तत्त्वम्। सह.
**ध्रुवम्** - अविनाशि। वि. निश्चलम्। बृ. व्यापित्वेन निश्चलम्। म. स्पन्दरहितम्। वि.
**ध्रुवत्वम्** - नाशरहितत्वम्। (स्मृतेः) विजातीयप्रत्ययान्तराव्यवहितसन्ततित्वम्। श्रु.
**ध्रुवभावित्वम्** - इदं भावानां हेतुनिरपेक्षत्वसाधकं बौद्धविशेषोक्तम्। तच्च एष्यत्त्वनियममात्ररूपम्, न त्वन्यादृशम्। न्यासि.
**ध्रुवसन्धिः** - सुसन्धिनृपपुत्रः। रा.
**ध्रुवा** - भूमिः। स्वर्लोकापेक्षया भूमेर्ध्रुवत्वात् भूमिरूपा अधोदिक् ध्रुवेत्युच्यते। बृ. विनाशरहिता। सर्वा.
**ध्रुवाः** - नित्याः। छा.
**ध्रुवाम्** - विनाशरहिताम्। म.
**ध्रुवानुस्मृतिः** - निरन्तरस्मृतिः। सर्वा.
**ध्रुवानुस्मृतित्वम्** - घटिकाद्यात्मककालनिष्ठावान्तरकालावच्छिन्नाभावाप्रतियोगित्वम्। वा.
**ध्वंसः** - उत्पत्तिमदभावः। श. (कार्यस्य) उत्तरावस्था। य.
**ध्वजाः** - मत्स्यमकराद्याकाराः। रा.
**ध्वस्तकमलाः** - कान्ति हीनाः। रा.
**ध्वान्तम्** - तमोगुणः। सर्वा.

## न

**न** - इव। तै.
**नकिः** - नास्ति।
**नक्तन्दिनानि** - रात्रयो दिवसाश्च। गा.
**नक्षत्रम्** - नक्षत्रशब्देन निशि प्रकाशमात्रं छत्रिन्यायाद् ग्राह्यम्। "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि" इति श्रुतेः। चन्द्रमण्डलस्यापि वा स्वर्गिणां भोगस्थानत्वान्नक्षत्रत्वम्। 'यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्, देवगृहा वै नक्षत्राणि' इति। ता.
**नक्षत्रनेमिः** - ज्योतिश्चक्रनेता। नक्षत्राणि ज्योतींषि नयति निर्वहतीति सः। सह.

**नक्षत्रमाला** - हारभेदः । "सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिका" । पा. [गजमण्डानस्थासकः । या.]

**नक्षत्रविद्या** - ज्योतिषम् । छा.

**नक्षत्रसूचकः** - "अविदित्वैव यश्शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" । नक्षत्राजीवो वा । वि.

**नक्षत्री** - स्वस्याधारतया नक्षत्रं शिंशुमाराकृति ज्योतीरूपं अस्मिन्नस्तीति । सह.

**न क्षीयन्ते** - ब्रह्मविद एव भवन्ति । सन्ततौ ब्रह्मविद्यानुवृत्तेः । नास्याब्रह्मवित्कुले भवतीति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रवणात् । छा.

**नखनिकृन्तनम्** - नखनिकृन्तनशब्देन कार्ष्णायसपिण्डो लक्ष्यते । छा.

**नग्नः** - 'ऋग्यजुस्सामसंज्ञेयं त्रयी वर्णावृतिर्द्विज । एतामुज्झति यो मोहात् स नग्नः पातकी द्विजः ॥' वेदकर्मत्यागी । वि.

[**नचैकं प्रति शिष्यत इति न्यायः** - असति बाधके शास्त्रस्य सर्वविषयकत्वमित्येवंपरो न्यायः । सच्च.]

**नचिरात्** - अविलम्बितम् । रा.

[**नटः** - रसप्रधानाभिनयवान् । या.]

**न तदश्नाति कश्चन** - कश्चिदपि सांसारिकः कर्मफलमिव न तद् भुङ्क्त इत्यर्थः । सुबा.

**न तदश्नाति किञ्चन** - सर्वत्रावस्थितमपि परं ब्रह्म कर्मफलत्वेन न किञ्चिदपि जीववद् भुङ्क्त इत्यर्थः । "ज्ञानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः ।" इति लीलारसभोक्तृत्वस्य प्रमाणसिद्धत्वात् । सुबा.

**नतिः** - (विनतविविधभूत-); गुणोपसंहारपादोक्ततत्तद्विद्यारूपा मानसी यथाविधि प्रह्वता । त.

**न तेजस्कायम्** - तेजःशब्दो ज्ञानपरः । कायशब्दो निकायपरः । विविधज्ञानसमूहरहितम् । सुबा.

**नत्यूहः** - कुक्कुटभेदः । रा.

**नदथुः** - ऋषभकूजितम् । छा.

**नदनद्यः** - नदसहिता नद्य इति शाकपार्थिवादिवत् समासः । अन्यथा सरूपत्वादेकशेषः स्यात् । या.

**नन्तृत्वम्** - किंकरत्वम् । नि.

**नन्दः** - भोग्यभोगोपकरणभोक्तृवर्गसमृद्धः । सह.

**नन्दकी** - भगवताऽपि मामयं नन्द्यादिति प्रार्थ्यो नन्दकः; सोऽस्य नित्ययोगी । सह.

**नन्दनः** - आनन्दं मुक्तौ प्रापय्य मुक्तान् नन्दयतीति वा सर्वभूतानामपि तदानन्दमात्रोपजीवकतया तानि नन्दयतीति वा । सह.

**नन्दिः** - सर्वदा सर्वत्र सर्वथा च अनया (लक्ष्म्या) नन्दति समृध्यतीति । सह.

**नन्दिताः** - श्लाघिताः । रा.

**नन्दी** - नन्दगोपः पिताऽस्यास्तीति वा आनन्दीति छित्त्वा मधुवल्लवीसेवानन्दथुरस्यास्तीति वा । सह.

**नन्दीश्वरः** - शिवानुचरः । रा.

**नपरः** - पराधीनस्थितिरहितः । मा(कू).

**नपुंसकत्वम्** - गुणत्रयोन्मेषविशेषः । एवं स्त्रीत्वं पुंस्त्वञ्च । कौ.

**न प्रज्ञः** - इन्द्रिययोगाभ्यासादिजन्यज्ञान-रहितः। सुबा.

**न प्रज्ञम्** - प्रज्ञं न भवतीति। मा (कू). प्रज्ञम् द्र.

**न प्रज्ञानघनः** - न घनीभूतज्ञानः। घनत्वं बहुलत्त्वम्। बाहुल्यञ्च प्रसृमरद्रव्यस्य प्रतिहतिकृतम्। तदत्र नास्ति। अप्रतिहतज्ञान इति यावत्। सुबा.

**न प्रज्ञानघनम्** - प्रज्ञानघनं न भवतीति। घनं अज्ञानावृतं सुप्तजीवस्वरूपम्। घनं प्रज्ञापयतीति घनप्रज्ञानम्। मा (कू).

**न बहिःप्रज्ञः** - न बहिरेव जानाति, अपित्वन्तरमपि जानातीत्यर्थः। सुबा.

**नभः** - व्योम। भूताकाशः। अव्याकृताकाशरूपा प्रकृतिः; परमाकाशरूपा नित्यविभूतिः।

**नमः** - अत्र परत्र चापेक्षितं निर्ममत्वसंस्कृतं कैङ्कर्यम्। गद्य. नमनम्। गी. न मम अहं न मम; अहं न मम भरः। न्यावि. परं प्रति निरुपाधिककिंकरत्वं नमश्शब्दार्थः। नि. प्रह्वीभावः आत्मनिवेदनं वा। स्वस्वातन्त्र्यनिवृत्तिः भरन्यासरूपप्रपत्तिर्वा। स्तो. स्वापकर्षबोधानुकूलव्यापारः। गरुद. [शरणागतिः। "नमस्कारात्मकं यस्मै विधायात्मनिवेदनम्" इति प्रमाणात्। "नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम्। प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्" इति प्रमाणानुसारेण नामयति देवमिति व्युत्पत्या नामनमपि नमश्शब्दार्थः। र. "नमति ज्यायसे तस्मै तद्वा नमनमुच्यते" "भगवान्मे परो नित्यमहं प्रत्यवरः सदा। इतिभावो नमः प्रोक्तो नमसः कारणं हि सः॥" इति प्रमाणात् प्रह्वीभावः, परत्वावरत्वभावो वा नमश्शब्दार्थः। र.]

**नमनम्** - प्रपत्तिः। नि.

**नम्यः** - सर्वलोकनमस्कर्तव्यः। या.

**नम्यन्ते** - प्राप्यन्ते। तै.

**नयः** - नीतिः। रा. न्यायः। वि. युक्तिः। रा. सुहृदश्च तथाऽस्मिन्नीयन्त इति। ते ह्याहुः - "रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः"। तथा "पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम्"। सह.

**नयति** - आविर्भावयति। नि.

**नयनम्** - प्रवर्तनम्। ई. प्रापणम्। मा (कू).

**नयप्रसक्तम्** - राजनीतियुक्तम्। रा.

**नयसाधनम्** - नीतिकृत्यसंपादनम्। रा.

**नरः** - अनश्वरचिदचिद्विभूतिकतया नरः चिदचिद्वर्गः अस्यास्तीति वा, तद्वैशिष्ट्यात् तद्व्यपदेशाद्वा नरः। "रि हिंसायाम्", नञो नशब्दस्य वा समासः। पूर्वत्र अर्शआद्यच्। सह. न रमत इति नरः। निस्सङ्ग इत्यर्थः। श्रु. परमात्मा। नॄ नय इत्यस्माद्धातोः पचाद्यच्। तदुक्तं भारते - 'नरतीति नरः प्रोक्तः परमात्मा सनातनः'। रा. प्रकृतितः परमकारणभूतः अविनाशी भगवान्। वि. [ईश्वरः नारायणः। "नराज्जातानि तत्त्वानि" इति प्रमाणेन

सर्वतत्त्वकारणतया प्रतिपादनात्। चेतनः। रीङ् क्षये इत्यस्मात् "रः" क्षयिष्णुः अचेतनवर्गः। स न भवतीति नगनैकादिवत्समासः। तथाच स्वरूपविकाररूपक्षयिष्णुत्वाभाववान् चेतन इत्यर्थः सिद्ध्यति। र.]

**नरकः** - व्यसनम्। रा.

**नरकाः** - रौरवादयस्सप्त। कौ.

**नराधमाः** - सामान्येन ज्ञातेऽपि म(भगव)त्स्वरूपे म(भगव)दौन्मुख्यानर्हाः। गी.

**न रिष्यति** - (अथो न रिष्यति। अथोशब्दः अप्यर्थः।) न हिंस्यतेऽपि। "रुष रिष हिंसाया"मिति हि धातुः। बृ.

**नरेन्द्रः** - विषवैद्यः। पा.

[**नर्तकः** - भावप्रधानाभिनयवान्। या.]

**नर्तकी** - मार्गो देशीति द्विधा नृत्तमुक्तं सङ्गीतशास्त्रेषु। तत्र मार्गाख्ये नृत्ते कृतशिक्षा वनिता नर्तकी। या.

**नर्म** - लीला। सुन्दर. हास्यरसः। या.

[**नर्मकारकः** - परिहासकः। या.]

**नलः** - रामसेतुनिर्माता वानरवीरः। रा. [तृणविशेषः। या.]

**नलकूबरः** - कुबेरकुमारः। रा.

**नलिनानि** - रक्तोत्पलानि। रा.

**नलिनी** - सौगन्धिकसरसी। रा.

**नवः** - अद्भुतः। पा.

**नवद्वारे** - मलप्रस्रवणद्वारतया हेयैर्नवभिर्द्वारैर्युक्ते (देहाख्यपुरे)। श्वे.

**न विदितम्** - न अतीतज्ञानविषयः। ईश्वरस्य सव नित्यज्ञानविषय इति नातीतज्ञानविषयः। सुबा.

**न विमुञ्चति** - धारयति। गी.

**न वेद** - अज्ञ इत्यर्थः। बृ.

**न वेद्यम्** - न आगामिज्ञानविषयः। परमात्मनस्सर्वं नित्यज्ञानगम्यमिति न आगामिज्ञानविषयः। सुबा.

**नव्यः** - नव एव नव्यः। तै.

**नष्टः** - लीनः। रा. [मन्त्रसंस्कारविधुरः। संत्संगवर्जितः। र.]

**नष्टग्राहः** - ग्रहणरहितः। अदृश्यमान इत्यर्थः। रा.

**नष्टाजीव्यः** - नष्टजीवनसाधनः। आजीव्यः जीवनसाधनमार्गः। भा.

**नष्टात्मानः** - अदृष्टदेहातिरिक्तात्मानः। नित्यस्यात्मनो विनाशाभावात् 'णश अदर्शने' इति धात्वर्थोऽत्र विवक्षित इत्याह अदृष्टेति। ता.

**न सत्** - कार्यावस्थचेतनविलक्षणम्। न शब्देन समासः। सुबा.

**न सदसत्** - कार्यावस्थचेतनाचेतनोभयात्मकजगद्विलक्षणम्। नशब्देन समासः। सुबा.

**नहि** - नहीत्यखण्डं पदं नञर्थे वर्तते। या.

**न हिनस्ति** - रक्षति; संसारान्मोचयति। गी.

[**न हि निन्दान्यायः** - 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते। अपि तर्हि निन्दितादितरत् प्रशंसितुम्' इत्याकारको न्यायः। सच्च.]

**नहुषः** - स्वमायया जीवान् नह्यति बध्नातीति नहुषः। सह. अम्बरीषनृपपुत्रः। रा.

**ना** - जीवः। ता.

**नाकः** - दुःखासम्भिन्नो भगवल्लोकः वैकुण्ठः। तै.

**नाकम्** - 'नास्मा अकं भवति' इति हि श्रुतिः। अतो नाकशब्दः परमपदमुख्यार्थः। वे. [परमपदम्। अकं दुःखं तद्रहितम्। सच्च. परमव्योम। र.]

**नाकपृष्ठम्** - इन्द्रस्य असाधारणस्वर्गस्थानविशेषः। स्वर्गलोकः। रा.

**नाकपृष्ठ्याः** - स्वर्गलोकभवाः। रा.

**नागः** - प्राणभेदः उद्गिरणकरः। सर्वा. वृक्षविशेषः। रा.

**नागवीथिः** - देवयानोत्तरवीथिः। वि.

**नागाः** - बहुफणाः सर्पाः। रा.

**नाचिकेतः** - नाचिकेताग्निप्राप्यः। क.

**नाचिकेतम्** - नचिकेतसा प्राप्तम्। क. नाचिकेतस्य कर्मणः प्राप्यम्। भाव.

**नाटकम्** - संस्कृतप्राकृतादिमिश्रगद्यपद्यरूपम्। रा.

**नाडिका** - पञ्चदश लघूनि। पञ्च क्षणान् काष्ठां विदुः। ताः काष्ठाः पञ्चदश एका लघुता; लघ्वाख्य एकः कालः। पञ्चदश लघूनि एका नाडिका समाम्नाता। भा.

**नाडी** - सिरा। बृ.

**नाथः** - ईश्वरः। नाथ्यत इति व्युत्पत्त्या रक्षणार्थं प्रार्थनीयः स्वामी। स्वापेक्षितसद्ध्यर्थं याचनीयः स्वामी। गद्य. प्रार्थ्यः। वि.

**नाथत्वम्** - सर्वशेषित्वम्। स्तो.

**नाथा** - स्वामिनी। या.

**नादः** - अर्धमात्रात्मको मकारादुत्तरो नाद इति मन्त्रशास्त्रे प्रसिद्धः। न्यासिटी. दीर्घशब्दस्य विरामसमयसम्भवो ध्वनिः। स्वरावयवविशेषः। रा.

**नादेयम्** - नद्यां भवम्। जलदुर्गमित्यर्थः। रा.

**नानात्ययाः** - नानागतयः। नानाविधगर्भजन्मजरामरणादिलक्षणफलजनकाः। छा.

**नानाभावः** - पृथक्त्वम्। "विना नाना हिरुक् पृथक्" इति निघण्टुः। श्रु.

**नान्तःप्रज्ञः** - अन्तरेव प्रज्ञा यस्य स इति अब्भक्ष इतिवदवधारणगर्भो निर्देशः। बाह्यमपि जानाति यः स नान्तः प्रज्ञः। सुबा.

**नान्दी** - उत्सवः। वि.

**नान्यगामि** - अन्यत्र विषयान्तरेषु गन्तुं शीलं नास्येति। ता.

**नान्यदाधारम्** - अकार्यत्वात् अन्यत्रासमवेतम्। वि.

**नाप्रज्ञः** - न प्रकृष्टज्ञानशून्यः, हेतुनिरपेक्षस्वाभाविकसर्वसाक्षात्कारवान्। सुबा.

**नाप्रज्ञम्** - अप्रज्ञापकं न भवतीति। प्रज्ञापकमेव यत् भवति तत्। मा (कू).

**नाभागः** - नहुषनृपपुत्रः। रा.

**नाभिः** - आधारः। वि. आधारभूतः। आश्रयभूतः। तै. चक्रमध्यवर्ति सरन्ध्रकाष्ठम्। बृ. प्रधानम्। या. "भुवनस्य नाभिः" भुवनस्य धारकः। वे.

**नाम** - सुरनरमृगवृक्षादिजात्यभिधानम् । वि. जातिगुणक्रियाप्रवृत्तिनिमित्तकानि नामानि । अधि. नामेति क्रोधवचनत्वं सूच्यते। 'नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः। या. [अभ्युपगमवादः। "नाम प्रकाश्यसम्भाव्यक्रियोपगम-कुत्सने" इत्यमरः। या.]

**नामभाक्त्वम्** - नामवाच्यत्वम्। श्रु.

**नामयज्ञाः** - नामप्रयोजनाः यष्टेति नाममात्रप्रयोजनाः यज्ञाः। गी.

**नामरूपम्** - विज्ञानसंसर्गात् गर्भद्रव्यस्य कललपेश्याद्याकारेणाभिव्यक्तिः । (सौगतमते)। बृ.

**नामरूपनिर्वोढृत्वम्** - नामरूपकर्तृत्वम्। श्रु.

[**नामानुक्रमणी** - माधवाचार्यप्रोक्तः कोशविशेषः। सच्च.]

**नामिकम् (कर्म)** - शुक्लपुद्गलारम्भकं वेदनीयकर्मानुगुणम्। (जैनमते)। बृ.

**नायुक्तिः** - नानुपपद्यमानता। सर्वा.

**नारः** - नरसंबन्धी। श्रियो नारशब्दार्थघटनं नरसम्बन्धीति व्युत्पत्तिमात्रेण । श्रीत. सर्वपुंसां समूहः। रत्न. ["आपो नारा इति प्रोक्ताः" इति प्रमाणानुसारेण अबुपलक्षितसर्वतत्त्वानि नारा इत्युच्यन्ते। र. "आप इत्येतत् उपलक्षकं सर्वतत्त्वानां" इत्येतत् "नराज्जातानि तत्वानि नाराणीति ततो विदुः" इति प्रमाणबलात् सिद्ध्यति। र. नराणां संघातः। नरो द्र.। र.]

[**नारम्** - जलम्। ई.]

**नारदः** - गन्धर्वः कश्चित्। वि. आचार्यः। नारं ज्ञानं ददातीति। रा. अज्ञाननिवर्तकः। नरस्य सम्बन्धि नारं अज्ञानम्। तत् द्यतीति नारदः। उक्तं च नारदीये 'गायन्नारायणकथां सदा पापभयापहाम् । नारदो नाशयन्नेति नृणामज्ञानजं तमः" इति। रा.

[**नारदीयम्** - पुराणविशेषः। सच्च.]

**नारदीयपद्धतिः** - संहिताविशेषः। सच्च.

**नारदीयसंहिता** - वैष्णवधर्मप्रतिपादक-संहिताविशेषः। सच्च.

**नारसिंहकल्पपरिच्छेदः** - श्रीसात्त्वत-संहितान्तर्गतो भागविशेषः। सच्च.

**नारसिंहम्** - पुराणविशेषः। सच्च.

**नारसिंहवपुः** - भक्तभयापहतदपेक्षासमक्षणप्रतिपन्नयथाकामदिव्यमहानृसिंहसंहननः। नारसिंहं वपुः अस्येति। सह.

**नाराः** - नरसम्बन्धिनः। रत्न. श्रीसू. श्रीत. नरात्सृष्टाः आपः; अपूछब्देन सर्वसृज्यानां ग्रहणम्। नरो द्र.वि.

**नाराणि** - नरजातानि तत्त्वानि। नरो द्र.वि. नराज्जातानि। श्रीत.

**नारायणः** - आपो नारा इति श्रु(स्मृ?)त्या महाजलौघमध्यवर्ती परमपुरुषः । वेकौ. चतुर्मुखः। नारायणशरीरप्रवेशाधीनतन्नामवान्। कौर्मे दशमे तथा प्रतिपादनात्। वेकौ. चेतनाचेतनान्तर्यामी । वै. चेतनाचेतन-प्राप्यभूतः। नराद्भगवतो जातानि तत्त्वानि नाराणि अयनं यस्य सः सर्वान्तर्यामीत्यर्थः।

वेकौ. नाराः अयन यस्य स नारायणः । "आपो नाराः" इति मनुस्मरणात्। जगत्कारणभूतः परमात्मा । रा. नारः पुंसां समूहः तस्य अयनमाधारः परमात्मा। वेकौ. नाराणां नित्यवस्तुसमूहानाम् अयनं आश्रयः। अभी. रिङ् क्षये इत्यस्माद्धातोर्डप्रत्यये टिलोपे च कृते 'रः' इति भवति। नरः अक्षयः, निर्विकार इत्यर्थः । जह्नुर्नारायणो नर इति वचनात् नर इति भगवन्नाम। तस्माज्जाता इत्यण्प्रत्यये कृते नारा इति भवति। नाराख्याः आपः अयनं अस्येति नारायणः । श्रु. विष्णोरसाधारणं नाम। नराः स्वरूपप्रवाहनित्यवस्तूनि; तेषां समूहाः नाराः, ते अयनं आश्रयः यस्येति वा तेषाम-यनमिति वा नारायणः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" । सह. सर्वान्तर्यामी । रा. ["नारायणामयनत्वाच्च नारायण इति स्मृतः" "नारो नराणां संघातः तस्याहमयनं स्मृतः" इति प्रमाणानुसारात् नरसंघातगतिः इत्यर्थः सिद्ध्यति । नाराणां अयनम्; रः क्षयिष्णुः स्वरूपविकारवत् अचिज्जातम्, तन्न भवतीति नरः चेतनः; तस्य समूहः नाराः तेषामयनम्। अयनम् ईयतेऽनेन (इण् गतौ) इति करणव्युत्पत्त्या ईश्वरस्य उपायत्वम् । ईयतेऽसौ इति कर्मव्युत्पत्त्या उपेयत्वम् । ईयतेऽस्मिन्निति अधिकरणव्युत्पत्त्या आधारत्वं च सिद्ध्यति । नारा अयनं यस्य नारायणः । "नराज्जातानि तत्त्वानि नाराणीति ततो विदुः" इति प्रमाणानुसारात् नाराणि सर्वतत्त्वानि ईयत इत्ययनमिति कर्मव्युत्पत्त्या ईश्वरव्यापनकर्मीभूतत्वं सर्वेषां तत्त्वानां सिद्ध्यति, तेन सर्वव्यापकत्वं ईश्वरस्य सिद्ध्यति। र.]

**नारायणम्** - नराणां प्राप्यम्; प्रापकम्; आधारम्। भा.

**नारायणाह्वयधरम्** - (सूक्तम्) नारायणसूक्तमित्यप्यस्य (पुरुषसूक्तस्य) नामान्तरमस्ति। तदुक्तमापस्तम्बेन ब्रह्ममेधे 'नारायणाभ्यामुपस्थान'मिति । अत्र अद्भ्यः सम्भूत इत्यनुवाकस्य पुरुषसूक्तशेषभूतत्वात् अनुवाकद्वयाभिप्रायेण द्विवचनप्रयोग इत्यनवद्यम्। वे.

[**नारायणार्थः** - तत्त्वनिर्णयाख्यग्रन्थनिर्माता यादवप्रकाशमतानुसारी कश्चित् पण्डितः। सच्च.]

**नारायणी** - लक्ष्मीः। श्रीत.

**नालैः** - मार्गैः। वि.

**नाविकः** - नावा तरणसमर्थः। रा.

**नाशः** - अदर्शनम् । रा. पलायनम् । "नाशः पलायने मृत्यौ मृतौ च' इति वैजयन्ती । वि. पुरुषार्थायोगः । ता. स्वकाले सत एवार्थस्य स्वोत्तरकाले असत्त्वम्। श.

**नासत्** - कार्यावस्थाचेतनविलक्षणम् । नशब्देन समासः। सुबा.

**नासीरम्** - सेनामुखम्। दशा.

**नासूयेत** - न दोषानाविष्कुर्वीत। भा.

**नास्तिकः** - शास्त्रार्थविश्वासरहितः। भा.

**नास्तिक्यम्** - अविश्वासः। भा.

**नास्तिता** - अभावप्रतियोगित्वम्। रत्न.

**निकर्षः** - न्यूनता। सर्वा (आ).

**निकारः** - अपकारः। या.

**निकुंभिला** - लङ्कायाः पश्चिमद्वारवर्ति काननम्। रा.

**निकृतः** - अनृजुः। शठः। वर.

**निकृतिः** - वञ्चनम्। रा. हिंसातः जाता वञ्चना। वि. [कापट्यम्।]

**निखिलजगदेककारणम्** - जगन्निमित्तोपादानभूतम्। गी.

**निगदितः** - प्रसिद्धः। रा.

**निगमः** - नगरम्। दया. पुरम्। स्व. वेदः। या. शास्त्राध्ययनजं ज्ञानम्। भा. [निगमनम्।]

**निगमनम्** - हेतुपूर्वं साध्यमुपसंहरद् वाक्यम्। न्याप. हेतुपूर्वकं पक्षे साध्योपसंहारवाक्यम्। य.

**निगमसीमा** - वेदान्तः। च.

[**निगमेषु सती देवता** - ऋग्यजुस्सामवेदेषु विद्यमाना प्रणवरूपा देवता। "अग्निमीळे" इति ऋग्वेदादिरकारः, "योनिस्समुद्रो बन्धुः" इति यजुर्वेदमध्यगत उकारः, "समानं पतिं" इति सामवेदान्तो मकारश्च प्रणवशरीरम् इति सम्प्रदायः। या.]

**निगम्यम्** - निश्चेयम्। या.

**निगिरणम्** - कुक्षिनिक्षेपः। सुन्दर.

**निगिरन्** - आन्दोलयन्। वै.

**निग्रहः** - अपार्थान्निवर्तनम्। ता. अर्जुनपौरुषनिरपेक्षेण सारथ्यवैचित्र्येण निगृह्यन्ते शत्रव इति। सह. कोपः। श्रु. नियमनम्। ता. संसारप्रापकसंकल्पः। व. [अप्रीतिः। र.]

**निग्रहस्थानम्** - कथकाशक्तिलिङ्गम्। कथायां स्वाश्रयस्य पराजयनिमित्तं निग्रहस्थानम्। न्याप. तत्त्वाप्रतिपत्तिसूचकम्। सर्वा. पराजयहेतुः। य.

**निघ्नम्** - अधीनम्। सर्वा (आ).

**निचयः** - ऐश्वर्यम्। रा.

**निचाय्य** - साक्षात्कृत्य। क.

[**निचिक्षेपः** - निरस्तवान्। परित्यक्तवान्। सच्च.]

**निचीयमानः** - कीर्यमाणः। भा.

**निचोलः** - कूर्पासः। पा.

[**निजः** - नित्यः। "निजमात्मीयनित्ययो" रिति विश्वः। या.]

**निजम्** - स्वासाधारणम्। सुन्दर.

**निजभरः** - भरस्य स्वासम्बन्धित्वेऽपि स्वयं तदनुष्ठानाशक्तत्वेऽपि स्वीयत्वेन तर्कितो भरः। न्याद.

**निजरूपम्** - आविर्भूतस्वरूपम्। श्रु.

**निजरूपि** - अविद्याकृतभेददर्शनरहितम्। श्रु.

**नितपति** - नितरां तपति। छा.

**नित्यः** - कालापरिच्छिन्नः। वै. कालपरिच्छेदरहितः। श्रु. (जीवः) कदाचिदपि भगवदभिमतविरुद्धाचरणा-

भावेन ज्ञानसंकोचप्रसङ्गरहितः । य. द्विपरार्थकालं विनाशरहितः । रा. भगवन्नित्यपरिवारः । श्रीत. सर्वकालव्यापी । व.

**नित्यम्** - कालपरिच्छेदरहितम् । अधि. कालापरिच्छिन्नम् । मु.नी. त्रैकालिकम् । वै. (कर्म) नियतनिमित्तम् । अधि.

**नित्यकिङ्करः** - उत्तरावधिरहितकैङ्कर्य-साम्राज्यवान् । गद्य.

**नित्यजीवत्वम्** - पुण्यपापान्यतरवच्छिन्नत्वे सति अणुत्वम् ।

**नित्यतत्त्वम्** - शैवमते माया पुरुषश्शिव इति त्रयम् । न्यासि.

**नित्यतृप्तः** - नित्ये स्वात्मन्येव तृप्तः । गी. नित्यं तृप्त इति नार्थः तृप्तिहेत्वनुक्तेः । ता.

**नित्यत्वम्** - अतिचिरकालवर्तित्वम् । ता. उत्पत्तिविनाशाख्यपरिणामविशेषानास्पदत्वम् । श्री. कालपरिच्छेदरहितत्वम् । कौमारवार्धकावस्थापरिच्छेदरहितत्वम् । स्तो. कालापरिच्छिन्नत्वम् । ता. (कालस्य) प्रध्वंसविरहमात्रम् । सर्वा. सर्वकालवर्तमानत्वम् । श्री.त. सर्वकालसम्बन्धित्वम् । वे. सर्वदा सत्त्वम् उभयान्तशून्यत्वं वा । त. स्वात्मभाविकत्वम् अनन्याधीनत्वं च । गद्य.

**नित्यपुष्टा** - नित्यैः गुणैः विभूत्यादिभिः समृद्धा । श्रीसू.

**नित्यमुक्तत्वम्** - परमार्थतो दोषासंस्पृष्टत्वम् (अद्वैतमते) । श्रु.

**नित्ययुक्तः** - ऐश्वर्याद्यर्थिनां स्वाभिलषितप्राप्तौ सिद्धायां भगवता योगो निवर्तते । ज्ञानिनस्तु न तथा, नित्ययोगं कांक्षमाणः । गी. नित्यावहितः । रा. [इतः परं यावासत्तं देवतान्तरस्पर्शगन्धाभावेन मया (भगवता) नित्ययोगवान् । र.]

**नित्यविभूतिः** - तमोरहितं सत्त्ववत् । त्रिगुणद्रव्याव्यतिरिक्तं सत्त्ववत् । निःशेषाविद्यानिवृत्तिदेशविजातीयान्यत् । न्यासि. प्रकृतिव्यतिरिक्तत्वे सति सत्त्वाश्रयः । न्याप. स्वयंप्रकाशत्वे सति सत्त्ववत् । न्यासि. [परमपदम् । ई.]

**नित्यविभूतित्वम्** - रजोरहितत्वे सति तमोरहितत्वे सति वा सत्त्ववत्त्वम् । वा.

**नित्यशत्रवः** - ज्ञानेन्द्रियाणि । रा.

**नित्यसंसारी** - पुण्यपापान्यतरत्वावच्छिन्नाभाववदन्यः । वा. पूर्वमनन्तकल्पेष्विव परस्तादप्यनुच्छिन्नसंसारः । न्यासि.

**नित्यसमः** - क्वचित्साहचर्यदर्शनमात्रेण व्यापकापादनम् । सर्वा (आ).

**नित्यसमा** - (जातिः) अप्रामाणिकधर्मपरंपरापादनेन दूषणम् । श्रु.

**नित्यसिद्धाः** - नित्यसूरयः । सि.

**नित्यसूरिलक्षणम्** - परतन्त्रत्वे सत्यनादिसर्वज्ञत्वम् । श्रीत.

**नित्यहिंसा** - पापांशराहित्येन शुद्धतया विहिता हिंसा । पद.

**नित्याः** - क्लेशात्यन्ताभाववत्त्वेऽपि पराधीनतथात्वाः । त.

[**नित्यानपायित्वम्** - (लक्ष्म्याः) सर्वेष्वप्यवतारेष्वनपायितया नित्यसंबन्धि भगवच्छक्तिरूपत्वम् । या.]

**नित्यानित्यवस्तुविवेकः** - नित्यम् उपादेयम् अनित्यम् अनुपादेयम् इति प्रतीतिमात्रमेव (अद्वैतमते) । अधि.

**नित्या भूतिः** - नित्यविभूतिः । नित्या भूतिरिति नित्यप्राचुर्यतः शुद्धसत्त्वमुपलक्ष्यते । सर्वा.

**नित्येन्द्रियाणि** - नित्यविभूतिगतानीन्द्रियाणि नित्यानि । न्यासि.

**नित्योदकी** - नित्योदस्नानतर्पणादिकृत् । वि.

**नित्योदितम्** - नित्यविभूतिनिर्वाहकपररूपम् । व. मुख्यपरवासुदेवरूपम् । शान्तोदिनं यतस्सम्बभूव तदिति । न्यासि.

**नित्योदिता** - नित्यविभूत्यनुभवदशा । व.

**निदर्शनम्** - दृष्टान्तः । सर्वा (आ).

**निदर्शितम्** - निदर्शनेन (दृष्टान्तेन) समर्थितम् । च.

**निदानम्** - कारणम् । सर्वा.

**निदिध्यासनम्** - अनवरतभावनात्मकस्मृतिसन्तानः । श.

**निद्रा** - करणव्यापारोपरमहेतुर्विकारविशेषः । श. पुरुषस्य इन्द्रियप्रवर्तनश्रान्त्या सर्वेन्द्रियप्रवर्तनोपरतिः । गी.

**निद्रायितः** - निद्रावान् । लोहितादेराकृतिगणत्वान्निद्राशब्दात् क्यष् । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । निद्राशब्दो वृत्तिविषये तद्वति वर्तत इति पदमञ्जरीकारादयः । अथवा निद्रातीति निद्रः । 'आतश्चोपसर्गे' इति कर्तरि कप्रत्ययः । ततः क्यष् । या.

**निधानम्** - निधीयतेऽस्मिन्निति, आधारः । ता. [निधिः । र.]

**निधिः** - आश्रयः । निधिदर्शनोपायप्रदर्शकशास्त्रम् । छा. परमप्राप्यः । वर.

**निध्यानम्** - दर्शनम् । रा. [दर्शनम्, निपूर्वो ध्यायतिर्दर्शनार्थः । या.]

**निनदः** - ध्वघोषः । छा.

**निन्दा** - दोषख्यापनम् । ता. निषेधादिशेषभूतो निषेध्यादिदोषवादः । न्याप.

**निपातः** - असत्त्ववाचि चादि (व्याकरणमते) । रत्न.

**निपुणतरम्** - उपपन्नतरम् । त.

**निपृणाति** - पिण्डोदकादि प्रयच्छति । बृ.

**निबध्यते** - संसारं प्रतिपद्यते । नित्यसंसारी भवति । गी.

**निबन्धनम्** - नितरां संबन्धहेतुः । सुबा. हेतुः । नी.

**निबध्यते** - फलमनुभवति । ''युद्धाख्येन कर्मणा न निबध्यते तत्फलं नानुभवतीत्यर्थः'' । गी.

**निभालयसे** - पश्यसि । छा.

**निभृतः** - विनीतः । रा.

**निभृतम्** - विनीतम् । या.

**निभृतात्मा** - अवाप्तसमस्तकामः । भा.

**निमिः** - इक्ष्वाकुकुमारः । रा.

**निमित्तम्** - ग्रहचारोत्पातशकुनादौ शुभाशुभसूचकम् । वि. द्वारम् (निमित्तमात्रं भवेति स्मृतेः) । श्रु. परिणामौन्मुख्यातिरिक्तेनाकारेणापेक्षितं कारणम् । न्यासि. प्रयोजनम् । वि. विंकाराश्रयत्वव्यतिरिक्ताकारेण कार्योपयुक्तम् । त.

**निमित्तत्वम्** - अप्रधानकारणत्वम् । अनुग्राहकत्वं, किञ्चित्करत्वं वा । श्रु.

**निमित्तदुष्टम्** - (अन्नम्) केशाद्युपहतम् । त.

**निमित्तमात्रम्** - 'शस्त्रादिस्थानीय' इति अप्रधानभूतः अचेतनोपकरणतुल्य इत्याशयः । ता. साधारणम्, साधारणमात्रम् । बृ.

**निमिषः** - आश्रितविरोधिषु निमिषति निमीलिताक्षो भवति तान्न कटाक्षयति इति । सह.

**निमृजः** - शुद्धः । तै.

**निमेषः** - अष्टत्रुटिपरिमितः कालः । तदुक्तं वैजयन्त्याम् - "कालोऽनेहा च दिष्टोऽपि सूक्ष्मः स्त्री तु त्रुटिर्मता । द्वे त्रुटी लघ्वक्षरकस्तौ द्वा(?)क्षरवातकः । तौ निमेषः" इति । मुकुलीभावः । या.

[**निम्नोन्नतः** - (वर्षविभागदेशः) निम्नैकदेशादिना अवयविन्येव निम्नत्वोपचारात् निम्नोन्नतादौ समानाधिकरणसमास इति भोजराजः । या.]

**निम्रेडेरन्** - सुखं कुर्युः । मृड सुखे चेति हि धातुरन्तर्भावितण्यर्थः । छा.

**निम्रोचन्** - अस्तं गच्छन् । बृ.

**निम्लोचः** - अस्तमितः । छा.

**नियच्छतः** - अन्तरात्मतया प्रशासितुः । भा.

**नियतः** - निगृहीतान्तःकरणः । रा. नित्यान्वितः । गी. वाचिकनियमवान् । रा.

**नियतम्** - व्याप्तम् । गी.श्रु. सर्वा (आ). स्ववर्णाश्रमोचितम् । गी.

**नियतत्वम्** - नियमेन सत्त्वम् । सर्वा(आ).

**नियतस्वत्वम्** - नित्यशेषभूतत्वम् । स्तो.

**नियतिः** - ईश्वरः । रा. कर्म (अदृष्टम्) । श्वे. कारणं, सर्वप्रवर्तक ईश्वरः । रा. नियमः । पद. नियमनशक्तिः पुरुषदृक्क्रियाशक्त्यर्थमायाजन्यतत्त्वपञ्चकान्तर्भूता (शैवमते) । न्यासि. प्राचीनकर्मपरिपाकविशेषः । अधि. मेरुकन्या । वि.

**नियतिमती** - व्याप्तिशालिनी । अधि.

**नियन्ता** - ईश्वरः । नी. तत्तद्रुचीन् मन्दाधिकारिणः प्ररोचयन् देवतान्तरेषु नियच्छतीति । सह.

**नियन्तुम्** - परिच्छेत्तुम् । सुन्दर.

**नियन्तृत्वम्** - संकल्पेन सर्वेषां सत्तास्थितिप्रवृत्तिप्रयोजकत्वम् । श्रीत.

**नियमः** - अवधारणम् । सर्वा. देवतान्तराधनफलं जात्यायुर्भोगादिकं नियम्यते निमित्तभूतेऽस्मिन्निति । प्रतिबलाः बलिप्रभृतयः नियम्यन्ते अनेनेति । सह. वर्णाश्रमधर्मः पञ्चमहायज्ञादिः । भा. धृतेः

पुत्रः । वि. सङ्कल्पविशेषः । ता. [योगव्यवच्छेदः । र.]

**नियमनम्** - प्रेरणम् । भा. व्याप्यावस्थानम् । वि.

**नियुतम्** - लक्षम् । पा.

**नियोगः** - अनुज्ञा । अति. कार्येषु प्रवर्तनम् । प्रेरणम् । रा. विधिः । च.

**नियोगत्वम्** - प्रेरकत्वम् । वे.

**नियोज्यः** - कार्ये स्वकीयत्वबुद्धिमान् नियोज्यः । तत्साधने कर्मणि स्वकीयत्व-बुद्धिमान् अधिकारी । तदनुष्ठाता कर्तेति तिस्रोऽवस्थाः । वे.

**निरंहः** - निर्मलम् । वर. प्रकृतिपुरुषगत-विकाररहितम् । भा.

**निरग्निः** - चोदितयज्ञादिकर्मसु अप्रवृत्तः । गी.

**निरञ्जनः** - कर्मफलरहितः । श्रु. चेतनानु-प्रवेशकृतकर्मवश्यतारहितः । वै. निरस्त-प्रकृतिलेपः । मु.

**निरञ्जनम्** - अगुणवश्यम् । श्रु. असङ्गस्व-भावम् । श्वे. प्रकृतिसम्बन्धरहितम् । वि.

**निरतिशयम्** - यदपेक्षया अतिशयो नास्ति तत् । भाव.

**निरतिशयक्रियैश्वर्यः**-नित्यसूरिक्रियैश्वर्य-योर्निरतिशयत्वं कैङ्कर्यमात्रे स्थाप्यम् । सर्व-विषयत्वे सर्वशरीरित्वादिप्रसङ्गात् । श्रीत.

**निरतिशयज्ञानम्** - नित्यसूरिज्ञानस्य निरतिशयत्वं सर्वविषयकत्वरूपम् । श्रीत. सर्वविषयकज्ञान् ।

**निरतिशयत्वम्** - अनुत्तमत्ववत्त्वम् । स्थानगुणैः सर्वैः सर्वस्थानातिशायित्वम् । स्वापेक्षया उत्कृष्टराहित्यम् । अनुत्तमत्ववत् । ता.

**निरतिशयबृहत्त्वम्** - पतिशेषत्वात् श्रियः पुष्कलमपि बृहत्त्वं सातिशयमिति तद्विलक्षणं ब्रह्मणि । श्रीत.

**निरत्ययः** - अविनाशी । रा.

**निरधिष्ठः** - निराधारः । वि.

**निरनुगतिः** - अव्याप्तिः । सर्वा.

**निरनुयोज्यानुयोगः** - तन्निग्रहस्थानाभावे तन्निग्रहस्थानाभियोगः । न्याप.

**निरन्तरः** - पूर्णः । रा.

**निरन्तरम्** - देवादिवैषम्यरहितम् (कापिले) । भा.

**निरन्तरभानम्** - रूपरूपिणोः धर्म्यन्तर-निष्ठत्वविरोधिधर्मान्तराश्रितत्वभानविरहेण भानम् । श्रु.

**निरन्तरभावः** - विजातीयप्रत्ययान्त-राव्यवहितप्रत्ययः । भा.

**निरन्वयविनाशः** - अवस्थाप्रहाणादि-रूपविनाशव्यावृत्त्यर्थं निरन्वयेति । न्यासि. विशेष्यस्वरूपस्याप्युत्तरक्षणासम्बन्ध-सम्पादको विनाशो निरन्वयविनाशः । रत्न. न केवलमवस्थामात्रस्य किन्तु अवस्थावतो द्रव्यस्यापि विनाशः । श.

**निरर्गळम्** - निष्प्रतिद्वंद्वम् । अति.

**निरर्थकः** - अवस्तुभूतः । अप्रामाणिक इति यावत् । रा.

**निरर्थकम्** - अप्रमाणम्। नि.

[**निरपेक्षता** - (त्रिवर्गे) अल्पत्वास्थिरत्वादिदोषसप्तक निरूपणभूयस्तया सम्पादनीयं वैराग्यम्। र.]

**निरवद्यः** - कर्मकृतसंकोचादिदोषरहितः। वर.

**निरवद्यम्** - अकर्मवश्यम्। श्रु. आश्रितपराङ्मुखत्वाद्यवद्यरहितम्। श्वे. कर्मसम्बन्धरहितम्। श्रु. हेयसम्बन्धानर्हतया हेयप्रत्यनीकम्।

**निरवद्यत्वम्** - जरादिराहित्यम्। दुःखादिदोषगन्धरहितत्वम्। दुष्प्रेक्षतादिराहित्यम्। प्रतिकूलस्वभावराहित्यम्। ता.

**निरविद्या** - निग्रहेच्छारहिता। श्रीत.

**निरवधि** - देशपरिच्छेदरहितम्। वर.

**निरवयवम्** - सर्वात्मनाऽवयवरहितम्। भिदुराभिदुरसर्वविधावयवरहितम्। स्वाभाविकांशभेदसत्त्वेऽपि भिदुरपृथङ्निर्देशयोग्यावयवरहितम्। न्यासि.

**निरहङ्कारः** - अनहमर्थे देहादावहंबुद्धिरहङ्कारः, तद्रहितः। वास्तावाहमर्थे आत्मनि अभिमानविलक्षणा त्वहम्बुद्धिर्न वार्यते। ता.

**निराधारः** - आधारनिरपेक्षः। या.

**निराबाधम्** - निर्विकारम्। वर.

**निरालम्बनभावनः** - अशरण्यभावनः। वि.

**निराशिषः** - निरभिलाषाः, विरक्ताः। या.

**निराशीः** - आत्मव्यतिरिक्ते कृत्स्ने वस्तुनि निरपेक्षः। गी. निर्गतफलाभिसन्धिः। न्यासि.

[**निराशीःकर्म** - फलसंगादिरहितं कर्म। र.]

**निराश्रयः** - अस्थिरप्रकृतौ आश्रयबुद्धिरहितः। गी.

**निराहुः** - निरुक्तिं कुर्वन्ति। वै.

**निरिन्द्रियः** - (निर्वीर्यः) ज्ञानकर्मबलहीनः। बृ.

**निरीहः** - अवाप्तसमस्तकामः। पा.

**निरीहम्** - पुण्यपापरूपव्यापाररहितम्। भा.

**निरुक्तः** - स्पष्टः। छा.

**निरुक्तम्** - अपूर्वार्थप्रतिपादकम्। य. जातिगुणक्रियावत्तया जातिगुणाभिधायिशब्दवाच्यमचेतनम्। तै.

**निरुक्ततरम्** - अत्यन्तनामरूपव्यापाराभिव्यक्तिमत्। अग्नि.

**निरुक्तिः** - योगतः नाम्नां अन्वर्थत्वप्रकल्पनम्। रा.

**निरुपप्लवचित्सन्ततिः** - बौद्धैकदेशिमतमोक्षः; उपप्लवो विषयोपरागः। न्यासि.

**निरुपाधिः** - उपाध्यभावनिश्चयः। सर्वा (आ).

**निरुपाधिकम्** - कर्माप्रयोज्यम्। वा. स्वाभाविकम्। वै.

**निरुपाधिकत्वम्** - अनवच्छिन्नत्वम्। उपाधिर्ह्यवच्छेदकः। श्रु.

**निरुपाधिकसत्ता** - निर्विकारत्वम्। श्रु.

**निरुपाधिकसत्तायोगित्वम्** - निर्विकारत्वम् । वा.

**निरुपाधिनियतैः** - स्वभावतो नियतैः । सर्वा.

**निरुपाधिकशेषित्वम्** - "इदमेकं श्रीश्रीपतिव्यासज्यवृत्तीति प्रमाणसम्प्रदाय-बलात् न श्रीनिष्ठशेषित्वस्यान्याधीनत्व-सम्भवः" । श्रीत.

**निरूढम्** - उपपन्नम् । सर्वा (आ).

**निरूढलक्षणा** - सर्वप्रयोगानुगता लक्षणा । भाव.

**निरूपकाः** - परीक्षकाः । च.

**निरूपणम्** - प्रतिवचनम् । श्री.

**निरूपणीयम्** - विचारणीयम् । भाव.

[**निरूपितस्वरूपविशेषणानि** - प्रतिपन्नस्य धर्मिस्वरूपस्य विशेषकाः धर्माः, यथा श्यामत्वमृद्विकारत्वादयः । र.]

**निरूप्य** - आदिश्य । भा.

**निर्ऋतिः** - पापम् । तै.

***निर्गुणः*** - *अगुणवश्यत्वात् अभोक्ता* । श्रु. गुणत्रयवश्यतारहितः । श्वे. सत्त्वाद्यगुणः । सत्त्वादिरहितः । वि. हेयगुणरहितः । वेकौ. सर्ववस्तुसंस्पर्शेऽपि अतद्वश्यतया अस्पृष्ट-तद्गुणः । परमस्वतन्त्रः । इदमस्य परमं वशित्वम् । सह.

**निर्गुणम्** - त्रिगुणगुहान्तर्गतत्वेऽपि गुण-सङ्गकृतदोषशून्यम् । 'सत्त्वरजस्तमो-गुणातीतम्' । म. स्वभावतः सत्त्वादिगुण-रहितम् । गी.

**निर्गुणत्वम्** - हेयगुणसम्बन्धाभावः । गी.

**निर्ग्रन्थाः** - लौकिकार्थप्रबन्धधारण-रहिताः । भा.

**निर्घातः** - उत्पातविशेषः । रा.

**निर्घृणः** - निरनुरागः वि.

**निर्जरः** - तप्तशिलारोहणादिः (जैनमते) । बृ.

**निर्जरम्** - मोक्षसाधनमर्हदुपदेशावगतं तपः (जैनमत) । श्री.

**निर्ज्ञातः** - निश्चितः । श्रु.

**निर्झरः** - कर्मविमोचनः । भाव.

**निर्णतोच्चम्** - उच्चनीचरहितम् । अति.

**निर्णयः** - यद्वा निर्णयशब्दोऽत्र निर्णीत-वस्तुपरः । ता. तर्कानुगृहीतप्रमाणपूर्वकत-त्त्वावधारणम् । न्याप.

**निर्दराः** - विदीर्णपाषाणरन्ध्राणि । विदीर्णपाषाणाः । रा.

**निर्दराणि** - स्फुटितशैलरन्ध्रविशेषाः । रा.

**निर्दशान्** - अतिक्रान्तदशदिनान् । भा.

**निर्दिष्टम्** - लक्ष्यम् । सर्वा (आ).

**निर्देशः** - आज्ञा । आज्ञायामपि निर्देश इति बाणः । निर्दिश्यते इयत्तया परिच्छिद्यते अनेनेति निर्देशः, संख्या । ग. शब्दः । गी. संज्ञा । वि.

**निर्दोषम्** - शरीरसम्बन्धरहितम् । श्रु.

[**निर्द्वन्द्वाः** - शीतोष्णादिसहिष्णवः । र.]

**निर्धारणम्** - जातिगुणक्रियाभिः सजाती-येभ्यो व्यावर्तनम् । च. निश्चयेन मनसोऽव-स्थापनम्; ध्यानम् । श्री.

**निर्धूतः** - निरस्तः । रा.

**निर्निबन्धनः** - अहेतुकः । नी.

**निर्नेजः** - शोधनम् । सुन्दर.

**निर्बद्धम्** - नितरामासक्तम् । भा.

**निर्बन्धः** - अभिनिवेशः । वि.

**निर्बाधः** - प्रामाणिकः । सर्वा.

**निर्भरत्वम्** - अत्यन्तलाघवम् (भरराहित्यम्) । न्यासि.

**निर्ममः** - देहानुबन्धिषु स्वकीयत्वाभिमानरहितः । भा. देहेन्द्रियतत्सम्बन्धिषु ममेदमिति बुद्धिरहितः । सर्वेष्वनात्मीयेष्वात्मीयबुद्धिरहितः । गी.

**निर्मर्णनम्** - और्ध्वदेहिकम् । ''मृण हिंसायां'' । बृ.

**निर्मलम्** - कर्मसम्बन्धार्हत्वरूपदोषरहितम् । वे.

**निर्मलत्वम्** - प्रकाशसुखावरणस्वभावरहितता । गी. मलं तमस्स्वभावभूतप्रकाशविरोध्याकारः । ता.

**निर्मानमोहाः** - निर्गतानात्मात्माभिमानरूपमोहाः । गी.

**निर्माल्यम्** - निवेदितं तु यद्द्रव्यं पुष्पं फमलथापि वा । तन्निर्माल्यमिति प्रोक्तम् । आ. [रुद्रादिनिवेदितम् । (शैवमते) बहिर्निक्षिप्तं रुद्रसम्बन्धि । देवतोपयुक्तं कुसुमादि । (शैवमते) विसर्जितेऽपि देवे पिण्डकास्थं यत् तदप्यन्नम् । सच्च.]

**निर्मूलम्** - निष्प्रमाणम् । सर्वा (आ).

**निर्यातनम्** - प्रत्यर्पणम् । रा.

**निर्यातना** - न्यासप्रत्यर्पणम् । पा.

**निर्यासः** - क्षतप्रसृतवृक्षरसः । रा. हिङ्गुप्रभृतिः । वि.

**निर्यूहः** - मत्तवारणः । रा.

**निर्योगपाशः** - नियमनरज्जुः । वि.

**निर्ल्वयनी** - विमोकः (सर्पादीनाम्) । बृ.

**निर्वचनम्** - अतीन्द्रियेऽर्थे निश्चायकमानतया निष्कृष्टं वचनम् । निर्णायकतया .... उक्तं श्रुतिवाक्यम् । निष्कृष्य वचनं उपबृह्मणं वा । (...दर्शनान्निर्वचनाच्च) । त. यौगिकव्युत्पत्तिः । न्यासि.

**निर्वहणम्** - 'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्य मुपनीयन्ते' यत्र, तत् । न्यासि.

**निर्वहिता** - निर्वोढा । न नितरां वोढेति तदर्थः, किन्तु करोति । छा.

**निर्वाणम्** - अपहतपाप्मपरमगतिनिमित्तम् । सह. आनन्दः । वे. मोक्षहेतुः । सुबा. सुखैकतानम् । गी.

**निर्वाणपरमा** - निर्वाणकाष्ठा (निर्वाणस्य परमा) । गी.

**निर्वापभूतम्** - निर्वपामीति पाकात्सिद्धम् । वि.

**निर्वाहः** - आपाततो बाधितार्थस्य वाक्यस्य सार्थक्यसम्पादनप्रकारः । अधि.

**निर्विकल्पकम्** - एकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । त. केनचिद्विशेषेण वियुक्तस्य ग्रहणम् । भा. गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणम् । य.

प्रत्यवमर्शरहितं प्रत्यक्षम् । न्याप. प्रथमपिण्डग्रहणम् । वे. श्री. संस्कारनिरपेक्षेन्द्रियजन्या मतिः । सर्वा.

**निर्विकल्पकत्वम्** - संस्काराजन्यत्वे सति इन्द्रियजन्यज्ञानत्वम् । वा.

**निर्विकल्पकप्रत्यक्षम्** - प्रथमपिण्डग्रहणम् । च.

**निर्विकल्पकसमाधिः** - न्यूनाकारविषयकसमाधिः । च.

**निर्विकल्पितम्** - वाङ्मनसाभ्यामपरिच्छेद्यस्वरूपस्वभावम् । भा.

**निर्विकारः** - अचिदनुप्रवेशकृतपरिणामरहितः । वै.

**निर्विकारम्** - शोकमोहादिविकाररहितम् । भा.

**निर्विकारत्वम्** - स्वरूपविकारराहित्यम् । न्यासि.

**निर्विद्य** - लब्ध्वा । बृ.

**निर्विशेषत्वम्** - सजातीयविजातीयस्वगतभेदरहितत्वम् । (ब्रह्मणः) स्वसमानसत्ताकविशेषवद्भिन्नत्वम् (शाङ्करमते) । रत्न.

**निर्विषयम्** - निर्दुःखम् । रा.

**निर्वृताः** - सुखिताः । रा.

**निर्वृतात्मा** - आनन्दस्वरूपः । निर्वृतिः निर्वृतम् । भावे क्तः । भा.

**निर्वृतिः** - विषयाभिनिवेशज्वरविरहात्मकं सुखम् । भा. सुखम् । रा.

**निर्वेदः** - निष्फलत्वधीः । रा. स्वावज्ञा; यथाहुः गान्धर्ववेदिनः "तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्" इति । ता.

**निर्वेशः** - सुखभोगः । या.

**निर्वेशम्** - प्रायश्चित्तम् । भा.

**निर्वेष्टुकामः** - उद्वोढुकामः । वि.

**निर्व्यभिचारः** - व्यभिचारज्ञानविरहः । सर्वा (आ).

**निर्व्याजब्रह्मानुभवः** - यथावस्थितब्रह्मानुभवः । श्रु.

**निर्व्यापारम्** - साधनानुष्ठानरहितम् । वि.

**निर्व्यूढम्** निश्चितम् । नि.

**निर्ह्लादः** - घोषः । या. शब्दः । रा.

**निलयः** - वासस्थानम् । रा.

**निलयनम्** - आश्रितमचेतनजातम् । तै.

**निवर्तनम्** - सञ्चरणम् । भाव.

**निवर्तन्ते** - नितरां वर्तन्ते । गी.

**निवर्त्योन्मज्जनम्** - निवृत्तव्यक्तेः पुनः-स्थितिः । श.

**निवापः** - पितृदानम् । वि.

**निवासः** - दिव्यायतनम् । वासस्थानम् । गी. अधिकरणार्थोऽयं घञ् । ता.

**निवासवृक्षः** - (साधूनाम्) यथा वृक्षः प्रथमं तापमपहृत्य पुष्पफलप्रदानादिना सर्वेन्द्रियतर्पणः तथाऽयमित्यर्थः । रा.

**निवित्** - देवतासंख्यावाचकपदयुक्तमन्त्रविशेषः । बृ.

**निवृत्तम्** - (कर्म) निष्कामं कर्म । वि. अनर्थाविनाभूतसुखकामनातो निवृतं कर्म । सर्वा.

**निवृत्तात्मा** - कृपालुतानिबन्धनो ह्येष जगत्संवलितोऽधिकारः। स्वतस्त्ववाप्तसमस्तकामतया निवृत्तस्तदसंवलितः आत्मा मनोऽस्येति । त्रिपाद्विभूतिकत्वेन, संसारविभूतेः निवृत्त उद्गत आत्मा स्वरूपं यस्येति । "त्रिपादूर्ध्व उदैत् पुरुषः" । विषयप्रत्याहृतमनाः। संसारान्निवृत्तधर्माणः आत्मानः यस्येति। सह.

**निवृत्तिः** - अकरणसङ्कल्परूपप्रवृत्तिविशेषः। गद्य. अपहारः असत्त्वमिति यावत्। भाव. अभावः। च. भाव. कैवल्याद्यपेक्षा। नि. पुरोवर्तिन्यभावः, अनवभासः, सत्यत्वावभासाभावः। श्रु. मोक्षसाधनं वैदिको धर्मः । मोक्षसाधनभूतो धर्मः । गी. मोक्षार्थभक्त्यादिः । नि. विनाशः । सर्वा (आ).

**निवृत्तिधर्मः** - मोक्षफलकधर्मः। त.

**निवृत्तिनिरतः** - प्रपत्तिधर्मनिष्ठः। वै.

[**निवृत्तिलक्षणो धर्मः निवृत्तिधर्मः** - (उक्त) प्रवृत्तिभिन्नाकृतिः निवृत्तिः सा लक्षणं यस्य तथोक्तः। मोक्षोपयुक्तं कर्मेति यावत्। (प्रवृत्तिधर्मो द्र.) र.]

[**निवेदितम्** - देवाय समर्पितम्। सच्च.]

[**निवेद्यम्** - निवेदनयोग्यं निवेदनार्थं परिकल्पितम् । देवतायै निवेदितमन्नादि । सच्च.]

**निवेशः** - विवाहः। भाव.

**निवेशितात्मा** - 'रक्षणोन्मुखेन' 'ददामि बुद्धियोगं तं' इत्यादिवादिना त्वयैव दृढावस्थापितबुद्धिः'। स्तो.

**निशागृहम्** - रात्रिनिवासयोग्यं गृहम्। रा.

**निशामनम्** - दर्शनम्। रा.

**निशीथः** - अर्धरात्रः। रात्रिः। 'निशीथस्त्वर्धरात्रे स्यान्निशीथो रात्रिमात्रके' इति विश्वः। या.

**निशोचति** - नितरां शोचति (सकर्मकम्)।

**निश्चयः** - उपायः । रा. तर्कानुग्रहीतप्रमाणपूर्वकतत्त्वावधारणम्। य. चैतन्यस्य विषयेण दृढसंयोगः। सि.

**निश्चिताः** - सञ्जातनिश्चयाः । गी. 'अत्र निश्चितशब्दे 'भुक्ता ब्राह्मणा' इतिवत् कर्तरि क्त इति भावः। ता.

**निश्चितार्थः** - निश्चिकर्तव्यः। रा.

**निश्रयति** - निहीनतया श्रयति।

[**निश्रेणिः** - अधिरोहिणी। या.]

**निश्श्रेयसम्** - मोक्षः। वै. श्रैष्ठ्यम्। कौ.

**निश्श्रेयसपरा** - श्रेयस्कामा। रा.

**निश्शेषपरिणामः** - कात्स्न्र्येन तदवस्थानाशपूर्वकावस्थान्तरप्राप्तिः। रत्न.

**निषादविषयम्** - निषादग्रामम्। रा.

**निषेधः** - अकर्तव्यत्वप्रकारकेच्छा। व. नास्तीति वचनम्। रत्न. प्रतियोगिप्रतिक्षेपः। श.

**निषेवितः** - पूजितः। या.

**निष्कः** - उरःकण्ठसम्बन्धी भूषणविशेषः। रा. कण्ठाभरणम्, हारः। छा.

**निष्कम्** - हारम्। भाव.

**निष्कलः** - कर्मायत्तपाणिपादाद्यवयवात्मकदेहरहितः। भा.

**निष्कलम्** - कलाः अवयवाः तद्रहितम्। निरवयवमित्यर्थः। श्रु. प्राकृतशरीररहितम्। भा. निरवयवम्। श्वे. मु. त. अधि. वेकौ. शरीरसामान्यरहितम्। प्राकृतहेयशरीर-सामान्याभाववत्। श्रु.

**निष्कलत्वम्** - निर्विकारत्वं प्रकृते विवक्षितम्। न्यासि.

**निष्कामः** - निर्गताः कामाः यस्मात् सः (पूर्वस्थितानां कामानां निर्गमोऽत्र विवक्षितः)। बृ.

**निष्कामं कर्म** - निवृत्तं कर्म द्र.। सर्वा.

**निष्किञ्चनाः** - नास्ति किञ्चनावाप्यं येषां ते; अवाप्तसमस्तकामाः। भा.

**निष्कुटः** - गृहोद्यानम्। वि.

**निष्कुटाः** - गृहारामाः। रा.

**निष्कृतिः** - प्रायश्चित्तम्। तै. त. अधि. शापमोक्षः। रा.

**निष्कृष्टसत्त्वम्** - शुद्धसत्त्वम्, न्यासि.

**निष्क्रियः** - कर्मयोगरहितः। वर.

**निष्क्रियम्** - कृतकृत्यम्। श्वे. निष्पन्दम्, निर्व्यापारं वा। त.

**निष्क्रियाणाम्** - स्वतः प्रवृत्तिरहितानां (जीवानाम्)। श्वे.

**निष्टतक्षुः** - उपासितवन्तः। तै. "निर्मित-वानित्यर्थः। वचनव्यत्ययश्छान्दसः"। छा.

**निष्टनः** - शब्दः। रा.

**निष्ट्या** - ग्रीवाबन्धनम्। तै.

**निष्ठा** - ज्ञानयोगकर्मयोगगभक्तियोग-लक्षणा। गी. नितिष्ठति अस्मिन् परीक्षेति निर्णयः, राद्धान्तः। सर्वा. (निस्+स्था) ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायः। छा. परमैकान्तिहृदयस्थः। निष्ठीयते योगिनां हृदीति सः। सह. पर्यवसानम्; लयः। श्रु. प्राप्यम्। गी. परमे फले ह्युपायो नितिष्ठति। अतस्तदेवोपायपर्यवसानभूमितया निष्ठे-त्युच्यते। सिषाधयिषितपर्यन्ताविछिन्न-साधनानुष्ठानम्। ता. व्यवसायः। श्रु. स्थितिः। स्थीयतेऽस्मिन्निति स्थितिः। सत्त्वादिरेध निष्ठेत्युच्यते। गी. नाशः। भा.

**निष्ठां लभेत** - उपासीत। श्रु.

**निष्ठानकः** - विनाशः। रा.

**निष्ठीवनम्** - फूत्कारेण श्लेष्मनिक्षेपः। भा.

**निष्ठुरम्** - परुषम्। वि.

**निष्पत्तिः** - नितरां विकासः। श्रु.

**निष्पेतुः** - जगलुः। रा.

**निष्प्रत्यूहत्वम्** - सर्वत्र स्वरसवाहित्वम्। न्यावि.

**निष्प्रपञ्चः** - प्रपञ्चोत्तीर्णः। वि.

**निष्प्रपञ्चीकरणम्** - समस्तभेदशून्यत्व-संपादनम्। श.

**निष्प्रपञ्चीकरणविधिः** - सप्रपञ्चतया भासमानं ब्रह्म निष्प्रपञ्चं कुर्यादित्यर्थकः 'न दृष्टेर्द्रष्टारं पश्येः' इति विधिः। अधि.

**निसृष्टम्** - न्यस्तम्, निवेदितम्। या.

**निसृष्टा** - प्रयुक्ता। तै.

**निस्तिष्ठन्ति** - निष्पादयन्ति। छा.

**निस्स्पन्दत्वम्** - क्रियारहितत्वम् । सर्वा (आ).

**निस्समाभ्यधिकः** - भगवानेवैवम्भूतः । न तु श्रीरपि । उभयोरपि निरङ्कुशस्वाच्छन्द्येऽपि अन्योन्यरसविशेषार्थं परस्परेच्छाधीननित्यनियतनियन्तृनियाम्यभावादिरूपगुणप्रधानभावसत्त्वात् । श्रीत.

**निहत्य** - निश्चेष्टतामापाद्य; निर्व्यापारं कारयित्वेति यावत् । बृ.

**निहवः** - आह्वानम् । 'ह्वस्संप्रसारणञ्च न्यभ्युपविषु' इति भावे ह्वेञः अप्संप्रसारणयोर्निहव इति रूपम् । छा.

**निहितार्थः** - अर्थः परं ब्रह्म वाच्यत्वेन निहितो यस्मिन् तथोक्तः परमपुरुषार्थभूतब्रह्मवाचकः अवर्णः, अकारः । श्वे.

**निहीनत्वम्** - अत्यन्तनिकृष्टत्वम् । स्तो.

**निर्हारः** - शववहनम् । रा.

**नीडम्** - रथस्थं रथ्यधिष्ठानस्थानम् । रा.

**नीतिः** - अर्थशास्त्रजन्यकर्तव्यनिश्चयः । तच्चोदिता धर्माविरुद्धा वा वृत्तिः । ता. न्यायशास्त्रम् । वि. बुद्धिव्यापारविशेषः (एवं कृते एवं स्यादिति तर्कणम् ?) ।

**नीपः** - वृक्षविशेषः । रा.

**नीपैः** - स्थलकदम्बकैः । रा.

[**नीराजनम्** - आरात्रिकोपचारः । या.]

**नीलम्** - तमः । भाव.

**नीलतोयदमध्यस्था** - मध्यस्थनीलतोयदा । छा. मध्यस्थनीलतोयदा (विद्युत्) । तै.

**नीलवृषः** - 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते' । वि.

**नीवारशूकवत्** - नीवाराग्रवत् । तै.

**नीवारान्** - जलकदम्बान् । रा.

**नीविबन्धः** - उदरबन्धः । वै.

**नु** - अवधारणे । शङ्कानिवर्तने । ता.

**नुत्तः** - निरस्तः । पा.

**नृगः** - क्षत्रियविशेषः । रा.

**नृचक्षसम्** - नृणां चक्षुरिव ज्ञानप्रदम् । तै.

**नृम्णम्** - धनम् । सुखरूपम् । भा.

**नृशंसः** - घातुकः, निर्दयः, परद्रोहाचरणशीलः । रा.

**नृशंसम्** - गर्हितम् । रा.

**नृशंसत्वम्** - आसन्नेषु व्याघ्रादिवत् क्रूरकर्मत्वम् । स्तो.

**नृषत्** - नृषु आत्मतया वर्तमानः । क. मनुष्येषु वर्तमानः । तै.

**नेत्** - नैव । बृ.

**नेता** - नायकः । सेनापतिरित्यर्थः । रा. नियुक्तं करोति, नयति, तच्छीलो निर्वहतीति । "भक्तैर्नियुक्तं यत्कर्म नेता तत्करणादपि" । सह. प्रभुः । मु.

[**नेदीयान्** - सन्निकृष्टः । या.]

**नेमिः** - (चक्रस्य) वलयाकारं काष्ठम् । कौ. बाह्यवलयाकारकाष्ठम् । बृ.

**नेयः** - सुहृदां नियोगार्हत्वात् नेतुं अर्ह इति नेयः । "आज्ञाप्योऽहं तपस्विनाम्" । सह.

**नैकः** - विभूतितया विजातीयेन सर्वेण द्वितीयेन सद्वैतत्वात् एको नेति । सह.

**नैककर्मकृत्** - मथनधारणवैरिविदारण-सुधादानाद्यनेककर्मा। सह.

**नैकमायः** - मुग्धशिशुरूपापरिमित-जगन्निगरणनिरालम्बनैकोदकवटदल-शयनाद्यनेकातर्क्याश्चर्ययोगितया, नैकाः अनेकाः मायाः आश्चर्याणि अस्येति नैकमायः। सह.

**नैकदः** - एकं ददतीति एकदाः तद्विरुद्धा नैकदाः असङ्ख्येयमालाञ्जनवासः प्रभृति-ब्रह्मालङ्कारदायिन्यो मुक्ताभ्युत्थानविदो दिव्याप्सरसोऽस्येति। सह.

**नैकरूपः** - यथोक्तमहिमोचितवैश्वरूप्यं प्रव्यज्यते। नैकानि अनेकानि तत्तत्सर्व-प्रतीतियोग्यानि रूपाणि अस्येति। सह.

**नैकशृङ्गः** - बुद्धियोगः सारथ्यं, अनायुध-ग्रहणव्याजः प्राप्तकाले तद्ग्रहणमिति नैकानि बहूनि शृङ्गाणि वैरिबाधकान्यस्येति। सह.

**नैकात्मा** - तदातना नैके ब्राह्मकौर्म-मोहिनीमुखा इह चात्मानो रूपाण्यस्येति। सह.

**नैकृतिकः** - निकृत्या अपकारेण जीवति। रा. वञ्चनपरः। गी.

**नैगमः** - उपनिषत्। "नैगमः स्यादुपनिष-द्वणिजोर्नापितेऽपि च" इति विश्वः। या. वणिक्। रा.

**नैगमाः** - पुरवासिनः, पौरवराः, पौरजनाः। रा.

**नैपथ्यम्** - आभरणम्। या.

**नैपुण्यम्** - कौशलम्। भा.

**नैमित्तिकम्** - (कर्म) अनियतनिमित्तम्। अधि.

**नैरन्तर्यम्** - आसन्नदेशसंयोगः। न्यासि. परस्परसंयोगस्य नैरन्तर्यपदार्थत्वाभावेऽपि समासन्नदेशसंयोगादिरूप तत्तपदार्थेन तदनुमानम्। रत्न. संयोगरूपं गुणमन-ङ्गीकृत्य तत्स्थाने बौद्धोक्तमिदम्। रत्न. संसर्गः। च. समासन्नदेशसंयोगः। न्यासि.

**नैर्गुण्यस्थाः** - रजस्तमस्संकीर्णसत्वर हते ब्रह्मणिस्थाः (?), तदुपासका इत्यर्थः। भा.

**नैर्मल्यम्** - पवित्राणां पवित्रहेतुत्वम्। हेयवस्तुसंसर्गेऽपि दोषास्पृष्टत्वम्। स्वतः-शुद्धत्वम्। नी.

**नैष्कर्म्यम्** - ज्ञाननिष्ठा। न्यासि. गी. निष्कर्मा निष्क्रान्तकर्मयोगः पर्यवसित-कर्मयोगः ज्ञाननिष्ठ इत्यर्थः तस्य भावः नैष्कर्म्यम्। ता. प्रवृत्तिधर्मविरहः। भा.

**नैष्ठिकः** - नियतः। रा.

**नैष्ठिकी** - निष्ठायां भवतीति। ता.

**नैसर्गिकः** - अनादिः। श्रु.

**नोभयतःप्रज्ञः** - परमात्मनस्सर्वगतत्वात् बहिर्भागो नास्ति। तदभावात् तदपेक्षान्त-र्भागश्च नास्तीति स नोभयतःप्रज्ञः। सुबा.

**नोदनम्** - मृदुसंयोगः। श.

**न्यङ्कुः** - रुरुः, कृष्णसारदिवत् मृगविशेषः। वि.

**न्यग्रोधोदुम्बरः** - न्यग्रोधश्चासौ उदुम्बरश्च। न्यग्भूतैः अधः कृताञ्जलिभिः रुध्यते

स्वप्रसादौन्मुख्येन व्यवस्थाप्यत इति न्यग्रोधः । सर्वगुणैरुद्गतम्बरं परं धाम तदुपलक्षिता लक्ष्मीपरिजनादयोऽस्येति उदुम्बरः । सह.

**न्यस्यता** - स्थापयता । सर्वा.

**न्यायः** - अभ्रेषहेतुर्युक्तकारीति । सह. एकनालावलम्बिफलद्वयन्यायेन तर्कमीमांसे उभे अपि न्यायशब्दो दर्शयति । वै. तर्कः । श.त. पूर्वोत्तरमीमांसान्यायः । वर. प्रमाणानुग्राहकस्तर्कः । वेसं. विचारणम् । रा.

**न्यायकुलिशम्** - श्रीवादिहंसाम्बुवाहाचार्यविरचितग्रन्थः ।

**न्यायदृष्टार्थः** - शास्त्रदृष्टतत्त्वार्थः । रा.

**न्यायपरिशुद्धिः** - विशिष्टाद्वैताभिमतप्रमाणशोधकग्रन्थः श्रीमन्निगमान्तमहादेशिकविरचितः ।

**न्यायविदः** - परीक्षकाः । श्रु.

**न्यायवृद्धाः** - तान्त्रिकाः । अधि.

**न्यायसिद्धाञ्जनम्** - विशिष्टद्वैताभिमतप्रमेयशोधग्रन्थः श्रीमन्निगमान्तमहादेशिकविरचितः ।

**न्याय्यम्** - शास्त्रसिद्धम् । गी. न्याय्यं न्यायादनपेतम् । . . . न्यायशब्दश्चात्र अर्थान्तरानौचित्यात् व्युत्पत्त्यनुरोधाच्च शास्त्र-मेवानुसन्धत्त इत्यभिप्रायः । ता.

**न्यासः** - नायं स्वरूपन्यास एव, किंतु भरादेरपि । न्यावि. प्रतिनिधिः । रा. शरणागतिः प्रणिपातरूपा । रा. [प्रपत्तिविद्या । र.]

**न्यासविद्या** - अध्यवसायादिविशेषविशिष्टो बुद्धिविशेषो मोक्षादिहेतुः । (मोक्षार्थो) केवललक्ष्मीशोपायत्वप्रत्ययात्मिका विद्या । न्यासि.

**न्यूनम्** - वक्तव्यत्वेन स्वसिद्धान्तनिर्णीतस्य एकदेशकथनम् । यथा पञ्चावयववादिनो नैयायिकस्य त्र्यवयवप्रयोगः । न्याप.

**न्यूनपरिमाणम्** - यत्संयुक्तदेशं निखिलं यदाक्रमितुमशक्तं तत् । न्यासि.

**न्येति** - नितरामेति । कौ.

## प

**पक्षः** - परिग्रहः । "पक्ष परिग्रह" इति धातुः । आदर इति यावत् । बृ. सिषाधयिषितधर्मविशिष्टो धर्मी । य. साध्यवत्तया वर्ण्यमानः । सर्वा. सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः । यथा अग्निमत्त्वादिसाधने पर्वतादिः । न्याप.

**पक्षत्वम्** - सन्दिग्धासाध्यत्वम् । न्याप.

**पक्षपञ्चकम्** - श्रियो जीवत्वाणुत्वे, जीवत्वविभुत्वे, जीवादन्यत्वम्, पतीच्छाधीनगौणेश्वरत्वम्, स्वतः सिद्धेश्वरत्वञ्चेति । श्रीत.

**पक्षपातः** - पक्षद्वये समुत्थिते तत्तारतम्यानादरेण स्वत एव कुत्रचित्पक्षे अभिनिवेशः । दया.

**पक्षाश्रयः** - पक्षश्चासावाश्रयश्च । सर्वा (आ).

**पक्ष्यः** - सहायभूतो वर्गः । रा.

**पङ्क्तीगुणम्** - दशगुणम् । सुन्दर.

**पङ्गुः** - गमनशक्तिविकलः । श्री.

**पचति** - सङ्कल्पलक्षणपाकेन निर्वर्तयति ।

[**पचेळिमम्** - परिपक्कम् "केळिमर उपसंख्यान" मिति पच्धातोः केळिमर्प्रत्ययः । या.]

**पच्छः** - पादशः । छा.

**पच्यमानम्** - अभिवृद्धम् । रा.

**पञ्च कर्माणि** - (लक्ष्म्याः) "तिरोभावस्तथा सृष्टिः स्थितिः संहृतिरेव च । अनुग्रह इति प्रोक्तं मदीयं कर्मपञ्चकम्" । रत्न. श्रियास्तिरोभावः, सृष्टिः, स्थितिः, संहृतिः अनुग्रहश्चेति । श्रीत.

**पञ्च कृत्यानि** - सृष्टिस्थितिसंहारनिग्रहानुग्रहरूपाणि । नि.

[**पञ्च क्लेशाः** - अविद्याऽस्मितारागद्वेषभिनिवेशाः । र.]

**पञ्चजनाः** - (पञ्च)ज्योतींषि । इन्द्रियाणीति पर्यवसितोऽर्थः । बृ. पञ्च ज्ञानेन्द्रियाणि मनश्च; ज्ञानेन्द्रियेषु घ्राणरसनयोस्तन्त्रेण ग्रहणम् । प्राणस्य प्राणमिति श्रुतिवाक्ये एतद्विवक्षितम् । श्रु.

**पञ्चत्वम्** - भूतानां पृथग्भावः । रा.

**पञ्चदशम्** - श्रद्धासोमवृष्ट्यन्नरेतोरूपपञ्चावस्थम् । कौ.

**पञ्चदशस्तोमः** - सामवृत्तिविशेषः । वि.

**पञ्चदुःखौघवेगाम्** - पञ्चमहाभूतान्यत्यन्तप्रतिकूलतया प्रवर्तमानानि ओघशब्दित....? वेगस्थानीयानि यस्यास्ताम् । श्वे.

**पञ्चपर्वाम्** - "तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः" इति सृष्टिलक्षणपर्वपञ्चकयुक्ताम् । श्वे.

**पञ्चपादः** - वत्सरसंवत्सरपरिवत्सरेडावत्सरानुवत्सररूपाः पञ्च पादा यस्य सः । अथवा हेमन्तशिशिरयोरेकीकरणात् पञ्चर्तवः पादाः यस्य सः । प्र.

**पञ्चप्राणोर्मिम्** - प्राणापानादयः पञ्च ऊर्मिस्थानीया यस्यास्ताम् । श्वे.

**पञ्चबुध्याद्यादिमूलाम्** - बुद्धेर्ज्ञानस्यादिभूतानि पञ्चज्ञानेन्द्रियाणि मूलं यस्यास्ताम् । श्वे.

**पञ्च भूतानि** - पञ्चेन्द्रियाणि । रा.

[**पञ्चमवेदः** - महाभारमत् । पांच. वेदानध्यापयामास महाभारतपञ्चमान्" इति वचनात् । र.]

**पञ्चमाहुतिः** - द्युपर्जन्यपृथिवीपुरुषानन्तरं पञ्चमे योषिदग्नौ होमः योनिजशरीरहेतुः । न्यासि. [योषित्पुरुषसम्बन्धः । ई.]

[**पञ्च मृत्तिकाः** - (ऊर्ध्वपुण्ड्रधारणोपयुक्ताः) 'पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरेऽथ वल्मीके तुलसीमूलमाश्रिते ॥ मृदएतास्तु संग्राह्याः' इति वचनात् भगवत्सम्बन्धिपर्वताग्रनदीतीरसिन्धुतीरवल्मीकमूलतुलसीमूलात्मकपञ्चप्रदेशस्था (?) मृत्तिकाः । सच्च.]

**पञ्चयोन्युग्रवक्राम्** - महाभूतोपादानतया

योनिभूतानि पञ्च तन्मात्रण्येवोग्रवक्राणि प्रवाहमुखरूपाणि यस्यास्सा, ताम्। श्वे.

**पञ्चरात्रम्** - प्रतिबुद्धविषयभगवदनन्यभजनोपदेशप्रवृत्तं शास्त्रम् । न्याप. 'यस्मात्पञ्चदिवारात्रं पञ्चानामुदितं मया। तस्माल्लोके पञ्चरात्रमभिधानमिति स्मृतम्'॥ आ.

**पञ्चरात्रवक्ता** - नारायणः। वेकौ.

**पञ्चरूपम्** - पञ्चवर्णचित्रितम्। वि.

**पञ्चवक्रः** - व्यात्तमुखः । पचि विस्तारे पचाद्यच् । रा.

**पञ्चवर्गः** - औदकं पार्वतमित्यादिना मनुनोक्तानि पञ्च दुर्गाणि। पञ्चेन्द्रियाणि। रा.

[**पञ्चविंशः** - पञ्चविंशत्तत्वभूतजीवान्तर्यामी परमात्मा। अधि.]

**पञ्चविंशकः** - अव्यक्तोपक्रममहदहङ्कारेन्द्रियतन्मात्रभूतसृष्टिविवक्षया जीवः पञ्चविंशकः। न्यासि. जीवात्मा (अव्यक्तः)। ता.

**पञ्चविंशतितत्त्वज्ञः** - (यमस्मृतिः) अष्टौ प्रकृतीः षोडश विकारान् पञ्चविंशकमव्यक्तशब्दवाच्यमात्मानं षड्विंशं पुरुषोत्तमञ्च यो जानाति सः। सुबा.

[**पञ्च शक्तयः** - परमेष्ठी, पुमान्, विश्वः, निवृत्तः, सर्वः, इत्येताश्शक्तयः। "परमेष्ठी पुमान्विश्वो निवृत्तस्सर्व एव हि। पञ्चैताश्शक्तयः प्रोक्ताः परस्य परमात्मानः" ॥ (पञ्चोपनिषद इत्यपि प्रसिद्धिः।)]

**पञ्चसप्तधा** - पञ्चधा सप्तधा च, व्यक्ताव्यक्तकालजीवेश्वररूपे पाञ्चविध्यम् । सप्तलोकात्मकतया परमात्मा सप्तधा। म.

**पञ्चस्कन्धाः** - रूपविज्ञानवेदनासंज्ञासंस्कारः (बौद्धमते)। श्रु.

**पञ्चस्रोतोऽम्बुम्** - स्रोतोरूपेणाविचिछन्नतया प्रवर्तमानानि तमोऽक्षराव्यक्तमहदहङ्काररूपाणि अम्बुस्थानीयानि यस्यास्सा तथोक्ताम्। श्वे.

**पञ्चहेतिः** - पञ्च हेतयः शङ्खचक्रगदाखड्गशार्ङ्गरूपाण्यायुधानि यस्य सः। या.

**पञ्चाग्निविद्या** - द्युपर्जन्यादिरूपाग्निनिवि-ष्टजीवात्मस्वरूपस्य ब्रह्मात्मकस्य चिन्तनरूपा। न्यासि.

**पञ्चाग्न्यभिरतः** - सावित्र, नाचिकेत, चातुर्होत्र्य, वैश्वसृजारुणकेतुकानां उपासको वेदान्तोक्तपञ्चाग्निविद्यायुक्तः। वि.

[**पञ्चाङ्गप्रणामः** - "पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनिं स्पृशन् । बद्धाञ्जलिर्नमस्कुर्यात् स पञ्चाङ्ग उदीर्यते॥" पाञ्च.]

**पञ्चात्मा** - पञ्चवृत्तिः (वायुः)। ता.

**पञ्चाननाः** - विस्तृताननाः। रा.

**पञ्चायुधानि** - पञ्चभूतशक्तिरूपाणि महदादितत्त्वरूपाणि वा।

**पञ्चावर्ताम्** - आवर्तस्थानीयपञ्चकर्मेन्द्रियाम्। श्वे.

**पञ्चाशद्भेदाम्** - अकारादिपञ्चाशद्वर्णलक्षणनामभेदयुक्ताम्। श्वे.

**पञ्चाहुतयः** - द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतस्सम्बन्धरूपाः। रत्न.

**पञ्चीकरणम्** - एकैकभूतार्धभागेन भूतान्तराणामष्टमांशचतुष्कमेलनेन एकैकभूतस्य पञ्चभूतताकरणम्। एकैकं भूतं समं द्वेधा विभज्य एकस्मादर्धात् भूतचतुष्टयार्थे चतुर्धा विभक्तात् एकांशो गृहीतो भूताष्टमांशो भवति। न्यासि. पञ्च भूतानि द्विधा कृत्वा एकैकं भागं स्थापयित्वा अर्धान्तराणि चतुर्धा विभज्य तत्तद्भागैश्चतुर्भिर्भूतान्तरीयविभक्तार्धान्तराणामनुकलनम्। सर्वा. भगवान् भूतानि सृष्ट्वा एकैकमेव भूतं द्विधा कृत्वा द्वयोर्भागयोः स्वभागमेकं निधाय भागान्तरं चतुर्धा करोति। तान् भागान् भूतान्तरेषु चतुर्षु योजयति। एवं सर्वेषु क्रियमाणेषु एकैकस्य भूतस्यार्धं स्वभागः अर्धान्तरं चतुर्णां भूतानां भागसमुच्चयो भवति। तथा च स्वभागस्य भूयस्त्वात् परभागस्याल्पीयस्त्वाच्च पृथिव्यादिव्यपदेशः। वेदे त्रिवृत्करणोपदेशस्तु पञ्चीकरणस्याप्युपलक्षणम्। भूतैः साकं महदहङ्कारौ मिलित्वा सप्तीकरणमित्यप्याहुः। य.

**पञ्चीकृतभूतम्** - भूतान्तराणां चतुर्णामष्टमांशैस्सहितं स्वात्मकभूतस्यार्धम्। यथा "व्योम्नि व्योमभागोऽर्धम्; इतरे चत्वारोंशा मिलिता इतरदर्ध"मिति। न्यासिटी.

**पटलम्** - नेत्ररोगविशेषः समूहश्च। रत्न.

**पटादन्योन्याभावः** - घटत्वम्। श्रु.

**पटीरम्** - श्रीगन्धः। न्यासिटी.

**पटु** - तीक्ष्णम्। असह्यमिति यावत्। या.

**पटुतरः** - पटुत्वातिशयवान्। श्रु.

**पटुप्रत्ययः** - भूयोधर्मविषयकप्रत्ययः। रत्न.

**पट्टसः** - असिविशेषः। 'पट्टयम्' इति द्रविडनामयुक्तायुधविशेषः। रा.

**पट्टिशः** - आयुधविशेषः। तीक्ष्णधारो लोहदण्डविशेषः। रा.

**पड्वीशशङ्कवः** - पादबन्धनकीलकाः। छा. (पड्वीशाश्वते शङ्कवश्च) पादबन्धनशङ्कवः। बृ.

**पणः** - भक्तैः सह स्वाम्यदास्यव्यतिहारेण पणते व्यवहरतीति। सह.

**पणिभिः** - फणामण्डलैः। स्तोतृभिः। तै.

**पण्डा** - ऊहापोहक्षमा बुद्धिः। ता.

**पण्डितः** - आत्मयाथात्म्यवित्। ऊहापोहक्षमधीयुक्तः। छा. ऊहापोहक्षमा धीः पण्डा साऽस्य सञ्जातेति। भाव. कृत्स्नवित्। गी. "तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिप्रसिद्धं सदाचार्यप्रसादैकसमधिगम्यार्थविषयं ज्ञानं यस्य सः। ता. ज्ञानविकासवान्। वर. पण्डावान्। गी. हेयोपादेयभूतदेहात्मादिविवेक ज्ञानवान्। ता. पण्डा निर्णयात्मकज्ञानं, साऽस्य सञ्जातेति पण्डितः। परिच्छेत्तेत्यर्थः। निपुणः। विमृश्यकारी। रा.

[**पण्डितज्ञः** - पण्डितम्मन्यः । र.]

**पण्डिताः** - ऊहापोहक्षमा बुद्धिर्येषां ते पण्डिताः । ता. देवतिर्यङ्मनुष्यस्थावर-रूपप्रकृतिसंसृष्टस्यात्मनः स्वरूपविवेचनी बुद्धिर्येषां ते । वे.

**पण्यम्** - क्रय्यद्रव्यम् । दशा.

**पतत्री** - अश्वः । रा.

**पतत्रैः** - पद्भिः । श्वे.

[**पतद्ग्रहः** - पततः पादोदकस्य ग्राहकः पात्रविशेषः । या.]

**पताका** - अनामाङ्कितो ध्वजः । रा.

**पतिः** - परमात्मा । श्रु. मुख्यः । भा. रक्षकः। बृ. शिवः (शैवमते) । सर्वा (आ). शेषी । बृ. शैवमते शिवः (पशुपतिः) पतिरित्युच्यते । न्यासि. स्वामी । 'रक्षणे व्युत्पन्नस्यापि पतिशब्दस्य शेषित्वे रूढिः' ।

**पतिकर्मानुकूल्याचरणम्** - इदं च पत्न्याः न कर्माङ्गकतिपयकरणरूपम्, न वा यागोपयोग्यनुमतिदानम् । किन्तु साङ्गयागे व्यासक्तकर्तृत्वमिति मीमांसासिद्धान्तः । श्रीत.

[**पतितः** - नित्यकर्मत्यागी । र.]

**पतित्वम्** - शेषित्वम् । श्रु. शेषिचेतनत्वम् । भाव.

[**पत्तनम्** - राजधानीयुक्तम् । या.]

**पत्नी** - यज्ञसंयोगवती । रा.

**पत्नीत्वम्** - विग्रहविशिष्टधर्मोऽयम्, नात्ममात्रे । श्रीत.

**पत्ररथेश्वराः** - पक्षिश्रेष्ठाः । रा.

**पत्रलदेहकान्तिम्** - पत्रं लाति आदत्त इति पत्रला पत्रवती देहकान्तिर्यस्य तम् । मेदुरदेहकान्तिमिति यावत् । पत्रोपपदाल्लातेः 'आतोऽनुपसर्गे कः' इति कः । लच्प्रत्ययस्तु न सम्भवति । सिध्मादावपाठात् । अत एव वामनसूत्रं 'पत्रं लातेः कः' इति । या.

[**पत्रालम्बनम्** - प्रतिज्ञापत्रम् ।]

**पथ्यम्** - तत्कालसुखकरम् । नीति-मार्गादनपेतम् । हितम् । क्षेमकरम् । रा.

**पदम्** - एकविभक्त्यन्तवर्णसमुदायः, एकव्युत्पत्तिसिद्धैकार्थप्रतीत्युपयुक्तवर्ण-समुदायः । श्रु. प्राप्यम् । पद्यत इति पदम् । वेकौ. प्राप्यम्, पद्यते प्राप्यत इति । न्यासिटी. पद्यत इति व्युत्पत्त्या प्राप्यम् । श्रु. स्तो. प्राप्यभूतम् । मु. प्राप्यस्वरूपम् । पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची । क. प्रकृतिप्रत्यय-समुदायः । त. प्रामाणिकपदव्यवहार-विषयः । न्याप. शक्तं सुप्तिङन्तं वा । च. स्वरूपम्, पद्यत इति । वेकौ. प्रकृतिप्रत्यय-योगवत् । भा. वासस्थानम् । सुन्दर. पद्यत इति पदम् । प्राप्यं उपास्यं च स्वरूप-मित्यर्थः। पद्यत इति पदम्, उपास्यस्वरूपम् । वै. शब्दम् । नित्यकिङ्करपदम् नित्यकिङ्कर इति शब्दम् । सुन्दर. विषयः । भा. आत्मा । पद्यत इति पदम्; 'प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः' इति परिशुद्धात्मनोऽपि परमात्मवत् प्राप्यत्वात् पदत्वम् । पद्यते

गम्यते चेतसेति पदम् उपास्यम्। ता. पद्यत इति पदम्। व्यवसितम् इत्यर्थः। रा. पद्यत इति पप्राप्यत्वरूपम्। वि. स्वरूपम्। अति. वि. पद्यते इति पदम्। श्रु. पद्यत इति। वि.

**पदत्वम्** - प्रकृतिप्रत्यययोगवत्त्वम्। श्रु.

**पदनीयम्** - प्रपदनीयम्। प्रपत्तव्यमित्यर्थः। ज्ञातव्यम्। बृ.

**पदम् अनुत्तमम्** - नास्त्युत्तममस्मादित्यनुत्तमम्; पद्यते गम्यत इति पदम्; भक्तानां परमप्राप्यम्। सह.

**पदवीः** - मार्गदर्शी। तै.

**पदसमुदायः** - वाक्यम्। श्रु.

**पदानां शक्तिग्रहणे अन्यथासिद्धिः** - लक्षणादिवृत्त्यन्तरैः संभावितत्वम्। अधि.

**पदानां सामर्थ्यम्** -परस्परसंसृष्टार्थत्वम्। भाव.

**पद्धतिः** - मार्गः। या.

**पद्मः** - गजविशेषः। रा.

**पद्मगर्भः** - स्वसदृशेन सुरभिकोमलेन आसनपद्मेन, उपासकमानससरसिजेन वा, गीर्यत स्वान्तरवस्थाप्यते इति। "योगिहृत्पुण्डरीकस्थः पद्मगर्भस्स उच्यते"। सह.

**पद्मनाभः** - नाभिश्च पद्मनिभोऽस्येति। सह. पद्मभुवः प्रभवः। पद्मो नाभौ अस्येति। कालात्मकं पद्मं नाभौ यस्य सः। सह. पद्मं नाभौ अस्य। सह.

**पद्मनिभेक्षणः** - अमलकमलास्फालननिभं श्रमापहं वीक्षणमस्येति। सह.

**पद्मनेमी** - पद्ममस्या नेमिवद्भवति। पद्ममेव नेमिः नयनसाधनं यस्याः सा पद्मनेमीति केचित्। नाभिस्थानीयकर्णिकायां नेमिस्थानीयपद्मवती (श्रीः); पद्मस्य नेमित्वोक्त्या कर्णिकाया नाभिस्थानीयत्वव्यञ्जनान्मातुस्तत्रावस्थानां व्यज्यते। पद्ममेव नेमिः नयनसाधनं यस्याः सा। नीञ् प्रमाणे; "नियो मिः" इत्यौणादिको मिप्रत्ययः। करतलकलितेन पद्मेन समाश्रितानां सर्वमनिष्टमपहायसर्वकालं स्वचरणाम्भोजं प्रापयन्तीत्यर्थः। श्रीसू.

**पद्मवर्णा** - पद्मोदरसहोदरा। अशेषजनवर्णनीयलावण्यमयदिव्यशोभा। श्रीसू.

**पद्मसंस्थावत् गृहम्** - प्राग्द्वाररहितं आकृत्या चतुरश्रं गृहम्। रा.

**पद्मी** - (वासुदेवत्वं गुणतो विवृत्य रूपतो विव्रियते।) लीलापद्मेन नित्ययोगात्। सह.

**पद्यु** - जङ्गमम्। श्रु.

**पनसः** - वृक्षविशेषः। रा.

**पन्नगाः** - केवलसर्पाः। रा. पद्भ्यां न गच्छतीति पन्नगाः पादेन्द्रियस्य भुजगतगादिषु उरःपक्षादिवृत्तित्वात्। न्यासि.

**परः** - उत्कृष्टः। गी.मु. निरतिशयानन्दैश्वर्यशाली। बृ. पराधीनस्थितिकः। मा (कू). प्रकृष्टः। श्रु. सर्वस्मात्परः। वर. [परमात्मा। या.]

**परःकृष्णम्** - अतिशयितं कृष्णम्। छा.

**परम्** - अन्यत्, भोक्तृतया प्रधानभूतमिति वा। ता. अपरिच्छिन्नगुणकम्। व. उत्कृष्टम्।

तै. श्वे. उत्कृष्टतमम् । कालसंख्यया उत्कृष्टम् । गी. ब्रह्मायुः । श्रु. वशीकार्यत्वप्राप्यत्वकाष्ठाभूतम्, सृष्ट्याद्युपयुक्तसार्वज्ञ्यादिकृत्स्नोत्कर्षपरमसीमा वा । त. विलक्षणम् । भा. सर्वोत्कृष्टम् । प्र. [केवलम् । अशुद्धसंसारिविलक्षणं ब्रह्म । सच्च.]

**परकृतिः** - एकानुबन्धी कथाविशेषः । न्याप.

**परगतिः** - मोक्षः । अति.

**परजातिः** - अधिकव्यक्त्याश्रितजातिः । न्यासिटी.

**परज्ञानम्** - उत्कटदिदृक्षापर्यवसायिध्यानविशेषप्रसादितभगवद्विषयकपरिपूर्णसाक्षात्कारः । न्यासिटी. उत्तरोत्तरसाक्षात्कारः । साक्षात्कारः । वे. [परभक्तिजन्यतत्कालनियतसाक्षात्कारविशेषः । र. प्रत्यक्षसामानाकारमानसानुभवः । ई.]

**परतत्त्वचिह्नम्** - मोक्षप्रदत्वम् । रा.

**परतरः** - समाभ्यधिकदरिद्रः । ता.

**परतन्त्रस्वभावत्वम्** - अपृथक्सिद्धत्वम् । न्यासिटी.

**परतोदिते** - परत उदिते इत्यर्थः । आर्षः सन्धिभेदः । यद्वा स्मृतिरपि....प्रलयपरैव । तत्प्रकरणस्थत्वात् । "दो अवखण्डने" इत्यत्र दिते इति निष्ठान्तं पदम्, पृथग्भूते इत्यर्थः । तेन प्रलयदशायामपि प्रधानपुरुषेश्वराणां मिथः स्वरूपभेदोऽस्त्येवेत्युक्तं भवति । अदिते इति वा पदच्छेदः अपृथग्भूते इत्यर्थः । तेन विभागानर्हः संश्लेष उक्तो भवति । ता. (७.६)

**परत्वम्** - कालसम्बन्धप्रकर्षः, सम्बन्धश्च संयोगः (जैनमते) । सर्वा (आ). दिक्कालसम्बन्धविशेषः, यतः परत्वगुणो भवतीति वैशेषिकाः । स एव, न तु गुणान्तरम् । न्यासि. 'नानयोर्विद्यते परम्' इति श्रीश्रीशौ परतत्त्वम् । श्रीत. परिमाणस्य परत्वं अधिकदेशावच्छेदः, ज्ञानस्य अधिकविषयकत्वम् । रत्न. परिणामपरम्पराप्रकर्षावच्छिन्नकालयोगः, योगश्च न संयोगः । अपि तु आधाराधेयभावादिसम्बन्धविशेषः । सर्वा (आ). प्राप्यतयोत्कृष्टत्वम् । श्रु. सर्वोत्कृष्टत्वम् । नि.

**परत्वापरत्वे** - न हि तत्तदुपाध्यवच्छिन्नदेशकालविशेषसम्बन्धातिरिक्ते परत्वापरत्वे पश्यामः । न्याप.

**परद्वैधम्** - शान्तोदितनित्योदितभेदेन पररूपस्य द्वैविध्यम् । न्यासि.

**परं धाम** - परं ज्योतिः । गी.

[**परपिण्डपरायणः** - परोपजीवी । या.]

**परपूर्वा** - पुनर्भूः । वि.

**परब्रह्म** - नारायणः । ता.

**परभक्तिः** - उत्तरोत्तरसाक्षात्कारेच्छात्मिका धीः । प्रातिरूपापन्नो दर्शनसमानाकारो (मोक्षहेतु) ज्ञानविशेषः । न्यासिटी. मोक्षसाधनीभूतभक्तिः । नि. साक्षात्काराभिनिवेशः । वे. [उपासनम् । ई.]

[**परभागः** - गुणोत्कर्षः । या.]

**परमः** - उत्कृष्टः । तै. काष्ठां गतः । गी. परो यस्मान्नास्ति सः । वि. परो माऽस्य इति । श्रु. पर उत्कृष्टो मा यस्मात्सः । भा. सर्वेश्वरः। अति. स्वतन्त्रः । नि. स्वस्मात् पररहितः । वि.

[**परमपदम्** - भगवल्लोकः । सच्च. भगवत्स्वरूपम् । तदुपयुक्तत्वात् लोकविशेषे उपचारात्प्रयोगः । र.]

[**परमभक्तिः** - विश्लेषासहत्वम् ।]

[**परमम्** - विलक्षणम् । सर्वोत्कृष्टम् । वि. स्वोत्कृष्टवस्तुशून्यम् । अधि. [परो मा अस्मादिति । सच्च.]

**परमं साम्यम्** - येन गुणेन साम्यं तस्यापरिच्छिन्नत्वम् न तु सर्वथा साम्यम् । श्रु.

**परमं पदम्** - परमप्राप्यम् । वि.

**परमं पवित्रम्** - स्मर्तुरशेषकल्मषाश्लेषविनाशकरम् । पवित्रशब्दोऽत्र पापनिबर्हणापरः । ता.

**परमज्ञानमयः** - प्रकृष्टज्ञानस्वरूपः । वि.

**परमता** - श्रेष्ठता । बृ.

**परमनार्यः** - श्रीभूमिनीळाः । रा.

**परमपदम्** - परमप्राप्यम् । स्थानविशेषः । परमात्मस्वरूपम् । क.

**परमप्राप्यत्वम्** - प्रधानप्राप्यायाः श्रियोऽपि शेषित्वात् इदं भगवदसाधारणम् । श्रीत.

**परमभक्तिः** - अनुभवाभिनिवेशः । वे. परज्ञानाधीनभगवत्प्राप्तित्वराहेतुभूतप्रीतिविशेषः । न्यासिटी. साक्षात्कृते निरन्तरानुबुभूषा ।

**परममहत्** - प्रधानम् । अधि.

**परममहत्त्वम्** - अधिकपरिमाणविशेषः । अपरिच्छेदः, न तु गुणः । न्यासि.

**परमविशेष्यम्** - विशेष्यविशेष्यम् । भाव.

**परमव्योम** - नित्यविभूतिः । मातृकाध्यानश्लोकोक्तं भ्रूमध्यादूर्ध्वस्थितं द्वादशान्तस्थानम् । न्यासिटी. परमात्मा । तै.

**परमव्योमनि** - परमाकाशे अक्षरब्रह्मणि, अथवा नित्यविभूतौ । श्वे.

**परमसत्त्वम्** - शुद्धसत्त्वम् । सुन्दर.

**परमस्पष्टः** - स्पष्टप्रत्यक्षदृष्टस्वपारम्यतया परमश्चासौ स्पष्टश्चेति । ''व्यक्तमेष महायोगी परमात्मा सनातनः'' । सह.

**परमहंसः** - अपहतापाप्मा; हिनस्ति पुण्यापुण्यरूपं मलं आश्रितेषु स्वस्मिंश्चेति हंसः । निष्क्रियः प्राप्ततत्त्वः । भा.

**परमा** - अनर्वाचीना (गतिः) । सह.

**परमाकाशः** - प्रकृतेराद्यावस्था । शुद्धसत्त्वमयः अस्पृष्टदोषगन्धः शाश्वतः, परमात्मनः मुक्तानां नित्यसूरीणां भोगभूमिः। नी.

**परमा गतिः** - परमप्राप्यः । रा. प्रकृतिवियुक्तेश्वरसमानाकार आत्मा । ता. योगः। श्रु.

**परमाणुः** - ''जालसूर्यमरीचिस्थं सूक्ष्मं यत्परिदृश्यते । तस्याष्टमो वा षष्ठो वा भागोऽणुः परिकीर्तितः'' ।। इदं शिल्पशास्त्रवचनम् । ''जालसूर्यमरीच्यां यद्भाति सूक्ष्मं त्रुटेः परम् । भागोष्टमस्तृतीयो वा

परमाणुरितीरितः ॥'' धर्मशास्त्रवचनमिदम्। सर्वा (आ). जालाकोकविलोकनीयस्त्र-सरेणुविशेषः। अप्रत्यक्षाणुकल्पने प्रमाणाभावात्। न्यासि.

**परमात्मा** - आत्मान्तररहितः । वि. उत्कृष्टस्वभावः । रा. देशकालस्वरूपानवच्छिन्नव्याप्तिः । (देशकालानवच्छिन्ना व्याप्तिः यस्येति बहुव्रीहिः) । तथा च व्याप्तत्वात् व्याप्यैरस्य न नाशः । सर्वात्मत्वेन सर्वकालवर्तित्वं च सिद्धम्। ता. परो मा अस्येति परमः । परमश्चासौ आत्मा च । यथा सर्वाणि भूतानि अनेनात्मवन्ति नैवमयमन्येन केनचित्। सह. परमश्चासौ आत्मा च; आप्नोतीत्यात्मा (स्वयमात्मान्तररहितः)। वि. परमश्चासावात्मा च परमात्मा। सर्व-जीवात्मभ्य उत्कृष्ट इत्यर्थः। रा. यथाऽसौ सर्वेषामात्मा न तथाऽस्य कश्चिदित्यतः परमात्मा । ता. स्वरूपेणावस्थितः प्रत्यगात्मा। गी.

[मा न विद्यन्ते परे यस्मात् स परमः; स चासौ आत्मा च परमात्मा। र.]

[**परमात्मसूक्तम्** - महोपनिषन्मध्यगताः 'सहस्रशीर्ष' मित्याद्या एकोनविंशतिर्मन्त्राः। सच्च.]

**परमायुधम्** - चक्रम्। रा.

**परमार्थः** - अनाशी। वि. तत्त्वावेदक-प्रमाणविषयः। श्रु. परमपुरुषार्थसाधनभूतो जपहोमध्यानादिः । रा. परमपुरुषार्थः । सत्यः । वि. परमेश्वरप्रसादः । मा(कू). याथार्थ्यम्। स्तो.

**परमार्थमयम्** - परमप्रयोजनरूपम्। वि.

**परमार्थनिष्ठत्वम्** - अज्ञानसंशयविपर्यय-रहितव्यवसायानुवृत्तिमत्त्वम्। गद्य.

**परमामुक्तिः** - अपुनरावृत्तिमुक्तिः। सुन्दर.

**परमार्थरूपम्** - परमप्रयोजनरूपम्। वि.

**परमेश्वरः** - अनन्यनियाम्यः । स्तो. लक्ष्मीस्वयंग्रहणसप्रयोजनपरमैश्वर्यतया परमश्चासावीश्वरश्च। सह.

**परमेश्वरम्** - जगत्कारणम्। नि.

**परमेष्ठी** - परमपदस्थायी। सह. [परमे पदे तिष्ठतीति। पाञ्च.]

**परमेष्ठिना** - परो मा यस्मात् तस्मिन् महिम्नि तिष्ठतीति । ''स्वे महिम्नि प्रतिष्ठितः''। भा.

**परमैकान्ती** - परमश्चासावेकान्ति चेति परमैकान्ती। एकान्तिषु परम इत्यर्थः। परम एकान्तोऽनन्यत्वमस्यास्तीति वा । न केवलमनन्यदेवताकत्वम्; अपि त्वनन्य-प्रयोजनत्वमप्यस्तीत्यर्थः । गीसं. भक्ति-ज्ञानाभ्यामन्यत् फलं भगवतोऽपि नेच्छति यः सः। य. [अन्योपायः अनन्यप्रयोजनश्च। परमश्चासौ एकान्तश्चेति सोऽस्यास्तीति। एकत्रान्तो निश्चयः प्राप्यतया प्रापकतया च। परमश्चासौ एकान्ती च इति वा विग्रहः। पाञ्च.]

**परमोदारः** - स्वपर्यन्तापेक्षितार्थप्रदः। 'य आत्मदा बलदा' इति श्रुतिः। रा.

**परमौदार्यम्** - सकलफलप्रदत्वम्। ता.

**परं पदम्** - परमं प्राप्यस्थानम्। वि.

**परम्परा** - गुरुसंप्रदायाविच्छेदः। वि.

**परं ब्रह्म** - स्वकार्यपेक्षयोत्कृष्टं ब्रह्म। श्रु.

**परं मङ्गलम्** - स्वयं प्रभावानुभव-निबन्धननिरङ्कुशानन्दन्यक्कृतनिस्तरङ्गामृत-महोदधिदशं, नित्यनिर्मर्याद कल्याणैकतानं परं (अनन्तं) मङ्गलमिति। सह.

**परर्द्धिः** - (अथ रामचरितम्) सर्वैश्वर्यादपि पराऽस्य कल्याणगुणसमृद्धिः इति परर्द्धिः, परावस्थस्यापि हि रामस्यावरसोमादि-देवगुणैकदेशनिदर्शनं क्रियते, यथा "विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः" इति। सह.

**परविद्या** - ब्रह्मविद्या। श्रु.

**परविद्यात्वम्** - ब्रह्मविषयकविद्यात्वम्। वा.

**परश्वधः** - आयुधविशेषः। रा.

**परस्तात्** - ऊर्ध्वदेशे। सुबा.

**परस्वान्** - पशुविशेषः। कौ.

**परा** - प्रधानभूता। गी. विष्णुशक्तिः परा प्रोक्ता। वेकौ.

**पराक्** - परप्रकाशकम् (परान् अञ्चतीति) (इन्द्रियम्)। क. परस्मा एव भासमानम्। सर्वा. परस्मै भासमानम्। न्याप. परस्मै भासमानः। भा. परस्मै भासमानम्। स्वभिन्नकर्तृकव्यवहारप्रयोजकविषयतावत् (अजडमपि ज्ञानं पराक्)। न्यासि. परस्मा एव भासमानं परागिति वा। रत्न.

**पराके** - परस्तात्। वे.

**पराक्त्वम्** - परस्मै प्रकाशमानत्वम्। श्रु. परस्मै भासमानत्वम्। सि.श्रु.

**पराक्रमः** - परबलनिराकरणम्। य. परबले प्रविष्टस्य परनिराकरणपर्यन्तो व्यापारः। पराभिभवनसामर्थ्यम्। महत्स्वपि युद्धकार्येषूत्साहः। स्वशक्त्या पराभिभवनम्। रा. विक्रमणम्। श्रु. [स्वयमक्षतत्वेन परसंहर्तृत्वम्। ई.]

**पराक्रमितुम्** - (पापं कर्तुं) प्रतिबन्धकी-भवितुम्। अति.

**पराक्रान्तम्** - पराक्रमः। रा.

**परागतिः** - प्राप्यपर्यवसानभूमिः परमपुरुषः। ता.

**परागर्थः** - परस्मा एव भासमानः। त. यन्नित्यं परस्मै भासते तत्। सर्वा (आ).

**पराचीनाः** - परतो व्याप्ताः। भा.

**परात्मकम्** - इन्द्रियादेरुत्कृष्टम्। वि.

**परादात्** - अभिभवेत्। बृ. पराकुर्यात्। भाव.

[**पराधीनः** - विधिपरतन्त्रः। या.]

**परानुगम्** - परानुचरम्; परशेषतैकरसम्। गीसं.

**परानुत्पत्तिः** - परशास्त्रात् निर्गुणशास्त्रात ज्ञानानुदयः। रत्न.

**परान्तकालः** - चरमशरीरवियोगकालः। तै. देहावसानकालः। भाव.

**परान्तकाले** - "अन्तकाले च मामेव" त्युक्तचरमदेहावसानसमये। श्रु. चरमदेहा-वसानसमये। मु.

[**प्रतिहारपालः** - द्वारपालः । या.]

**प्रतीकम्** - एकदेशः । बृ.

**प्रतीकालम्बनम्** - दृष्ट्युपासनम् । श्रु.

**प्रतीकालम्बनाः** - ये ब्रह्मकार्यान्तर्भूत-नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते ते । श्री.

**प्रतीकोपासकाः** - अचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च ये उपासते त इत्यर्थः । श्री.

**प्रतीकोपासनम्** - अब्रह्मणि ब्रह्मदृष्ट्या-ऽनुसन्धानम् । श्री.

**प्रतीक्षा** - सङ्कल्पः, उत्पन्नवस्तुप्राप्तीच्छा । क.

**प्रतीतः** - श्लाघितः । रा. सादरः । 'प्रतीतः सादरे ख्याते' इति विश्वः । या.

**प्रतीतिः** - भ्रान्त्यभ्रान्तिसाधारणरूपा बुद्धिः । व्यवहारानुगुण्यम् । श्रु.

**प्रतीयमानम्** - प्रतीत्युल्लिख्यमानम् । श्रु.

**प्रतीहारः** - द्वारपालः । रा.

**प्रतोदः** - तोत्रम् । रा.

**प्रत्नोषि** - तनोषि । तै.

**प्रत्यक्** - स्वस्मै भासमानम् । न्याप. सर्वा. न्यासि. स्वकर्तृकव्यवहारप्रयोजकविषय-तावत् । रत्न. [अन्तर्मुखम् । ई.]

**प्रत्यक्त्वम्** - उदयाचलव्यवहितदिक् संयोगः । रत्न. स्वस्मै स्वयमेव भासमानत्वम् । य. तद्द्विविधम् । स्वस्मै भासमानत्वमेकम् । स्वस्मै स्वेनैव भासमानत्वमपरम् । सर्वा (आ). प्रतीपमञ्चन् प्रत्यङ् । तस्य भावः प्रत्यक्त्वम् । स्वतोऽन्यतो वा स्वस्मै भासमानत्व-मित्यर्थः । त. प्रत्येतुः प्रत्येतव्याद-व्यतिरेकः; तच्च स्वस्मै भासमानत्वम् । अधि. स्वस्मै प्रकाशमानत्वम् । श्रु. स्वस्मै स्वेनावभासमानत्वम् । वा.

**प्रत्यक्षम्** - अपरोक्षप्रमा । न्याप. साक्षात्कारिप्रमाकरणम् । य. श्रुतिः । श्री. प्रत्यक्षग्राह्यो वेदः प्रत्यक्षशब्दवाच्यः । श्रु. श्रुतिः । भाव. साक्षात्प्रतिपत्तृबुद्धिः । सर्वा.

[**प्रत्यक्षसूत्रम्** - पूर्वमीमांसायां प्रथमाध्यायप्रथमपादे तृतीयं सूत्रं प्रत्यक्षस्य धेर्मे प्रमाणत्वनिषेधकम् । सच्च.]

**प्रत्यक्षश्रुतिः** - पठ्यमानश्रुतिः । च.

**प्रत्यग्धामा** - स्वस्मै भासमानस्वरूपः । भा.

**प्रत्यङ्** - अभिमुखः । छा. अहमिति भासमानत्वं प्रत्यक्त्वम् । प्रबुद्धानामहमिति प्रतीतौ परमात्मनोऽपि भासमानतया अस्मदाद्यहंबुद्धिभानयोग्यतया च परमात्मनोऽपि प्रत्यक्त्वम् । श्वे.

**प्रत्यङ्गिरसजाः** - प्रत्यङ्गिरसाख्याः ऋचः याः कल्पयन्तीत्याद्याः त्रिंशन्मन्त्राः । वि.

**प्रत्यङ्ङात्मा** - स्वस्मै भासमानो जीवात्मा । अधि.

**प्रत्यङ्मुखाः** - (प्रत्यङ्मुखः; वचन-व्यत्ययश्छान्दसः) प्रत्यगात्मामुखं शरीरं यस्य सः परमात्मा । तै.

**प्रत्यनन्तरः** - समीपवर्ती। रा.

**प्रत्यनीकम्** - तदत्यन्ताभाववत्। त. प्रतिपक्षः। श.

**प्रत्यनीकत्वम्** - निवर्तकत्वम्। श्रु.

**प्रत्यभिज्ञा** - तत्तेदन्ताभ्यां वस्तुज्ञानम्। श. सोऽयं देवदत्त इत्येवंरूपज्ञानम्। संस्कारसंनिकर्षोभयजन्यं ज्ञानम्। रत्न.

**प्रत्यभिज्ञातुम्** - स्मर्तुम्। रा.

**प्रत्ययः** - ज्ञानरूपः। मा. विश्वासः। रा. स्वस्य तद्विस्रम्भयितृतया प्रत्येति प्रतीयते वा विस्रब्धो भवति, स सर्वोस्मिन्निति। सह. हेतुः। श्रु.

**प्रत्ययितः** - आप्तः। पा.

**प्रत्यराः** - अराणां दाढ्यार्थं निहितास्तन्मध्यवर्तिकाष्ठविशेषाः। श्वे.

**प्रत्यवरोहः** - पूर्वाश्रमप्राप्तिः। भाव.

**प्रत्यवसर्पणम्** - प्रत्यागमनम्। बृ.

[**प्रत्यवायः** - विहिताकरणजन्यः अनिष्टविशेषः। दोषः। सच्च.]

**प्रत्यवायिकम्** - प्रत्यवायः पापम्, सः कारणतयाऽस्त्यस्मिन्निति, प्रत्यवायिकम्। "अत इनी"ति ठन्। रा.

**प्रत्याख्यानम्** - असम्मतिः। नि.

**प्रत्याचीर्णम्** - प्रतिकृतम्। रा.

**प्रत्याधानम्** - प्रसूतिभूमिः। बृ.

**प्रत्यायनम्** - अस्तमयः। छा.

**प्रत्यास्वरः** - प्रत्यागन्ता। छा.

**प्रत्याहारः** - विषयेभ्यो बलात् इन्द्रियाणामाहरणम्। शर. सर्वविषयत्यागः। वि. [विषयेभ्यो विनिवृत्य इन्द्रियाणां मनोनुसारित्वेन करणम्। ई.]

**प्रत्युदाहरणम्** - प्रतिवाक्यम्। भाव.

**प्रत्युलूकः** - काकः। वि.

**प्रत्यूढाः** - प्रतीपं नीताः। श्रु. प्रतीपं प्रापिताः, प्रतिरुद्धाः। त.

**प्रत्यूहः** - प्रतिव्यक्तव्यूहः। बृ.

**प्रत्यैरयतम्** - प्रतिसंहितवन्तौ। बृ.

**प्रत्यौहत्** - परिविभज्यालभत। बृ.

**प्रथनम्** - प्रसिद्धिः। पा.

**प्रथमः**-प्रधानभूतः। बृ. प्रवरः। आदिमः। 'प्रथमौ प्रवरादिमौ' इति वैजयन्ती। या.

**प्रथमजाः** - प्रथमं जनयिता। तै. समाराध्यत्वेन पूर्वं सन्निहिता। श्रीसू.

**प्रथमाक्षरचतुर्थी** - (प्रणवे) इय लुप्ता शेषत्वपरा। श्रीत.

[**प्रथमावतारः** - विष्णवतारः। ई.]

**प्रथितः** - तथात्वेन (अच्युतत्वेन) प्रसिद्धः। सह.

**प्रथितिः** - प्रसिद्धिः। श्री.

**प्रदक्षिणः** - अत्यन्तसमर्थः। रा.

**प्रदराः** - बाणाः। 'प्रदरा भङ्गनारीरुग्बाणाः' इत्यमरः। रा.

**प्रदर्शनम्** - सूक्ष्मार्थपरिज्ञानम्। रा.

**प्रदिशः** - दिग्वर्तिपदार्थाः। तै.

**प्रदीप्ताः** - ज्वलिताः। रा.

**प्रदूयते** - दह्यते। छा.

**प्रदेशवर्ति** - स्वाभावसमानाधिकरणम्। रत्न.

[**प्रदेशिनी** - अंगुलिविशेषः । सच्च.]

**प्रद्युम्नः** - आत्मप्रद्योतयिता। प्रकृष्टं द्युम्नं आत्मप्रद्योतनलक्षणमैश्वर्यं अस्येति। सह. ऐश्वर्यवीर्याभ्यां पूर्णः । य. "सत्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता। जगत्स्थापयते सर्वं स विष्णुः प्रकृतिर्ध्रुवे"ति कौर्मे। वेकौ. वीर्यैश्वर्यद्वन्द्ववान् सर्गधर्मप्रवर्तनकरोव्यूहः। न्यासिटी.

**प्रद्राणकः** - अनशनेन कुत्सितां गतिमापन्नः । 'द्रा कुत्सितायां गतौ' इति धातुः। छा.

**प्रद्विषन्तः** - असहमानाः। गी.

**प्रधानम्** - कारणावस्थमचिद्द्रव्यम्। गीसं. महदादिविकाररहितः त्रिगुणद्रव्यभागः । स्तो.

[**प्रधानक्षेत्रज्ञपतिः** - प्रकृतिजीवयोः नियन्ता। ई.]

**प्रधानजैः** - प्रकृतिजैः तत्त्वैः। श्वे.

**प्रधानत्वम्** - (कारणे) असाधारणकारणत्वम्। श्रु.

**प्रधानपुरुषेश्वरः** - प्रधानस्य बन्धहेतोः पुरुषाणां च बध्यमानानां सर्वथा नियामकः। सह.

**प्रधानप्राप्यत्वम्** - स्वतः कैङ्कर्योद्देश्यत्वम्। श्रीत.

**प्रधानविषयः** - अधिकरणप्रतिपाद्यार्थः। अधि.

**प्रधानोपादानत्वम्** - उपादानतानवच्छेदकत्वे सति उपादानत्वम्। रत्न.

**प्रधिः** - नेमिः। कोटिरिति यावत्। सुन्दर. परिवारः। बृ.

**प्रध्मायीत** - विक्रोशेत्। छा.

**प्रध्वंसः** - उत्तरावस्थासन्तानः । सर्वा. स्वरूपप्रच्युतिः। श.

**प्रपञ्चः** - प्रकृतिपुरुषतत्संसर्गरूपः । गी. व्याप्तः। मा (कू).

**प्रपञ्चप्रत्यनीकतास्वरूपाः** - प्रपञ्चप्रत्यनीकं ब्रह्म, तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूलत्वादिधर्माः। श्रु.

**प्रपञ्चोपशमः** - प्रपञ्चश्चासौ उपशमश्च। मा (कू).

**प्रपत्तव्यः** - श्रीश्रीशौ मिलितौ प्रपत्तव्यौ। श्रीत.

**प्रपत्तिः** - उपायत्वाध्यवसायमात्रमिति सयूथ्यपक्षः । न्याद. शरणागतिः 'त्वमेवोपायभूतो मे भव' इति प्रार्थना। न्याद. न्यासविद्या। य "प्रार्थनान्वितभरन्यासः, भिक्षादिमात्रप्रार्थनायामाज्ञादिपूर्वकभरन्यासे च प्रयोगप्रसङ्गवारणाय दलद्वयम्" । न्याद. प्रार्थनान्वितो भरन्यासः । स्तो. विषयविशेषविशिष्टबुद्धिः प्रपत्तिः। नि. ["अन्ययसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायता याचना प्रपत्तिः शरणागतिः" ॥ विश्वासः; सकृत्प्रार्थनामात्रेण अपेक्षितं दास्यतीति विश्वासपूर्वकं प्रार्थनमिति यावत्। र.]

**प्रपत्तौ वेद्याकारः** - अन्यानपेक्षोपायता मुख्या। न्याद.

**प्रपदनम्** - अध्यवसायः। वै. प्रार्थनापूर्वकं परस्यै देवतायै प्रत्यगात्मरूपस्य हविषः त्यागः। नि. शरणत्वेन अध्यवसानम्। सुन्दर. शरणवरणम्। अति.

**प्रपद्यते** - उपास्ते। गी.

**प्रपद्यन्ते** - अर्चयन्ते। गी.

**प्रपद्यस्व** - प्रपन्नं कुरु (अन्तर्भावितण्यर्थोयं पदिः)। तै.

**प्रपद्ये** - अत्र "महाविश्वासोपायत्वप्रार्थनागोप्तृत्ववरणकार्पण्यानि क्रियापदतात्पर्यविषयभूतानि"। न्याद. उपासे। छा. "विश्वासपूर्वकं प्रार्थये"। न्याद.

**प्रपन्नः** - आकिंचिन्यानन्यगतिकत्वधर्मविशिष्टो भगवन्तमाश्रितः। य.

[स द्विविधः सद्वारकप्रपत्तिनिष्ठः, अद्वारकप्रपत्तिनिष्ठ; इति। स्वतन्त्रप्रपत्तिनिष्ठः अङ्गप्रपत्तिनिष्ठश्चेति। आर्तो दृप्त इति स द्विधा। र.]

**प्रपातः** - तटम्। रा.

**प्रपाताः** - निर्झराः। रा.

**प्रपितामहः** - नारायणः। सर्वासां प्रजानां पितरः प्रजापतयः, तेषां पिता हिरण्यगर्भः प्रजानां पितामहः, तत्पिताऽयमिति। गी. पितृणां प्रजापतीनामपि पितुः जनयितुः पितामहस्य परमेष्ठिनोऽपि जनकत्वात् प्रकृष्टः पितामहः। सह.

**प्रबुद्धः** - उत्पन्नतत्त्वज्ञानः। भा.

**प्रबुद्धम्** - प्रकर्षेणावगतम्। भ्रमविरहेण सम्यक् दृष्टमित्यर्थः। गद्य. विकसितम्। स्तो.

**प्रबुद्धधीत्वम्** - भगवत्प्रसादसंधुक्षितैः शास्त्रैः विकसितबुद्धित्वम्। स्तो.

**प्रबुद्धप्राणः** - अनुपरतव्यापारप्राणवान्। श्रु.

**प्रभवः** - उत्पत्तिकारणम्। रा. उत्पत्तिस्थानम्। ता. प्रकर्षेण भवत्यस्मादिति प्रभवः। कर्मफलदायित्वलक्षणप्रभुत्वस्य भगवद्धर्मतया प्रजापतिपशुपतित्वादिलक्षणस्य प्रभवनस्य भगवदधीनत्वात्। श्वे. प्रकृष्टः भवः जन्म यस्येति। जन्मनः प्रकर्षश्च अनाघ्रातदोषगन्धत्वेन स्ववेदनमात्रेण सकलजन्मनिगलनिर्मूलनहेतुत्वेन च देवादिजन्मवैजात्यात्। सह. प्रभवत्यस्मादिति प्रभवः सर्वोत्पत्तिस्थानम्; सर्वोपादानकारणमित्यर्थः। रा. प्रभवति उत्पद्यते अनेनेति। मा(कू). प्रभावः; ईश्वरे प्रकर्षेण भवस्सत्ता प्रभाव एव। नामकर्मस्वभावादिः। यथा, 'न मे विदुस्सुरगणाः प्रभव'मिति। उत्पत्तिकारणम्। यथा, 'अहंसर्वस्य प्रभव' इति। उत्पत्तिः। यथा 'प्रभवप्रलयस्थान'मिति। ता.

**प्रभविष्णु** - ग्रस्तानां अन्नादीनां आकारान्तरेण परिणतानां प्रभवहेतुः। गी.

**प्रभविष्णुः** - प्रभुः। रा.

**प्रभा** - आवरणसदसद्भावाधीनसङ्कोच-

विकासप्रसारितेजोविशेषः । य. स्वापृथक्सिद्धत्वस्वाधिकपरिमाणवत्त्वोभयसम्बन्धेन तेजोविशिष्टं तेजः । वा. स्वाश्रयातिरिक्तप्रसारितेजोद्रव्यविशेषः । ता.

**प्रभावः** - अन्तश्शक्तिः । रा. शक्तिः तेजो वा । पा. शक्तिः । सङ्कल्पः । वि. सामर्थ्यम् । रा.

**प्रभावनम्** - प्रापकम् । रा.

**प्रभासम्** - प्रभासत इति । पचाद्यच् । विकस्वरमित्यर्थः । रा.

**प्रभासा** - प्रकृष्टतया भासमाना, शुद्धसत्त्वप्रकाशशुभाश्रयदिव्यमङ्गलविग्रहा (श्रीः) । श्रीसू. सर्वस्य लोकस्य सहस्रेन्दुसमप्रकाशा (श्रीः) । श्रीसू.

**प्रभुः** - अकर्मवश्यः । भा.गी. समर्थः । अमन्दपरतन्त्रमनुष्यादिसाधर्म्येण अवतरन्नपि भोगापवर्गादिफलसमर्पणसमर्थतया प्रभवतीति । नितान्तकान्ततया सर्वहृदयहरणे प्रभवतीति । सह. नियन्ता । रा. फलप्रदानसमर्थः, फलप्रदः । श्वे. फलप्रदायीत्यर्थः । श्री. निर्वाहकः । वि. शासिता । गी. शेषी । तै. समर्थः । ता.रा. (सृष्ट्यादिषु नैरपेक्ष्येण) स्वच्छन्दः । वि. स्वामी । मा (कू). स्ववशीकर्ता । भा.

**प्रभुत्वम्**-निखिलचेतनाचेतननियन्तृत्वम् । न्यावि. नियन्तृत्वम् । श्रु. फलप्रदायित्वम् । बृ. स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदत्वम् । स्तो.

**प्रभुम्** - सेवाफलप्रदम् । श्वे.

**प्रभुविमितम्** - प्रभुणा भगवता विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतं मण्टपम् । छा.

**प्रभूतः** - समृद्धः । (सर्वसंहारेपि नित्यनिर्मर्यादभोगोपकरणपरमपदतया) । सह.

**प्रभूतभूतभूतः** - महाभूतत्वं प्राप्तः । वि.

**प्रभेदः** - प्रमोकः । प्रभिद्यन्ते प्रमुच्यन्ते । क.

**प्रमत्तः** - परवशः । रा.

**प्रमत्तम्** - अनवहितम् । रा.

**प्रमत्ताः** - प्रस्तुतकार्यविस्मारिणः । रा.

**प्रमथ्य** - व्याकुलीकृत्य । ता.

**प्रमदः** - हर्षः । वि.

**प्रमा** - यथावस्थितव्यवहारानुगुणं ज्ञानम् । य. सात्क्षाकारिप्रमा । न्याप.

**प्रमाणम्** - अनधिगततया भूतार्थनिश्चायकम्, इति (केषांचित्) मतम् । त. अवधिः । ता. औन्नत्यम् । रा. निस्संशयविपर्ययवेदरहस्यपरमार्थप्रत्यायकः । सह. पूजा । रा. प्रमाकरणम् । य. प्रमा, प्रमाकरणम् तयोरन्यतरत् । यथावस्थितव्यवहारानुगुणं ज्ञानम् । न्याप. प्रयोजनपर्यवसायि । नी. बुद्धिः । मर्यादा । मर्यादानियामकम् । व्यवस्थापकम् । रा. व्यवस्थापकः । सह. शरीरपरिमाणम् । रा.

**प्रमाणज्ञानम्** - अन्तःकरणवृत्त्यवच्छिन्नचैतन्यम् (अद्वैतिमते) । रत्न.

**प्रमाणत्वम्** - "द्वेधा खलु प्रमाणत्वं वचसामवसीयते । एकं मानान्त-

रापेक्षमनपेक्षमथेतरत्" ॥ आ.
**प्रमाणभावः** - प्रमितिजनकत्वम्। वे.
**प्रमाणभूतः** - प्रामाण्यं प्राप्तः। भाव.
**प्रमाणशून्यावधिः** - त्रिविधपरिच्छेद-रहितः। भा.
**प्रमाणस्य प्रमेयाविनाभावः** - यद्देश-कालादिसम्बन्धितया योऽर्थः अवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। श्री.
**प्रमाणाभावः** - हेत्वभावः। श्रु.
**प्रमाणाभासः** - अप्रमाणत्वे सति प्रमाण-व्यवहारविषयः। न्याप.
**प्रमाथि** - प्रमथनशीलम्। ता.
**प्रमादः** - अकार्यप्रवृत्तिफलं अनवधानम्। गी. अनवधानता; अज्ञानम्। त. अनव-हितचित्तता। मु. अविमृश्यकरणम्। रा. कर्तव्यकर्मस्वनारम्भः। ता. कर्तव्यात्कर्म-णोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानम्। कृत्यानवधानम्। गी. यथावदप्रतिपत्तिः। यथावस्थितात्मस्वरूपाज्ञानम्। श्रु. (सजातीयत्व) भ्रमः, मोहः। गी. समीक्षावसरे सत्यप्यसमीक्षा। ता.
**प्रमाद्यन्** - अनवहितमनाः। क.
**प्रमायुकम्** - प्रकृष्टं मायुः मरणं यस्य तत्। बृ.
**प्रमितिः** - प्रकृष्टा मितिः। प्रकर्षो याथार्थ्यम्। रत्न.
**प्रमितत्वम्** - अबाधितमानविषयत्वम्। सर्वा (आ). अर्थनिश्चायकत्वम्। श्रु.
**प्रमीयते** - म्रियते। तै.
**प्रमुखः** - प्रधानभूतः। या.
**प्रमुखम्** - पुरोदेशः। रा.
**प्रमुत्** - अनुकूलवस्तुविनियोगजा प्रीतिः। बृ. असाधारणभोग्यत्वज्ञानजन्या प्रीतिः। स्वविनियोगार्हत्वज्ञानजन्या प्रीतिर्वा। श्रु.
**प्रमृतम्** - कर्षणम्। भा.
**प्रमेयम्** - प्रकर्षेण मेयम्। न्यासि. प्रकर्षेण मेयम्। यद्विषयभ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि तदिह नः प्रकर्षेण मेयं प्रमेयम्। न्याप. प्रमाणप्रतिपाद्योऽर्थः। भाव. प्रमाविषयः। न्यासि. प्रमाविषयः। प्रकृष्टामितिः प्रमा। तस्या विषयः। पूर्वं धातुरुपसर्गेण युज्यत इति पक्षे एवम्। पूर्वं धातुः प्रत्ययेन युज्यते पश्चादुपसर्गेणेति पक्षे मितेर्विषयो मेयम्, प्रकर्षेण मेयं प्रमेयमिति। द्विविधमपि प्रमेयत्वं ब्रह्मण्येव। न्यासिटी. रत्न. यद्यपि प्रमाविषयः प्रमेयमिति व्युत्प-त्त्या आरोपिताकारव्यवच्छेदार्थयाऽनारो-पितरूपं सर्वं प्रमेयं, तथाऽपि निःश्रेयसान्त-रङ्गतया तदर्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षितम्। यद्विषयेण भ्रमेण संसरामः यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि तदिह नः प्रकर्षेण मेयं प्रमेयम्। न्याप.
**प्रमोदनः** - भक्तध्यानेन मोदमानः। सह.
**प्रमोषः** - स्मृतिहेतुविनाशः। न्यासिटी.
**प्रयतः** - कायिकनियमवान्। रा. म्रियमाणस्य। छा.
**प्रयती** - म्रियमाणा। बृ.

**प्रयत्नः** - उद्योगः । श्री. [शरीरादिप्रेरण-हेतुभूतः बुद्धिविशेषः । र.]

**प्रयन्ति** - प्रलीयमानानि । श्री. वा.

**प्रयागः** - यमुनासंगमप्रदेशः । पा.

**प्रयासः** - (क्षुद्रविषयसुखाय) प्रकृष्टयत्नः। भा.

**प्रयियासन्** - जिगमिषुः । बृ.

**प्रयुक्तिः** - अनुष्ठापनशक्तिः । भाव. प्रजोज्यप्रयोजकभावः । च.

**प्रयोगः** - अनुमानम् । सर्वा (आ). अनुमानोद्बोधकं पञ्चावयवं वाक्यम् । न्याप. साङ्गप्रधानानुष्ठानम् । भाव.

[**प्रयोगपद्धतिरत्नावलिः** - भोज-राजकृतः पञ्चकालप्रक्रियाप्रकाशकः ग्रन्थविशेषः । पाञ्च.]

**प्रयोगविधिः** - अनुष्ठापकत्वदशापन्न-विधिः । श्रु.

**प्रयोग्यः** - युग्यः, अश्वो बलीवर्दो वा । छा. युग्यः । श्रु.

**प्रयोजकम्** - व्याप्यम् । रत्न.

**प्रयोजनम्** - कार्यम् । श्रु. पुरुषप्रवृत्त्युद्देश्यम् । न्याप. पुरुषेण प्रवृत्तिफलतयोद्दिष्टम् । न्याप. प्रवृत्तिनिवृत्तिसाध्यम् । नी. दुःखनिवृत्तिः । नी. सुखम् । नी.

**प्रयोजनवदर्थाः** - चतुर्वर्गरूपप्रयोजनो-पायभूताः कर्मोपासनरूपाः । त.

**प्रयोजयिता** - अप्रवृत्तस्य प्रवर्तकः । श्रु.

**प्रयोजयितृत्वम्** - अप्रवृत्तस्य प्रवर्त-कत्वम् । श्रु.

**प्ररोहः** - यथार्हकार्यारम्भः । सर्वा.

**प्रलयः** - कार्यतारूपविसदृशावस्थाप्रहा-णेन कारणान्तर्भावः । श्रु. लयस्थानम् । ता. विषमविकारराहित्यम्, समविकार-सन्तानस्य तदानीं भावात् । समत्वं नामरूपविभागनिर्देशानर्हत्वम् । न्यासिटी. समत्वं विषमत्वाभावः, विषमत्वमुद्भूत-सत्त्वादिजन्यत्वम् । रत्न.

**प्रलयान्ताम्** - प्राकृतप्रलयावधिकाल-साध्यविषयाम् । गी.

**प्रलिलेहयन्ति** - आस्वादयन्ति । लिहेर्धातोः णिचि द्विर्वचनं छान्दसम् । बृ.

**प्रवचनम्** - अध्यापनम् । तै. मननम् । क. मननम् । पारिशेष्यात् प्रवचनशब्दः श्रवण-ध्यानसहोक्तमननपरः । प्रोच्यते अनेनेति करणव्युत्पत्तेः । (नायमात्मा प्रवचनेन....) त. मननम् । मननफलत्वात्प्रवचनस्य मननस्याचार्यप्रवचनफलत्वाद्वा, प्रोच्यतेऽनेनेति करणव्युत्पत्या वा । श्रु. (लक्षणया) मननम्; (तत्साधनत्वात्) । मु.

**प्रवणधीः** - आभिमुख्यमात्रतृप्तः । सुन्दर.

**प्रवताः** - प्रवणाः । तानादिकाद्वनुतेर्निष्ठा-यां अनुनासिकलोपः । तै.

**प्रवदमानः** - प्रवदन् । विजयघोषं कुर्वन् सन् । रा.

**प्रवर्ग्यः** - कर्मविशेषः । रा.

**प्रवर्तकत्वम्** - फलसाधनत्वम् । नी.

**प्रवव्राज** - निर्गतः (नात्र सन्न्यासरूपा प्रव्रज्या) । कौ.

**प्रवहः** - वायुप्रभेदः सप्तविधान्तर्गतः। छा.
**प्रवादः** - जनवार्ता। रा.
**प्रवारम्** - प्रच्छदपटः। बृ.
**प्रविद्धः** - क्षिप्तः। रा.
**प्रविलयः** - निश्शेषक्षयः। गी.
**प्रविविक्तभुक्** - प्रकर्षेण विविक्तान् (स्वाप्नार्थान्) भुङ्क्ते भोजयतीति। मा (कू).
**प्रवृत्तम्** - काम्यं कर्म। वि.
**प्रवृत्तं कर्म** - निवृत्तकर्मभिन्नं काम्यं कर्म। सर्वा.
**प्रवृत्तिः** - अभ्युदयसाधनं वैदिको धर्मः। गी. उत्पत्तिः। सर्वा (आ). ऐश्वर्यार्थव्यापारः। ऐश्वर्याद्यपेक्षा, इति केचित्। नि. कार्योत्पत्त्यनुगुणव्यापारः। श्रु. प्रयोजनमनुद्दिश्यापि चलनस्वभावता। गी. (न्यासू). मनोवाक्कायानां पुण्यापुण्यरूपो व्यापारः। न्याप. वार्ता। वृत्तान्तः। रा. विशेष्यभूतप्रधानार्थविषया वृत्तिः (वृत्तिर्नाम पदानां, अर्थबोधनम्)। श्रु. [प्रवृत्तिनिवृत्तिरूपव्यापारः (स्वाधीनेत्यादिवाक्ये)। र.]
**प्रवृत्तिधर्मः** - स्वर्गादिफलकधर्मः। त.
**प्रवृत्तिनिमित्तम्** - प्रकृष्टा वृत्तिः प्रवृत्तिः अभिधानम्, तस्य निमित्तं विषयः। च. समुदायशक्तिनिमित्तम्। श्रु.
**[प्रवृत्तिलक्षणो धर्मः** - प्रवृत्तिः मोक्षेतरफलसम्पादनार्था कृतिः। सा लक्षणं यस्य स तथोक्तः। तादृशकृतिविषयत्वरूपासाधारणाकारयुक्तं बन्धकं काम्यं कर्मेति यावत्। र.]
**प्रवृत्तिविज्ञानम्** - नीलादिज्ञानम्। "तत्स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्" (बौद्धमते)। प्रवर्तकं घटादिविज्ञानम्। सर्वा (आ).
**प्रवृहेत्** - पृथक्कुर्यात्। भाव.
**प्रवेकः** - उत्तमः। रा. प्रवरः। रा.
**प्रवेणी** - आस्तरणविशेषः मृगविशेषो वा। रा.
**प्रवेशः** - उपासनाय प्रवृत्तिः? (त्रयीं प्राविशन्-उपासितुं प्रवृत्ताः)। छा. प्राप्तिः। तै. [अवतारिका। ई.]
**प्रव्रजनम्** - प्रकर्षेण गमनम्। प्र.
**प्रव्रज्या** - प्रवासः। रा.
**प्रशकनम्** - शक्तिः। अधि.
**प्रशमः** - अक्रोधता। प्रसादः। रा.
**प्रशंसा** - विध्यादिशेषभूतो विधेयादिगुणवादः प्रशंसा। न्याप.
**प्रशाखाः** - उपशाखाः। रा.
**प्रशान्तः** - रागाद्यकलुषितः। भा.
**प्रशान्तम्** - अशनायादिषडूर्मिरहितम्। वि. ऊर्मिषट्करहितम्। भा.
**प्रशासनम्** - आज्ञाचक्रम्। प्रकृष्टं शासनं प्रशासनम्। क्वचिदप्यप्रतिहतत्वमेव शासनस्य प्रकर्षः। ततश्च सर्वविषयकं शासनमिति फलति। शासनस्य प्रकर्षश्च असंकुचितसर्वविषयकत्वम्। बृ. प्रकृष्टं शासनम्। श्री. क्वचिदप्यप्रतिहतत्वेन

विषयप्रकर्षात् शासनस्य प्रकर्षः । भयावहत्वम् । श्रु. सङ्कल्पविशेषः । ता.

**प्रशुश्रुकः** - मरुनृपपुत्रः । रा.

**प्रश्च्योतनम्** - प्रकर्षेण क्षरणम् । सुन्दर.

**प्रश्रयः** - महत्सु विनयः । भा. विनयः । रा.

**प्रश्रयम्** - विनयान्वितम् । रा.

**प्रश्रितः** - विनयान्वितः । रा.

**प्रश्नः** - बुभुत्साख्यापनम् । श्रु.

**प्रष्ठः** - प्रकर्षेण तिष्ठतीति प्रष्ठः । 'प्रष्ठोऽग्रगामिनि' इति निपातनात्साधुः । सुन्दर.

**प्रसक्ताः** - प्रकर्षेण सक्ताः । गी.

**प्रसक्तिः** - सङ्गतिः । रा.

**प्रसङ्गः** - अन्योद्देशेन अनुष्ठितेन अन्यस्योपकारसिद्धिः । भाव. आपत्तिः । श. प्रकृष्टसङ्गः । गी.

**प्रसङ्गात्सङ्गतिः** - प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वम् । श्रु.

**प्रसत्तिः** - प्रसादः । अधि.

**प्रसदनम्** - प्रसादः । या.

**प्रसन्नम्** - गम्भीरम् । रा.

**प्रसन्नात्मा** - क्लेशकर्मादिभिरकलुषस्वरूपः । गी. प्रसन्नः । स्वत एवावाप्तसमस्तकामतया रागाद्यनुपप्लुतमनाः । अपूर्णः कृपणो हि दुराराधः । सह.

**प्रसभम्** - विनयापेतम् । गी.

**प्रसरः** - अवकाशः । रा. प्रसरशब्द इह संकोचमभिप्रैति । त.

**प्रसवः** - उत्पत्तिः । या. सृष्टिः । मा(कू).

**प्रसादः** - अनुग्रहः । गी. कालुष्यनिवृत्तिः । ता. कृतज्ञत्वादिगुणस्तोमः । 'कृतज्ञतोपकर्तृत्वं भूयोदोषानभिज्ञता । एष प्रसादश्चित्तानां लक्षणज्ञैरुदाहृतः ॥' इति शारदातनयः । या. निग्रहरूपकालुष्यनिवृत्त्या स्वभावत एवावस्थितं सौहार्दम् । तच्च. निर्दुःखनित्यनिरतिशयानन्दमनुभवत्वितीच्छा । गद्य. निर्व्याजनित्यसौमुख्यम् । वर. नैर्मल्यम् । झटित्यर्थसमर्पणक्षमत्वम् । या. प्रपत्तिजनितप्रसादनिरस्तप्रतिबन्धनिरुपाधिकसौहार्दम् । गद्य. मनोनैर्मल्यम् । ता.

[**प्रसिद्धिः** - (खिलश्रुतेः) संप्रतिपन्नत्वम्, अधीतत्वम्, सूत्रकारादिभिरुपात्तत्वम्, खिलत्वेन श्रवणपरम्परागतत्वम् । सच्च.]

**प्रसिद्धिविभवः** - प्रसिद्धिप्राचुर्यम् । वै.

**प्रसिद्धिसिद्धः** - व्यावहारिकः । च.

**प्रसुतम्** - अहीनगतमभिषवणम् । छा.

**प्रसुप्तम्** - स्तिमितम् । रा.

**प्रसूतिः** - उपादानभूतः । प्रसूयन्तेऽस्मिन्नित्यधिकरणे क्तिन्प्रत्ययः । या. कारणम् । अधि. पौत्रादिः । वि.

**प्रसृतम्** - प्रकीर्णम् । रा.

**प्रसृतिः** - मर्यादा । सर्वा.

**प्रसेनजित्** - सुसन्धिनृपपुत्रः । रा.

**प्रसौति** - अनुज्ञां प्रयच्छति । तै.

**प्रस्कन्दनम्** - प्रकर्षेण शोषणम् । प्र.

**प्रस्तरः** - वृक्षमूलेषु शयनार्थं स्थापिता श्लक्ष्णशिला । रा. पर्यन्तशिला । सुन्दर.

**प्रस्तरम्** - तृणादिशयनम् । वि.

**प्रस्तावः** - प्रकृष्टा स्तुतिः । रा.

**प्रस्तावमन्वायत्ता** - प्रस्तावभक्तौ अध्यस्य उपास्या । छा.

**प्रस्तुतिंकामः** - प्रशंसाकामः । छा.

**प्रस्थितः** - प्रस्थातुमुद्यतः । रा.

**प्रस्नुता** - वात्सल्येन स्तनप्रस्नवयुक्ता । या.

**प्रस्रवणम्** - निर्झरः । रा.

**प्रहरः** - षड् सप्त वा नाडिकाः । भा.

**प्रहरणम्** - आयुधम् । रा.

**प्रहरणाः** - शस्त्रदेवताः । वि.

**प्रहर्षिताः** - प्रकर्षेण सन्तुष्टाः । रा.

**प्रहर्ता** - वैरिहन्ता । रा.

**प्रहसः** - वरुणस्य मन्त्री । रा.

**प्रहस्तः** - रावणसचिवो राक्षसः । रा.

**प्रहस्य** - हासेन मोहयित्वा । वि.

**प्रहीणविषयः** - प्रहीणसम्बन्धः । श्रु.

**प्रहुतम्** - बलिहरणादिकम् । भा.

**प्रहृष्टमनाः** - शुद्धभावः । रा.

[**प्रह्वाङ्गप्रणामः** - "प्रह्वास्सम्पुटं कुर्यात् सा प्रह्वाङ्गनमस्क्रिया" । पाञ्च.]

**प्रह्वीभावः** - नीचभावः । शरणागतिः । नि.

**प्रांशुः** - प्राश्नुते सर्वं व्याप्नोतीति । सह.

**प्राक्** - प्रागग्रम् । बृ.

[**प्राकाम्यम्** - प्रकृष्टः कामो यस्य सः तस्य भावः प्राकाम्यं सिद्धसङ्कल्पत्वम् । (अष्टैश्वर्येष्वन्यतमम्) । र.]

**प्राकृतः** - अनधिगतविद्यः । गी. क्षुद्रः । हीनः । रा.

**प्राकृतम्** - क्षुद्रम् । रा.

**प्राकृतत्वम्** - रजस्समानाधिकरणत्वम्, तमस्समानाधिकरणत्वं वा । वा.

**प्राकृतदर्शनः** - क्षुद्रबुद्धिः । रा.

**प्राकृतसर्गः** - महत्तन्मात्रेन्द्रियाणां सर्गः । वि.

**प्राकृताः** - प्रकृतिसम्बन्धिनः । श्रु. प्रकृतिकृताः । वि.

**प्राकृतेन्द्रियत्वम्** - सात्विकाहङ्कारोपादानकद्रव्यत्वम् । वा.

**प्राक्त्वम्** - उदयदिक्संयोगः । रत्न.

**प्रागभावः** - अनादिप्रागवस्थासन्तानः । सर्वा. (कार्यस्य) पूर्वावस्था । य. [प्रागप्यभावः । अत्यन्ताभावः । ई.]

**प्रागल्भ्यम्** - ऊहापोहौ विना केवलधार्ष्ट्यम् । रा. सभासु धार्ष्ट्यम् । भा. निस्साध्वसत्वम् । वि.

**प्रागवधिः** - प्रागभावः । रत्न.

**प्राग्वटम्** - नगरविशेषः । रा.

**प्राग्वाहा** - पूर्वाभिमुखप्रवाहा कावेर्यादिः । रा.

**प्राग्वंशः** - अनादिमुक्ताः प्राञ्चः । तेषां वंशः समुद्भवभूमिः नित्यस्वरूपाविर्भावनिबन्धनभूत इति । सर्वं हि सर्वथा तदिच्छोपाधिकमित्यविवादः । सह. पत्नीशालायाः प्राग्देशः । वि. यज्ञशालादारु । रा.

**प्राचीनयोग्यः** - प्राचीनयोग्य इति सत्ययज्ञस्य नामान्तरम्। छा. सत्ययज्ञस्य पौलुषेर्नामान्तरम्। अग्नि.

**प्राचीनशालः** - कश्चन ऋषिः। छा.

**प्राचीनाततम्** - पर्यङ्काततः दीर्घरज्जुविशेषाः। कौ.

**प्राजापत्य** - प्रजापतिप्रसूतस्य सर्वस्यापि अन्तर्यामिन्। अविवक्षितप्रत्ययार्थोऽयं शब्दः, प्रजानां पते इति वा। ई.

**प्राजापत्यम्** - भृग्वादिलोकः। क्रियावतां ब्राह्मणानां मृत्यनन्तरस्थानम्। वि.

**प्राजापत्याः** - प्रजापतेरपत्यानि। ''दित्यदित्यादित्ये''त्यादिना अपत्यार्थे ण्यप्रत्ययः। बृ.

**प्राज्ञः** - दोषवत्यपि गुणदर्शी। धर्मार्थविषयकसर्वशास्त्रार्थतत्त्वज्ञः। रा. प्रकर्षेण न ज्ञापयति इति प्राज्ञः प्राज्ञनामकः। मा (कू). प्रज्ञ एव प्राज्ञः निरुपाधिकसार्वज्ञ्याश्रयः। कौ. प्रज्ञः (स्वार्थेऽण्)। सङ्कर्षणाभिधः। मा (रं).

**प्राज्ञम्** - परात्मानम्। भा.

**प्राज्ञत्वम्** - शीघ्र कार्याकार्यनिर्णेतृता। रा.

**प्राञ्जलिः** - प्रकृष्टो मूर्ध्नि कृतोऽञ्जलिर्यस्य सः। रा.

**प्राणः** - अवस्थान्तरमापन्नो वायुः। श्री. आत्मा। बृ. उज्जीवनहेतुः। सह. घ्राणेद्रियं नश्यत्वसामान्यात् गौण्या वृत्त्या अभिधीयते। जीवः। बृ. जीवः। छा. न्यासि. तत्रोपजीविनां जीवितरूपतया प्राणिति अस्मादुपजीविजातम् इति। ''प्राणोस्मि प्रज्ञात्मा''। सह. धारकः। प्र. परमात्मा। अत्र प्राणयितृत्वगुणयोगात् प्राणशब्देन परमात्मा उच्यते। छा. परमात्मा। कौ. श्रु. पञ्चवृत्तिप्राणः। बृ. श्रु. परमात्मा। भा. पर्यङ्कस्य ब्रह्मसम्बन्धिनः प्राणाभिमानित्वात् प्राणशब्दस्तत्र। कौ. पुरुषः। प्र. प्रागननवान् हृदयवर्ती। सर्वा (आ). प्राणशरीरकः परमात्मा। छा. प्राणवायुः। श्री. प्राणितीति सः। परमात्मा। बृ. प्राणशरीरकपरमात्मा। श्रु. प्राणसहचरो जीवः। छा. प्राणसहचारी प्रत्यगात्मा। श्री. प्राणयति सर्वाणि भूतानीति व्युत्पत्त्या परं ब्रह्म। भा. प्राणनहेतुः परमात्मा। त. प्राणाख्यो वृत्तिविशेषः। वि. बलम्। रा. ब्रह्म। बृ. मुखनासिकेन बहिः निस्सार्यमाणो वायुः। छा. मुख्यप्राणः। इन्द्रियाणि। बृ. वायुविशेषः। श्रु. वायुः। बृ. शरीरधारणहेतुः वायुविशेषः। वा. 'शब्दोऽयं योगेन वा अपर्यवसानवृत्त्या वा ब्रह्मपरः'। कौ. सर्वप्राणिप्राणनहेतुभूतः परमात्मा। अधि. सर्वप्राणनकर्ता। सह. स्पर्शनेन्द्रियम्। वायुसम्बन्धित्वात् स्पर्शनेन्द्रियस्य। श्री.

**प्राणचितः** - वाक्चित इतिवत्। अग्नि.

**प्राणजीवनः** - प्राणान् जीवान् अन्नपानीयादिवज्जीवयतीति। सह.

**प्राणत्** - प्राणभृत्। मु.

**प्राणदः** -(कूर्मावतारः)मरुतां मथनोचित-बलप्रदः। सह. प्राणप्रदाता। सह. विषय-विषमूर्छितात्मभ्यः आत्मोज्जीवनं ददातीति। सूरिभ्यः सदादर्शनरूपस्वानुभव-परिचरणानुकूलबलदः। सह.

**प्राणधृत्** - प्राणान् जीवान् मातृवद् धरतीति। सह.

**प्राणनलक्षणा** - पञ्चवृत्तिप्राणसहितत्व-लक्षणा। श्रु.

**प्राणनस्य कर्तृत्वम्** - प्राणयितृत्वम्। श्रु.

**प्राणनिलयः** - प्राणन्तीति प्राणाः जीवाः, ते स्वनीड इव शकुन्ताः तस्मिन् लीयन्त इति। सह.

**प्राणमयः** - मुख्यप्राणशरीरकः। सुबा.

**प्राणयात्रा** - प्राणाग्निहोत्रम्। रा.

**प्राणवान्** - जीवः। श्री.

**प्राणशरीरः** - जगति सर्वेषां प्राणानां धारकः। प्राणो यस्य शरीरं आधेयं विधेयं शेषभूतञ्च स प्राणशरीरः। आधेयत्वविधे-यत्वशेषत्वानामेव शरीरशब्दप्रवृत्तिनिमि-त्तत्वात्। छा. शरीरधारकस्यापि धारकः। वे.

**प्राणशरीरत्वम्** - प्राणस्याधारत्वं नियन्तृत्वं च। भा.

**प्राणसंशितम्** - जगत्प्राणयितृत्वे सति सूक्ष्मतत्त्वम्। छा.

**प्राणाः** - इन्द्रियाणि प्राणापानादयो वा। सुबा. इन्द्रियाणि। बृ. श्रु. कौ. एकादशे-न्द्रियाणि मुख्यप्राणश्च प्राणा इत्युच्यन्ते। सुबा. जीवाः। कौ. श्रु. प्राणवृत्तिभेदाः। ता. प्राणापानादय इन्द्रियाणि वा। छा. मुख्यप्राणा इद्रियाणि च। श्रु.

**प्राणानुप्राणनम्** - प्राणाधीनजीवनम्। तै.

**प्राणायामः** - इलापिङ्गलाख्याभ्यां वामदक्षिणविवरस्थाभ्यां नाडीभ्यां रेचक-पूरककुम्भकैः प्राणवायुनियमनम्। शर. [प्राणनिरोधः। ई.]

**प्राणाय्यः** - योग्यः शिष्यः। 'प्राणाय्योऽ-संमता'विति निष्कामार्थे प्राणाय्यशब्दस्य निपातितत्वात्। छा.

[**प्राणिगन्धः** - कस्तूरिकादि। सच्च.]

**प्राणिति**- चेष्टते। प्राणनव्यापारं करोति। बृ.

**प्राणिनः** - जीवात्मकभूतसङ्घाताः। वे.

**प्राणी** - अविकलेन्द्रियः। छा.

**प्रातः सवनम्** - प्रातस्सवनसम्बन्धि-पृथिवीलोकः। छा.

**प्रातिश्रुत्कः** - प्रतिध्वनिविशिष्टः। बृ. प्रतिध्वनिसम्बन्धी। बृ.

**प्राथमिकभ्रान्तिः** - प्रपञ्चभ्रमः। च.

**प्रादेशमात्रः** - द्युलोकादिप्रदेश-सम्बन्धिनी प्रादेशी। प्रादेशी मात्रा यस्य सः प्रादेशमात्रः। छा. प्रादेशपरिमिते उपासकमूर्धचुबुकान्तराले वैश्वानरात्मा-वयवानां सम्पादनात् वैश्वानरः प्रादेशमात्रः। अन्यादृशप्रादेशमात्रतैव तु छान्दोग्याभि-मतेति। अग्नि.

**प्रादेशिकः** - अव्याप्यवृत्तिः। श.

**प्रादेशिकविकारिता** - स्वाभावसमानाधिकरणावस्थावत्त्वम्। रत्न.

**प्राधानिकम्** - प्रधानम्। वि.

**प्राधान्यम्** - ज्यायस्त्वम्। ता.

**प्राध्वम्** - आनुकूल्यार्थकम्। अधि. आनुकूल्यम्। श्रीस्तु.

**प्रान्तः** - अग्रभागः। या.

**प्रापकत्वम्** - उपायान्तरस्थाननिवेशित्वम्। श्रीत.

**प्राप्तम्** - युक्तम्। श्रु.

**प्राप्तत्वात्** - अङ्गीकरणीयत्वात्। वा.

**प्राप्ताप्राप्तविवेकः** - अन्वयव्यतिरेकौ। वे. श. अन्वयव्यतिरेकनिरूपणम्। श्रु. अन्वयतिरेकौ युक्तायुक्तनिश्चयो वा। ता.

**प्राप्तिः** - प्रमाणतस्सिद्धिः। श्रु. [इष्टानां लाभः। (अष्टैश्वर्येष्वन्यतमम्)। र.]

[**प्राप्तिविरोधि** - मोक्षप्रतिबन्धकं कर्म।]

**प्राप्यः** - अनुसन्धेयः। गी.

**प्राप्यम्** - उभयविभूतिविशिष्टं ब्रह्म। अधि.

**प्राप्यत्वम्** - लक्ष्म्या अपि प्राप्यत्वं प्रधानप्राप्यत्वरूपम्। श्रीत.

**प्राप्यते** - अनुभूयते। श्रु.

**प्राबृहत्** - उद्धृतवान्, जग्राह। छा.

**प्राभृतम्** - उपदा। रा.

**प्रामाणिकाः** - प्रमाणेन अर्थं स्वीकुर्वन्तः। श्रु.

**प्रामाण्यम्** - गृह्यमाणवैपरीत्याभावः। श. यथावस्थितवस्तुनिश्चायात्मकत्वम्। न्याप. स्वातन्त्र्येण तत्त्वावेदकत्वम्। च.

**प्रायः** - प्रायोपवेशनम्। अनशनदीक्षेति यावत्। रा. भृशम्। या.

**प्रायणम्** - उपायः। उपेयश्च ईयत इत्ययनम्। यन्त्यनेनेति अयनम्। भा. प्रकृष्टगतिः। तै. मरणम्। सि.

**प्रार्थनम्** - असमर्थस्य समर्थमुद्दिश्य स्वाभिमतफलस्य तत्साध्यतया इष्टत्वप्रकाशनम्। नि.

**प्रार्थना** - कस्य चिद्वस्तुनः स्वेन परेण वा सम्बन्धं भविष्यत्तया विषयीकुर्वत् ज्ञानम्। "शरणागत्यङ्गमिदम्। अत्र शरणागतित्ववादास्तु प्रधानभूतायास्तस्याः शरणागत्यन्तर्भावमात्रादिति निक्षेपराक्षा"। न्याद.

**प्रावण्यम्** - प्रवृत्तिस्वरसता। अधि.

**प्राश्निकः** - जयापजयनिर्णायकः। रा. [मध्यस्थः। "तटस्थः प्राश्निकस्साक्षी" इति यादवः। या.]

**प्रासः** - आयुधविशेषः। रा.

**प्रासादः** - देवानां भूभुजां चावासः। रा. [देवालयः। या. भगवदालयः। पाञ्च.]

[**प्राह** - उवाचार्थेन निपातेन प्रादिसमासः। या.]

**प्राह्लादः** - प्रह्लादपुत्रः। भाव.

[**प्रियदत्ता** - पृथिवी। पाञ्च.]

**प्रियम्** - अनुकूलवस्तु। रा. इष्टवस्तुदर्शनजन्यं सुखम्। परमप्रेमास्पदम्। तै. (कामशास्त्ररीत्या) वल्लभसायुज्यम्। वि. प्रीतिः। या. पुत्रादिकम्। छा. सुखसाधनं वस्तु। रा.

**प्रियङ्गुः** - कङ्गुः । वि. वृक्षविशेषः । सूक्ष्मधान्यविशेषः । रा.

**प्रियतमः** - यस्यायं निरतिशयप्रियः सः । श्री.

**प्रियकृत्** - अन्यपरानपि भजतः तच्छन्दानुवर्तनेन प्रियान् करोतीति । स.

**प्रियत्वम्** - पुरुषार्थत्वम् । श्रु.

**प्रियदर्शनः** - प्रियं दर्शनं शास्त्रं यस्य सः । रा.

**प्रिश्रवसि** - परमात्मनि कृष्णे; प्रियं श्रोतॄणां प्रीत्यावहं श्रवः कीर्तिः यस्य । भा.

**प्रिया** - अनुकूला । बृ.

**प्रियालः** - वृक्षविशेषः । रा.

**प्रियार्हः** - ऐदमर्थ्यज्ञानिनं प्रियमेवार्हतीति । एकभक्तिषु हि भगवतः स्वत एव प्रावण्यम् । सह.

**प्रीतिः** - ज्ञानविशेषः । न्यासि. धीविशेषः। यादृश्या धिया सा साध्या परेष्टा तादृश्या एव तत्त्वं युक्तम् । त. न्यूनविषयः स्नेहः । मनोगतो हर्षः । स्नेहः । रा. पुलस्त्यभार्या । वि.

**प्रीतिकरणम्** - सम्मानः । रा.

**प्रीतित्वम्** - अनुकूलत्वप्रकारत्वम् । वा.

**प्रीतिदानम्** - प्रीतिपूर्वकं दत्तम् । रा.

**प्रीतिवर्धनः** - उत्तरोत्तरगुणाविष्करणेन प्रीतिं वर्धयतीति । सह.

**प्रेक्षा** - युक्तिरूपा बुद्धिः । रा.

**प्रेक्षितम्** - वीक्षणम् । रा.

**प्रेङ्खोलः** - डोलायमानः । दशा.

**प्रेतः** - यातनाशरीरं प्राप्तः । रा. शरीरमात्रवियुक्तः । क.

**प्रेतम्** - परित्यक्तचरमशरीरम् । श्रु.

**प्रेत्य** - चरमदेहवियोगं प्राप्य । बृ. चरमदेहावसानं प्राप्य । श्रु. लोकान्तरं प्राप्य । रा.

[**प्रेत्यनिष्फलाः** - पारलौकिकप्रयोजनशून्याः । ई.]

**प्रेत्यभाः** - पूर्वदेहं विहायोत्तरदेहप्राप्तिः । न्याप. मरणम् । रा.

**प्रेम** - आश्रितसंश्लेषैकरसिकत्वम् । वर.

**प्रेमरसः** - भोग्यभूतः प्रणयः । वर.

**प्रेयः** - प्रियत्वास्पदं भोगवर्त्म । क. प्रियतरम् । बृ.

**प्रेरकः** - प्रयोज्यकर्तुर्जीवस्य कारयिता । अधि.

**प्रेरिता** - परमात्मा । श्रु.

**प्रेषितम्** - प्रेरितम् । के.

**प्रेष्ठः** - प्रियतमः । भाव.

**प्रोतम्** - अध्यासाधिष्ठानभावलक्षणसम्बन्धेन सम्बद्धम् । छा. आश्रितम् । गी.

**प्रोवाच** - प्रब्रूयात् । (स गुरुमेवाभिगच्छेत् तस्मै स विद्वान् प्रोवाच, इत्यनन्वयात् अप्राप्तत्वाच्च । विधवापि लिटो विधानात् 'छन्दसि लुङ्लङ्लिटः' इति) । (. . . प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्) । त. प्रब्रूयात् । 'छन्दसि लुङ्लङ्लिटः' इति विधानात् । ता. मु.

**प्रोषितः** - देशान्तरगतः । श्री.

**प्रोष्ठपदः** - कुबेरमन्त्री । रा.

**प्लवङ्गमः** - मण्डूकः । रा.

**प्लवगाः** - मण्डूकाः । रा.

**प्लवाः** - मण्डूकाः । रा.

**प्लीहा** - गुल्माख्यः कुक्षिवामभागस्थ मांसपिण्डविशेषः । रा.

**फणः** - भूषणम् । कौ.

**फणितिः** - उक्तिः । श्रीस्त.

**फलकर्म** - फलसाधनभूतं कर्म । श्वे.

**फलत्यागः** - 'कर्मजन्यं फलं मम न स्यादिति फलत्यागः' । गी.

**फलफलिविषयः** - साध्यसाधनभावेन मिथस्सम्बध्यमानोऽर्थः । सर्वा.

**फलम्** - प्रवृत्तिसाध्यम् । न्याप.

**फलमूलिन्यः** - निष्पावसूरणाद्याः । वि.

**फालम्**- कन्दमूलादिखननसाधनविशेषः। रा.

**फल्गुता** - लाघवम् । रा.

**फेनपाः** - स्वयंजीर्णाशिनः । भा.

## ब

**बकवृत्तिः** - ''अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः'' ॥ वि.

[**बकवृत्तयः** - सन्निहितहिंसकाः । र.]

**बडबा**-अश्वस्त्री । रा. अश्वा । बृ. तुरगस्त्री । सुबा.

**बडिशम्** - मत्स्यबन्धनम् । रा.

[**बदर्याश्रमः** - बदर्यः कर्कन्धूवृक्षाः तत्प्रधानं मुनिस्थानम् । या.]

**बद्धः** - (जीवः) अनुवृत्तसंसारः । य.

**बद्धकच्छः** - दृढीकृतपरिकरः । वि.

**बद्धाः** - स्वरूपतो नामान्तरभजनार्हावस्थाभावेऽपि क्लेशादिमन्तः । त.

**बद्धात्मसमष्टिभूतः** - चतुर्मुखः । तस्य समष्टिभावो नाम स्वशरीरानुप्रविष्टतदण्डापेक्षितसकलकर्मवश्यजीवकत्वम् । रत्न. समष्टित्वं कर्मवश्यजीवानां तच्छरीरानुप्रविष्टत्वम् । न्यासिटी.

**बन्धः** - कर्म । बृ. श्री. कर्मफलानुभवार्थदेहसम्बन्धः । त. कर्मबन्धः । अति. जन्मजरामरणादि । श्रु. पुण्यापुण्यकर्ममूलक सुखदुःखभोक्तृत्वम् । अधि. सशरीरत्वम् । श. संसारयाथात्म्यम् । गी. संसारः । वे.

**बन्धकी** - असती । वि.

**बन्धनम्** - अभिमतगतिनिवृत्तिहेतुः । ता. कारागृहम् । रा.

**बन्धुः** - जन्मत एव हितैषी । गी. प्रकृतिसम्बन्धवान् । सुबा.

**बन्धुरम्** - फलकासंघाटः । रा. मनोहरम् । या. सुन्दरम् । 'बन्धुरं सुन्दरे नम्रे' इति । रा.

**बन्ध्यक्षाः** - भाषाबन्ध्यनपूर्वकाणि द्यूतानि । भा.

**बभसः** - भक्षणशीलः श्रीनृसिंहः । असुरसंहारक इति यावत् । छा.

**बभ्रुः** - अनन्तरूपो यो बिभर्ति पृथ्वीं सः । सह.

**बर्बरम्** - विषमितम् । विकल्पितमिति यावत् । अधि.

**बलम्** - अनाघ्रातश्रमप्रसङ्गं सर्वधार-

कत्वम्। गद्य. (वर्णविषये) अल्पप्राणत्व-महाप्राणत्वादिलक्षणम्। तै. कार्यकरणे श्रमाभावः। रत्न. कार्यभरणम्। श्रीत. रत्न. देशकाल वैगुण्यादिजन्यदैन्यराहित्यम्। मु. देहबलम्। भा. देहशक्तिः। भा. धारणसामर्थ्यम्। य. भा. धारणादिशक्तिः। ता. धारणशक्तिः। दि. धारणसामर्थ्यम्। न्याप. पराभिभवनसामर्थ्यम्। भा. प्रयाससहिष्णुता। रा. प्राणाग्न्योरुपचयः। ता. मुख्यसाधनम्। वर. रूपम्। 'बलं रूपेऽस्थनि स्थौल्यशक्तिरेतश्रमूषु च' इति वैजयन्ती। शरीरम्। रा. श्रमप्रसङ्गरहित-सर्वधारणसामर्थ्यम्। दया. सर्वदा सर्वपदार्थजातस्य श्रमलेशमन्तरा धरणशीलत्वम्। न्याति. सर्वदा सर्वजगद्धारणेऽप्यश्रमवत्त्वम्। शर. "सृजन्त्याः श्रमाभावः"। श्रीत.

**बलः** - श्येनविशेषः। काको वा। रा.

**बलवत्** - बलवत्प्रयत्नोपेतम्। छा.

**बलहीनः** - अवसन्नमनाः। मु.

**बला** - उत्साहबलयोर्वृद्धिः। परशस्त्र सहिष्णुता। 'न बाधा क्षुत्पिपासाभ्यां यतः सा कथिता बला'॥ पा.

**बलात्करणम्** - वशीकरणम्। वि.

**बलिः** - उपहारः। पिण्डः। कि. करः। बृ. पूजा। तै.

**बलिभोजनः** - काकः। रा.

**बलिष्ठः** - मनोबलवान्। श्रु. तै. शरीर-मानससर्वविधबलवान्। "आशिष्टो द्रढिष्ठो बलिष्ठ" इत्यत्र। श्र. तै.

[**बलिशम्** - मत्स्यवेधनम्। र.]

**बलोदयः** - सत्त्वप्रकर्षः। रा.

**बस्तः** - छागः। बृ.

**बहलत्वम्** - निबिडावयवसंयोगवत्त्वम्। रत्न.

**बहिष्कारः** - अप्रामाणिकत्वबुद्धिः। च.

**बहिःप्रज्ञः** - बहिः (रूपादौ) प्रज्ञा येन सः बाह्यपदार्थज्ञापयिता। मा (कू).

**बहिर्व्याप्तिः** - तदभाववद्वृत्तित्वम्। रत्न.

**बहुकुर्वीत** - बहुमतिं कुर्यात्। तै.

**बहुतृणम्** - ईषदसमाप्तं तृणम्। अल्पौ-पम्यार्थे बहुच् प्रत्ययः। सुन्दर.

**बहुत्वम्** - अवस्थाविशेषः, नानात्वं सृष्टिकालिकम्। अवस्थारूपयोरेकत्वबहु-त्वयोः कालभेदेनाविरोधः। अस्य बहुत्व-स्य तद्द्रव्यस्वरूपैक्योनापि न विरोधः। तद्द्रव्यस्यातद्द्रव्यत्वमेव हि विरुद्धम्। न्यासिटी.

**बहुदर्शनाः** - बहूपायज्ञाः। रा.

**बहुपशुः** - पशुसदृशः। श्री.

**बहुपाक्यः** - बह्वस्य गेहे अन्नं पक्तव्यं, स बहुपाक्यः। पक्तव्यबह्वन्नवान्। छा. बह्वस्य गेहे अन्नं पक्तव्यमस्तीति। भाव.

**बहुमुखम्** - सर्वतीदिक्कम्। सर्वविषयम्। सर्वा.

**बहुरूपरूपः** - इच्छागृहीतबहुविधरूपः। वि.

**बहुलः** - भूतान्तरेभ्य आकाशस्य महत्त्वाद् बहुलत्वम्। छा. वैश्वानरात्मनो मध्यकायस्याऽऽकाशस्य नामैतत्। अग्नि.

**बहुलीकृतः** - ख्यापितः । वि.
**बहुवित्** - नानातन्त्रनिष्णातः । अधि.
**बहुशिराः** - (बहूनि शिरांसि) परस्सहस्रं फणा अस्य । सह.
**बहुसुवर्णकः** - यज्ञविशेषः । बहुसुवर्णकाख्यः क्रतुविशेषः । "सुबहूनि सुवर्णानि यत्रोपकरणत्वतः । विन्दते सक्रतुः सद्भिः स्मृतो बहुसुवर्णकः" ॥ इति वचनात् । रा.
**बहूदकः** - कर्मोपसर्जनीकृत्य ज्ञानप्रधानः। भा.
**बह्वृचाः** - ऋग्वेदाध्येतारः (होतृमैत्रावरुणादयः) । म.
**बाढम्** - दृढम् । पा.
**बाणः** - विकुक्षिनृपपुत्रः । रा.
[**बाणलेखा** - बाणपातकृतव्रणः । ई.]
**बाणाः** - बाणवृक्षाः । रा.
**बाणासनः** - धनुः; बाणाः अस्यन्ते क्षिप्यन्त इति । रा.
**बादरायणः** - वेदान्तसूत्रकृदाचार्यः । श्री. [निखिलनिगमव्यसनव्यसनी भगवान्नारायणो व्यासरूपी । सच्च.]
**बादरिः** - कश्चिदाचार्यः । श्री.
**बाधः** - अदुष्टकारणजा निषेधबुद्धिः । आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः । श्रु. अभावग्राहि प्रमाणम् । भाव. कार्यमुखेन विकृतिं प्राप्तानां प्राकृताङ्गानां द्वारलोपप्रत्याम्नानप्रतिषेधपर्युदासैः निवृत्तिः । भाव. निषेधधीजन्या भ्रमत्वबुद्धिः । भाव. प्रतिपन्नोपाधौ निषेधः । च. प्रतिबन्धः । सर्वा (आ). प्रबलप्रमाणेनोपरोधः । अधि. भ्रमत्वबुद्धिः । भाव. यद्देशकालसम्बन्धितया यदस्तीत्युपलब्धम् तद्देशकालसम्बन्धितया तस्य नास्तीत्युपलब्धिः । श्री. विषयापहारः; विषयासत्त्वमिति यावत् । भाव. सङ्कोचः । छा. साध्याभावनिश्चयः । सर्वा (आ). साध्यासमानाधिकरणधर्मवत्त्वम् । वा. स्वप्रतीतिकालेऽप्यसत्त्वम् । श.
**बाधकम्** - (ज्ञानम्) पूर्वज्ञानविषयाभावावगाहि । भाव.
**बाधकत्वम्** - अदृष्टकारणजन्यत्वे सति निषेधरूपत्वम् । श्रु.
**बाधसमः** - जात्युत्तरविशेषः । न्याप.
**बाधितत्वम्** - अदुष्टकारणजन्यनिषेधबुद्धिविषयत्वम्, दोषानधीनज्ञानविषयीभूताभावप्रतियोगित्वमिति यावत् । रत्न. नास्तीतिधीविषयत्वम् । श्रु.
**बाधितविषयत्वम्** - प्रबलप्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वम् । य.
**बाध्यम्** - नास्तीति वेद्यम् । त.
[**बार्हस्पत्याः** - चार्वाकाः । ई.]
**बालः** - अज्ञानी । मु. अविवेकी । भाव. ग्रहणधारणपटुः । अधि. बालसमः, अनिष्पन्नज्ञानः। गी. अल्पप्रज्ञः । क.
[**बालचन्द्रसोदरः** - सुरद्रुमः । "हरशिरश्चन्द्रकलैव दुग्धोदादुत्पन्ना । क्षयवृद्धिशाली प्रसिद्धचन्द्रस्तु अत्रिनयनात् । उभयोर्भेदानादरात् उभयत्राप्युभयोर्जन्म

कविभिरुच्यति इति चन्द्रलोके-जयदेवेनोक्तम्'' । या.]

**बालाकिः** - बलाकस्यापत्यम् । गार्ग्य-ब्राह्मणः उशीनरमत्स्यकुरुपाञ्चालकाशी-विदेहवासी । कौ.

**बालिशः** - मूर्खः । रा.

**बाल्यम्** - अज्ञानम् । रा. बालस्य यत् स्वभावानाविष्काररूपं कर्म यत् । श्री. माहात्म्यानाविष्काररूपबालस्वभावविशेषः। श्रु. शक्तिविद्याभिजनाद्युत्कर्षाणां सताम-नाविष्करणम् । न्यासि. स्वमाहात्म्याना-विष्करणलक्षणबालस्वभावः । बृ.

[**बाष्कलसंहिता** - ऋग्वेदीयसंहिता-विशेषः । सच्च.]

**बाष्पः** - ऊष्म । अश्रुजलं च । रा.

[**बाहमध्यम्** - वक्षः । सच्च.]

**बाहाः** - बाहवः । सुन्दर.

**बाहुल्यम्** - गौरवम् । रा.

**बाह्यः** - अणुहेतुको भूतभौतिकसंघः (बौद्धमते) । भाव.

**बाह्यम्** - वेदविरुद्धम् । वै.

**बाह्यचरिताः** - बाह्यं चरितं येषां ते । चरितस्य बाह्यत्वं शास्त्रनिरस्तत्वम् । वै.

[**बाह्यशौचम्** - मृज्जलाभ्यां शुद्धिः ।]

**बाह्याः** - प्रत्यक्षैकप्रमाणकाः । अधि. वेदं प्रमाणतयाऽनङ्गीकुर्वन्तो माध्यमिकादयः । नै.

**बाह्यान्तरहविर्भुक्** - बाह्यं हविः चरु-पुरोडाशसान्नाय्यादि, आन्तरं प्रपदनाख्ये यजने होमद्रव्यं जीवरूपं हविः, तदुभयं भुङ्क्त इति । या.

[**बाह्लीकाः** - सर्वदा हरिस्मरणवर्जिता बाह्लीकनामकतामसदेशविशेषवासिनः । 'हरिबाह्यास्तु बाह्लीका न स्मरन्ति हरिंकचित् ।' इति भारतवचनात् । सच्च.]

**बाह्लीकः** - देशविशेषः । भाव.

**बिभर्ति** - स्वीकरोति । तै. वे.

[**बिम्बः** - प्रतिमा । या.]

**बिम्बम्** - प्रतिमाविशेषः । श्वे.

**बीजम्** - उपादानत्वाख्यस्वभावः । सर्वेषां परिणामिद्रव्याणां स्वकार्यपरिणामसाम-र्थ्यम् । प्ररोहकारणं तत्तदुपादानद्रव्यम् । ता.

**बीजक्षणः** - बीजरूपः क्षणः । क्षण्यते हिंस्यते इति क्षणः । बौद्धमते वस्तुतः कालस्याभावात् घटादेरेवोद्यतः स्वरस-भङ्गुरतया क्षणकल्पनानिमित्ततया क्षण्यत इति व्युत्पत्त्या च क्षणशब्दार्थत्वात् । न्यासिटी.

**बीजप्रदः** - चेतनवर्गसंयोजकः । गी.

**बीजमव्ययम्** - कलिकालाद्यवग्रहेषु पुनः पुनः धर्मप्ररोहण कर्ता । सह.

**बीभत्सा** - कुत्सा । रा. जुगुप्सा । रत्न. भीषयितुमिच्छा । न्यासिटी.

**बुडिलः** - कश्चन ऋषिः । छा.

**बुद्धम्** - अतिरोहितनित्यप्रकाशम् । त. भासमानम् । श्रु.

**बुद्धः** - विरतनिद्रः । रा.

**बुद्धान्तम्** - बुद्धं बोधः भावे निष्ठा, अन्त-

शब्दः स्थानवचनः, बोधस्थानं जाग्रत्स्थानम्। बृ.

**बुद्धिः** - अध्यवसायः, 'बुद्धेरात्मा महान् पर' इत्यादौ। बुद्धिमत्त्वाज्जानातीत्यादि प्रयोगात् मनसो निरूपणसामर्थ्यम्। बुध्यतेऽनयेति बुद्धिः। ता. अध्यवसायरूपज्ञानविशेषः। अन्तःकरणं वा। श्रु. अध्यवसायरूपत्वान्महानेव बुद्धिशब्दार्थ इति सांख्यमतायोगेऽपि अध्यवसायनिमित्तविशेषत्वात् महान् बुद्धिः। अध्यसायवृत्तिविशिष्टं मनः। न्यासि. अध्यवसायात्मकं अन्तःकरणम्। वि. अध्यवसायोपेतं मनः। क. अन्तःकरणम्। रा. अन्तःकरणस्याध्यवसायात्मिका वृत्तिः। अध्यवसायवृत्तिविशिष्टमन्तःकरणं वा। गीसं. (अपुरुषार्थेषु पुरुषार्थत्वा) ध्यवसायः। ता. अर्थप्रकाशः। न्याप. ऊहापोहरूपज्ञानम्। रा. ध्यानम्। वि. महान्। गी. महत्तत्त्वम्। भाव. व्यवसायवृत्तेर्मनसोऽनुग्राहकं महत्तत्त्वम्। सुबा. विवेकपूर्वकं निश्चयरूपं ज्ञानम्। गी. अनुष्ठानदशाभाव्यनुसन्धानाद्विलक्षणः तद्धेतुतया ततः पूर्वभावी शास्त्रादिजन्योऽध्यवसाय इह बुद्धिशब्दार्थः। ता. विवेकः। सामान्यतो ज्ञानम्। रा. [तात्कालिकगोचरज्ञानम्। ई.]

**बुद्धिभेदः** - बुद्धेरन्यथाकरणम्। ता.

**बुद्धिमन्तः** - ज्ञानस्वरूपात्मविदः। वि.

**बुद्धिमान्** - कृत्स्नशास्त्रार्थवित्। प्रकृष्टबुद्धिः। ता.

**बुद्धियुक्तः** - बुद्धियोगयुक्तः। गी.

**बुद्धियोगः** - प्रधानफलत्यागविषयकं अवान्तरफलसिद्ध्यसिद्ध्योस्समत्वविषयकं च ज्ञानम्। गी. विपाकदशापन्नो योगः, प्राप्तिपूर्वभावी विशदतमसाक्षात्कारावस्थाविशेषः। ता.

**बुद्धिवैक्लब्यम्** - बुद्धिदौर्बल्यम्। रा.

**बुद्धेरर्पणम्** - (मय्यर्पितमनोबुद्धिः इत्यत्र) फलप्रदत्वाध्यवसायः। ता.

**बुद्धेरात्मनि नियमनम्** - स (आत्मा) एवोपादेयतथा साक्षात्कार्यः इत्येतदर्थविषयत्वापादनं बुद्धेः। श्रु.

**बुद्धेः वशीकरणम्** - विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम्। श्रु.

**बुध्यर्थः** - उपासनार्थः। श्वे. श्री.

**बुध्यर्पणम्** - फलप्रदत्वाध्यवसायः। ता.

**बुद्बुदम्** - शुक्रशोणितं सप्तरात्रोषितम्। न्यासि.

**बुधः**-पञ्चविदोपरमोपयुक्त विवेकज्ञानवान्। गी.

**बुध्नः** - मूलम्। छा.

**बुभूर्षति** - भर्तुमिच्छति। बृ.

**बुभूषति** - भवितुमिच्छति। बृ.

**बृन्दारकः** - राजत्वेन पूज्यमानः। बृ.

**बृन्दावनम्** - मधुरोपकण्ठे वनविशेषः। या.गी. बृन्देति गोकर्णकस्य नाम तत्प्रधानं वनं बृन्दावनमिति केचित्। दण्डकावनमितिवत्सामान्यविशेषसमासेन बृन्दावनमि-

त्यपरे। वयन्तु 'श्रीमद्वृन्दावनं नाम वनं त्रिदशपूजितम्'। 'बृन्दावनवनोत्पन्नकदम्बतरुकोटरः' इति हरिवंशपुराणादिवचनेषु वनशब्दान्तरसमभिव्याहारदर्शनात् बृन्दावनमित्येतावदपि विशेषनामेत्यालोचयामः। या.

**बृह्मणम्** - स्वप्राप्तिसाधनम्। त.

**बृह्मणत्वम्** - अखिलहेयप्रत्यनीकत्वम्। अधि.

**बृसी** - महदुपवेशार्हमासनम्। तपस्विनामुचितमासनम्। रा.

**बृहत्** - अपरिच्छिन्नम्। क.तै. व्याप्त्या विपुलं परमव्योमादि चुलकीकृत्य अतिमहता(भवता?) महिम्ना महतो महीयान्। सह. महत् पूजितं वचः। श्रीसू. सामविशेषः (तदधिष्ठातृदेवताविशेषः)। कौ. सामविशेषः। वि.

**बृहत्त्वम्** - कल्याणगुणैकतानत्वम्। अधि.

**बृहद्रूपः** - एकैकमेव बृहत् दिग्व्योमावकाशं व्याप्नुवत् रूपमस्येति। "द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इति। सह.

**बृहद्भानुः** - बृहन्तः नित्यदीप्रा भानवः अस्येति। सह.

**बृहद्रतः** - कर्मवश्यः। भा.

**बृहद्रतम्** - नैष्ठिकब्रह्मचर्यम्। भा.

**बृहन्** - महान्। बृ.

**बृहस्पतिः** - 'बृहतां पतिः; गिरां पतिर्ह्यसौ'। ता.

**बेरम्** - कृत्रिमशरीरम्। रा.

**बैडालव्रतिकः** - 'प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम्'। बिडालवृत्तिः। वि.

[**बैडालव्रतिकाः** - वञ्चकाः। र.]

**बोधः** - ज्ञानयोगः। अति. धर्मभूतज्ञानम्। च. बुद्धेर्जातः। वि. (भगवद्गुणान्तर्गतज्ञानम्) सर्वत्र सर्वथा सर्वस्य सत्यत्वेन साक्षात्कर्तृत्वरूपं ज्ञानम्। न्यासि. वेदान्तज्ञानम्। सुन्दर.

[**बोधायनः** - स्मृतिप्रणेता महर्षिविशेषः। सच्च.]

**बौद्धगन्धिवेदान्तिनः** - मृषावादिनः। न्यासिटी.

**ब्रह्म** - अक्षरम्। गी. अनवधिकातिशयबृहत् अनवधिकातिशयबृह्मणञ्च। 'बृहति बृह्मयति,' 'बृहत्त्वात् बृह्मणत्वाच्च' इति पृथगभिधानस्वारस्यात् समुच्चयोपादानस्वारस्याच्च' इत्यपरे।. सर्वातिशायित्वं अपरिच्छेदात् यास्कनिरुक्तिसामर्थ्याच्च सिध्यति। त. अवयवार्थपौष्कल्येऽपि श्रीः न ब्रह्म। लोकवेदयोस्तत्र तत्प्रयोगाभावेन रूढेस्तत्राभावात्। श्रीत. असङ्कुचितविज्ञानतया बृहत्। छा. गुणैः पूर्णम्। मा(कू). चतुर्मुखः। (नपुंसकत्वं छान्दसम्)। बृ. (जीवः) आत्मा। न्यासिटी. जीवः। बृ. जीवजातम्। म. जीवात्मा। गी. नारायणः। बृ. निरतिशयबृहत्। त. निरतिशयबृहत्। अविर्भूतब्राह्मरूपः। बृ. निरतिशय (अनवधिकातिशय) बृहत्। यत्तु आथर्व-

णिकी निरुक्तिः पौराणिकी प्रसिद्धिश्च ब्राह्मणत्वमप्याह तद्गोबलीवर्दन्यायादिति न विरोधः । ब्रह्मणत्वस्य बृहत्त्वविशेषत्वाच्च । 'विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' इतिवत् पदान्तरपौनरुक्त्यपरिहाराय बृहच्छब्दो ब्रह्मणत्वात्मकबृहत्त्वादन्यत्र वर्तत इत्येके। त. निरतिशयबृहत् । छा. निरतिशयबृहत्वबृंहणत्वविशिष्टम् । न्यासि. निरतिशयबृहत्त्ववत् । श्री. ध्येयम् । नि. परमात्मा । श्रु. प्रकृतिजीवभूतं ब्रह्म । म. प्रकृतिः । अत्र प्रमाणं - 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' (मुण्डक), "मम योनिर्महद्ब्रह्म", इत्यादि । गी. प्रकृतिपरिणामरूपं शरीरम् । गी. प्रणवः । वि. प्रत्यगात्मा । गी. बृहत्त्वगुणयोगि । न्यासि. बृहत्, बृंहणम् । च. बृहत्त्वगुणयुक्तम् । तै. "बृहति बृहयति । तस्मादुच्यते परं ब्रह्मे"ति । बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते । श्रृ. बृहति बृंहयतीति च ब्रह्म । "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति श्रुतेः । रा. बृहत्त्वगुणयोगि शरीरादेरर्थान्तरभूतं, स्वतश्शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वम्। गी. बृहत्त्वब्रह्मणत्वसमुच्चयवत् । त. ब्राह्मणः । बृ. जीवः । श्रु. ब्रह्मसमानाकारशुद्धात्मा । गीसं. मन्त्रः । रा. विप्रः । भा. वेदः । वि.बृ.गी.रा.भा.तै. व्यक्ताव्यक्तसमष्टिपुरुषान् बृंहयति । सह. शुद्धप्रत्यगात्मा ब्रह्मसाम्यात् ब्रह्मेति व्यवहारः) । ता. सङ्कल्पाश्रयः । वेकौ. स्वभावतो निरस्तनिखिलदोषः अनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमः । सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्दः । स च सर्वेश्वर एव । श्री. सर्वानुकूलं हेयप्रत्यनीकं अपरिच्छिन्नं तेजोद्रव्यम् । नी. स्वरूपतो गुणतश्च बृहत् । तै. स्वरूपतो गुणतश्च अनवधिकातिशयं वस्तु । अधि. स्वरूपतो गुणतश्च बृहद्भूतम् । प्र. हिरण्यगर्भः, तस्य प्रथमजत्वेन ब्रह्मसामीप्यात् (स एनान् ब्रह्म गमयतीत्यत्र पूर्व पक्षे) । श्री. ["मूर्तं ब्रह्मे" त्युक्तदिव्यविग्रहः । र.]

[**ब्रह्मकूर्चम्** - प्रायश्चित्तार्हस्य पुंसो विहितः पञ्चगव्यविशेषः । सच्च.]

**ब्रह्मकृद्ब्रह्मा** - चतुर्मुखनियामकः । सह.

[**ब्रह्मकैवर्तम्** - पुराणविशेषः । सच्च.]

**ब्रह्मगन्धः** - देशविशेषविशिष्टब्रह्मसान्निध्यातिशयानुकल समेधमानविकासावस्था विशेषाः ब्रह्मगन्धब्रह्मरसादि शब्दैरभिलप्यन्ते । ब्रह्मणस्सर्वगन्धत्वादेः सर्वगन्धस्सर्वरस इति प्रतिपन्नत्वात् यथाश्रुतार्थग्रहणेऽपि न दोषः । कौ.

**ब्रह्मगर्भा (प्रकृतिः)** - आत्मगर्भा महागर्भा वा । वि.

**ब्रह्मगुणः** - परमात्मविशेषणभूतः । भा.

**ब्रह्मघातकः** - "ज्यौतिषं व्यवहारं च प्रायश्चित्तं चिकित्सकम् । विना शास्त्रेण यो ब्रूयात् तमाहुर्ब्रह्मघातकम् ।" र.

**ब्रह्मघोषः** - वेदपारायणघोषः । रा.

**ब्रह्मचक्रम्** - ब्रह्माश्रितं जगच्चक्रम्, अथवा ब्रह्म प्रकृतिः प्रकृतिप्राकृतचक्रम्। श्वे.

**ब्रह्मचक्रे** - ब्रह्मरूपे चक्रे। श्वे.

**ब्रह्मचर्यम्** - ऊर्ध्वरेतस्त्वम्। यद्वा अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेन तत्....इति श्रुतेः ब्रह्मप्राप्त्यर्था या काचिदपि चर्या ब्रह्मचर्यम्। ता. ऋत्वितरकालेषु स्त्रीसंगराहित्यम्। भा. गुरुकुलवासस्त्रीसङ्गराहित्यादि। क. ब्रह्मचारिधर्मः। श्री मधुमांसवर्जनादिको ब्रह्मचारिधर्मः। रा. योषित्सु भोग्यताबुद्धियुक्तेक्षणादिरहितत्वम्। गी. स्त्रीनियतिः। श्रु. सुबा. स्त्रीसङ्गराहित्यम्। मु. स्त्रीविषयतृष्णात्यागः। छा. स्तनवति पिशितपिण्डे भोग्यधीगर्भस्मरणालोकनालापादिरहितत्वम्। ता. [ब्रह्मशब्दो वेदपरः तदध्ययननियमस्य लक्षकः। तपोवाचित्वेन तस्यापि वाचको वा। "वेदस्तत्त्वं तपो ब्रह्म" त्यमरः। तस्य चर्यमनुष्ठानम्। "गदमदचरयमश्चानुपसर्गे" इति यत् प्रत्ययः। या. विषयवैराग्यम्। मैथुनत्यागः। ई.]

**ब्रह्मचर्यमुवास** - ब्रह्मचर्यं चरन्नुवास। छा.

**ब्रह्मचर्यमूषतुः** - ब्रह्मचर्यं चेरतुः। छा.

**ब्रह्मचारी** - शिष्यः। बृ.

**ब्रह्मजज्ञः** - जीवः; ब्रह्मणो जातत्वात् ज्ञत्वाच्च। क.श्री.

**ब्रह्मज्ञः** - वेदान् अर्थपर्यन्तं साक्षात्करोति। सह.

**ब्रह्मज्ञानम्** - ब्रह्मोपासनम्। 'ब्रह्मज्ञानस्य अनन्ताक्षयफलत्वाच्चे'त्यत्र। त.

**ब्रह्मणः पन्थाः** - ब्रह्मप्राप्त्युपायभूतो योगः। ता.

**ब्रह्मणस्पतिः** - नारायणः; चतुर्मुखस्य पतिः; वेदस्य पतिः। तै. [चतुर्मुखस्यापि स्वामी परमात्मा। सच्च.]

**ब्रह्मणि जीवस्य नियमनम्** - तच्छेषताप्रतिपत्तिः। श्रु.

**ब्रह्मणि मनोगतेः संयोगः** - विषयविषयिभावः। नि.

**ब्रह्मण्यः** - ताभ्यां (प्रकृतिजीवाभ्यां) स्थितिभोगादिसर्वावस्थाहेतुत्वेन हितः। सह. ब्रह्मकुले साधुः। ब्रह्मणि परस्मिन् नितरां साधुः। भा.

**ब्रह्मण्यदेवः** - तपोवेदादिहितः देवः। वि. [विष्णुः। पांच.]

**ब्रह्मदण्डः** - ब्रह्मशापः। युगान्तरसमुत्थितोऽग्निवर्णो धूमकेतुः। ब्रह्मशापो वा। रा.

**ब्रह्मनिष्ठाः** - ब्रह्मसाक्षात्कारवान्। मु.श्रु. साक्षात्कृतपरमपुरुषस्वरूपः। (... समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्)। स्फुटवचनक्षमत्वं अदृष्टत उपकारकतमत्वं च ब्रह्मनिष्ठशब्दस्य अभिप्रेतमित्याह .....। त.

**ब्रह्मनिर्वाणम्** - आत्मानुभवसुखम्। गी. ब्रह्मैव निर्वाणम्; ब्रह्मणि निर्वाणम्। ता.

**ब्रह्मपथः** - अर्चिरादिमार्गः। बृ. ब्रह्मप्रापकः पन्थाः। छा.

**ब्रह्मपरे** - ब्रह्माराधनरूपे। श्वे.

**ब्रह्मपारमयम्** - ब्रह्मपारस्वरूपम् । वि.
**ब्रह्मपुरम्** - ब्रह्माख्यं पुरम् । श्री. शरीरम् । उपास्यतया सन्निहितस्य परब्रह्मणः स्थानतया नवद्वारादिमत्त्वादिना च पुरशब्दितमिदं शरीरम् । भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्तमानं दहराकाशाख्यं ब्रह्म । छा. शरीरम् । श्रु.
**ब्रह्मबन्धुः** - यः स्वयमब्राह्मण एव सन् ब्राह्मणान् बन्धुत्वेन व्यपदिशति स ब्रह्मबन्धुरित्युच्यते । छा.
**ब्रह्मबीजम्** - प्रणवम् । भा.
**बह्मभावः** - ब्रह्मणो भावः अनुप्रवेशः । श्रु.
**ब्रह्मभूतम्** - (अपहतपाप्मत्वादि) ब्रह्मधर्मयुक्तम् । वि. निरतिशयबृहत्त्वं प्राप्तम् । नि.
**ब्रह्मभूतः** - स्वस्वरूपेण अवस्थितः । गी.
**ब्रह्मभूयम्** - ब्रह्मत्वम् । गी.ता. ब्रह्मभावः। गी. ब्रह्मपरिणामः । नी.
**ब्रह्मयोनिः** - वसिष्ठः । रा.
**ब्रह्मयोनिम्** - ब्रह्मणो वेदस्य-योनिभूतम् । श्वे.
**ब्रह्मराक्षसः** - ब्रह्मणत्वविशिष्टराक्षसः । रा.
**ब्रह्मराक्षसः** - राक्षसत्वं प्राप्ता ब्राह्मणाः । अकृतप्रायश्चित्ताप्रतिग्राह्यप्रतिग्रहायाज्ययाजनादिपापैः राक्षसत्वं प्राप्ताः । रा.
**ब्रह्मरातः** - ब्रह्मविषयकज्ञानदाता । भा.
[**ब्रह्मरात्रम्** - संहिताविशेषः । सच्च.]

**ब्रह्मलोकः** - भगवल्लोकः । छा. अप्राकृतलोकः । रा. चतुर्मुखलोकः । परमात्मा । बृ. परं ब्रह्म । श्री. परमव्योम । श्रु. ब्रह्मैव लोकः । वा.श्री.श्रु.मु.बृ.वि. ब्रह्मणो लोकः। वि. भगवल्लोकः श्रीवैकुण्ठः । कौ. ब्रह्माभिन्नो लोकः, ब्रह्मणो लोको वा । बृ.
**ब्रह्मलोकाध्यक्षः** - हिरण्यगर्भः । श्री.
**ब्रह्मवर्चसम्** - वृत्ताध्ययनजं तेजः । वृत्ताध्ययनसमृद्धिः । छा.
**ब्रह्मवादिनः** - ब्रह्मवदनशीलाः । श्वे. ब्रह्मैककारणत्ववादिनः । वि. वेदवादिनस्त्रैवर्णिकाः । गी.
**ब्रह्मवादी** - वेदवेत्ता । छा.
**ब्रह्मवादिनी** - ब्रह्मवदनशीला । बृ.
**ब्रह्मवान्** - बृहत्त्ववान् । तै.
**ब्रह्मवित्** - निरतिशयबृहत्त्वाश्रयवस्तूपासकः । तै. वेदवित् । मह.
**ब्रह्मवित्कर्मविधूननम्** - अन्तिमप्रत्ययपर्यन्तोपासननिर्वृत्त्यनन्तरं यो विनष्टाश्लिष्टयोः कर्मणोः फल नैव दास्यामीति भगवत्सङ्कल्पः, तद्विषयभावः । कौ.
**ब्रह्मवित्कर्मविनाशः** - यद्ययमुपासकः प्रक्रान्तमुपासनं समापयेत्, पूर्वकर्मणः फलं न दास्यामीत्येवं परमात्मसंकल्पः । (उपासनं दर्शनसमानाकारज्ञानम्) । कौ.
**ब्रह्मविद्या** - उपनिषद्भागः । श्रु. विवेकादिजन्या भक्तिरूपापन्ना परविद्या । (ब्रह्मविद्यामधिष्ठाय .....) । त. वेदाङ्गभूतशिक्षादिविद्या । छा. स्वाध्यायः।

"तेषामेवैतां ब्रह्मविद्यां वदेते"ति श्रुतेः। अधि.

**ब्रह्मशब्दरूढिः** - "पुरुषोत्तममात्रे इयम्। कारणत्वादिभिरिव श्रीनिवासत्वेनापि ब्रह्मशब्दरूढिः स्थाप्यते"। श्रीत.

**ब्रह्मसंपद्यते** - संशुद्धावस्थो भवति। अत्र ब्रह्मशब्दो मुक्तवाची। 'ब्रह्मणो हि प्रतिष्ठाहं - ब्रह्मभूयाय कल्पते' इति प्रयोगात्। भा.

**ब्रह्मसंस्थः** - ब्रह्मनिष्ठः। न चात्र ब्रह्म संस्थशब्दात् सन्न्यासाश्रमप्रतिपत्तिरिति शंक्यम्। ब्रह्मसंस्थशब्दस्य प्रोक्षणीन्यायेन यागेनैव वृत्त्युपपत्तौ सन्न्यासे रूढेरनभ्युपगन्तव्यत्वात्। ..... । न च संपूर्वस्य तिष्ठतेः समाप्तिवाचकत्वात् अनन्यव्यापारत्वलक्षणायाः ब्रह्मणि समाप्तेः सन्न्यासिष्विव अग्निहोत्रादिकर्मान्तरव्यग्राश्रमान्तरेषु असम्भवात् ब्रह्मसंस्थशब्देन परिव्राडेवोच्यत इति वाच्यम्। स्वाश्रमोचितधर्मव्यग्रतायाः सन्न्यासिष्वविशिष्टत्वात् तदतिरिक्तव्यापारराहित्यस्य सर्वाश्रमेष्वपि सम्भवात्। छा.

**ब्रह्मसंस्थत्वम्** - ब्रह्मणि संस्था संस्थितिः यस्य तत्त्वम्। श्री.

**ब्रह्मसंस्पर्शः** - ब्रह्मानुभवरूपं सुखम्। गी.

**ब्रह्मसंसत्** - ब्राह्मणसमाजः। क.

**ब्रह्मसर्गः** - महत्तत्त्वसृष्टिः। वि.

[**ब्रह्मसूक्तम्** - महोपनिषन्मध्यगताः 'सहस्रशीर्षम्' इत्याद्या एकोनविंशतिर्मन्त्राः। सच्च.]

**ब्रह्मसूत्रपदानि** - ब्रह्मप्रतिपादनसूत्राख्यानि पदानि शारीरकसूत्राणि। गी.

[**ब्रह्मसूत्रम्** - यज्ञोपवीतम्। सच्च.]

**ब्रह्मस्थली** - वेदाध्ययनस्थानम्। रा.

**ब्रह्मस्वरूपः** - आविर्भूतापरिच्छिन्नज्ञानैकाकारभगवच्छेषतैकस्वभावात्मस्वरूपः। गी.

**ब्रह्मा** - चतुर्मुखः। गी. बृहत्वगुणयोगी। ब्रह्म वा। श्रीसू.

**ब्रह्मांशः** - विशिष्टब्रह्मण एकदेशः। श.

**ब्रह्माण्डम्** - पञ्चीकृतभूतेषु स्वानुप्रविष्टजीववर्गमनुप्रवेश्य तैरेव तत्त्वैर्दशगुणितोत्तरसप्तावरणवेष्टितं हेमाख्यपरिणामगतभूतमयं भगवत्सृष्टम्। न्यासि.

**ब्रह्मात्मभावम्** - ब्रह्मसादृश्यम्। नि.

**ब्रह्माप्येति** - ब्रह्मण्यप्येति आत्यन्तिकलयंगच्छति। परित्यक्तकर्मकृतदेवमनुष्यादिनामरूपे ब्रह्मणि ..... प्रतिष्ठितो भवति। सुबा.

**ब्रह्मालङ्कारः** - ब्रह्मप्रेरिताप्सरस्समानीतः मालाञ्जनचूर्णवासःफणरूपोऽलङ्कारः ब्रह्मप्राप्तये स्वीकार्यः। कौ.

**ब्रह्मार्पणम्** - ब्रह्म यस्य हविषोऽर्पणम् तत् ब्रह्मार्पणम्। अर्प्यतेऽनेनेत्यर्पणं स्रुगादि। तत् ब्रह्मकार्यत्वात् ब्रह्म। न्यासिटी. (हविः), ब्रह्म यस्य (हविषः) अर्पणं तत्। गी.

**ब्रह्मिष्ठम्** - अतिशयेन ब्रह्मज्ञानसंपन्नम्। भा.

**ब्रह्मी** - सर्वमेतत् प्रमाणप्रमेयरूपं ब्रह्म स्वमिति। सह.

**ब्रह्मैवभवति** - "अत्र एव शब्दस्साम्यवाचीति न्यायसुदर्शनम्"। न्यासि. नित्यसाक्षात्कृतब्रह्मशरीरभावो भवति। न्यासिटी. ब्रह्मसदृशो भवति। ब्रह्मशब्दः ब्रह्मसदृशे गौणः ब्रह्मसादृश्यञ्च ब्रह्मतादात्म्यापरोक्ष्यवत्त्वम्। रत्न.

**ब्रह्मैव सन्** - ब्रह्मसमानाकारः सन्। सुबा.

**ब्रह्मोद्यः** - ब्रह्मवादः। बृ.

**ब्रह्मोपनिषत्** - ब्रह्मविद्या, ब्रह्मोपासनमित्यर्थः। श्रु.

**ब्रह्मोपेतः** - कश्चित् राक्षसः। वि.

**ब्राह्मम्** - अपहतापाप्मत्वादिकम्। श्री. ब्रह्मसम्बन्धिगुणाष्टकम्। श्रु. ब्रह्मसम्बन्धि अपहतपाप्मत्वादिगुणलक्षण रूपम्। छा.

**ब्राह्मः** - सूर्योदयात्प्राक् तृतीयो मुहूर्तः। वि.

**ब्राह्मणः** - अधीतवेदः, ब्रह्म वेदमधीते इति ब्राह्मणः। ब्राह्मणत्वजातिविशिष्टः। बृ. किञ्चिद्वेदाध्यायी, 'वेदानां किञ्चिदधीत्य' ब्राह्मणः इति श्रुतेः। श्रु. किञ्चित् वेदाध्येता। वि. वेद्यव्यवस्थापनार्थं स्वयमत्रिगोत्रादौ दत्तात्रेयादिरूपेण ब्राह्मणो भवतीति। ब्रह्म नयत्यणतीति वा। सह. ब्रह्मवित्। बृ. ब्रह्मविद्यानिष्ठः। श्रु. ब्रह्मवित्। ब्रह्मणोऽनुभविता। मुक्त इति यावत्। ब्रह्मवित्; लब्धनिदिध्यासनः। बृ. विद्यावान्। श्री. वेदाध्ययनरतः। वेदाभ्यासरतः। (परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो . . .) अत्र न्यायसिद्धानुवादांशे जातिवाचिनोऽपि ब्राह्मणशब्दस्य प्रकृतकर्मपरीक्षणौपयिकसाङ्गाध्येतृसमर्पणेन अजहल्लक्षणया त्रैवर्णिकविषयत्वार्थं वेदाभ्यासरत इत्युक्तम्। ब्रह्म अणतीत्यपि ब्राह्मणशब्दं निर्ब्रुवन्ति। त. वैदिकः ब्रह्म अणतीति निरुक्त्या ब्राह्मणः। "शकन्ध्वादिषु पररूपं वक्तव्यं" इति पररूपे कृते प्रज्ञादित्वादण्प्रत्यये च ब्राह्मण इति रूपं भवति। ब्रह्म चात्र वेदः, वेदेषु इत्यत्रैव प्रसक्तत्वात्। अतोऽत्र ब्राह्मणशब्दो वैदिकमात्रपरः। ता.

**ब्राह्मणत्वम्** - अदृष्टविशेषः, शक्तिविशेषो वा। उद्रिक्तसत्त्वगुणवत्त्वम्। रत्न. धर्मादितारतम्याधीनं सत्त्वरजस्तारतम्यं शक्तितारतम्यं वा ब्राह्मणत्वादि सन्ततिविशेषः। न्यासिटी.

**ब्राह्मणाः** - वेदान्वयिनस्त्रैवर्णिकाः। गी.

**ब्राह्मणायनः** - ब्राह्मणजातिमात्रोपजीवी (ब्राह्मणोऽयनं यस्य सः)। बृ.

**ब्राह्मण्यम्** - नेदं ब्राह्मणमातापितृजन्यत्वरूपम्, मानसब्राह्मणादिषु तदभावात्। न्यासि. ब्राह्मणसमूहः। रा.

**ब्रूहि** - उपदिश। छा.

## भ

**भकारः** - "सम्भर्तेति तथा भर्ता, भकारोऽर्थद्वयान्वितः। वेकौ.

**भक्तः** - निखिलहेयप्रत्यनीकं

समस्तकल्याणगुणात्मकं ब्रह्मावधार्य तत्प्राप्त्युपायभूतां भक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामः । य. शरणागतः । वि.

**भक्तम्** - अन्नम् । छा.

**भक्तवत्सलः** - भक्तलाभसम्भ्रमविस्मृतान्यकामः । सह. भक्तेषु दोषादर्शी । भा.

**भक्तिः** - अधिकमान्यविषयः स्नेहः । रा. उत्कृष्टे प्रीतिः । रा. उपकारकत्वकृतः स्नेहविशेषः । भाव. पूजनम् । नि. प्रीतिरूपमनुध्यानम् । शर. प्रीतिविशेषः । न्यासि. प्रीतिरूपापन्नध्यानम्, 'स्नेहपूर्वमनुध्यानम्' । स एव भक्तियोगः । परमभक्तिरतिशयितप्रीतिः । ता. प्रेमपूर्वानुध्यानम् । भा. भूयसी सेवा भक्तिशब्दवाच्येत्यभियुक्ताः । भाव. महनीयविषये प्रीतिः । सर्वा. ता. न्यासि. त. स्तो. महनीयविषया प्रीतिः । वर. महनीयविषयकः स्नेहः । दया. महनीयविषया प्रीतिः । वै. महनीयविषये प्रीतिः । गीसं. महनीयविषया प्रीतिः । त. वेदान्तोदितसपरिकरभक्तियोगः । गद्य. स्नेहपूर्वमनुध्यानम् । गी. महनीयविषये प्रीतिरेव स्नेहपूर्वमनुध्यानमिति भाव्यम्, अन्यथा स्नेहपूर्वस्वप्रियतमानुध्यानस्यापि भक्तित्वप्रसङ्गात् । ता.

**भक्तित्वम्** - प्रीतिरूपतापन्नदर्शनसमानाकारध्रुवानुस्मृतिरूपध्यानत्वम् । वा.

**भक्तिनिष्ठा** - भक्तियोगाभ्यासः । वे.

**भक्तिप्रभावः** - भक्त्यतिशयः; परभक्तिः । वै.

**भक्तिभागिनः** - भक्तियोगभाजः । सुन्दर.

**भक्तियोगः** - आप्रायाणादनुवर्तनीयदर्शनसमानाकार निरतिशयप्रीतिरूपापन्नस्मृतिसन्तानः । व. भक्तिरेव योगः, भक्तियोगः । "योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु" इति पाठाद्योगशब्दोऽत्र उपायपरः । ध्यानपरत्वेऽपि सामान्यविशेषपरतयाऽन्वयसिद्धिः । गीसं. यमनियमाद्यष्टाङ्गयुक्त तैलधारावदविच्छिन्नस्मृतिसन्तानरूपः । य.

**भक्षगृध्रः** - भक्षलोलुपः । रा.

**भक्षणम्** - स्वभोगोपकरणीकरणम् । बृ.

**भक्षयन्ति** - स्वकैङ्कर्येषु विनियुञ्जते । छा.

**भगः** - ज्ञानाद्युत्कर्षः । भा. पूर्वफल्गुनीनक्षत्रदेवता । रा. प्रजापतिः । रा.यत्नः । रा. षण्णां गुणानां भग इति संज्ञा । वैको.

**भगम्** - ऐश्वर्यादि । तै.

**भगदैवतनक्षत्रम्** - उत्तरफल्गुनी । रा.

**भागभाजनः** - निरतिशयसौन्दर्याश्रयः । भा.

**भगवत्कर्म** - भगवदाराधनबुध्या विहितं वेदाध्ययनादि सर्वं कर्म । गी. आलयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पाहरणपूजाप्रवर्तननामसंकीर्तनप्रदक्षिणस्तुतिनमस्कारादिवैशेषिकं कर्म । ता. भगवदसाधारणं भक्त्यन्तरङ्गं सततं कीर्तयन्तो

मामित्यादिभिः प्रपञ्चितमितिहासपुराण-भगवच्छास्त्रादिप्रसिद्धं कर्म। ता.

**भगवच्छक्तिः** - लक्ष्मीः। श्रीत.

**भगवच्छास्त्रम्** -नारायणैकप्रतिपादकं शास्त्रम्। वे. [पाञ्चरात्रम्। सच्च.]

**भगवती** - निरतिशयज्ञानशक्तिबलैश्वर्य-वीर्यतेजसां निधिभूता। 'ज्ञानशक्तिबल' इत्यारभ्य 'विना हेयैर्गुणादिभिः' इति हि स्मर्यते। गद्य. पूर्णषाड्गुण्यरूपा। रत्न.

**भगवत्प्राप्तिः** - भगवदनुभवः। ता.

**भगवत्त्वम्** - हेयप्रतिभटत्वविशिष्ट कल्याणैकतानत्वम्। स्तो.

**भगवदपचारः** - भगवत्सम्बन्धिषु वस्तुषु स्वीयत्वबुद्धिः, अर्चावतारपर्यन्तेष्ववतारेषु प्राकृतत्वबुद्धिरित्यादिः। गद्य.

**भगवदुपासनम्** - भगवत्प्राप्त्युपायभूता भक्तिः। गी.

**भगवदैश्वर्यम्** - भगवदैश्वर्यमपि न देवी प्रतिसम्बन्धिकम्। तस्या अपीश्वर-तत्त्वत्वात्। श्रीत.

**भगवद्दृशाः** - भवादृशाः। छा.

**भगवद्भक्तः** - अत्यर्थप्रियत्वेन कीर्तन-स्तुतिध्यानार्चनप्रणामादिभिर्विनाऽऽत्म-धारणमलभमानः। गी.

**भगवन्तः** - पूजावन्तो गुरवः। छा.

[**भगवन्निग्रहसङ्कल्पः** - प्राप्तिविरोधी, उपायविरोधी, प्रतिकूलानुभवहेतुः, इति त्रिविधः। र.]

**भगवान्** - अध्यात्मबोधातिशयवान्। (भगवद्बोधायनकृताम्)। त. ईश्वरः। श्रु. 'ज्ञानशक्तबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः। एवमेष महाशब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः'। वे. 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैः गुणादिभिः'। श्रु. ज्ञानशक्त्यादिकल्याण-गुणवान्। वै. निरतिशयज्ञान शक्ति-बलैश्वर्यवीर्यतेजसां निधिः। ''ज्ञानशक्ति-भगवच्छब्दवाच्यानि विना हेयैः गुणादिभिः'' इति श्रीविष्णुपुराणम्। ता. निर्दोषो मङ्गलगुणकश्च। श्रु. पराशरादि-निरुक्तप्रकारेणोभयलिङ्गविशिष्टः। गद्य. पूजार्हः। तै. (भगवः); पूजार्हः। बृ. पूज्यपूज्यः। सह. पूर्णषड्गुणः। भा. माहा-त्म्यवान्। रा. वासुदेवः। 'भगवान् वासुदेवः परा प्रकृतिः' इत्यादिश्रुतेः। श्रु. वीर्यवान्। रा. शब्दोऽयं वासुदेवा-साधारणः। श्वे. षाड्गुण्यपरिपूर्णः सर्वेश्वरः। वेकौ. षाड्गुण्यपरिपूर्णः। भा. सर्वकारणकारणम्। वेकौ. ''सम्भर्तेति तथा भर्ता भकारोर्थद्वयान्वितः। नेता गमयिता स्रष्टा गकारार्थस्तथा मुने। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः। ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः। श्री. सृष्ट्यादिपञ्चकृत्योपयुक्तहेयप्रत्यनीककल्याणगुणविशिष्टः । ता. हेयप्रत्यनीककल्याणैकतानः । श्रु. हेयप्रतिभटषाड्गुण्यशाली। श्वे.

**भगहा** - भगेन गुणषट्केन सह हन्ति सर्वत्र गच्छतीति भगहा। सह.

[**भग्नम्** - (गणितशास्त्रे) करणेन, व्ययितम्। या.]

**भगीरथः** - दिलीपनृपपुत्रः। रा.

**भगेशः** - ऐश्वर्यादीनां षण्णामीशः। श्रु.

**भगेशम्** - ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ज्ञानवैराग्ययोश्च भगशब्देरितानामीश्वरम्। श्वे.

**भगोः** - भगवन्। सम्बुद्धौ "विभाषा भवद्भगवदघवतामोच्चवस्ये"ति ओत्वं रुत्वं विसर्गश्च। बृ. भगवन्। 'विभाषा भवद्भगवदघवतामाच्चावस्य' इति रूपसिद्धिः। वै.

**भङ्गः** - नित्यनैमित्तिकप्राकृतरूपः (प्रलयः)। श्रु. वधः। सुन्दर.

**भजनम्** - अर्चनम्। नि. दर्शनम्। सेवकान् प्रति सेव्यस्य भजनं नाम सुलभदर्शनत्वम्। ता. भक्तियोगः। वर. सेवा। सुन्दर.

**भजस्व** - अनुकूलो भव। भा.

**भद्रः** - अरण्यसञ्चारक्षमो गजविशेषः। रा. पौरजानपदवृत्तान्तहरो रामस्य भृत्यविशेषः। रा.

**भद्रपीठम्** - "श्लक्ष्णं षडङ्गुलोत्सेधं षोडशाङ्गुलविस्तृतम्। द्वात्रिंशदङ्गुलायामं क्षीरवृक्षसमुद्भवम्। पद्माञ्चितं भवेद्भद्रपीठं स्नपनकर्मणि। या.

**भद्रम्** - सामविशेषः (तदधिष्ठातृदेवता)। कौ.

**भद्रा** - भजनीया। सर्वमङ्गलावहा। श्रीसू.

**भद्रासनम्** - सुखासनम्। राजासनम्। या.

**भन्दनम्** - शुभम्। भदि कल्याणे। सुन्दर.

**भन्दनाः** - कल्याणाः, सुखाः। सुन्दर.

**भयम्** - आगामीष्टविरोध्यनिष्टागमोत्प्रेक्षा। ता. आगामिदुःखहेतुदर्शनजनितदुःखम्। अच्यु. आगामिभूतदुःखज्ञानेन चेतश्चलनम्। सि. आगाम्यनिष्टापत्तिज्ञानरूपदुःखम्। श्रु. आगामिनो दुःखस्य हेतुदर्शनजं दुःखम्। गी. आगामिप्रत्यवायोत्प्रेक्षा भयम्। साऽप्युत्प्रेक्षा प्रतिकूलरूपत्वाद्दुःखमेव। ज्ञानातिरिक्तदुःखगुणस्यैतन्मतेऽभावात्। ता. चित्तवैक्लब्यदो मानसिकव्यापारः। अच्य. प्रियविश्लेषाप्रिया गमनहेतुदर्शननिमित्तं दुःखम्। गी. प्रियविश्लेषाप्रियागमनयोः दुःखरूपयोः सामग्रीदशामापन्नो यो हेतुः सूचकश्च निमित्तादिः, तस्य यद्दर्शनं सकल सहकारिसम्पत्युत्प्रेक्षागर्भं, दर्शनमिति ज्ञानमात्रपरं वा, तेन यत् दुःखं, तदानीमेवाङ्गकम्पादिहेतुरुत्पद्यते तद्भयमित्यर्थः। ता. (बिभेत्यस्मादिति) भयानकम्। क. भगदायी विषयः। गी. दुर्मानमूलप्रबलविरोधादिः। ता. भयहेतुः। रा.

भाव्यनिष्टगोचरधीः । त. भाविहेतुजन्यं दुःखम्। सुबा.(इष्टानिष्टवियोगसंयोगरूप-दुःखहेतुदर्शनजं दुःखम्। र.)

**भयकृत्** - स्वशासनातिवर्तिनां भयं करोतीति। सह.

**भयनाशनः** - स्वशासनानुवर्तिनां भयं नाशयतीति। सह.

**भयस्थानविवेकः** - भगवदपचारादिना भीरुत्वम्। वे.

**भयानि** - बिभेत्येभ्य इति भयानि व्याघ्रादीनि। बृ.

**भयापहः** - अस्मदादीनामपि स्ववात्सल्येन तादृशानाथत्वभयं वध्यादित्याशंसनार्हः। सह.

**भयाभये** - शास्त्रातिवृत्तिः भयस्थानम्; तदनुवृत्तिः अभयस्थानम्। गी. बिभेत्यस्मादिति भयम्; सर्वशासितुरीश्वरादेव हि तत्त्वविदां भयमभयं च। न हि तत्प्रेरणमन्तरेण केनचिद्बाधितुमबाधितुं वा शक्यम्। ततस्तदाज्ञातिवृत्त्यनुवृत्ती एव भयाभयनिमित्तमिति भावः। ता.

**भरः** - प्रयाससाध्यः स्वाभिमतफलार्थ-व्यापारः। न्याद.

**भरतः** - ध्रुवसन्धिनृपपुत्रः। रा.

**भरद्वाजः** - नित्यब्रह्मचारी। बिभ्रद्वाजं भरद्वाजः। 'भरद्वाजो ह वै त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास' इति श्रुतिः। रा. प्रजाभरणशीलः ''एष एव बिभ्रद्वाजः। प्रजा वै वाजः। ता. एष बिभर्ति। यद्बिभर्ति तस्माद्भरद्वाज इत्याचक्षते'। रा.

**भरद्वाजसंहिता** - संहिताविशेषः। सच्च.

**भरन्यासः** - अकिञ्चने भरस्य तस्य स्वसम्बन्धत्यागपरसम्बन्धापादनया श्चोपपादितत्वात् अस्मै इदं न ममेति समर्पणमुपपन्नमिति (सिद्धान्तः)। न्याद. अयम् आज्ञामुखेन दक्षिणामुखेन वा क्वचिद्भवति, अतथाभूतः प्रार्थनापूर्वकः भगवति। न्याद. भरस्य स्वसम्बन्धत्याग-पूर्वकपरसम्बन्धविधिः। न्याद.(भरस्य स्वरक्षणार्थोपायान्तररूपस्वव्यापार-निवृत्तिरूपस्वत्वत्यागपुरस्सरस्वत्वा-पादनम्। र.)

**भरसमर्पणम्** - भरस्य स्वसम्बन्धत्याग परसम्बन्धापादनबुद्धिः। न्याद.

**भरात्मकव्यापारः** - अधिकारिकर्तव्य-तदनन्तरभगवत्कर्तव्योभयरूपः। न्याद.

**भर्गः** - ज्योतिः। वेकौ. तेजः (परमात्म-स्वरूपम्)। तै. विष्णुः। च.

**भर्त्सनम्** - 'हनिष्यति धक्ष्यति' इति वाचा भीजननम्। रा.

**भर्ता** - धारकः। ता. धारयिता। गी. पोषकः बृ. यो जनान् आत्मदानात् पुष्णाति सः। सह. स्वामी। श्रु. (भार्याप्रतियोगिकभर्तृत्ववान्। सच्च.)

**भर्मस्थलम्** - स्वर्णभूमिः। ई.

**भल्लाक्ष** - विपरीतलक्षणया मन्दलोचने-त्यर्थः। न्यासिटी.

**भल्लाक्षः**-(विपरीतलक्षणा) मन्दलोचनः। छा. हंसः। श्रु.

**भवः** - क्रमेण गर्भान्निष्क्रमणम् (सौगतमते)। बृ. धर्माधर्मौ (बौद्धमते)। श्रु. भद्रम्। रा. भवनम्। मनसो भवनम् अनुकूलानुभवहेतुक उद्धर्षः अवसाद प्रतियोगी। ता. संसारः। या. वर.

**भवन्निधनाः** - भवति निधनं निष्ठा पर्यवसानं यासां ताः। भा.

**भवभूतम्** - भवं संसारं भूतं प्राप्तम्। श्वे.

**भवभृत्** - संसारी जीवः। अधि.

**भवितव्यता** - दुष्कर्मविपाकः। या.

**भवी** - संसारी जीवः। अधि.

**भव्यः** - योग्यः। या. भावी। रा.

**भव्यम्** - भविष्यत्कालः। भाव.

**भव्यरूपम्** - साध्यम्। श्रु. सौम्यरूपम्। रा.

**भव्या** - कल्याणी। या.

**भस्त्रायन्त्रम्** - कृष्णमृगचर्मनिर्मितजलसेचनयन्त्रम्। गो.

**भस्म** - दग्धशरीरम्। ई. म.

**भस्मसात्कुरुते** - भस्मीभूतानि कुरुते। अकार्यकराणि कुरुत इत्यर्थः। ता.

**भाः** - भारूपः। बृ.

**भाक्तः** - अमुख्यः। श्री.

**भागत्यागलक्षणा** - जहदजहल्लक्षणा। च.

[**भागधेयः** - बलिः। "भागधेयः करो बलिः" इत्यमरः। या.]

**भागवतः** - निवृत्तिधर्मानुष्ठानपरः। भा.

**भागवतम्** - भगवत्प्रवणम्। मु.

**भागवतापचारः** - यथाशास्त्रमर्थाद्युपाधिभिः भागवतविरुद्धाचरणम्। गद्य.

**भागवतीं गतिम्** - मुक्तिं। भा.

**भागासिद्धिः** - पक्षैकदेशस्यासिद्धिः। न्यासिटी.

**भानम्** - दीप्तिः। भा दीप्ताविति हि धातुः। श्रु.

**भानुः** - अतिभास्वरेण भास्करेणापि उपजीव्यतेजा भातीति। "यस्यादित्यो भामुपयुज्य भाति"। सह. अविकाराकारवीर्यगुणकतया सर्वनिर्माणेऽपि असावविकुर्वाणो भातीति। सह.

**भामनीः** - सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तः। (भातीतिं भामनीः)। छा.

**भामितः** - कुपितः। श्वे.

**भारः**- प्रयासः। नि. [**(परिमाणम्)** - पलानां सहस्रद्वयम्। "तुला स्त्रियां पलशतं भारस्स्यात् विंशतिस्तुला" इत्यमरः। या.]

**भारती (भूः)** - भरतस्येयम्। वि.

**भारभृत्** - मुक्तानां बन्धस्रंसनस्वरूपाविर्भावस्वप्राप्तिभारं बिभर्तीति। सह.

**भारूपः** - (भास्वररूपः) 'आदित्यवर्णं तमसः परस्तात्, पश्यते रुक्मवर्णं' इत्यादि वाक्य प्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्त विग्रहशाली। छा. भास्वररूपः। अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्य-

रूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। भा. भावस्वरूपः। ता.

**भारुण्डम्** - वनविशेषः। रा.

[**भार्गवः** - स्मृतिप्रणेता महर्षिविशेषः। सच्च.]

**भार्गवच्यवनः**- यमुनातीरवासी तापसविशेषः। रा.

**भार्येभ्यः** - भर्तव्यभार्यापुत्रादिभ्यः। बृ.

**भाल्लवेयः** - भाल्लविसुतः (इन्द्रद्युम्नः)। छा.

**भावः** - अनुरागः। रा. मनोवृत्तिः। अभिप्रायः। गी. ता. क्रिया। श्रु. चित्तवृत्तिः। वै.भा.चेष्टा। रा. जन्तुः। अति पदार्थः। सर्वा (आ).ता.गीसं. परिणामविशेषः। गी. प्रकारः (भावशब्दोऽत्र क्रियावाची पदार्थमात्रवाची वा सन् प्रकाराख्यविशेषे विश्रान्तः)। ता. (१५-१९). (भवतीति); परमात्मज्ञानेन लब्धसत्ताकः। मा (कू). मनोवृत्तिविशेषः। स्पृहा। विद्यमानता। श्री. व्यापारः। या. सत्ता। श्रु. सर्वविभूतिभिः (कलापीव प्रचलाकेन) विशिष्टतया भवतीति। सह. स्थायिभावादिः। सुन्दर. स्वभावः। ता. गी. स्वरूपम्। सर्वा (आ). [मनः। र.]

**भावग्राह्यम्** - भक्तिग्राह्यम्। श्वे.

**भावनः** - सम्भूय अनिष्टनिवारणादिना जनान् उज्जीवयति इति। सह. हितप्रापकः। रा.

**भावनम्** - अपेक्षितैः पोषणम्। ता.

**भावना** - अनुभवप्रकर्षजनितदृढसंस्कारः। पा. अनुष्ठेयविषय आन्तरः प्रयत्नः। वे. अनुभवजन्यः संस्कारः, चिन्तैव वा। त. मनोव्यापारः। या. वासना। श्रु.

**भावनात्रयम्** - कर्मभावना, ब्रह्मभावना, उभयभावना चेति। ता.

**भावबन्धः**-अभिप्रायदार्ढ्यम्। परज्ञानम्। वै.

**भावयन्ति** - उपासते। भा.

**भावरूपाज्ञानम्** - ब्रह्मज्ञाननिवर्त्याज्ञानविशेषः। नी.

**भावविकाराः** - भावरूपविकाराः, भावस्य विकारा इति वा। श्रु. भावरूपा विकाराः। बाह्यानां भावानां सम्भवन्तो वा। त.

**भावशक्तयः** - वस्तुशक्तयः। श्रु.

**भावसंशुद्धिः** - आत्मव्यतिरिक्तविषयचिन्तारहितत्वम्। गी. भावशब्दोऽत्राभिप्रायार्थः। तस्य संशुद्धिः समस्तेतरवर्जनम्। ता.

**भावाः** - तत्तद्रसोचिता विभावानुभावसञ्चारिणः। या. वियदादिपदार्थाः। म. अवस्थाः। भा.

**भावान्** - कामान्। श्वे.

**भावान्तराभावः** - कयाचिद्व्यपेक्षया भावान्तररूपोऽभावः। च.

**भावाभावकरम्** - सर्गसंहारकारकम्। श्वे.

**भावार्थः** - क्रिया। श.

**भावार्थाः** - क्रियारूपाः । "भावार्थाः कर्मशब्दाः" (जैसू) । श्रु.

**भावाष्टकम्** - धर्माधर्मज्ञानाज्ञान-वैराग्यावैराग्यैश्वर्यानैश्वर्याणि (सांख्यमते)। सर्वा (आ).

**भाविताः** - वासिताः । वि.

**भावितात्मा** - ध्यातात्मस्वरूपः । रा.

**भावितात्मानः** - ध्यातात्मानः । रा.

**भावित्वात्** - भवितव्यतायाः केनाप्य-परिहार्यत्वात् । भा.

**भावुकाः** - भावनाकृतो भगवद्भक्ताः । तत्तद्भावचेष्टाविशेषज्ञाः; रसिकाः । या.

**भाव्यम्**-प्राक्कर्मतो भावि। वि. साध्यम्। च.

**भाव्ये** - ध्यातव्ये । सर्वा.

**भाष्यम्** - "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥ श्रु.

**भास्करद्युतिः**- परपरिभावुकप्रभावत्त्वात् भास्करस्य सूर्यस्येव द्युतिः दीप्तिः अस्येति। सह.

**भास्वतः** - प्रकाशवतः । छा.

**भास्वररूपम्** - तेजोगतरूपम् । न्यासि.

**भिदा** - वैषम्यम् । भा.

**भिदुरत्वम्** - क्षणिकत्वम् । सर्वा (आ)

**भिदुरा** - भिन्ना । अधि.

**भिद्यते** - नाश्यते । म.

**भिन्दिपालः** - आयुधविशेषः । रा.

**भिन्नः** - दुराचारः । भा.

**भिन्नम्** - सम्पृक्तम् । 'भिन्नमन्यार्थवचने सम्पृक्ते दारिते स्फुटे' इति विश्वः । या.

**भिन्नत्वम्** - विरोधिधर्माश्रयत्वम् । श्री.

**भिषक्** - भवरोगनिदानचिकित्साज्ञः । सह.

**भीः**- आगामिदुःखशंका । बृ.

**भीमः** - तदनुग्रहविमुखानां अनात्म-नीनानां गर्भनरकादिहेतुत्वेन शत्रुवद् भीषणः । (मर्यादातिवर्तिनः) बिभ्यत्य-स्मादिति । सह.

**भीमपराक्रमः** - जगदहितनिरतेषु हिरण्यादिषु भीमः पराक्रमोऽस्येति । सह.

**भीमरथी** - 'सप्तत्याःसप्तमे वर्षे सप्तमे मासि सप्तमी । रात्रिर्भीमरथी नाम सर्वप्राणिभयङ्करी ॥' इत्युक्तलक्षणा प्राणिन गण्डभूता रात्रिः । या.

**भीषा** - भयात् । ता.

**भुक्तम्** - अतिथिभोजनम् । भा.

**भुजगोत्तमः** - भुजगस्य शेषस्य उत्तमः शेषी अनन्तभोगपर्यङ्कशयनः । सह.

**भुजङ्गः** - विटः । गो.

**भुञ्जन्ति** - पालयन्ति । 'भुज पालने' इति भुजः पालने परस्मैपदित्वात् । कौ.

**भुञ्ज्युः** - परिपालयन्ति । बृ.

**भुनक्ति** - परिपालयति, प्रीणयति । बृ.

**भुवनम्** - कार्यवर्गः (भवतीति भुवनम्) । श्रु. सजीवात्मकाचिद्वर्गः । त.

**भूः**-भवतीति । वि. सर्वाधारसत्तावान् । सह.

**भूगर्भः** - भूः (भूमिः) भगवती ह्रीक्ष्माद्यपरपर्याया सदानुभवेन भरणीया गर्भभूता अस्येति। सह.

**भूतः** - प्राप्तः। रा. सिद्धः। श्रु. शरीरी। ता.

**भूतम्** - अचिद्विशिष्टक्षेत्रज्ञः। ता. आत्मवर्गः। श्रु. क्षेत्रज्ञः। देवमनुष्यादिरूपेणावस्थितो जन्तुः। ता. पृथिव्यादिमहाभूतम्। अचेतन (पाञ्चभौतिक शरीरः?) विशिष्टचेतनः, 'क्षरस्सर्वाणि भूतानि,' 'भूतानां प्राणिनः श्रेष्ठाः'। (अस्ति भगवत्यपि प्रयोगः, 'महद्भूतमपार' मिति 'तेजस्तेजस्विनाम्। सत्त्वं सत्त्ववता' मितिवत् 'भूतानामस्मि चेतने' ति प्रयोगाद् भूतपदं चेतनपरंगम्यते 'मया भूतं चराचरम्' इत्यादिबलात्।) भगवद्ज्ञानेनलब्धसत्ताकम्। 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिश्रुतेः। श्रु. भवतीति; अकर्मकत्वात् कर्तरि क्तः। भाव. भवतीति भूतम्; जगत्। रा. यथावस्थितम्, तात्त्विकम्। भा. विशिष्टशब्दादि विषयाधिकरणम्। य. सत्यम्, यथार्थम्। 'भूतं न्याय्ये समे प्राप्ते यथार्थातीतयोरपि' इति रत्नमाला। या.

**भूतकृत्** - सर्वाणि भूतानि स्वतन्त्रः सृजतीति। सह.

**भूतगणाः** - रुद्रपार्षदादयः। ता.

**भूतग्रामवान्** - प्रत्यगात्मा। श्री.

**भूतधारिणी** - भूमिः। या.

**भूतपालः** - भूतानां पालः रक्षकः। बृ.

**भूतपूर्वः** - भूतानां पूर्वः। वि.

**भूतप्रकृतिमोक्षः** - भूताकारपरिणतप्रकृतिमोक्षोपायः अमानित्वादिकः। गी.

**भूतभर्ता** - नारायणः। रा.

**भूतभर्तृ** - पृथिव्यादीनां भूतानां देहरूपेण संहतानां भर्तृ। गी.

**भूतभव्यभवत्प्रभुः** - कालत्रयवर्तिनां प्रभुः कालत्रयेऽपि सर्वशेषी। सह.

**भूतभव्यभवन्नाथः** - (ईदृशं) स्वाम्यमैश्वर्यं वा न केवलं अद्य, किन्तु त्रिकालेष्वापि। ततः भूतभव्यभवतां अतीतागामिवर्तमानकालत्रयवर्तिनां नाथः ईश्वर इति। सह.

**भूतभावः** - मनुष्यादिभावः। गी.

**भूतभावनः** - भूतधारयिता। गी. भूतानां सत्तानुवर्तकः। श्रु. भूतानि धारकपोषकभोग्यप्रदानेन भावयति वर्धयतीति। सह.

**भूतभावनम्** - भूतोत्पादकम्। भूताभ्युदयहेतुम्। भा.

**भूतभावनी** - व्यष्टिसृष्टिकरी। श्रु.

**भूतभूतः** - पञ्चभूतशरीरः। वि. भूतसूक्ष्मत्वेन आविर्भूतः। वि.

**भूतभृत्** - भूतानि बिभर्तीति। सह.

**भूतमहेश्वरः** - भूतेश्वरब्रह्मयमादिनियन्ता। भूतानां ब्रह्मयमादय ईश्वराः तेषामपि ईश्वरतया अयं महेश्वरः। सह.

**भूतमात्राः** - ग्राह्यग्राहकजातं सर्वम्। कौ. वागादीन्द्रियग्राह्यनामादयः। (अत्र स्पर्शो नोक्तः)। कौ.

**भूतमाला** - सूक्ष्मस्थूलभूतमयी। वि.

**भूतयज्ञः** - पृथिवीपर्जन्यादिबलिः। वि.

**भूतयोनित्वम्** - जगत्कारणत्वम्। श्रु.

**भूतलम्** - भूविवरम्। रा.

**भूतविद्या** - वशीकरणविद्या। छा.

**भूतसङ्ग्रहः** - देहः। वि.

**भूतसर्गः** - तन्मात्राणां सृष्टिः। वि.

**भूतात्मन्** - अचिदन्तरात्मन्। भा.

**भूतात्मा** - प्राणः। रा. भूतस्य पञ्च-भूतात्मकशरीरस्यात्मा जीवात्मा। रा. भूतानां शरीरकारणानामात्मा। सुबा. (शरीरभूत) भूतानां आत्मतया स्थितः। सह. सर्वप्राणिरूपः। वि.

**भूतादिः** - अहंकारभेदः। वि. आकाशादिभूतानामादिभूतस्तामसाहङ्कारः। सुबा. तामसः। श्री. तामसाहङ्कारः। सर्वा (आ).न्यासिटी. (स्पृहणीयतमत्वात्) भूतैः आदीयते (उपादीयते) इति। सह.

**भूतानि** - अचित्संसृष्टा जन्तवः। ता. भूतशब्दशरीरपरः। सुबा. सजीवानि शरीराणि। गी.

**भूतानां प्रभवः कालः** - भूतानां कारणभूतः परमात्मा। रा.

**भूताय** - परमकारणाय। भा.

**भूतावासः** - भूतानामावासः स्थानमिति। सह.

**भूताश्च अर्थाः** - सम्यगुपायप्रयोगात् निष्पन्नप्राया अर्थाः। रा.

**भूतिः** - उपयान्तररहितानां समृद्धा विभूतिः। सह. ऐश्वर्यम्। उत्पन्नायाः समृद्धेरुत्तराभिवृद्धिरूपभवनं भूतिः। ता.ऐश्वर्यम्। तै.योगः, अलब्धलाभः। भा. लक्ष्मीः। वि. विभूतिः। सर्वा.

**भूपरिधिः**- भूगोलमित्येके। भुवो मर्यादेत्यपरे। सर्वा (आ).

**भूमविद्या** - परमभक्तिविशेषः। न्यासि. [ब्रह्मविद्यास्वन्यतमा। सच्च.]

**भूमा** - प्रचयः। या. प्राचुर्यम्। रत्न. बहुत्वम्, प्रचयः। या. भूमशब्दो बहुत्ववाची। बहुत्वं चात्र वैपुल्यं, न संख्याविशेषः। वैपुल्यं च गुणोत्कर्षरूपं, न परिमाणरूपम्। अल्पशब्दप्रतियोगितया निर्दिश्यमानो भूमशब्दो वैपुल्याश्रय-धर्मिपरः।. बहुत्वं आश्रिताः (वागादयः प्राणाः)। छा. भूयस्त्वम्। बहुत्वमित्यर्थः। भा. महिमा। विस्तारः। वै. विपुलः। यं भावप्रत्ययान्तः। तथाहि - पृथ्वादिषु बहुशब्दः पठ्यते। ततः 'पृथ्वादिभ्य इमानिज्वे' ति इमानिच् प्रत्यये कृते 'बहोर्लोपो भु च बहो' रिति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति। वैपुल्यमित्यर्थः। अत्र प्रकरणात् धर्मिवाचीति निश्चीयते। (भूमा सम्प्रसादादित्यत्र)। विपुलं, समस्त-मित्यर्थः। श्री. [माहात्म्यम्। र.]

**भूमिः** - (स भूमिं विश्वतो वृत्वा) ब्रह्माण्डम्। श्वे. भवन्ति अस्यां **सर्वे** पदार्थाः। तै.

**भूमिका** - मूर्त्यन्तरपरिग्रहः । या. वेषपरिग्रहः । रत्न.

**भूमिकाभेदः** - इतिवृत्तम् । रत्न.

**भूमिगृहाः** - भूमिबिलगृहाः । रा.

**भूम्नः** - स्वरूपस्वभावाभ्यां अपरिच्छिन्नस्य । भा.

**भूयः** - भूमानम्, परमात्मानम् । अत्र भूयशब्दो भूमवाची । यद्वा भूयः मुहुर्मुहुः । बृ. पश्चात् । श्रु. वैपुल्यार्थाद् बहुशब्दात् आतिशायनिके ईयसुन्प्रत्यये भूय इति रूपम् । विपुलतरम् । छा.

**भूयस्त्वम्** - प्रवृद्धत्वम् । रा.

**भूयान्** - उत्कर्षवान् । कौ. महान् । बृ.

**भूयिष्ठम्** - अतिशयेन । रा.

**भूयोदर्शनम्** - भूयस्सहचारदर्शनम् । सर्वा (आ).

**भूयोऽपि** - यथापूर्वम् । या.

[**भूरितेजस्त्वम्** - अनन्यापेक्षता । पराभिभवनसामर्थ्यम् । विग्रहगतमुत्कृष्टं तेजः । सच्च.]

**भूरिदक्षिणः** - अश्वमेधादिभिः यजमानः । भूरिदक्षिणः अश्वमेधादिः सोऽस्यास्तीति । सह.

**भूर्भुवः** - भुवः भूः भवतीति भूः स्वदास्यज्ञानेनात्मलाभवान्; तस्य भुवः स्वयमेव भूः पदं भवतीति । सह.

**भूर्भुवस्स्वस्तरुः** - भूलोकान्तरिक्षलोकद्युलोकस्थैः प्राणिभिः पक्षिपथिकैरिव उपजीव्यमानच्छायपत्रलपारिजातः । सह.

**भूशयः**- भूमिषु शेत इति (स्वयंव्यक्तादिषु) । सह .

**भूषणम्** - अचिद्वर्गस्य परिणामविशेषः । शर.

**भूषैः** - भूषणैः । भूषाशब्दस्य नपुंसकत्वं व्याकरणनिपुणविचारणीयम् । सुन्दर.

**भृ(बृ?)गलम्** - विदलम् । बृ.

**भृङ्गः** - षिद्गः । 'भृङ्गो मधुपषिद्गयोः' इति रत्नमाला । या.

**भृत्यत्वम्** - यजमानेनैव धारणीयत्वे सति पोषणीयत्वम् । स्तो.

**भृशदुर्गमाः** - अत्यन्तं दुरत्ययाः । रा.

**भेदः** - अपरसामान्यम् । नी . अभेदबुद्धिविरोधी । वे. इतरेतराभावः । नी. ऐक्याभावः, विभागः । न्यासि. देहनुबंधिष्वप्रियापादनम् । भा. नानात्वम् । च. (भिद्यत इति) घटादिः । च. भेदकधर्मः । सर्वा (आ.) मित्रादिवर्गस्य द्वैधीकरणम् । रा. यदग्रहात् यत्र यदध्यासः सर्वेष्टः, यद्ग्रहे चासौ न स्यात् स हि तस्य तस्माद् भेदः । तदेवाभेदनिवृत्तिः । त. यद्ग्रहो यत्र यदारोपविरोधी स हि तस्य तस्माद् भेदः । गोत्वादि च गृह्यमाणं स्वस्मिन् स्वाश्रये चाश्वत्वाद्यारोपं निरुणद्धीति स्वस्य स्वाश्रयस्य च स्वयमेव तस्माद्भेदः ॥ यद्दर्शने यत्र यदारोपो न भवति स हि तस्य ततो भेदः । स एव च विशेषः । न्याप. 'यस्मिन् यद्दर्शने येषामध्यासो नोपपद्यते । तस्य भेदः स तेभ्यः स्यात

तदुक्तिस्तु विवक्षया' ।। श. विरुद्ध-धर्माध्यासः । सर्वा. विशेषः । सर्वा (आ). च . गीसं. भाव. वैधर्म्यम् । व्यक्तितो वर्गतश्च परस्परव्यावृत्तिरूपो धर्मः । गद्य.

**भेदकः** - भेदसाधकः । रत्न.

**भेदकम्** - विशेषणम् । अधि.

**भेदकरः** - परस्परस्नेहकार्यविच्छेदकरः । रा.

**भेदवच्छेदः** - भेदप्रतियोगितावच्छेदक-रूपः । रत्न.

**भेदविधा** - "अतिरेको व्यतिरेकश्च" । न्यासि.

**भेदाः** - महदादिकार्याणि (सांख्यमते) । सर्वा (आ).

**भेद्यम्** - विशेष्यम् । अधि.

**भेषजम्** - असाध्यसंसारव्याधेः परमौष-धम् । सह.

**भेषजकृतः** - कृतौषधः (कृतभेषजः) । छा.

[**भैमरथी** - नाशको रात्रिविशेषः । या.]

**भोक्ता** - स्वयमपि तदर्पितस्य (उपासित्र-र्पितस्य) प्रापणादेरमृतस्ये भोक्ता । यथा 'अश्नामि प्रयतात्मनः' इति । घृतक्षीरमधु-शर्करामिश्रगोधूमतण्डुलपक्वपायसं प्रापण-शब्दितमिति नामनिर्वचनम् । सह. जीवः । च. देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता । गी. (भोक्ता भोग्यं प्रेरितारं च) । भोक्तार-मित्यर्थः । वे. हव्यकव्यभोक्ता । स्ववर्धित-देवविहितकर्मप्रवर्तकः । 'भुज पालनाभ्य-वहारयोः' । सह.

**भोगः** - अनुकूलत्वप्रकारकसाक्षात्कारः । वा. अनुभवः । सुन्दर. कर्मफलानुभवः । अधि. तत्कालस्वसमवेतसुखदुःखसाक्षा-त्कारः । ता. ब्रह्मयाथात्म्यानुभवः । श्री. शुद्धसत्त्वविभूत्यनुभवजन्यरसः । व. सर्प-शरीरम् । सुन्दर. सुखानुभवः । बृ.

**भोगभूतिः** - नित्यविभूतिः । न्यासिटी.

**भोगवती** - पातालवर्तिनी नागपुरी । रा.

**भोगविभूतिः** - अप्राकृतलोकः । वे.

**भोगायतनम्** - भोगसाधनविशेषः । श्रु. (शरीरम् । ई.)

**भोग्यम्** - सततपरिणामिप्रकृतिद्रव्यम् । नी.

**भोग्यत्वम्** - सर्वानुकूलत्वम् । नी. अनुकूलबुद्धिविषयत्वम् । सर्वा.

**भोग्याकारः** - भोग्यस्याकारः भोग्याकारः। प्रियत्वमिति यावत् । श.

**भोजनम्** - भक्तैर्भुज्यते सुखेनानुभूयत इति। सह.

**भौमः** - नरकासुरः । सुन्दर.

**भौमम्** - पार्थिवम् । श्री.

**भ्रमः** - कर्षणशाणचक्रम् । वि. भ्रम्यत इति । भाव. यत्र विषयव्यवहारबाधः । य.

**भ्रमकः** - अयस्कान्तावान्तरभेदः । न्यासिटी.

**भ्रमणम्** - निरन्तरकर्मविशेषसन्तानः । न्यासि. भ्रमः । सर्वा(आ).

**भ्रमन्तः** - सर्वमर्थतत्त्वं वैपरीयेन मन्वानाः । अधि.

**भ्रमराः** - कामुकाः। 'भ्रमरः कामुके भृङ्गे' इति दर्पणः। रा.

**भ्राजः** - औष्ण्यम्। तै.

**भ्राजिष्णुः** - उपासितृभ्यः प्रकाशनशीलः। सह.

**भ्रातृगन्धी** - भ्रातृहिंसकः। रा.

**भ्रातृव्यः** - रिपुः। सि. शत्रुः। बृ.त. सहजशत्रुः। भा.

**भ्रातृव्याः** - शत्रवः। तै.

**भ्रान्तचित्तः** - अनवस्थितचित्तः। रा.

**भ्रान्तत्वम्** - भ्रान्तिसिद्धत्वम्। श्रु.

**भ्रान्तिः** - अनिष्टप्राप्तिरन्ध्र रूप छिद्रकृत-चित्तस्खलनम्। श्रु. दोषः। सर्वा (आ). धर्मविपर्ययः। अधि. विद्यमान भेदाग्रहणपूर्वक साधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादि-हेतुभूता। श्रु. विशेष्यावृत्तिप्रकारकज्ञानम्। च.

**भ्रान्तित्वम्** - परस्परानन्वितार्थान्वय-विषयत्वम्। भाव.

**भ्रुकुटी** - क्रोधजनित आकारविशेषः। रा.

**भ्रूणः** - कल्पसूत्रप्रवचनाध्यायी। श्रु. श्रुताध्ययनसम्पन्नः। रा. गर्भः। सूत्र-प्रवचनाध्यायी। वि.

## म

[म् - जीवात्मा। 'मन ज्ञाने' इत्यादिधातुभ्यः 'उणादयो बहुल' मिति वा 'अन्येभ्योऽपि दृश्यते' इति वा डप्रत्यये टिलोपे 'बहुलं छन्दसी' ति प्रत्ययाकारलोपे म् इति भवति। तत्र भावार्थे प्रत्यये ज्ञानस्वरूपत्वं कर्त्रर्थे प्रत्यये ज्ञानगुणकत्वं च सिद्ध्यति। र.]

**मः** - जीवः। 'मकारस्तु तयो (हरि-लक्ष्म्यो)र्दासः'। श्रीसू. जीवः। अष्ट. ज्ञानस्वरूपः, ज्ञानगुणकः, अणुपरिमाणश्च जीवः। रत्न.

**मकारार्थः** - ज्ञानानन्दस्वरूपः ज्ञानानन्द-गुणकः जीवः। न्याद.

**मखः** - यागः। अति.

[**मङ्गलत्वम्** - शुभाश्रयत्वम्। र.]

**मङ्गलम्** - इष्टदेवतोपासनम्। वे. मङ्गला-शासनम्। रा. मङ्गलशब्दः स्वसन्निधिमात्रे-णातिसमृद्धिहेतुकल्याणवस्तुपरः। ता. [श्रेयःप्रदम्। र.]

**मज्जा** - अस्थ्यन्तर्गतः स्नेहः, धातु-विशेषः। मांसविशेषः। (नकारान्तः)। छा.

**मटची** - अश्मवृष्टिः। श्रु. अश्ममृष्टिः। मटचीहताः अश्मवृष्टिकृतदुर्भिक्षदूषिताः। छा.

**मणिके** - उद्याने। वि.

**मणिपूरकम्** - नाभिः (मातृकाध्यान-श्लोके)। न्यासिटी.

**मणिमयी** - नागलोकस्था काचिन्नगरी, यत्र पुराऽवसन् निवातकवचा नामासुराः। रा.

**मणिवरः** - कौस्तुभः। सुन्दर.

**मण्डलम्** - विजिगीष्वादिद्वादशविध-राजात्मकम्। समूहः। रा.

**मण्डलानि** - लोकाः । श्री.

**मतम्** - बुद्धिवृत्तिविशेषः । सिद्धान्तः । ता. सिद्धान्तभूतोऽर्थः । रा.

**मतल्लिका** - श्रेष्ठा । वर.

**मतानुज्ञा** - स्वदोषमभ्युपेत्य परदोषप्रसञ्जनं मतानुज्ञा । यथा त्वद्वचनं दुष्टमित्युक्ते तवापि वचनं दुष्टमित्यादि । न्याप.

**मतिः** - अर्थतत्त्वनिश्चयः, अर्थनिर्धारणम्, देवस्त्रीविशेषः, सम्यग्विचारः । रा. ज्ञातुर्ज्ञेयावभासः; अहमिदं जानामीति अहमर्थाश्रयतया सिद्ध्यन् सकर्मकः प्रकाशः । सर्वा. [आगामिगोचरं ज्ञानम् । ई.]

**मतित्वम्** - सकर्मकावभासत्वम्, सकर्तृकावभासत्वम् । न्यासि.

**मतिभ्रमः** - बुद्धिविपर्यासः । रा.

**मतिमन्तः** - मुनयः । वि.

**मतिमान्** - कर्तव्याकर्तव्यविवेकशीलः। रा.

**मतिविहतम्** - उपलम्भविरुद्धम् । सर्वा.

**मत्परमः भगवत्परमः** - भगवानेव परमोद्देश्यो यस्य सः । गी.

**मत्प्रियः** - अहं प्रियः प्रीतिविषयः यस्य स मत्प्रियः, मम प्रियः मत्प्रियः इति वा । ता.

**मत्सरः** - अन्यशुभद्वेषः । प. कौटिल्यम् । भा. परसम्पद्विषये द्वेषः । रा.

**मथितम्** - तक्रम् । 'निरम्बु बोलं मथितं तक्रम्' इति वैजयन्ती । रा.

**मदः** - धनाभिजनविद्यादिमूलमयथायथचेष्टितारम्भकमौद्धत्यम् । गी. विषयभोगनिमित्तो मोहः । भा. विषयलाभसम्भूतश्चित्तविकारः । वर. विहिताविहितविवेकशून्यता । भा. [स्वोत्कर्षाभिमानः । र.]

**मदयन्ती** - वीरसहस्य राजर्षेर्भार्या । रा.

**मदाश्रयः** - मदेकाधारः । गी.

[**मदिरत्वम्** - 'व्याघूर्णमानतारं च क्षामोपान्तविलोकनम् । चक्षुर्विकसितापाङ्गं मदिरम्' इत्युक्तलक्षणश्चक्षुर्विकारविशेषः । या.]

**मदिरेक्षणा** - मदयति दर्पयतीति मदिरं, तादृशं ईक्षणं यस्यास्सा । रा.

**मदीयः** - मत्स्वभावभूतः । गद्य.

**मदेकप्रियः** - अहं एक एव प्रियः प्रीतिविषयः यस्य सः । ता.

**मदेकाधारः** - मदनुभवैकधारकः । ता.

**मदेकचित्तः** - मयि एकस्मिन्नेव चित्तं यस्य सः । ता.

**मदोत्साहः** - साहसकर्माभिनिवेशः । भा.

**मद्गुः** - देवताविष्टो जलपक्षिविशेषः । छा.

**मद्भावः** - (भगवद्भावः) असंसारित्वम् । गी. मदात्मकत्वबुद्धिमान् । भा.

**मद्भावाय** - मत्स्वभावाय । मत्साम्यापत्तय इत्यर्थः । भा.

**मद्राः** - तन्नामका जनपदाः । बृ.

**मधु** - भोग्यम् । मदुवद्भोग्यभूतम्; आनन्दरूपम् । तै.

**मधुः** - कुम्भीनसीभर्ता लोलापुत्रो राक्षसः।

चैत्राख्यो वसन्तमासः। रा. लब्धविद्येभ्यः स्वदमानत्वान्मधुः। 'मन ज्ञाने' अस्मात्स्वाद्वर्थात् फलिपाटिनमीत्यादिना उप्रत्ययो धकारोऽन्तादेशश्च। सह.

**मधुनाडी** - मध्वपूपच्छिद्रम्। छा.

**मधुपर्कः** - अतिथिसत्क्रियार्थो द्रव्यविशेषः। रा.

**मधुमन्तम्** - दण्डस्य इक्ष्वाकुपुत्रस्य प्रधाननगरम्। रा.

**मधुरत्वम्** - 'रसो वै सः, कं ब्रह्म खं ब्रह्म' इत्यादिषु प्रसिद्धनिरतिशयानन्दस्वरूपत्वम्। स्तो.

**मधुविद्या** - परभक्तिविशेषः। न्यासि.

**मधुसूदनः** - रजस्तमोमयप्रबलविरोधिनिरसनशीलः। ता. मधुं असुरं सूदते सूदयति हन्ति वा। मधुं इन्द्रियं सूरिजनकरणं सूदते सूदयति उपसंहरतीति वा। सह.

**मधूकम्** - गुडपुष्पाख्यतरुपुष्पम्। पा.

**मधूकान्** - मधुद्रवाख्यवृक्षान्। रा.

**मध्यः** - प्रागभावस्य प्रध्वंसकालः, प्रध्वंसकालश्च। अधि.

[**मध्यम्** - अवकाशः। अवलग्नम्। या.]

**मध्यस्थः** - जन्मत एव हितैषित्वाहितैषित्वरहितः। ता. रागद्वेषरहितः। रा.

**मध्ये** - ऊर्ध्वतिर्यग्विलक्षणमनुष्यादिरूपम्। श्वे.

**मध्येस्थाता** - उदासीनतया वर्तते (वर्तमानः?)। छा.

**मध्यमं वैष्णवं पदम्** - त्रिविक्रमावतारे त्रिभिः पदैः सर्वलोकक्रमणे मध्यमपदेनान्तरिक्षं क्रान्तमिति आकाशमुच्यते। रा.

[**मध्यमा** - अङ्गुलिविशेषः। सच्च.]

**मध्यमा वृत्तिः** - अपायोपायसन्त्यागी मध्यमां वृत्तिमास्थितः। अनर्थसाधनं किञ्चित् किञ्चिच्चाप्यर्थसाधनम्। अनर्थपरिहाराय किञ्चित् कर्मोपदिश्यते। त्रैराश्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा। अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत्। तृतीयो द्विविधो राशिरनर्थपरिहारकः। प्रायश्चित्तात्मकः कश्चिदुत्पन्नानर्थनाशनः। तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत्। क्रियमाणं न कस्मैचिद्यदनर्थाय कल्पते। अक्रियावदनर्थाय कर्म तत्तु समाचरेत्। एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा। नि.

**मध्यावर्तगृहम्** - पश्चिमद्वाररहितं गृहम्। पश्चिमद्वाररहिता मध्यावर्ता हयानना' इति वराहिमिहिरसंहितायाम्। रा.

[**मध्ये बाहुम्** - बाहुमिति व्यस्तं पदम्। षष्ठ्यर्थे द्वितीया। सुप्तिङादेशश्छन्दसि व्यत्ययस्यानुशिष्टात्वात्। बाह्वोर्मध्ये; 'पारे मध्य षष्ठ्या वा' इति समासः। तत्रच्छान्दसो बाहुमिति निर्देशः। सच्च.]

**मध्वदः** - कर्मफलभोक्ता (जीवः)। क.

**मनः** - धर्मभूतज्ञानम्। वा. मनुत इति सः परमात्मा। बृ. मननम्। तै. मनश्शब्दो बुद्धिपरः। नि. श्रावणस्पार्शनोभयजनकेन्द्रियम्। वा. सङ्कल्पविकल्पवृत्तिकमन्तःकरणम्। गीसं. संयमनसाधनम्।

गद्य. स्मृत्यादिकरणमिन्द्रियम्। न्याप. य. स्मृतिकरणेन्द्रियम् । न्यासि. महत्तत्त्वम् । ''मनो महान्मतिर्ब्रह्मा'' । बृ.

**मनआनन्दम्** - मनसा सङ्कल्पमात्रेण सिद्धः आनन्दः यस्य तत् । तै.

**मननम्** - अनुग्राहकयुक्तिभिः स्थिरीकरणम् । सर्वा. आचार्योपदिष्टार्थस्य स्वात्मनि एवमेव युक्तमिति हेतुतः प्रतिष्ठापनम् । श्री. ''एवमेवैतत्'' इति युक्तितः प्रतिष्ठापनरूपो व्यवसायः । श. ध्यानम् । वि. युक्तिभिः प्रतिष्ठानम् । वर.

**मनःप्रसादः** - मनसः क्रोधादिरहितत्वम् । गी. परेष्वहिताभिप्रायरूपकालुष्यनिवृत्तिः। ता.

**मनःसमाधानम्** - धैर्यकरणम् । रा.

**मनः समाधाय** - प्रकारान्तराद् विनिवार्य प्रस्तुतप्रक्रियायामेकाग्रं कृत्वेत्यर्थः । ता.

**मनश्चितः** - मनश्चीयत इत्यर्थे क्विपि मनश्चित् श्येनचिदादिशब्दवत् । मनश्चिद्वाक्चिदादिः क्रियामयक्रत्वङ्गभूतेष्टचिताग्निसदृशो विद्यामयक्रत्वङ्गभूतः । अग्नि.

**मनश्चिन्ता** - सङ्कल्पः । रा.

**मनसस्पतिः** - करणनिरपेक्षज्ञानः, स्वसङ्कल्पनिष्पाद्यसर्वेन्द्रियः । तै.

**मनसि विपरिवर्तमानत्वम्** - आलोच्यमानत्वम् । श्रु.

**मनसा** - सङ्कल्पेन । रा.

**मनसो बुद्धौ नियमनम्** - अध्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिः अर्थेषु हेयताध्यवसायः । श्रु.

**मनसोऽर्पणम्** - अनुस्मरणम् । य.

**मनसो वशीकरणम्** - मुहुर्मुहुः विषयदोषचिन्तनेन तेभ्यो निवर्तनसंशीलनम् । श्रु.

[**मनस्कारः** - एकस्मिन् विषये पुनः पुनर्मनसः प्रवृत्तिः । या.]

**मनस्कृतः** - हृदि निहितः । त.

**मनस्यति** - इदं कर्तव्यमिति मनुते । छा.

[**मनस्वी** - उत्साहवान् । या.]

**मनस्विनी** - विपुलमनस्का । रा.

**मनस्विनीम्** - दृढमनस्काम् । पतिव्रतामित्यर्थः । रा.

**मनीषा** - धृतिः । तै. श्रु. धृत्या । श्वे. भाव. मनस इशित्री बुद्धिः । ई (कू). म. श्रवणजन्यधीः । तै. संकल्पः । वै.

**मनीषी** - मननशीलः । गी. मनस ईषीति व्युत्पत्तौ फलितोक्तिरियम् । ता. मनीषावान् । (परमात्मपरश्चेत्) मनःप्रभृतीनां जीवकरणानां नियन्ता । (जीवपरश्चेत्) अभ्यासवैराग्याभ्यां निगृहीतान्तःकरणः। ई (कू).वे.

**मनुः** - मन्त्रः । भा. मन्यते, मनुते वा । (प्रसिद्धात् सङ्कल्पलवमात्रात् मननादेव मनुरुच्यते) । सह. विवस्वतः सुतो नृपः । रा. सर्वज्ञः । भा. स्वायम्भुवः । छा.

**मनुष्यगन्धर्वाः** - अन्तर्धानादिशक्त्युपेततया गन्धर्वत्वं प्राप्ताः । तै.

[**मनुष्यदेवाः** - राजानः । या.]

**मनुष्याः** - शास्त्राधिकारयोग्याः । गी.

**मनुष्यादिभावः** - मनुष्यत्वादिविशिष्टशरीरयोगः । ता.

**मनोगतिः** - मनोवृत्तिः । नि.

**मनोग्राहि** - मनआकर्षकम् । रा.

**मनोजवः** - शीघ्रकारित्वात् मनोजवः । जगौ हि -क्षिप्रं भवति धर्मात्मेति । सह. ज्ञानम् । वा.

**मनोदण्डः** - प्राणायामः । भा.

**मनोऽधिष्ठानम्** - हृदयम् । रा.

**मनोमयः** - उपकरणोपकरणित्वलक्षण-सम्बन्धेन मनःप्रचुरः । मन उपकरणक इति यावत् । बृ. (परिशुद्धमनोमात्रग्राह्यः) विवेकादिसाधनसप्तकानुगृहीतपरमात्मो-पासननिर्मलीकृतमनोमात्रग्राह्यः । छा. मनःप्रभृतिप्रधानपर्यन्ततत्त्वशरीरकः, विष्णुपुराणानुसारात् । सुबा. विशुद्ध-मनोग्राह्यः । बृ. मु.

**मनोमयम्** - मनोग्राह्यम् । भा.

**मनोमयत्वम्**- विशुद्धेन मनसा ग्राह्यत्वम् । भा.

**मनोन्मनः** - मनोविकर्ता । तै.

**मनोरथः** - सङ्कल्पविषयीभूतोऽर्थः । रा.

**मनोविजयः**-विषयेभ्यो मनोव्यावर्तनम् । ता.

**मनोवृत्तिः** - विशेषणविशेष्यभावेन ग्रहणम् सविकल्पाध्यवसायः (सांख्यमते) । सर्वा (आ).

**मनोहरः** - आन्तरमपि पदार्थमपहरति । रा. एवं निसर्गसौहार्देन तेषां (समाधि-निष्ठानां) मनो हरतीति मनोहरः । हरतेरनुद्य-मनेऽच् । सह.

**मन्तव्यत्वम्** - विचार्य निर्णेतव्यत्वम् । सुबा.

**मन्ता** - ये मानसमननादिविचारविषयाः, तेषां साक्षात्कर्ता । मन्तव्यवस्तुसाक्षात्कर्ता । श्रु.

**मन्तृ** - मन्तव्यसाक्षात्कर्तृ । बृ.

**मन्तृत्वम्** - (भगवतः) मन्तव्यविषय-साक्षात्कर्तृत्वम् । बृ.

**मन्त्रः** - अनुष्ठेयार्थप्रकाशकः । य. उपायः। रा. कार्योचितविचारः । रा. तन्मन्तारं त्रायत इति मन्त्रः, इति नैरुक्ताः । सह. प्रामाणिक-मन्त्रव्यवहारविषयः । न्याप. वेदः । रा. [''मन्तारं त्रायते यस्मात् मन्त्र इत्यभि-धीयते'' इति व्युत्पत्त्या जपितॄणां रक्षण-समर्थः । र.]

**मन्त्रकृत्त्वम्** - अनधीत्यैव मन्त्राणा-मस्खलितक्रमस्वरवर्णतयादर्शनम् । श्रु.

[**मन्त्रराजः** - श्रीनृसिंहानुष्टुभमन्त्रः । र.]

**मन्त्रवित्** - शब्दब्रह्मनिष्ठः । मन्त्रप्रधान-कर्मनिष्ठ इति वाऽर्थः । छा.

[**मन्त्रसिद्धान्तः** - ''एकैव मूर्तिराराध्या प्राधान्येनेतराः पुनः । देव्यः श्रियादयश्चापि सम्पूज्याः परिवारवत् ॥ आयुधैश्शङ्ख-चक्राद्यैश्श्रीवत्साद्यैश्च भूषणैः । मूर्तिमद्भिः परिवृता केवला वाम्बुजासन । कथ्यते यत्र तत्प्रोक्तं मन्त्रसिद्धान्तमग्रिमम् ॥'' पांट. ''मन्त्रसंज्ञं हि सिद्धान्तं सिद्धिमोक्षफल-प्रदम्'' । र.]

**मन्त्रसंस्कृत्यैः** - 'मन्त्र इति संस्कृतशब्द-वाच्यैः मन्त्रैः' । म.

**मन्त्राः** - काण्डव्रताद्यङ्गभूताः अध्ययनदशाजप्याश्च 'शंनो मित्र' इत्याद्याः । त.

**मन्त्रोपनिषत्** - मन्त्रिकोपनिषदि प्रथमखण्डान्त्यमन्त्रे श्रुतमिदं पदं कस्यचिद्वेदभागस्याख्या । (स च भागः मन्त्रिकोपनिषदन्यो वा, तत्र प्रथमखण्डान्ते श्रवणात्तत् प्रथमखण्डमात्रं वा, खण्डद्वयमपि वेति विमृश्यम्) ।

**मन्थः** - पिष्टम् । छा. मथनसाधनदण्डः । सुन्दर. सर्वौषधरसपिष्टम् । बृ.

[**मन्थरः** - मन्दः । या.]

**मन्दः** - अल्पः । रा.

**मन्दम्** - भाग्यरहितम् । रा.

**मन्दभाक्** - मन्दभाग्यः । मन्दं क्षीणं आयुरादिकं भजतीति वा । रा.

**मन्दत्वम्** - अनेकव्याप्त्यभावः । न्यासि. अल्पप्रयोजनत्वम् । अधि. युक्तिदौर्बल्यम् । अधि. स्वयम् आचारनिर्णयापाटवम् । अकृत्स्नवित्त्वफलितं विचालनीयत्वकारणं अधैर्यलक्षणमल्पत्वं वा । "मूढाल्पापटुनिर्भाग्या मन्दाः" इति नैघण्टुकाः । ता.

**मन्दप्रवृत्तित्वम्** - प्रारब्धकर्मणां शीघ्रमसमापनम् । ता.

**मन्दरः** - भूमध्यपर्वतविशेषः । रा.

**मन्दरश्मिः** - सूर्यापेक्षया मन्दकरः चन्द्रः । रा.

**मन्दाः** - अल्पाः । कलुषिता इत्यर्थः । रा.

**मन्दानुकूल्यम्** - संसारकाले आत्मनिष्ठम् । आनुकूल्ये मन्दत्वं वैषयिकसुखापेक्षया वर्तमानं यत् उत्कृष्टत्वं तदविशेषितत्वम् । उत्कृष्टत्वस्य वर्तमानस्याप्यग्रहणादानुकूल्यं मन्दमित्युच्यते । रत्न.

**मन्दारः** - वृक्षविशेषः । रा.

**मन्दासुः** - अल्पप्राणः । रा.

**मन्दोदरी** - मयजा रावणजाया । रा.

**मन्थरा** - नम्रहृदया (स्तब्धा) । वि.

**मन्मयः** - मदेकचित्तः; ज्ञानविषयभूतेन मया प्रचुरः । ता.

**मन्युपतयः** - क्रोधप्रवर्तकाः (चक्षुरादयः) । तै.

**मन्ये** - ध्रुवम् । रा.

[**मन्वन्तरम्** - स्वायंभुवस्वारोचिषादेरेकैकस्य मनोः कालः । "मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः" इति तत्प्रमाणम् । या.]

**ममकृतिः** - भेदसाधकममकारोल्लेखयुक्ता प्रतीतिः । अधि.

**मम्यम्** - स्वत्वाभिमानः । ममेति विभक्तिप्रतिरूपकमव्ययम् । यद्वा ममेत्यनुकरणशब्दः । तस्मात्तद्धितः । नि.

["अहं ममास्मि इमे च मदीयाः" इति ममत्वाभिमानविशेषः । र.]

**मरणम्** - चरमशरीर वियोगः । श्रु. पूर्वदेहप्रहाणम् । अधि. सर्वप्राणदेहसम्बन्धोपरतिः । श्री. सर्वप्राणवियोगः । भाव.

**मरीचिः** - काश्यपपिता । वि. जनुषान्धेभ्योपि जन्तुभ्यः प्रकाशितनिर्मलरूपः । मृकणिभ्यामीचिः । मृङ् अत्र दीप्तिकर्मा ।

स्रह. ब्रह्मपुत्रो महर्षिः । रा. मरीचिस्थाः सवित्राकृष्टाः भौम्य आपः । छा.

**मरुः** - निर्जलप्रदेशः । या. शीघ्रगनृपपुत्रः । रा.

**मरुतः** - वायवः, एकोनपञ्चाशत् दितिपुत्राः, येषां सप्तकाः सप्त गणा भवन्ति । ता. देवविशेषाः । रा.

**मरुत्तः** - यजनशीलः कश्चिन्नृपः, यस्य यज्ञशालायां रावणो दुर्मदो महर्षीन् भक्षयामास । रा.

**मरुद्गणाः** - देवविशेषाः । रा.

**मरुद्वृधा** - कावेरी । पा.

**मर्कटकाः** - प्रियङ्गुभेदाः, नागबलाख्यद्रुमबीजानि वा । वि.

**मर्त्यः** - अचेतनः । श्रु. मरणधर्मा । बृ.

**मर्त्यम्** - अचेतनम् । छा. मर्त्यत्वं संसारित्वम् । सुबा. मरणधर्मि । छा. मरणधर्मात्मकम् । विनश्वरम् । बृ.

**मर्त्यवे** - मृत्यवे, जननमरणलक्षणसंसाराय । कौ.

**मर्त्यानामाशिषः** - अर्थकामादीन् । भा.

**मर्त्ये** - शरीरे । भा.

**मर्यः** - मरणधर्मा । बृ.

**मर्यादा** - व्यवस्था । रा. व्यवस्थारूपा धृतिः । रा. सदाचारादिसिद्धसमयधर्माः । वि.

**मर्षम्** - शुद्धिम् । भा.

**मलयः** - पर्वतविशेषः । रा.

[**मलिम्लुचः** - चोरः । या.]

**मलोद्वासाः** - रजस्वला । बृ.

**मसूरम्** - लशुनविशेषः । वि.

[अन्तर्दशाहपयउत्पन्नामिक्षा । र.]

[**मस्तिष्कप्रणामः** - "स मस्तिष्कप्रणामस्स्यात् अञ्जलिं मस्तके न्यसेत् ।" पाञ्च.]

**महः** - निरतिशयमहत्त्ववत् । तै. महीयन्ते अनेन इति (पूज्यन्ते) । तै. महत्त्वम् । छा. महान् । तै. योगविरोधिनिरसनलक्षणम् । तै. स्वयंप्रकाशम् । अधि.

**महत्** - अधिकदेशव्याप्तम् । न्यासिटी. अपरिच्छिन्नस्वरूपम् । वर. महत्त्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणम् । छा.

[**महत् दैवतम्** - (महते देवतायेत्यत्र रामायणे) 'वेदाहमेतं पुरुषं महान्तम्' 'परस्यां देवतायाम्' इत्यादिश्रुतिप्रसिद्ध्या अप्राकृतनिरुपाधिकमहत्त्वदेवतात्ववान् नारायणः । सच्च.]

**महता प्रबन्धेन** - विस्तरेण । श्रु.

[**महती** - नारदस्य वीणा । या.]

**महतो भूतस्य** - परमात्मनः । 'महद्भूतमनन्तमपारम्' 'एको विष्णुर्महद्भूत'मिति महद्भूतशब्दयोः भगवति प्रसिद्धिरविगीता । अत्र हिण्यगर्भस्य तदात्मकत्त्व त्तथोक्तिः । सुबा.

[**महतो महान्** - सर्वेभ्यः पृथुभ्यः पृथुतरः । स्वरूपतो गुणतो वा ये पदार्था उत्कर्षवन्तस्तेभ्यस्सर्वेभ्योऽपि अतिशयितोष्कर्षवान् भगवान् । सच्च.]

**महत्ता** - अनेकव्याप्तिः ।

**महत्त्वम्** - अपरिच्छिन्नत्वम् । श्रु. अव्यक्तावस्थानाशरूपत्वे सति अहंकारत्वावस्थाप्रागभावत्वम् । वा. ऐश्वर्यम् । वि. बहुदिगवच्छेदेनाधिक्यम् । न्यासि.

**महद्दीर्घम्** - त्र्यणुकम् । श्रीः.

**महद्ब्रह्म** - अचेतनप्रकृतिः । गी.

**महर्द्धिः** - (विभूतितः वासुदेवो विव्रियते) तद्योगक्षेमक्षमनिस्सीमविभूतिः । सह.

**महय्यः** - पूज्यः । छा.

**महर्षयः** - आनृशंस्यप्रधानाः । रा.

**महर्षिः** - ऋषिमुख्यः । रा. निरङ्कुशसार्वज्ञ्यवान् । तै. निरतिशयसार्वज्ञ्यादियुक्तः (परमात्मा) । श्वे. मन्त्रवेदादिद्रष्टा । सह.

**महाकर्मा** - प्रपन्नपरिपालनार्थत्वात् दुराचारदण्डनार्थत्वाच्च खलु परमकारुणिकस्यैव विप्रलभसम्भवः । एवं न्याय्यवृत्तत्वात् महाकर्मा । सह. कृमिकीटादिभावे दुर्जरपरोच्छिष्टसिक्थद्रप्समात्रं जन्तुं स्वमहाविभवानुभवाभियुक्तं करोतीत्यतिविस्मयनीयं महदस्य कर्मेति । सह.

**महाकोशः** - सदा सर्वेभ्यस्सर्वथा दानेऽप्यक्षयत्वात् महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणगिरिवरादयः कोशा भाण्डागाराण्यस्येति । सह.

**महाक्रतुः** - समर्पणसंस्कारस्वादुकृतैः आगमशास्त्रकारितसर्वव्यापारैराराध्यत्वात् । यथा 'यत्करोषि' इत्यादि । सह.

**महाक्रमः** - अथैवमुत्सुकीकृतेषु वात्सल्यतोऽप्यानन्त्यम् । परमतुंगमात्मानं परमनिम्नभवपातालात् जीवानारोहयतो महती आरोहणसोपानपर्वानुपूर्व्यस्येति । यथा जननी स्तनन्धयमादौ स्तनं धापयति अथ दुग्धम् अथाहारमथ भोगान् गमयति, एवमयं सुकृतिनमद्वेषास्तिक्याभिमुख्यानुवर्तनज्ञानभक्तिविस्रंभक्रमेणैव प्रापयति । सह.

**महाक्षः** - महान् पूज्यः अक्षः वहनेन रथावयवसाम्यात् त्रयीमयः तार्क्ष्यः यस्य सः । स हि गरुडवाहनस्य औपवाह्यः । सह.

**महागर्तः** - बाह्यकुदृष्टिविनिविष्टनष्टात्मनां रौरवादिगर्ता अस्मादिति । यथा 'अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि' ॥ इति । सह.

**महाग्रहः** - शनिः । अङ्गारकश्च । रा.

**महाज्वालः** - नरकयातनाविशेषः, यत्र वह्निस्थश्शेते पापी । वि.

**महातपाः** - महत् पूज्यं तपः प्राचीनभवपरिश्रान्तिशान्त्यर्थं सञ्जिहीर्षाबुद्धिलक्षणं ज्ञानं अस्येति । सह.

**महातेजाः** - तामसानामप्यनाद्यविद्यातमस्तस्करतेजस्कः । सह.

**महात्मना** - महाबुद्धिना । रा,

**महात्मा** - अतिप्रयत्नवान् । रा. अपरिच्छेद्यमनोवृत्तिः, गम्भीरबुद्धिविशेषवान् । सत्यसङ्कल्पः । महात्मशब्देन सर्वातिशायिपरमैश्वर्यादिकं विवक्षितम् । महानात्मेति

परमात्मत्वं वा । "स वा एष महानज आत्मेत्यादेः" इति । ता. अप्रच्युतधैर्यः । रा. अप्राकृतदिव्यमङ्गळविग्रहः । न तस्य प्राकृता मूर्तिरिति स्मृतिः । रा. प्रसन्नमनस्कः । महाधृतिः । महाधैर्यवान् । महाबुद्धिः । महाभाग्यः । रा. महामनाः । गी. महामनाः; दयाळुरित्यर्थः । महास्वभावः । रा.

**महात्मानः** - महाकायाः । रा.

**महात्मानम्** - महाधैर्यम् । रा.

**महादेवः** - तैः (ब्रह्मादिभिः) क्रीडनकैः कन्दुकादिभिरिव क्रीडतीति । सह.

**महाद्युतिः** - सहकार्यपेक्षकारणवैलक्षण्यकरं तदनपेक्षालक्षणं तेजो महदस्येति । मह.

**महाद्रिधृत्**-महान्तं मन्दरं मथने धृतवान् । सह.

**महाधनः** - अनिरूप्यातिकृपणप्रदेयमनन्तं धनमप्येति । सह.

**महान्** - अपरिच्छिन्नः । वर. अव्यक्ताहङ्कारमध्यावस्थाविशिष्टं त्रिगुणम् । न्यासि. आत्मा, इन्द्रियादिपरिकरवत्त्वलक्षणप्राधान्यविवक्षातिशयात् । श्रु. जीवात्मा । क. (प्रकृतेः) पूर्वको विकारः । श्रीत. प्राकाम्य-मिच्छानभिधातभूमौ उन्मज्जति निमज्जति च यथोदके । अस्य परमप्रकर्षात् महान् । सह. महत्तत्त्वम् । अयमत्र विवेकः। भूतलविनिहितबीजस्थानीयमविभक्तं तमः। मृन्निस्सृतबीजवत् विभक्तं तमः सलिलसंसृष्टार्द्रशिथिलावयवबीजतुल्यमक्षरम् । उच्छूनबीजसमानमव्यक्तम् । अङ्कुरस्थानीयो महानिति । सुबा. [अङ्कुरस्थानीयः प्रकृतेराद्यविकारः । ई.]

**महानिधिः** - महान्तः महात्मानः निधिवदतिप्रिया अस्येति । सह.

**महानीलः** - इन्द्रनीलमणिविशेषः । 'सिंहलस्याकरे जाता महानीला इति स्मृताः' इति रत्नशास्त्रम् । या.

**महान्तं बृहन्तम्** - स्वरूपतो धर्मतश्च विपुलम् । सुबा.

**महान् प्रभुः** - महाफलरूपमोक्षप्रदः । श्वे.

**महापद्मः** - पुण्डरीकाख्यो दिग्गजः । रा. सर्पः । वि.

**महापद्मम्** - रक्तोत्पलम् । रा.

**महापाप्मा** - महान् पाप्मा कार्यतया यस्य स महापाप्मा (कामः) । ता.

**महापुरुषः** - जीवविलक्षणः । भा.

**महापूरुषिकः** - महापुरुषः भगवान्, सः उपास्यत्वेनास्यास्तीति । भा.

**महाबलः** - जंझामारुतः । जंझावातो महाबल इति निघण्टुः । रा. सहायापेक्षकर्त्रन्तरव्यावर्तकं महद्बलमस्येति । अनेन ह्ययमपरिमितक्रियोऽपि अनाकलितश्रमः स्वे महिम्नि तिष्ठन् अवधीरिताधारान्तरः दुर्वाख्यापारसन्ततशक्तिसमुल्लासः शरीरमिव सकलं बिभर्ति । सह.

**महाबुद्धिः** - असर्वज्ञकारणव्यावर्तिका महती बुद्धिः अविशयविपर्याससार्वज्ञ्यलक्षणं ज्ञानमस्येति । सह.

**महाभागः** - महाभाग्यवान्। रा. वल्लवी-नीला - षोडशसहस्रदिव्यकन्यका-रुक्मिणी-सत्यभामा-जाम्बवती-प्रभृतीनां स्वयंवर -सौभाग्यवत्त्वात् महाभागः । (भागः सौभाग्यम्) । सह. महान् भागः भाग्यमस्येति तथोक्तः । या..

**महाभूतः** - महान्तः महात्मानः अस्य स्वभूता इति। यथा 'महात्मानस्तु मां पार्थ' इत्यादि। सह.

**महाभूतानि** - पृथिव्यप्तेजोवाय्वकाशाः। गी. व्यष्टिकारणानि पृथिव्यादीनि। श्रु.

**महाभोगः** - अर्थसाध्यः कामभोगोऽपि महानस्मादिति महाभोगः । "लक्षते च ततः कामान्मयैव विहितान्हि तान्" इति। सह.

**महामखः** - धर्मशरीरतया पूज्यो यज्ञोऽस्यावयव इति महामखः। यथा 'यज्ञो धर्मश्च विज्ञेयः' इति। सह.

**महामनाः** - तेषु (सत्सु) अगाधोदारविस्तृतमनाः । सह. प्रौढमतिः, वदान्यमनस्कः। छा.

**महामायः** - महती (अप्रपन्ननिखिलजनमोहिनी) तिरस्करिणीवत् माया अस्येति। सह.

**महामाया**-(ज्ञानविरोधित्वात्) अविद्या। वि.

**महामूर्तिः** - विश्वाश्रयतया महती मूर्तिरस्येति। सह.

**महायज्ञः** - महान् अन्ययज्ञेभ्योऽप्यत्युत्कृष्टः यज्ञोऽभिगमनभोगमधुपर्कादिसाष्टाङ्गयागोऽस्येति। सह. ब्रह्मयज्ञादिपञ्चविधः। ता.

**महायज्वा** - स्वयाजिनामन्ययाजिभ्योऽप्युत्कर्षात् महायज्वा । यथा 'तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः' इति। सह.

**महायशाः** - लोके वेदे च प्रसिद्धविभवः। रा.

**महायोगी** - महान् योगः लोकरक्षणोपायो यस्य स भगवान्। रा.

**महायोगेश्वरः** - महाश्चर्ययोगानामीश्वरः। 'अन्येष्वप्याश्चर्ययोगस्य तदधीनत्वमीश्वरशब्देन विवक्षितम्'। ता.

**महारजनम्** - कुसुंभः। श्रु.

**महाराजः** - सप्तद्वीपपतिः। बृ. [सुग्रीवः। ई.]

**महार्थः** - महान् अर्थः अभिधेयः यस्य। रा.

**महार्थम्** - विस्तरविवरणरूपं महाभाष्यम्। रा.

**महार्हः** - ऐश्वर्यसम्पन्नः । रा. महं आत्मनिवेदनपूर्वकं पूजनं अर्हतीति महार्हः। 'ब्रह्मणो त्वा महस ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्यम्' इति। सह.

**महावदान्यत्वम्** - स्वात्मनोऽपि दातृत्वम्। नि.

**महावराहः**- निस्समाभ्यधिकवराहशरीरः। सह.

**महाविद्या** - अणिमाद्यष्टसिद्धिः । रा. इन्द्रजालादिकुहकज्ञानम् । वि.

**महाविभूतिसंस्थानः** - त्रिपाद्विभूतौ संस्थानं स्थितिर्यस्य त तथोक्तः । वि.

**महाविश्वासः** - यावत्फललाभं विमर्शदशायामक्षोभणीयो विश्वासः । गद्य.

**महावीर्यः** - सत्यपि हेतौ अविकारलक्षणं महत् वीर्यमस्य इति । सह.

**महावृषाः** - देशविशेषः । छा.

**महाव्रतः** - 'न त्यजेयं कथञ्चने' त्याद्युक्तगुरुतरव्रतः । रा.

**महाशक्तिः** - उपादानशक्तिविकलनिमित्तमात्रताव्यावर्तिका महती शक्तिः साधनग्रामविनियोगस्वशरीरकैदेशीकृतप्रकृतिपरिणामयोग्यतालक्षणसामर्थ्यम् अस्येति । सह.

**महाशनः** - महत् अशनं निखिलजननिगरणं अस्येति महाशनः । सह. महत् अशनं भोग्यं यस्य सः महाशनः (कामः) । ता.

**महाशालः** - महागृहस्तः । मु.

**महाशालाः** - महागृहस्थतया विस्तीर्णशालासम्पन्नाः । प्रसिद्धा इति यावत् । महागृहस्थाः । छा.

**महाश्रृङ्गः** -अग्रलग्नमहीमण्डलद्रंष्ट्रः । सह.

**महाश्रोत्रियाः** - अतीव श्रुताध्यसनसम्पन्नाः, सर्ववेदपारगाः । छा.

**महासत्त्वः** - महाध्यवसायः । रा.

**महासाराणि** - अतिदृढानि । रा.

**महासुहयः** - महान् शोभनो हयः । बृ.

**महासेनप्रसूतिः** - स्कन्दप्रसूतिस्थानम् । रा.

**महास्वनः** - पूज्यः महान् त्रयीरूपः स्वनः शब्दः यस्य सः । सह.

**महाहविः** - अहिंस्रसात्त्विकौपनिषदानि हवींषि अस्येति । सह.

**महाह्रदः** - यत्र पापकर्माणः अपुनरुत्थानं निमज्जन्ति "क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति, यत्र च पुण्यकृतो गाहं गाहं तृप्यन्ति, स । सह.

**महि** - महिमानम् । भा.

**महिम्** - माहात्म्यम्, शोभाम् । भा.

**महितः** - उत्कृष्टः । या.

**महिता** - प्रशस्ता । वै.

**महिभृत्** - पर्वतः । या.

**महिमा** - गुणभूतः । बृ. गुणविभूत्यातिशयः । अधि. नियाम्यवर्गः । छा. परत्वम् । सुन्दर. पात्रविशेषः, यागे कश्चन ग्रहः । बृ. महत्त्वसम्पादकः । क. सर्वेश्वरत्वम् । सुन्दर. [शरीरतः महद्भवनम् (अष्टैश्वर्येष्वन्यतमम्) । र.]

**महिमानः** - सशरीरचेतनाः । श्रु.

**महिमानम्** - महामहिमशालिनम् । श्वे. [महेर्भूमेर्मानं परिमाणम् । "सुषिं च पुल्लिम्महिपल्लिवल्ली" रिति महिशब्दं इकारान्तेष्वपि रामदासः पपाठ । या.]

[**महिषः** - महान् । पूजितः । मह

पूजायामिति धातोरविमहिभ्यां षिषच् इति षिषच्। सच्च.]

[**महिषी** - कृताभिषेका भार्या। ई.]

**महीधरः** - (भार्गवो रामः) भारावतरणेन महीं धत्त इति महीधरः, भूभार (हरणेन) धरणेन धरः। सह.

**महीभर्ता** - ललितधरणीभरणशीलः। सह.

**महीयान्** - महत्तरः (स्वाव्याप्तवस्तु-रहितः)। क.

**महेज्यः** - अकामहता महती इज्या यजनम् अव्यवधानेनास्येति। सह.

**महेन्द्रः** - सर्वतोमुखं प्रसृतत्वात् पूर्णपर-मैश्वर्यतया, महांश्चासाविन्द्रश्च महेन्द्रः। सह.

**महेन्द्रध्वजः** - इन्द्रधनुः। रा.

**महेश्वरम्** - नारायणम्। तैत्तिरीयके 'यद्वेदादौ . . . . स महेश्वर' इति अकार-वाच्यस्य नारायणस्य महेश्वरशब्दार्थ-त्वाभिधानात्। श्वे. महान् ईश्वरः। ता. मायाप्रेरकः परमात्मा। श्रु. विष्णुः। रा.

**महेष्वासः** - महान् मनोहारी इषूणामसः क्षेपः सिन्धुबन्धदशकन्धरवधादौ यस्य सः। सह.

**महोत्साहः** - महान् उत्साहः उत्सहनं कर्तृत्वलक्षणमैश्वर्यमस्येति। सह.

**महोदधिशयः** - अन्तकाले स तस्मिन्ने-वानन्तभोगे महोदधौ शेत इति। सह.

**महोदरः** - रावणसचिवो राक्षसः। रा.

**महोदरम्** - उदरजो व्याधिविशेषः। रा.

**महो देवः** - महादेवः। तै.

**महोपनिषत्** - महोपनिषत्प्रतिपाद्यम्। तै.

**महोरगः** - महान् क्षोदीयसामपि नेदीयांश्चासौ उरगः उरो वक्षस्तदुपलक्षितं च हृदयं तेन तत्करणान्यनुप्रविशन् तद्द्वारा तान् गच्छंश्चेति महोरगः। सह.

**मा** - अस्मच्छब्दद्वितीयैकवचनान्तं मामित्यर्थे। प्रतिषेधे च। कौ.

**माक्षिकम्** - मधु। भा.

**मागधः** - क्षत्रियायां वैश्याज्जातः राज-प्रबोधने नियुक्तः। वंशशंसकः। रा.

**माणिचारः** - कुबेरप्रियो यक्षवीरः। अस्य माणिभद्र इत्यपि नाम। रा.

**माणिभद्रः** - कुबेरप्रियो यक्षवीरः (अस्य माणिचार इत्यपि नाम)। रा.

**मातरिश्वा** - वायुः। श्री.

**मातलिः** - इन्द्रसारथिः। रा.

**माता** - पुत्रार्थं भूयांसि कर्माणि आरभाणा प्रियप्रवर्तनशीला च। स्तो.

[**मातृका**-यद्दृष्ट्वा तद्वदन्यन्निर्मीयते तद्वस्तु। या.]

**मातृकाध्यानश्लोकः** - "आधारं तु" इत्यारभ्य 'नमस्ये तराम्' इत्यन्तः आधारादिपद्मतद्वर्णदलतद्गताक्षरादि-प्रतिपादकः। न्यासिटी.

**मातृकापाठः**-(धूल्यक्षरशिक्षाप्रवृत्तानां) मातृकाक्षरपाठः। न्यासिटी.

**मात्रया** - अंशभूतसङ्कल्परूपज्ञानेन। भा.

**मात्रा** - परिणामः। छा. इन्द्रियवर्गः।

"मीयते अनेनेति मात्रा प्रकाशकः जाग्रदवस्थेन्द्रियवर्गः" । बृ. [सन्न्यासिनां भिक्षापात्रादिकम् । ई.]

**मात्राः** - शब्दस्पर्शरूपसगन्धाः साश्रयाः तन्मात्राकार्यत्वात् मात्रा इत्युच्यन्ते । गी. आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनि इन्द्रियाणि मात्रा इति शङ्कराद्युक्ताप्रसिद्धयोजनाव्युदासायाह - शब्देति । ता. शब्दादिविषयाः । भा.

**मात्रार्थम्** - देहार्थम् । भा.

[**मात्स्यम्** - पुराणविशेषः । सच्च.]

**मादयस्व** - हर्षय । तै.

**माधवः** - मायाः श्रियः धवः स्वामी श्रियःपतिः । यथा 'अस्येशाना जगतो विष्णुपत्नी' 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति । सह. स्वविषयपरविद्याप्रवर्तनात् माधवः । यथा - 'मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीति शब्दितः' ।। इति । 'मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्' इति वा । सह. वसन्तः । रा. वैशाखाख्यो वसन्तमासः । रा.

**माधवी** - पृथिवी । सर्वा.

**माधुर्यम्** - क्षीरवदुपायभावेपि स्वादुत्वम् । य.

**माध्यन्दिनं सवनम्** - माध्यन्दिनसवनसम्बन्धी (अन्तरिक्ष?) लोकः । छा.

**माध्यमिकः** - बुद्धशिष्यस्सर्वशून्यवादी । योगाचारयोर्मध्ये गुरुं प्रति योगस्याकरणादधमः, आचारवत्त्वादुत्तमश्च । उत्तमत्वाधमत्वयोरेवं समावेशान्माध्यमिक इति । न्यासिटी.

**मानः** - अभिमानः (तेन सहितः समानः) बृ. आभिजात्यादिप्रयुक्तं चित्तौन्नत्यम् । प. कोपः । पूजा. नि. गर्वः । वि. पूजार्हता । भा. विद्याभिजनधनादिसम्पत्तिमूल उत्कृष्टजनावमानहेतुः गर्वः । ता. 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' । या. मानवती । द्र.

**मानता** - प्रामाण्यम् । सर्वा.

**मानदः** - मानं अर्जुनोग्रसेनयुधिष्ठिरादिभ्यः रथित्वाधिराज्यबहुमानं दत्तवान् । सह.

**मानना** - बहुमानः । नि.

**मानबाधः** - प्रत्यक्षादिप्रमाणान्तरबाधः । अधि.

**मानयाथात्म्यनिर्णयः** - कश्चिद्विशिष्टाद्वैतग्रन्थः । न्यासि.

**मानवः आवर्तः** - घटीयन्त्रवत् जननमरणप्रापकः मनुष्यादिशरीरोपलक्षितः संसारः । छा.

**मानवम्** - मनुष्यादिशरीरोपलक्षितं (संसारम्) । नी.

**मानवती** - मानः प्रियविषयरत्यवस्थाविशेषः । 'अङ्कुरपल्लवकलिकाकोरकफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इति' । इति रतिं प्रस्तुत्य रसार्णववचनात् । तद्वती । या.

**मानसः** - परेण ब्रह्मणा मनसा सृष्टः अमानवशब्दितः । बृ.

**मानसप्रत्यक्षम्** - मानसप्रत्यक्षमप्यस्मदादीनां नास्त्येवेति वृद्धसम्प्रदायः । न्याप.

**मानसब्राह्मणः** - ब्रह्मणा मनसा सृष्टः आद्यब्राह्मणः ।

**मानसाः** - ब्रह्मानन्दानुभावुकाः । भा.

**मानसे** - मनसि । सर्वा.

**मानिना** - देहात्माभिमानिना । भा.

**मानिषादः** - श्रीनिवासः । रा.

**मानी** - मननशीलः । भाव.

**मानुषम्** - भगवदाराधनम् 'नृणामयं परो धर्मः सर्वेषां समुदाहृतः । त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति' । इतिस्मरणात् । तै. मनुष्यलोकोद्भवं ब्राह्मणादिकम् । रा. मृतमनुष्योद्देशेन अनुष्ठीयमानं श्राद्धम् । तै.

**मानुष्यम्** - मनुष्यकर्म । मर्त्यदेहः । वि.

**मानुषी** - मनुष्यसम्बन्धिनी मनुष्यसजातीयसन्निवेशविशेषवती । ता.

**मान्द्यम्** - क्रियाधर्मविशेषः । न्यासिटी.

**मान्धाता** - अयोध्याधिपतिर्युवनाश्वसुतो राजा । रा.

**मान्यः** - मुक्तये योगिभिः चिन्त्यः । रा. पाण्डवदूत्यसारथ्यादिना स्वबहुमाननात् तदीयत्वेन सम्मन्तव्यः । सह.

**मान्याः** - मनसा पूज्याः । रा.

**मा प्रधाक्षीत्** - मा दहेत् । श्रु.

**मा प्रसाङ्क्षीः** - मा प्रसक्तः स्याः । श्रु.

**मायया** - सङ्कल्परूपज्ञानेन । भा.

**मायया अपहृतज्ञानाः** -मद्विषयं मदैश्वर्यविषयं च ज्ञानं प्रस्तुतं येषां तदसम्भावनापादिनीभिः कूटयुक्तिभिरपहृतं ते तथोक्ताः। गी.

**माया** - अज्ञातपरमार्था, अतिमोहिनी, अनात्मनि आत्मविज्ञानं जनयित्री अस्वे स्वमिति मतिं उत्पादयित्री । वि. अज्ञानम् । नी. असुरः । वेकौ. अन्यथाज्ञानान्यथाप्रवृत्तयः । श्रीसू. अन्यथाभूतस्य वस्तुनः अन्यथाकरणशक्तिः । ता. असुरमायायोगविद्या । रा. आश्चर्यकरी शक्तिः । रा. आश्चर्यरूपा शक्तिः । वि. आश्चर्यसृष्टिः । अधि. आश्चर्यसृष्टिहेतुभूतशक्तिविशेषः । अधि. ज्ञानम् । च. ज्ञानम् (मायावयुनं ज्ञानमिति नैघण्टुकाः) । गी. परप्रतारणोचितव्यापारः । भा. परव्यामोहनहेतुः । श. प्रकृतिः । गी. वै. नी. श्रु. श. श्रीस्तु । प्रतिक्षणमपूर्ववदाश्चर्यावहं वस्तु । रा. भगवदिच्छा । अविद्या । मा(कू). भगवत्सङ्कल्पः । "मायाशब्दो ह्याश्चर्यत्वं प्रवृत्तिनिमित्तीकृत्य भगवत्सङ्कल्पवाची" । "मायावयुनं ज्ञान"मिति निघण्टुपाठाच्च मायाशब्दो ज्ञानरूपसङ्कल्पवचनः । बृ. मिथ्याभूता । भाव. मोहनविद्या । वि. लक्ष्मीः । रा. विचित्रकुत्सितशक्तिः । विचित्रनिर्माणशक्तिः । रा. विचित्रवस्तुस्वभाववैषम्यवती प्रकृतिः । अति. विचित्रसृष्ट्युपकरणम् । श. विचित्रसृष्ट्युपकरणत्वान्माया । न्यासि. विचित्रार्थका-

रित्वमेव मायाशब्दप्रवृत्तिनिमित्तम् । न्यासिटी. विचित्रार्थसर्गकरी। श्री. व्यामोहकारिणी विद्या। रा. शक्तिः (प्रकृतिः)। वेकौ. शाठ्यम्। वि. सङ्कल्पः। वि. वेकौ. सङ्कल्पज्ञानम् । वि. सङ्कल्परूपं ज्ञानम् । ''माया वयुनं ज्ञान''मिति निघण्टुः । भा. संकल्पविशेषः। 'इन्द्रो मायाभिः पुरुरूपईयते' इति प्रयोगात्। अधि. स्वरूपाच्छादिका शक्तिः । रा.

**मायाम्** - त्रिगुणात्मिकांप्रकृतिं विचित्राश्चर्यसर्गहेतुतया मायाशब्दिताम् । श्वे. मायामयीम्। आश्चर्यशक्तियुक्तामित्यर्थः। रा.

**मायात्वम्** - विचित्रशक्तित्वम्। भा.

**मायापलितङ्करण्यः** - पलितं जरसा शौक्लचम् । तद्वन्तोऽपि पलिताः । अमायापलिताः मायापलिताः क्रियन्ते आभिरिति मायापलितंकरण्यः। या.

**मायाबलम्** - गुणमयप्रकृतिसामर्थ्यम्, स्वासाधारणाप्राकृतविग्रहे कर्मवश्यकूर्मादिसाजात्यभ्रमजनकशक्तिप्रकर्षो वा। स्तो.

**मायाभयम्** - निकृत्यनृताभ्यां जातम् । वि.

**मायाभिः** - संकल्परूपज्ञानैः । ''माया वयुनं ज्ञान'' मिति नैघण्टुकाः । बृ.

**मायामयः** - आश्चर्यमयः। रा. मायाया आगतः । ''तत आगत'' इत्याधिकारे ''मयटचेति'' मयट्। संकल्पमात्रपरिक्लृप्त इत्यर्थः। भा.

**मायामात्रम्** - आश्चर्यरूपमेव। अनाश्चर्यरूपं न किञ्चिदपीत्यर्थः। श्रु. भगवदिच्छामात्रम्। मा (कू).

**मायारूपः** - अनन्ताश्चर्यरूपः । वि.

**मायावादः** - विवर्ततया ब्रह्मोपादानकत्ववादः । च.

**मायावी** - विचित्रशक्तियुक्तः । रा.

**मायी** - आश्चर्यशक्तिमान्। भा. मायाप्रेरकः। श्वे.

**मायूरकः** - मयूरपिञ्छैः छत्रव्यजनादिकारी। रा.

**मारणम्** - शरीरादिविश्लेषणात्मकम् । (शरीरविश्लेषणमात्मनः)। मृङ् प्राणत्यागे इति धातुः । ता.

**मारीचः** - रावणसचिवो राक्षसः । रा.

**मारुतम्** - मरुतां लोकः स्वधर्मनिरतात्मनां वैश्यानां स्थानम्। (मरणानन्तरम्)। वि.

[**मार्कण्डेयम्** - पुराणविशेषः। सच्च.]

**मार्गः** - नृत्तविशेषः । या. भरद्वाजादिमुनिभिः मार्ग्यते इति, (वाञ्छितसिद्धिप्रदतया) उपासकैः मार्ग्यत इति। सह.

**मार्गानुगः**-सन्मार्गचारी; वेदमार्गानुसारी। रा.

**मार्दवम्** - अकठिनस्वभावतया सुप्रवेशत्वम्, दण्डनीयेष्वपि सान्त्वप्रधानत्वं वा । गद्य. अक्रूरता । भा. आश्रितविरहासहत्वम्। य. सौकुमार्यम्। सुन्दर. [अकाठिन्यम् । साधुजनसंश्लेषार्हतेति यावत्। गी. र.]

**माला** - वनमाला। वे. [एकगुणा। (स्रक् द्र.)। पाञ्च. पङ्क्तिः। पुष्पादिस्रक्। या.]

**माऽवसीदतु** - अवसन्ना मा भूत्। 'माङिलुङि'त्यत्र गृहीतात् माङोऽन्य केवलोऽयं माशब्दः प्रतिषेधार्थ इति लोडुपपत्तिः। या.

**मासानुमासम्** - प्रतिमासम्। मासेषु द्वादशसु (अनुमासः) अधिकमासः। वि.

**मासृण्यम्** - पिच्छिलत्वम्। न्यासिटी.

**माहात्म्यम्** - महत्त्वम्। रा.

**माहारजतम्** - महारजताख्यरागद्रव्येण रञ्जितं वासः। वे.

**माहिषिकः** - 'महिषीत्युच्यते भार्या भगेनोपार्जितं धनम्। उपजीवति यस्तस्यास्स वै माहिषिकस्स्मृतः'। वि.

**माहिष्मती** - कार्तवीर्याधिष्ठिता पुरी। रा.

**माहेश्वरः** - यज्ञविशेषः। रा.

**माहेश्वरी** - पार्वती। वेकौ.

**मितम्पचाः** - क्षुद्राः। या.

**मित्रः** - सूर्यमूर्तिभेदः। रा.

**मित्रम्** - सवया हितैषी। गी.

**मित्रभावः** - मित्रक्रिया। मित्रभावनेति यावत्। रा.

**मित्रावरुणौ** - प्राणापानौ। पा.

**मिथिः** - निमिकुमारः। अयमेव जनक इत्युच्यते। रा.

**मिथुनम्** - द्वन्द्वभावम्। बृ. स्त्रीसम्भवा प्रीतिः। श्रु.

**मिथ्या** - ज्ञाननिवर्त्यम्, प्रतिभासमानसत्ताकम्। च. बाधितबुद्धिगोचरः। अधि.

**मिथ्याचारः** - अन्यथा संकल्प्य अन्यथा आचरणकृत्। न्यासिटी. यः अन्यथा सङ्कल्प्य अन्यथा चरति। गी. अन्यथाभाव एव ह्यन्ततः सर्वत्र मिथ्यात्वम्। अत्रापि सङ्कल्पितज्ञानयोगविपरीताचारतया ज्ञानयोगाभिमतस्तस्याचारो मिथ्येत्युक्तं भवति। ता.

**मिथ्यात्वम्** - अन्यथाभावः। ता. प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्। च. प्रतिपन्नदेशकालादौ निवृत्तत्वम्। न्यासिटी. प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्। त. स्वात्यन्ताभावसामानाधिकरण्यम्। च. [प्रतीतत्वेसति बाधयोग्यत्वम्। ई.]

**मिथ्याप्रतिभासः** - भ्रान्तिज्ञानम्। श्रु.

**मिथ्यार्थप्रतिभासः** - परबुद्धिविषयत्वोल्लेखः। ता.

**मिथ्योपघातः** - मिथ्यापवादः। रा.

**मिनोति** - अन्तर्गमयति। मा (कू). परिच्छिनत्ति (जानाति)। मा.

**मिमिक्षे** - सेक्तुमिच्छति। सर्ववस्तु स्वादु करोति। तै.

**मिषतः** - लब्धसत्ताकस्य। तै.

[**मिश्रावतारः** - नृसिंहादिरूपः। या.]

**मीमांसा** - चिन्ता। रा. पूजितविचारः, विचारः। त. विचारः। बृ. वेदवाक्यार्थनिर्णयफलकन्यायसमुदायः। अधि.

[**मीमांसाचार्यः** - शबरस्वामी। सच्च.]

**मीमांसाश्रवणम्** - पूर्वोत्तरमीमांसाविचारः। त.

**मीमांसाञ्चक्रुः** - विचारं कृतवन्तः । छा.

**मीमांसितम्** - कैमुतिकन्यायतर्कानुगृहीतम् । बृ.

**मीढुषः** - आश्रिताशीवर्षुकस्य । भा.

**मीढुषे** - इष्टवर्षिणे, वर्षप्रदसूर्यात्मकपर्जन्यरूपाय । भा.

**मीढुष्टमाय**- सेक्तृतमाय (वर्षादिभिर्लोकसेचकाय) । तै.

**मीयते** - हिंस्यते । "तस्य मे न लोम चामीयत" । कौ.

**मुकुन्दः** - तैः (भक्तैः) ऐकान्त्यगरिम्णा प्रार्थितः स्वयं मुक्तिभूमिं ददातीति । सह. निधिविशेषः । पा.

**मुक्तः** - अकर्मवश्यः । श्री. सुषुम्नानाडीं प्रविश्य तया ब्रह्मरन्ध्रान्निष्क्रम्य अर्चिरादिमार्गेण विरजां तीर्त्वा सूक्ष्मशरीरं विहाय श्रीवैकुण्ठदिव्यनगरं प्रविश्य आविर्भूतगुणाष्टकः उत्तरावधिरहितब्रह्मानुभववान् । य. कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः । श्री. स्वसामानाधिकरण्यस्वसामानकालीनत्वोभयसम्बन्धेन कर्मप्रागभावविशिष्टान्यकर्मध्वंससमानाधिकरणपरमात्मानुभवरूपमोक्षवान् । वा.

**मुक्तसङ्गः** - फलसङ्गरहितः । गी.

**मुक्ताः** - आविर्भूतापहतपाप्मत्वादिगुणाः । नी. क्लेशात्यन्तोच्छेदवन्तः । त. प्रकृतिबन्धाविद्याकर्मसंस्काररुचिविपाकेभ्यः आवरणेभ्यः एकान्ततः अत्यन्ततश्च विश्लिष्टाः । सह.

[**मुक्ताः** - मुक्तिकामाः । आदिकर्मणिक्तः । आशंसायां वा । सच्च.]

**मुक्तानां परमा गतिः** - ब्रह्मसाधर्म्यमापन्नानां मुक्तानां मुख्यप्राप्यः । सह.

**मुक्तावस्था** - योगदशा । भाव.

**मुक्तम्** - सर्वदा कर्मतत्फलविमुक्तम् । त.

**मुक्तिः** - आनन्दप्राप्तिः । नी. परशेषतैकरसस्वरूपाविर्भावयुक्ता निरवधिकसुखब्रह्मभुक्तिः । सर्वा. बन्धनिवृत्तिः । श्री. विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरत्वम् । बृ. [भगवत्प्राप्तिविरोधिसर्वपापनिवृत्तिः । र.]

**मुक्तैश्वर्यम्** - निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवः । श्री.

**मुखम्** - अग्रभागः । मा(कू). उपायः । 'मुखं तु वदने मुख्ये ताम्रे द्वाराभ्युपाययोः' इति नैघण्टुकाः । ता. उपायनरूप उपायः । छा. बीजसमुत्पत्तिः । न्यासिटी.

**मुखादानः** - मुखपतितभोजी । रा.

**मुख्यः** - (शब्दः) गृहीतसङ्गतिकः । भाव.

**मुख्यप्राणः** - पञ्चवृत्तिप्राणः । मुख्यशब्दः इन्द्रियादिव्यावृत्त्यर्थः । श्रु.

**मुख्यविशेष्यता** - मुख्यत्वं प्रकारताभिन्नत्वम् । प्रकारत्वानवच्छिन्नत्वं वा । न्यासि. रत्न.

**मुग्धः** - मूर्च्छितः । अति.

**मुग्धिः** - मूर्च्छा । अधि.

**मुत्** - स्वकीयत्वबुद्धिजा प्रीतिः । तद्विनियोगजा प्रीतिः प्रमुत् । श्रु. **साधारणभोग्य**दर्शनजा प्रीतिः । यद्वा विलक्षणविषय-

दर्शनजा प्रीतिः । श्रु. अनुकूले वस्तुनि स्वकीयत्वबुद्धिजा प्रीतिः । बृ.

**मुदिताः** - रामकिङ्करविशेषाः । रा.

**मुद्गरः** - आयुधविशेषः । रा.

**मुनयः** - शुभाश्रयमननशीलाः । भा.

**मुनये** - परिपूर्णैश्वर्यत्वात् ब्रह्मादिस्तम्बपर्यन्तं जगत् तृणीकृत्य जोषमासीनाय । भा.

**मुनिः** - आलम्बनशीलनलक्षणमननशीलः । बृ. प्रकृष्टमननशीलः व्यासादिः । श्रु. भक्तिप्रेरिततया प्रकृष्टमननशीलः । स्तो. मननशीलः । भाव. वेकौ. गी. न्यासिटी. श्री. रा. मननशीलो योगी । बृ. मननेनाऽत्मयाथात्म्यदर्शी । गी. मानसनियमोपेतः । रा. सर्वेश्वरमननपरः । रा.

**मुमुक्षवः** - कतिपयक्लेशादिरहिताः । त.

**मुमुक्षा** - हैरण्यगर्भान्तसकलभोगविरक्तिपूर्वकब्रह्मानन्दप्रेप्सा । छा.

**मुमुक्षुः** - प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिः । त. ब्रह्मानन्दैकप्रेप्सुः । छा.

[**मुमुक्षुत्वम्** - मोक्षरूपपरमपुरुषार्थार्थित्वम् । र.]

**मुर्मुरः** - तुषाग्निः । 'मुर्मुरस्तु तुषानलः' इति वैजयन्ती । या.

**मुष्कः** - वृषणः । बृ.

**मुष्टिकः** - हीनजातिविशेषः । रा.

**मुसलम्** - आयुधविशेषः । रा.

**मुस्ता** - तृणकदम्बः । दशा.

**मुहूर्तः** - कियानपि कालः । 'मुहूर्तः स्वल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवः । या. दिनस्य त्रिंशो भागः । रा. द्वे नाडिके । भा.

[**मुहूर्तविधानम्** - बृहस्पतिप्रोक्तो ज्योतिषग्रन्थविशेषः । सच्च.]

**मुहूर्ताः** - ब्रह्मलोकस्था एतन्नामकाः यष्टिहाः, मुहूर्तसंज्ञकाः अरह्नदविरजानदीमध्यवर्तिनः अब्रह्मविद्वारकाः यष्टिहाः । कौ.

**मुह्यमानः** - तिरोहितपरमात्मशेषत्वज्ञानानन्दादिलक्षणस्वस्वरूपः । श्वे.

**मूर्खः** - अविमृश्यकारी । रा. अज्ञः । च.

**मूर्खाः** - वेदबाह्याः कुदृष्टयः । वि.

**मूढः** - कृत्याकृत्यविवेकशून्यः । रा. विपरीतज्ञानः । गी.

**मूढग्राहः** - मूढैः कृतोऽभिनिवेशः । गी. मूढानामभिनिवेश इति समासार्थः । तत्र कर्तरि षष्ठीति सुव्यक्त्यर्थमाह मूढैः कृत .... इति । ता.

**मूढत्वम्** - वैमुख्यम् । ता.

**मूढयोनयः** - तामस्यः । भा.

**मूढयोनिः** - श्वसूकरादियोनिः । गी.

**मूढाः** - अविवेकिनः । पूर्वोक्तप्रकारेण भगवच्छेषतैकरसं भोग्यजातं च स्वशेषतैकरसं मन्वानाः । गी. विपरीतज्ञानाः। भा.गी.

**मूर्च्छा** - उच्छ्रायः । विस्तरणम् । मूर्च्छा मोहसमुच्छ्राययोरिति हि धातुः । अग्नि. मरणार्धसम्पत्तिः । भाव. सर्वप्राणवियोगोपक्रमकतिपयप्राणसम्पत्तिः ।

मोहपर्यायः मूर्च्छाशब्दः। बृ. सूक्ष्मप्राण-सम्बन्धः अर्धमरणम्। अधि. सूक्ष्मप्राण-देहसम्बन्धावस्थितिः। श्री.

**मूर्छना** - वीणादिवादनम्। 'वादने मूर्छना न ना' इति वैजयन्ती। रा.

**मूर्छितः** - व्याप्तः। रा.

**मूर्तम्** - कठिनम्। बृ. पृथिव्यप्तेजांसि। भाव. मूर्तिमत्। च. सर्वगतद्रव्यम्। वि. सशरीरं ब्रह्मादिजीवजातम्। वि.

**मूर्ताः** - मूर्तिभेदाकारपरिणताः ? छा.

**मूर्तामूर्तः** - स्थूलसूक्ष्मप्रपञ्चरूपः। वि.

**मूर्तिः** - काठिन्यम्। 'मूर्तिः काठिन्य-काययोः'। रा. देहः। श्री. रूपम्। श्री.

**मूर्धा** - श्रेष्ठः। बृ.

**मूलकारणम्** - प्राथमिककारणम्; उपादानकारणम्। वै.

**मूलप्रकृतिः** - समत्रैगुण्या प्रकृतिः। तस्यामेव त्रैगुण्यसाम्ये सत्येव मात्रया भेद-मवलम्ब्याव्यक्ताक्षरविभक्ताविभक्ततमो-रूपावस्थाचतुष्टयम्। न्यासिटी.

**मूलप्रकृतित्वम्** - गुणत्रयसाम्यावस्थाप-न्नत्वम्। वा.

[**मूलमन्त्रः** - अष्टाक्षरमन्त्र। र.]

**मृगतृष्णिका** - अन्यस्यान्यरूपेणाव-भासः। रा.

**मृगया** - यात्रा। या.

**मृगयापथः** - आखेटपरिपाटी। अति.

**मृगयुः** - व्याधः। अति.

**मृजा** - उद्वर्तनाद्यङ्गशोधनम्, शरीर-संस्कारः। रा.

**मृतम्** - नित्ययाच्त्रा(सिद्धम्)। भा.

**मृतेरर्धसंपत्** - मूर्छा। ''मुग्धेऽर्धसंपत्तिः परिशेषात्'' इति ब्रह्मसूत्रम्। सर्वा.

**मृत्युः** - अग्निः। श्रु. अचिच्छरीरक-परमात्मा। बृ. अविद्या। श्री. श्रु. आदित्यः। आदित्यस्य अहोरात्रकालावर्तनेन जगन्नाशहेतुत्वात् मृत्युत्वम्। छा. उपेयप्राप्तिविरोधिकर्म। चित्समष्टि-संसृष्टाऽचित्समष्टिः। श्रु. जन्ममरणप्रबन्ध-स्संसारः। वेकौ. ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। ...मः। श्रु. तमः। न्यासिटी. तमश्शब्दवाच्यमतिसूक्ष्मं प्रधानतत्त्वम्। सुबा. तमश्शब्दवाच्यं सूक्ष्मावस्थं अचिद्वस्तु। श्री.गी. तमश्शब्दवाच्या प्रकृतिः। श्रु. (हिरण्यगर्भ) दिव्यपुरुषसृष्टः त्र्यक्षस्त्रिशिरस्कः त्रिपात् खण्डपरशुः। सुबा. नीलत्वभयङ्करत्वादिमृत्युसादृश्या-च्छायापुरुषस्य मृत्युत्वेनोपासनम्। कौ. परमसूक्ष्ममचिद्वस्तु। श्री. परमात्मा। पाप्मा। बृ. बद्धः (जीवः)। श्रु. बाधकः। गी. भक्त्युत्पत्तिविरोधि प्राचीनं कर्मजातम्। ई.म. मरणम्। छा.त. मोहः। अनिष्टम् (न पश्यो मृत्युं पश्यति)। त. मृत्युहेतुः। ई (वे). म. मोहः प्रमादो वा। ''मोहो मृत्युः सम्मतो यः कवीनाम्'', ''प्रमादं मृत्युमहं ब्रवीमि'' इत्युभयत्र मृत्युशब्दव्यपदेशात्। श्रु. यमकिङ्करः। विरोधिनिवर्तकः। रा. विनाशः। सर्वा (आ). दुःखम्। भा. संसारः। बृ. श्वे.

**मृदितकषायः** - परिशुद्धान्तःकरणः । छा.
**मृदुः** - आश्रितजनविश्लेषभीरुः । रा. (आश्रितविश्लेषासहः । ई.)
**मृदुता** - आश्रितविश्लेषासहत्वम् । सुन्दर.
**मृदुत्वम्** - सापराधैरपि सहसा आश्रयितुं शक्यत्वम् । यथोक्तं 'विदितः स हि धर्मज्ञः' इति । आश्रितविश्लेषासहत्वं वा । शासन-प्रवृत्तस्यापि 'सामोपहितया वाचा' इति क्रमेण सामप्रधानत्वं वा । स्तो. विरलसंयो-गप्रयुक्तः स्पर्शः । न्यासि. स्वल्पस्यापि परदुःखस्यासहिष्णुत्वम् । दया.
**मृदुपवनः** - पवने मृदुत्वं वेगमान्द्यादिः । न्यासि.
**मृदुभावः** - अयं स्पर्शविशेष एव । स्पर्शनेनैव तदुपलब्धेः । न्यासि.
**मृधम्** - युद्धम् । रा. रघु.
**मृष्टम्** - रम्यम् । रा.
**मृष्टान्नभुक्** - एकः स्वादुभुक् । वि.
[**मृष्टाष्टिः** - मृष्टान्नभोजनम् । ई.]
**मेघः** - मिह सेचन इति धातोः पचाद्य-च्प्रत्यये न्यङ्क्वादित्वात् कुत्वे मेघ इति रूपम् । ततश्च मेघशब्देन वर्षोन्मुखाव-स्थोच्यते । एवमेवाभ्रमेघयोर्भेदो व्यासार्यै-रुक्तः । छा. मिह सेचन इति धातोः मेघः इति रूपम् । श्रु. "मिह सेचने" धातुः । सेचनावस्थाविशिष्ट उच्यते (जलदः) । अधि. सेचकत्वावस्थापन्नः .......... । छा.
**मेघनादः** - इन्द्रजिन्नामा रावणसुतः । रा.
**मेचकम्** - श्यामलम् । वै.
**मेदिनीपतिः** - कपिलरूपास्थानेन धराधरः । सह.
**मेधः** - यज्ञः । तै.
**मेधजः** - मेधे देवकीपुत्रीयव्रतरूपे यज्ञे जातः । सह.
**मेधवा** - यज्ञगमयिता । तै.
**मेधा** - ग्रहणधारणसमर्थबुद्धिः । तै. ज्ञानम् । तै. धारणक्षमा बुद्धिः । 'मेधा धीर्धारण-क्षमा'' इति यादवः । रा. धारणावती धीः । गी. धारणाशक्तिः । वि. ध्यानम् । "मेधा-मनीषे मा विशतां समीची भूतस्य भव्यस्यावरुद्ध्य" इति श्रुत्यनुसारात् । 'धीर्धारणावती मेधा' इति च निघण्टुः । (.... न मेधया न बहुना श्रुतेन) । त. निदिध्यासनम् । श्रु. सु.
**मेधावी** - तत्कालोचितकर्तव्यविषयक-ज्ञानवान् । दूरदर्शी । रा. निस्सीमनित्य-भूमानुगणसहजसार्वज्ञ्यः । सह. यथा-वस्थिततत्त्वज्ञानः । गी.
**मेध्यः** - मेधः यज्ञः, तमर्हतीति मेध्यः । बृ.
**मेध्यम्** - यज्ञार्हम् । बृ. विशुद्धम् । भा.
**मेध्याः** - पशवः । भा.
**मेने** - ज्ञातवान् । बृ.
[**मे मिषतः** - पश्यन्तं मामनादृत्य । अनादरे षष्ठी । या.]
**मे श्रुतम्** - 'मे' इति सम्बन्धसामान्ये षष्ठी । मया श्रुतमित्यर्थः । छा.

**मेषविसर्पितम्** - उज्जृम्भणम् । यथोक्तं द्रमिडभाष्ये "तस्याज्ञया धावति वायुः । नद्यः स्रवन्ति । तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति" । वे.

**मेहनम्** - मूत्रोत्सर्जनम् । बृ.

**मैत्रः** - अपकृष्टेष्वपि भूतेषु स्वसाम्यबुद्धिः । भा. अवञ्चकः । भा.

**मैत्रम्** - मित्रदैवत्यम् । वि.

**मैत्रमुहूर्तः** - दिवसस्य पञ्चदशभागेषु घटिकाद्वयात्मकः तृतीयो मुहूर्तः । रा.

**मैत्री** - शरणागतिः । नि. स्वसाम्यबुद्धिकृतहिताचरणम् । भा.

**मैत्रेयः** - मित्रासुतः । छा.

**मैत्र्या** - हिताचरणेन । भा.

**मैथुनः** - मिथुननिमित्तकसुखविशेषः । क. स्त्रीसम्भवा प्रीतिः । छा.

**मैरेयः** - मद्यविशेषः । रा.

**मैरेयम्** - मिरादेशे भवं खर्जूरादिहेतुकं मद्यम् । रा.

**मैरेयकम्** - धातकीगुडमिश्रवारिभिः कृतं मद्यम् । रा.

**मोक्षः** - अविद्यानिवृत्तिः । श्री.श.त. अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवः । न्यासि. आत्मन उपरिदेशावस्थानम् (सौगतमते) । बृ. कर्मनिवृत्त्या तन्मूलकसुखदुःखादिनिवृत्तिः । अधि. देशविशेषावच्छिन्नभगवदनुभवः । वे. देशविशेषावच्छिन्नानन्दः । वा. निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवः । श्री. निरतिशयानन्दब्रह्मानुभवः । नि. निर्दुःखनिरतिशयानन्दरूपभगवदनुभवः । न्यासि. निवृत्तरागादिक्लेशस्य स्वाभाविकात्मस्वरूपाविर्भावः (जैनमते) । श्री. प्रतिबन्धकनिवृत्तिः । वस्तुतस्तु अविद्यानिवृत्तिः । श्रीत. महानन्दात्मकः । आ. संसारविगमयाथात्म्यम् । गी. सततोर्ध्वगमनं जीवस्य (सौगतमते) । बृ. [प्रकृतिसम्बन्धनिवृत्तिपूर्वकोर्ध्वगतिप्राप्तिः । ई.]

**मोक्षणम्** - न कोपनिवृत्तिरियम्, किन्तु पुण्यापुण्यात्मकसर्वपापनिवृत्तिः । निग्रहसङ्कल्पनिवृत्तिः । श्रीत.

**मोक्षणसङ्कल्पः** - अविद्यानिवर्तनसङ्कल्पः । प्रतिबन्धकनिवर्तनसङ्कल्पः । श्रीत.

[**मोक्षधर्मः** - महाभारतैकदेशग्रन्थविशेषः । सच्च.]

**मोक्षपुरुषार्थः** - यथावस्थितस्वरूपप्राप्तिः । ता.

**मोक्षोप्रदत्वम्** - कोपनिवृत्त्यादि-कृत्स्नमोक्षप्रदानव्यापाराश्रयत्वं भगवत एवेति तादृशं भगवदसाधारणम्। अंशतः श्रीसाधारणम्। श्रीत.

**मोक्षहेतुव्रतविशेषः** - परम्परया (ज्ञान-द्वारा) मोक्षहेतुः शातवार्षिकपाञ्च-कालिकधर्मानुष्ठानात्मकं व्रतम्। रत्न.

**मोक्षाश्रमः** - पारिव्रज्यम्। वि.

**मोक्षापायत्वम्** - अविद्यानिवर्तकत्व-मुभयनिष्ठम्। 'दीपस्त्वमेव जगतां दयिता रुचिस्ते दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम्'। अविद्यानिवृत्तिकर्तृत्वम्। श्रीत.

**मोघकर्मा** - मोघारम्भः। गी.

**मोघज्ञानः** - निष्फलज्ञानः। गी. ज्ञानस्य मोघत्वं स्वाधीनप्रवृत्त्यभिमतफलराहित्यम्। ता.

**मोघारम्भः** - उपक्रमप्रभृति निष्फल-प्रवृत्तिः। ता.

**मोघाशः** - मोघवाञ्छितः। निष्फल-वाञ्छितः। गी.

**मोघाशिनः** - देवातिथिपितृपूजानु-पयुक्तान्नभोजिनः। वि.

**मोदः** - आनन्दीभवनम्। क. इष्टवस्तुला-भजन्यं सुखम्। तै.

**मोहः** - अज्ञानम्। ता. अज्ञानम्। अयथाज्ञानं च। गी. अज्ञानं विपरीतज्ञानञ्च। च. अनुरागः। 'अविद्यामूर्छयोर्मोहः प्रीतिभेदेऽपि' इति कविदर्पणे। पा. कामादिजनितः चित्तविकारः। अज्ञानम्। बृ. कार्यतत्त्वापरिज्ञानम्। रा. कृत्याकृत्य-विवेकशून्यत्वम्। अच्यु. कृत्याकृत्यविष-यकसम्यग्ज्ञानहानिः। वर. देहात्मनोरभेद-भ्रमः। विकल्पः। आत्मनि देवत्वाद्यारोपः। भा. देहात्मभ्रमः। व. भ्रान्तिज्ञानम्। श्रु. मृतेरर्धसम्पत्तिः। अर्धमृतिरिति यावत्। बृ. यथावस्थितवस्त्वप्रकाशः। गी. वात्सल्यम्। रा. विपरीतज्ञानम्। गी.रा.श्रु. विपर्ययज्ञानम्। गी. वैचित्त्यम्। या. [यथावस्थितात्म-स्वरूपाज्ञानम्। र.]

**मोहग्रहः** - अज्ञानदुराग्रहः। वि.

**मोहमञ्जूषा** - मोहनपञ्जरम्। वि.

**मोहकलिलम्** - मोहरूपं कालुष्यम्। गी.

**मोहनम्** - मोहहेतुः। गी.

**मोहनीयम्** - बहुषु विप्रतिषिद्धेषु मोक्षमार्गेषु विशेषानवधारणम्। बृ.

**मोहिनी** - आश्चर्यजनयित्री। भा.

**मौग्ध्यम्** - मोहम्। अति.

**मौनम्** - आलम्बनसंशीलनम्। बृ. मित-भाषणम्। भा. वाक्प्रवृत्तिनियमनम्। गी. वाङ्नियमः। वृथालापवर्जनम्। भा. श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपास-नालम्बनस्य पुनः पुनः संशीलनं तद्भावना-रूपम्। श्री.

**म्रदिमा** - आश्रितविश्लेषासहत्वम्। वर.

**म्लोचन्ति** - अस्तं गच्छन्ति। उ.बृ.

## य

**यकृत्** - कुक्षिदक्षिणभागस्थः काल-

कण्ठाख्यो मांसपिण्डः । रा. हृदयस्य अधोदेशवर्तिदक्षिणमांसखण्डः । बृ.

**यक्षम्** - पूज्यम् । बृ.

**यक्षाः** - अम्भांसि जक्षामेत्युक्तवन्तो ब्रह्मसन्निधौ यक्षा इति ब्रह्मकृतनामधेयाः । रा. भक्षणाध्यवसायाः । वि.

**यजनम्** - परिपूर्णशेषवृत्तिः । ता. पूजनम् । गी.

**यजुष्पतिः** - भगवान् । भा.

**यजूंषि** - यजुर्मन्त्राः । छा.

**यज्ञः** - आराधनम् । पा. कल्पसूत्रम् । बृ. देवताराधनम् । 'यज देवपूजाया'मिति स्मृतेः । ता. देवतोद्देश्यकद्रव्यत्यागः । वा. फलाभिसन्धिरहितभगवदाराधनरूपमहायज्ञाद्यनुष्ठानम् । गी. भगवदाराधनभूतः क्रियाकलापः, अथवा यज्ञपुरुषः । वेकौ. यज देवपूजायाम् । ते बहुविधाः कर्मयोगप्रकरणे गीताः । यज्ञानां जपयज्ञः श्रेष्ठः । यागहोममात्रे च यज्ञशब्दः प्रसिद्धः, 'यज्ञदानतपःकर्म', 'ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वती'ति । विष्णुः, 'यज्ञो वै विष्णुः' इति (शतपथब्राह्मण) श्रुतेः । ता. यज्ञाराध्यः । सह. नि. स्वाराधनधर्मसमृद्धिरिक्तानां स्वयमेव यज्ञः । सह.

**यज्ञ इज्यते** - यज्ञः क्रियते । ता.

**यज्ञकल्पः** - यज्ञाराध्यः यज्ञैः कल्प्यत इति । भा.

**यज्ञकृत्** - जगद्धिताय यज्ञं करोति आदौ सृजतीति । सह.

**यज्ञगुह्यम्** - निरपेक्षोऽपि यत् सापेक्षवत् यज्ञेषु पुराडशादिकं भुक्त्वा तृप्यन् तर्पयति, तत् यज्ञविधिगतिसामान्यविद एव विदन्ति न स्थूलदृशः । अतो यज्ञस्य गुह्यं रहस्यमिति । सह.

[**यज्ञतनुः** - भगवान् । यज्ञो वै विष्णुरिति श्रुतेः । या.]

**यज्ञपतिः** - स्वयज्ञफलप्रदः । सह.

**यज्ञभुक्** - यज्ञान् भुङ्क्ते भुनक्ति वेति । सह.

**यज्ञभृत्** - विकलमपि यज्ञं स्वस्मरणपूर्णाहुतिभ्यां पुष्णातीति । सह.

**यज्ञवाहनः** - शक्तिश्रद्धाऽधिकारदानेन यज्ञं वाहयति निर्वाहयतीति । सह.

**यज्ञविद्या** - धर्ममीमांसा । वि.

**यज्ञशीलः** - यज्ञः शीलं सद्वृत्तं यस्य । रा.

**यज्ञसाधनः** - यज्ञाः साधनानि ज्ञानद्वारा स्वसिध्युपाया अस्येति । सह.

**यज्ञाङ्गः** - समर्थानुष्ठितं यज्ञान्तरमपि अङ्गं शेषभूतं यस्येति । सह.

[**यज्ञाग्रहरः** - यज्ञानां श्रेष्ठभागभाक् । या.]

**यज्ञान्तकृत्** - यज्ञस्य अन्तं पर्यवसानभूतं स्वतत्त्वज्ञानं करोतीति । सह.

**यज्ञायज्ञीयम्** - सामविशेषः । तदधिष्ठातृदेवता पर्यङ्कशीर्षण्यम् । कौ.

**यज्ञी** - सर्वयज्ञानां शेषी । सह.

**यज्ञीयं कर्म** - अङ्गभूतं कर्म । श्रु.

**यज्वा** - अशक्तानां स्वयमेव यजमानः । सह.

**यत्** - यथा । या. भक्तानां रक्षायै यतत इति । सह यादृशम् । गी. व्यापकम्; एति गच्छति सर्वानिति यत् । बृ.

**यतः** - यन्त्रितः । वि.

**यतचित्तः** - निवृत्तसकलेतरमनोवृत्तिः । गी.

**यतचित्तात्मा** - यतचित्तमनाः । न्यासिटी.

**यतनम्**-आराधनम् । ता. भगवदुद्यानादि-करणम् । वे. व्यापारः । सर्वा.

**यतमानः** - अभ्यस्यन् । ता.

**यतमानसंज्ञा** - स्थितप्रज्ञस्य चतसृष्व-वस्थासु प्रथमावस्थेयम् । इयमेव "यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रि-याणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता" इत्युच्यते । "प्रथमं बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतेत । इयं यतमानसंज्ञा" । ता. [दोषाणां परिपाचनायारम्भः । (सांख्यमते) । र.]

**यतयः** - निर्जितेन्द्रियग्रामाः । मु. यमादियुक्ताः सन्न्यासिनः । तै.

**यतात्मा** - आत्मनि नियतमनाः । गी.

**यतिः** - नियतेन्द्रियः । वि. यतनशीलः । गी.

**यतिथ्यम्** - यावत्संख्याकायाम् । यावतां पूरणी यतिथी । 'तस्य पूरणे' इति तिथुगागमः । बृ.

**यतोजाता** - अज्ञातदेशमातापितृका । रा.

**यतोमूलम्** - यत्कारणकम् । रा.

**यत्तः** - जागरूकः । रा.

**यत्तत्** - तच्छब्दशिरस्केन यच्छब्देनानु-वादः श्रुत्यादिप्रसिद्धतरत्वद्योतनाय । ता. यत्तदित्यत्र तच्छब्दस्तु न यत्पदप्रतिनिर्देश-रूपः । किन्तु प्रसिद्धिपरामर्शी । यत्पदसन्नि-हितस्य तच्छब्दस्यानुवादकोटिनिवेशेन प्रसिद्धिपरामर्शकत्वनियमात् । तदुक्तं काव्यप्रकाशिकायाम् यच्छब्दस्य । निकटे स्थितः तच्छब्दः प्रसिद्धिं परामर्शयतीति । या.

**यत्र** - यदा । बृ.

**यत्रसायंगृहा** - (गतिः) यत्र सायसमयः तदेव गृहं यस्यां सा । या.

**यथा** - यथावत् । सत्यम् । येन प्रकारेण । यस्माद्धेतोरिति । छा.

**यथाकामम्** - इच्छामनतिक्रम्य । श्रु.

**यथाकामचारः** - यथेष्टं सञ्चरणम् । छा.

**यथाकारी** - यथा कर्तुं शीलमस्येति यथाकारी । बृ.

**यथाचारी** - यथाऽऽचरितुं शीलमस्येति यथाचारी । बृ.

**यथादृष्टि** - यथादर्शनम् । सर्वा.

**यथापूर्वम्** - (बुद्धिस्थम्) । संस्कारवत् स्वस्मिन्नवस्थितम् । श्रु.

**यथाभूतवादी** - सत्यवादी । त.

**यथायथम्** - येन प्रकारेण (न्यूनाधिक-भावरूपेण) सम्भवति तेन प्रकारेण । यथाशब्दः प्रथमः पदार्थानतिवृत्तिवचनः ।

द्वितीयः प्रकारवचनः । "यथाऽसादृश्य" इत्यव्ययीभावः । सर्वा (आ).

**यथावत्** - यथाप्रतिज्ञम् । रा. यथार्हम् । यथाशब्दात् तदर्हमिति अर्हार्थे वतिप्रत्ययः। या.

**यथाविधि** - यथाक्रमम् । रा.

**यथाविनियोगम्** - मन्त्रलिङ्गरूप-विनियोगानतिक्रमेण । मन्त्रश्च द्वयं प्रणव इत्येवम् । श्रीत.

**यथासन्नान्** - यथा संस्प्रष्टुं शक्यते तथा आसन्नान् । समीपवर्तिन इत्यर्थः । रा.

**यथास्वैरगतः** - यथेष्टचारी । रा.

**यथेच्छावासः** - यथेच्छः आवासः (वासस्थानम्) आश्रमः यस्य सः । वि.

**यथेतम्** - यथागतम् । छा. यथागतम् । इण् गताविति धातुः । श्रु.

**यथोक्तकारः** - आज्ञाकरः । रा.

**यदभिसंविशन्ति** - यत्प्राप्नुवन्ति । वा.

**यदि** - किम् । श्रु.

**यदिवा** - विकल्पार्थक एकनिपातः । रा.

**यदुः** - ययातिना देवयान्यां जनितः क्षत्रियः । रा.

**यदुश्रेष्ठः** - यादववंशोद्धरणेन यदूनां यादवानां श्रेष्ठः प्रशस्यतमः । सह.

**यदृच्छया** - दैवात् । रा.

**यदृच्छा** - स्वेच्छा या. । [स्वच्छन्दम्, अनिमित्तं वा । "स्वच्छन्दमनिमित्तं च यदृच्छा" इति हलायुधः । या.]

**यदृच्छागतम्** - अनियमेन आगतम् । अयत्नेन दैवाल्लब्धम् । 'यदृच्छाऽनियमो भवे'दिति वैजयन्ती । या.

**यदृच्छासुकृतम्** - वाणिज्यार्थं गतस्य पुण्यदेशगमनं, कुड्यार्थं खनतो गवादिपा-नयोग्यजलाधारपल्वलादिकमित्यादि । नि.

**यद्यद् भवन्ति** - ये ये भवन्ति । छा.

**यद्वृत्तम्** - यच्छब्दः । श.

**यन्ता** - सारथिः । सि.

**यन्त्रम्** - देहेन्द्रियावस्था प्रकृतिः । गी.

**यन्त्रिका** - (पादुकायां) अङ्गुल्यवलम्ब-नशंकुः । पा.

**यन्त्रितः** - कृतप्रयासः । नियमितः । रा. श्रुतिस्मृतिमर्यादानतिलङ्घी । रा.

**यमः**-अखिलमकण्टकानुकूलं यच्छतीति। सह. कामानभिष्वंगः । भा. तत्तत्फल-नियामकान् यमादीनपि यच्छतीति । सह. यमयति सर्वानिति । सुर्वान्तर्यामी । ई.म. सर्वेन्द्रिययमयिता । कौ. हिंसानृतादि-निषिद्धत्यागरूपः । वि.

**यमाः** - बाह्याभ्यान्तरेन्द्रियनियमनोपायाः। भा.

**ययातिः** - नहुषस्य पुत्रो राजर्षिः । रा.

**यवः** - दीर्घशूकः । वि.

**यवनिका** - तिरस्करिणी । रत्न.

**यशः** - अनुग्रहः । कौ. आत्मा । छा. गुणवत्ताप्रथा । गी. श्रु. पराक्रमादिगुण-निमित्ता प्रथा । रा. पराक्रमादिजन्या प्रथा । त. बलकृता प्रथा । रा. सौलभ्यप्रथा । श्रु.

**यशःप्रीतिः** - स्तुतिप्रियता । भा.

**यशस्विनी** - ऋतुप्राप्तिरूपयशोयुक्ता। बृ.
**यशोवीर्यम्** - प्राणाः। यशसो वीर्यस्य च प्राणायत्तत्वात् प्राणा एव यशोवीर्यमित्यर्थः। बृ.
**यष्टिहाः** - यष्टिभिरब्रह्मविदो गन्तॄन् घ्नन्तीति यष्टिहाः। कौ.
**या** - 'या' इति स्तोभः। छा.
**यागः** - देवतोद्देशेन द्रव्यत्यागः। रा.भाव.
**याच्ञा** - प्रार्थना। भा.
**याजकः** - अध्वर्युः। रा.
**याज्ञिकाः** - यज्ञाध्येत्तारः। बृ.
**याज्याः** - यागसाधनभूता ऋचः। बृ.
**यातम्** - संचारः। पा.
**यातयामम्** - चिरकालावस्थितम्। गी.
**यातु** - रक्षः। पा.
**यात्रा** - संसारगतिः। रा.
**याथात्म्यम्** - अनवच्छेदेन पुष्कलमनारोपितं रूपम्। गी. यथावस्थितप्रकारः। ता.
**यादः** - (सकारान्तः) जलजन्तुः। रा.
[**यानम्** - शत्रुजिगीषया यात्रा। या.]
**यामः** - श्रेष्ठांशः। यथाघृतात्परं मण्डमिवातिसूक्ष्मम्। इति केचित्। ता.
**यामदुन्दुभिः** - यामावसानसूचको वाद्यविशेषः। रा.
**यामाः** - स्वायंभुवमन्वन्तरे देवाः। "यामा नाम तदा देवाः"। वि.
[**यामुनमुनिः** - भगवद्रामानुजमुनेः परमाचार्यः आगमप्रामाण्यसिद्धित्रयस्तोत्ररत्नादिप्रबन्धनिर्माता। सच्च.]

**यायजूकः** - इज्याशीलः। रा.
**यायावर्यम्** - याचितम्। यायावरः प्रवासी तस्य कर्म; प्रवासादिना याच्ञापूर्वकमार्जनम्। भा.
**यावत्** - अवध्यर्थकमव्ययम्। रत्न. साकल्यम्। ता.
**यावता** - प्रत्युत। श्रु.
**यावदर्था** - समग्रार्था। या.
**यावदायुषम्** - यावदायुः। छा.
**युक्तः** - अवहितः। ता. अवहितः, व्रतादियुक्तो वा। (युक्तश्छन्दांस्यधीयीत)। त. अर्हः। ता. आत्मतत्त्ववित्। गी. आत्मव्यतिरिक्तफलेष्वचपलः। गी. समाहितचेताः। ता. पाशेन युक्तः। छा. मितः। योगार्हः। गी. सावधानः। रा.
**युक्तम्** - युक्तिमत्। श्रु. योग्यम्। रा.
**युक्ततमः** - श्रेष्ठतमः। गी. अधिकः, योग्यतमः। ता.
**युक्तत्वम्** - आत्मावलोकनक्षमत्वम्। स्तो.
**युक्तरूपम्** - युक्ततरम्। प्रशंसायां रूपप् इति रूपप्प्रत्ययः। रा.
**युक्ताः** - परमपुरुषाराधनरूपमिदमिति चिन्तायुक्ताः। गी. वेदशास्त्रेषु अभिरताः। तै.
**युक्ताङ्गत्यागः** - प्रयोजकस्याप्रयोजकत्वकल्पनम्। श.
**युक्तात्मा** - 'युक्तात्मा' इत्याशङ्कायां क्तः। परमात्मविषययोगाशंसाविशिष्ट एव आत्मा यस्य सोऽत्र युक्तात्मा। ता.

**युक्तात्मानः** - आविर्भूतब्रह्मरूप-विशिष्टात्मानः। मु.

**युक्तिः** - अनुमानम्। त.

**युक्त्वाय** - (मनसा) प्रणम्य; छन्दसि क्त्वो यक्। श्वे.

**युगम्** - चतुर्युगम्। ता. कल्पः (युज्यन्तेऽस्मिन् सर्वे ग्रहाः, एकस्थानं यान्तीति)। वि.

**युगपत्** - समानकाले। सर्वा (आ).

**युगादिकृत्**-संवर्तके(र्ते)ऽपि प्रलयादनुपप्लुतजगत्प्रवर्तनेन अन्तेपि युगस्यादिं करोतीति। सह.

**युगान्तः** - प्रलयः। रा.

**युगावर्तः** - स्वधर्मव्यवस्थया युगानि कृतादीनि आवर्तयति पौनः पुन्येन परिवर्तयति। सह.

[**युग्याः** - युगं वहन्तीति युग्याः अश्वाः। र.]

**युजे** - योगाय। श्वे.

**युञ्जानः** - यतमानः। रा.

**युद्धम्** - युद्धसाधनबलम्। कौ.

**युवनाश्वः** - धुन्धुमारनृपपुत्रः। रा.

**युवनाश्वजः** - मान्धाता। रा.

**युवा** - अनेन बाल्ययौवनसन्धिर्लक्ष्यते। युवा कुमार इत्यभिधानात्। सुन्दर. जरादिशून्यः। तै. [पञ्चविंशतिवार्षिकः। ई.]

**यूथम्** - समूहः। 'देवदानवयूथयोः'। या.

**यूथबद्धान्** - यूथतया बद्धान्। समूहीभूतानित्यर्थः। रा.

**यूपः** - यागप्रख्यापकस्तम्भविशेषः। रा.

**योक्त्रम्** - मथनरज्जुः। रा.

**योगः** - अपूर्ववस्तुलाभः। रा. अप्राप्तस्य प्राप्तिः। गी. अभेदः, 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते' इत्यत्र। न्यासिटी. अलब्धलाभः। ता.रा.रघु.पा.वेकौ. अहरहः योगकाले अनुष्ठीयमानं यथोक्तलक्षणमुपासनम् (यथोक्तलक्षणं मनसोपास्यसंशीलनम्)। ता. आचार्यसकाशात् अपूर्वार्थस्य श्रवणम्। दया. आत्मावलोकनम्। गी. आसनादिविशेषपरिकरवान् साक्षात्कारार्थं आत्मावलोकनापरनामा चित्तसमाधानविशेषरूपो व्यापारः। गीसं. उपायः। "योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु" इति निघण्टुः। गी. उपायः। रा. उपायः भक्तियोगादिः। युज्यत इति योगः अखिलहेयप्रत्यनीकत्वकल्याणगुणवत्त्वरूपमुभयलिङ्गत्वम्। स्रष्टृत्वपालयितृत्वसंहर्तृत्वसौशील्यवात्सल्यसौन्दर्यादिगुणयोगः। ता. कर्मयोगः। श्री. ता. गतिचिन्तनम्। गी. ध्यानशब्दवाच्यानुचिन्तनमूलमवलोकनम्। विशिष्टक्षेत्रादिवर्तिनः परस्याभिगमनं वा। गीसं. परमा गतिः। क. बुद्धियोगः। गी. ब्रह्मणि मनोनिवेशः। नि. "**ब्रह्मणे त्वा महस** ओमित्यात्मानं युञ्जीते" ति विहितज्ञानविशेषः। तै. भक्तियोगः। अत. मोक्षसाधनभूतं भगवदुपासनम्। गी. युज्यते

प्राप्यते चेतनः अनेनेति । "साक्षान्मोक्षैकहेतुत्वात् योग इत्याभिधीयते" । सह. विषयान्तरेभ्यः चित्तवृत्तिनिरोधः । ता. सङ्कल्परूपध्यानम् । ता. सन्नहनम् । उत्साहः । रा. सम्बन्धः । वर. समाधिपर्यन्तकर्मयोगनिष्ठं शास्त्रम् । न्याप. सम्मतिः । रा. समन्वयः । अधि. सिद्ध्यसिद्ध्योः समत्वरूपं चित्तसमाधानम् । गी. योगशब्दस्य सिद्ध्यसिद्धिसाम्ये क्वचिदपि प्रयोगो न दृश्यत इत्यत्राह योग इति । चित्तसमाधाने प्रयोगस्तावद्योगानुशासनसिद्धः । इदमपि समत्वं तद्रूपमिति योगशब्दार्थ इत्याकूतम् । ता. सूत्रम् । श्रु. स्वाम्यम् । युज्यत इति योगः । ता. हेयप्रत्यनीककल्याणगुणगणरूपयोगः । "ननु .... पूर्व 'सौशील्यवात्सल्य सौन्दर्यादिकल्याणगुणयोग' मित्युक्तम् । इहतु योगशब्दनिर्दिष्टं स्रष्टृत्वादिकमुच्यते । तत् कथं घटते ? इत्थम् । उभयत्रोभयमप्यादिशब्देन सङ्गृहीतमिति । अत एव हि 'एतां विभूतिं योगञ्चे' त्यत्र हेयप्रत्यनीककल्याणगुणगणरूपं योगमिति प्रयोजकेन संगृहीतम्" । ता. [द्वयार्थानुसन्धानैकाग्र्यरूपः, स्र्वव्यापारोपरतिसुभगनिद्रापूर्वापरकालयोस्तत्पूर्वापररात्रेषु "युञ्जान" इत्याद्युक्तावसरलभ्यः । "दिनावसाने सम्प्राप्ते पूजां कृत्वा समभ्यसेत् । योगं निशावसाने च विश्रमैरन्तरीकृतम् । पंचमो योगसंज्ञोऽसौ ....... ।" इति । "ईदृशः परमात्मायं प्रत्यगात्मा तथेदृशः । तत्सम्बन्धानुसन्धानमिति योगः प्रकीर्तितः ॥ आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥" पाञ्च.]

**योगम्** - शेषत्वज्ञानलक्षणयोगम् । श्वे.

**योगं युञ्जन्** - योक्तुं प्रवृत्तः । गी.

**योगक्षेमसाधारणसाध्यत्वम्** - यस्मिन् सति उत्तरक्षणे यस्य सत्त्वं, यदभावे च यदभावः, तत्साध्यत्वम् । च.

**योगगुणे** - गुणो गुणनमभ्यासः, योगाभ्यासे । श्वे.

**योगधारणा** - योगाख्यधारणा, निश्चला स्थितिः । गी.

**योगधीः** - असङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः । गीसं.

**योगनिद्रा** - योग एव निद्रा । योगो नाम भगवत्समाधिविशेषः । वि.

**योगमाया** - क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्यमाया । ता.

**योगमात्रसाधरणसाध्यत्वम्** - यत्सत्वे उत्तरक्षणे यस्योत्पत्तिः यदभावे च यस्यानुत्पत्तिः तत्साध्यत्वम् । च.

**योगयज्ञाः** - पुण्यतीर्थाद्यभिगमनतन्निवासादिप्राप्तिषु निष्ठाकारिणः । (योगयज्ञा इत्यत्र योगस्संयोगः प्राप्तिरित्यर्थः) । ता.

**योगविदः** - व्यवहितोपायनिष्ठाः । सह.

**योगविदां नेता** - उपायभक्तिनिष्ठानां फलपर्यन्तं निर्वाहकः (नेता) । सह.

**योगव्युत्थानकालः** - योगरहित्यदशा। भाव.

[**योगाङ्गानि** - (अष्ट) यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणि। र.]

**योगाग्निमयं शरीरम्** - सर्वरोगादिदाहसमर्थतया अग्निरूपो यो योगस्तदारब्धं सत्त्वप्रचुरपञ्चभूतात्मकं शरीरम्। श्वे.

**योगाचारः** - बौद्धशिष्येषु चतुर्ष्वन्यतमः। योगः पर्यनुयोगः आचारोऽङ्गीकारः। सर्वशून्यत्ववादं बुद्धोक्तं श्रुत्वा बाह्यार्थशून्यत्वमङ्गीकृत्य आन्तरशून्यत्वविषये पर्यनुयोगकरणादयं योगाचारः। न्यासिटी.

**योगाधारः** - योगाप्यायितः। वि.

**योगिनः** - चतुर्विधभगवदुपासकाः। श्रु. योगनिष्ठाः। श्री.

**योगी** - कर्मयोगनिष्ठः। गी. कर्मयोगानुष्ठानशीलैः। सुन्दर. कर्मसम्बन्धी। गी. ब्रह्माध्यायी। वि. ज्ञानी। पुण्यकर्मा। गी. अत्र योगशब्द उपायमात्रवाची। यद्वा सम्बन्धमात्रवाची; धूमादिसामर्थ्यात्तु पुण्यकर्मस्वरूपसम्बन्धिविशेषसिद्धिरिति भावः। ता. मुमुक्षुः। नि. युज्यतेऽनेनेति योगः अघटितार्थघटनम् महाप्रभावः। सोऽस्यातिशयेन नित्ययोगेन चेति। सह.

**योगीशः** - बद्धेष्वपि सहजसमाधिकानां सनकादियोगिनामपि धुर्यः। सह.

**योगेश** - विचित्रविविधानन्तशक्ते। भा.

**योगेश्वरः** - कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनस्याचेतनस्य च वस्तुनो ये ये स्वभावयोगाः तेषां सर्वेषां योगानामीश्वरः स्वसङ्कल्पायत्तस्वेतरसमस्तवस्तुस्वरूपस्थितिप्रवृत्तिभेदः। गी. योगेश्वरशब्दस्य 'कथयतः स्वय' मित्यत्राप्ततमत्वाय प्रागुक्तादर्थादर्थान्तरकथनं अनेकार्थसम्भवात्, प्रकरणानुगुण्येन तत्तद्विशेषपरिग्रहोपपत्तेश्च। ईश्वरशब्दस्य नियन्तव्यसाकाङ्क्षतया यागशब्देन नियन्तव्यविशेषसमर्पणं च युक्ततमम्। अतो विवक्षितविजयाद्यनुगुणमर्थमाह - कृत्स्नस्येत्यादि ।ा। ता. ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधिः। गी. योगेश्वरादित्यत्र योगशब्दः कल्याणगुणयोगपरः। ता.योगः कल्याणगुणयोगस्तदीश्वरः, ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधिः। 'अथवा अश्वपतिः धनपतिरित्यादिवत् गुणभूयस्त्वापेक्षया गुणानामपि नियमनेन वा योगेश्वरशब्द' इति भावः। ता.

**योग्यता** - अन्वयाबाधः। श. सहकारिसन्निवौ कुर्वत्स्वभावत्वं, सहकार्यभावप्रयुक्तकार्याभाववत्त्वं वा। ता.

**योग्यत्वम्** - (योग्यानुपलब्धिरित्यत्र) तत्तदधीनव्यतिरिक्तहेतुसाकल्यम्। त.

**योग्या** - अभ्यासः। अत्र यद्यपि 'प्रायेण योग्यं' इत्येव पाठो दृश्यते। ....नानार्थरत्नमालापि तदनुकूलैव, तथापि .... मेदिनीकोशेन सुश्रुतादिप्रयोगबाहुल्येन च स्त्रीलिङ्गपाठ एवादृतः। या. (४-११९) विज्ञातपरिशीलनम्। रा.

**योग्यानवग्रहः** - योग्यानुपलम्भः । न्यासिटी.

**योग्यानुपलब्धिः** - भावरूपावस्थान्तरोपलब्धिः । श्र. यत्र यत्सम्बन्धसत्त्वं, तत्र तत्सम्बन्धवत्तया तदुपलम्भावश्यकत्वं, तत्रत्यानुपलब्धिः । च.

**योजनम्** - योगः । श्वे. श्रु.

**योनिः** - आसादनस्थानम् । बृ. उपादानम् । सुबा. वे. कारणम् । तै. जगद्योनिभूता प्रकृतिः । श्रु. जन्म । श्री. जातिः । रा. निर्गममार्गः । तै. (मूल) प्रकृतिः । श्वे. माता । वि. स्थानम् । मा. कारणम् । मा(कू).बृ.

**योनिमुक्ताः** - प्रकृतिबन्धविनिर्मुक्ताः । श्वे.

**यौक्तिकबाधः** - युक्त्या बाधः । श्रु.

**यौतकम्** - पित्रादिदत्तं स्त्रीधनम् । पा. [वधूवरयोर्देयं धनम् । "कन्यादाने तु यद्दत्तं यौतकं युतकञ्च तत्" इति वैजयन्ती । या.]

**यौनम्** - मिश्रणप्रयुक्तभोजनादिकम् । 'यु मिश्रणे' । योनिः मिश्रणं वैवाहिकसम्बन्धः, तत्प्रयुक्तं भोजनप्रतिभोजनादिकम् । भा.

**यौवतम्** - युवतीनां समूहः । या.

**यौवनम्** - कौमारानन्तर्योपलक्षणीयः स्वभावविशेषः । न तु कौमारानन्तरभाविन्येव दशा, तद्यौ (ईश्वर) वनस्यानादित्वात् । देवादिषु केषाञ्चित् युवत्वेनैवोत्पत्तिदर्शनात् । ता.

## र

**रक्तम्** - रजः । भाव.

[**रक्तद्वैविध्यम्** - रक्तमरुणमिति । रक्तं जपाकुसुमादिवर्णम् । अरुणं किंशुकादिवर्णम् । पाञ्च.]

**रक्तवर्णम्** - रजोगुणमयम् । भा.

**रक्ता** - तमोमयी । श्रु.

[**रघूणां पुरी** - अयोध्या । क्षत्रियविशेषवाचिनो रघुशब्दस्य तद्वंश्येषु सर्वेषु राजसु लक्षणया बहुवचनमिति केचित् । अन्ये तु इक्ष्वाकुनाम्नो देशस्य रघुसंज्ञाऽप्यस्तीति "तस्य राजन्यपत्यवत्" इति विहितस्य प्रत्ययस्य तद्राजसंज्ञया बहुषु लुगित्याहुः । मतद्वयमपि भोजराजेन प्रकाशिकायामुक्तम् । या.]

**रक्षकत्वप्रार्थना** - निरपेक्षरक्षकत्वप्रार्थना । न्याद.

**रक्षणम्** - अनिष्टनिवृत्तिपूर्वकमिष्टप्रापणाम् । षोड. अल्पदुःखदोऽप्यतिशयिताभ्युदयसाधको व्यापारः । श्रु.

**रक्षणः** - गजेन्द्रं स्पर्शनपरिरम्भणसान्त्वनादिभिः रक्षितवान् । सह.

**रक्षा** - इष्टप्रापणपर्यन्तमनिष्टनिवारणम् । श्रु. परप्राप्तिविरोधिनां निग्रहादीनां शमनम् । अभीष्टार्थदानं च (व्रातरक्षैकदीक्षे) । त.

**रक्षासंकल्पविशेषः** - त्रिगुणतिरस्करिणीतिरोधाननिवृत्तिपूर्वकपरिपूर्णानुभवप्रदानसङ्कल्पः । रत्न.

**रङ्गः** - कुसुम्बादिना वस्त्राणां रञ्जनम् । वि.

[मल्लयुद्धमण्डपः । या.]
**रङ्गिणः** - सञ्चारिणः । वि.
**रङ्गोपजीवी** - नटमल्लादिः । वि.
**रचना** - संस्थानम् । श्रु.
**रजः** - कामः । भा. चलनादिहेतुभूतो धर्मविशेषः । श्री. पापम् । रा. लोभप्रवृत्यादिनिदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यम् । न्यासि.
**रजकः** - निर्णेजकः । रा.
**रजस्तमश्छन्नत्वम्** - स्वकर्मोपात्तप्रकृतिगुणभूतरजस्तमोभ्यामावृतज्ञानतया यथावस्थितस्वपरप्रकाशरहितत्वम् ।
**रजस्तोकः** - लोभः । भा.
**रजोभूमिः** - कर्मभूमिः । तै.
**रज्यते** - अनुरक्तो भवति । सुन्दर.
**रञ्जितम्** - आलिप्तम् । रा.
**रणप्रियः** - अभीष्टसमरचेष्टः । सह.
**रतिः** - अत्यन्तादरः । आभिमुख्यम् । ता. इष्टार्थसंयोगजाप्रीतिः । बृ. निरतिशयप्रीतिः । रा. प्रियसङ्गमजा तत्कालप्रीतिः । वि. प्रीतिरिच्छा वा । गद्य. स्रवचन्दनादिजन्या प्रीतिः । श्रु. मु. छा.
**रत्नम्** - श्रेष्ठं वस्तु । रा. [उत्कृष्टं वस्तु । या.]
**रत्नगर्भः** - प्रदेयकामार्थवान् । सह.
[**रत्नत्रयम्** - जयाख्यसात्त्वतपौष्करसंहिताः साक्षाद्भगवन्मुखोद्गताः । पाञ्च.]
**रत्ननाभः** - पाण्डित्यविडम्बन(?)मृष्टोदरव्यक्तनाभिः । सह.

**रथकारः** - क्षत्रियवैश्यानुलोमोत्पन्नः जातिविशेषविशिष्टः । आ.
**रथकृत्** - यक्षः कश्चित् । वि.
**रथचित्रः** - यक्षः कश्चित् । वि.
**रथन्तरम्** - सामविशेषः । वि.
**रथनाभिः** - रथचक्रमध्यवर्तिसरन्ध्रकाष्ठविशेषः । कौ.
**रथमध्या** - रथानां ईहाशीलानां जीवानां मध्ये हृदयगुहायां आत्मत्वेन तिष्ठन्ती । यद्वा रथस्य शरीरस्य श्रीनिवासस्य सौन्दर्यलावण्याद्याकाराप्राकृतपञ्चशक्तिमयदिव्यविग्रहस्य मरकतगिरितटविशाले श्रीवत्स-कौस्तुभादिकल्पिताकल्पे मङ्गलाकारे वक्षःस्थले नित्यसन्निहिता । श्रीसू.
**रथयोगः** - अश्वादिः । बृ.
**रथयोगाः** - अश्वादयः । श्रु.
**रथस्वनः** - यक्षः कश्चित् । वि.
**रथाङ्गपाणिः** - रथाङ्गं पाणावस्येति । चक्रीत्यनेन स्वस्वामिसम्बन्ध उक्तः । अद्य सदोद्यतत्वमित्यपुनरुक्तिः सह.
**रथौजाः** - यक्षः कश्चित् । वि.
[**रभसात्** - हठात् । या.]
**रमणीयचरणाः** - चर्यत इति चरणम्, कर्म । रमणीयकर्माणः । छा. रमणीयकर्माणः । न्यासिटी.
**रयः** - वेगः ।
**रयिः** - अपां वेगवत्त्वात् रयित्वम् । विसर्गश्छान्दसः । धनप्राप्तिहेतुत्वाद्वा रयित्वम् ।

रयिमान्धनवान् । छा. प्रकृतिः । प्र. धनम् । वैश्वानरात्मवस्तिभूतानामपां नाम रयिरिति । अग्नि. नित्यविभूतिः । तै. रैरूपधनप्राप्तिहेतुः । श्रु. सर्वमपि भूतजातम् । प्र.

**रयिष्ठाः** - नित्यविभूतिनिष्ठाः । तै.

**रविः** - आदित्यगणः । गी. 'द्वादशादित्यसाधारणत्वादेकवचन'मिति । ता. उत्त्थानकालतया उदगयनद्वारा रूयते प्रशस्यत इति । सह.

**रवितुल्यरूपः** - स्वप्रकाशः (जीवः) । श्वे.

**रविलोचनः** - रविरश्मिसङ्क्रान्त्यादिमुखेन चन्द्रविद्युद्वरुणान् लोचयति दर्शयतीति । "आदित्याच्चन्द्रमस"मित्यादि । सह.

**रश्मिः** - प्रग्रहः । पा. बन्धनरज्जुः । रा.

**रसः** - अमृतम् । रा. अस्मदादिजिह्वैकग्राह्यविसजातीयेतरः । न्यासि. आनन्दः । तै. व. परायणम् । छा. भावोत्कर्षः । या. रागः । गी. विषम् । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । श्रृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति विश्वः । या. श्रृङ्गारादिः । सुन्दर. सारभूतः । बृ.

**रसतन्मात्रत्वम्** - गन्धशून्यत्वे सति रसवत्तन्मात्रत्वम् । वा.

**रसतन्मात्रम्** - तेजोजन्यम् अप्तत्त्वोपादानम् । सुबा.

**रसनम्** - रूपाग्राहकरसग्राहकेन्द्रियम् । वा. शब्दादिपञ्चके रसमात्रग्राहकमिन्द्रियम् । न्यासि.

**रसभेदाः** - मधुराम्ललवणतिक्तोष्णकषायाः । न्यासि.

[**रससिराः** - मन्मतोद्दीपकशरीरस्थनाडीविशेषाः । ई.]

**रसाः** - श्रृङ्गारादयः । या.

**रसायनम्** - औषधविशेषः । जराव्याधिहरौषधम् । या. शरीरसिद्धिकारणम् औषधविशेषः । षड्रसानां कारणम् । रा. [माधुर्यवत् । या.]

**रसोल्लसा** - क्षुन्नाशकः सिद्धिविशेषः । 'रसस्य स्वत एवान्तरुल्लासः स्यात् कृते युगे । रसोल्लसाख्या सा सिद्धिः तया हन्ति क्षुधं नरः ॥' इति । अस्य सिद्धिविशेषस्याभ्यासबलात् स्वमूर्धन्यमृतांशुबिम्बस्रवदमृततृप्तता भवति । वि.

**रस्याः** - मधुररसोपेताः । गी. अत्र रसशब्दो रसविशेषविषय इत्याह - मधुररसोपेता इति । अनेन प्रत्ययस्यात्र सम्बन्धमात्रोपलक्षकतापि दर्शिता । रस्यन्त इति वा रस्याः । तत्र मधुररसोपेता इति कारणोक्तिः । माधुर्यं हि रसान्तरेभ्यः शरीरस्थितौ विशेषेण हेतुर्भवति । ....भोजनं च स्वस्थस्य मधुररसप्रायतया नियम्यते । ....रसायनादिकालेषु च मधुर एवैको विधीयते । ता.

**रंहतः** - गच्छतः । सुन्दर.

**रंहति** - गच्छति । भाव.छा.

**रहः** - जनवर्जनद्वारा निश्शब्दः प्रदेशः । ता.

[**रहस्यत्रयम्** - मूलमन्त्र, द्वय, चरमश्लोकरूपमन्त्रत्रयमित्यर्थः । र.]

**रहस्यवाणी** - उपनिषत्। सुन्दर.

[**रहस्याम्नायः** - पाञ्चरात्रसंहितामूलभूता वेदशाखा। सच्च.]

**राका** - अङ्गिरसो भार्यायां स्मृतौ जाता। वि.

**राक्षसाः** - अम्भांसि रक्षामेति ब्रह्मसन्निधौ उक्तवन्तो 'राक्षसाः' इति ब्रह्मकृतनामधेयाः। रा.

**राक्षसीम्**-रक्षस्सम्बन्धिनीम्। तामसीम्। ता.

**रागः** - अनागतेषु स्पृहा। गी. अनुकूलविषयोपादानेच्छा। सर्वा. इच्छा। ता. प्राचीनवासनाजनितविषयानुबुभूषा। गी. प्रीतिः। वि. मात्सर्यम्। रा. योषित्पुंसयोः अन्योन्यस्पृहा। गी. रतिप्रकर्षः। वि. विषयप्राप्त्यभिलाषः। वर. विषयान्तरेषु प्रीतिः। गी. श्वेतसर्षपः। 'रागः सिद्धार्थको ज्ञेयः' इति सूदशास्त्रम्। ''सितो मध्वादिमधुरो द्राक्षादाडिमजो रसः। विरलश्चेत् रागः'' इति प्रदीपे। रा. सुखप्रयुक्तविषयीकारचैतन्यम्। सि. [विषयकामना। र.]

**रागात्मकम्** - रागहेतुभूतम्। गी.

**रागादयः** - संस्काराः (बौद्धमते)। श्री.

**रागी** - यशोऽर्थी। गी.

**राजकुलवासी** - राजकुलप्रसूतः, राजकुलान्तरङ्गो वा। श्रु.

**राजगुह्यम्** - गुह्यानां राजा। गी.

**राजगृहम्** - भरतमातुलस्य युधाजितः प्रधाननगरम्। रा.

**राजधर्मसेतुः** - राजधर्ममर्यादाभूतं राजसूयात्मकं कर्म। रा.

**राजनम्** - राजनाख्यं साम। छा.

**राजन्यबन्धुः** - राजापशदः। राजन्याः बन्धवो यस्य सः राजन्यबन्धुः। राजन्यानां बन्धुरिति वा। राजन्याभास इति यावत्। छा. राजन्याभासः, स्वयं अराजन्य एव सन् राजन्यानां बन्धुरिति। बृ.

**राजमात्रः** - अक्षत्रियः प्रभुः। रा.

**राजराज्यम्** - राज्ञां राजत्वम्। वि.

**राजविद्या** - विद्यानां राजा। राज्ञां विद्या, इति वा। गी.

**राजविद्याः** - आन्वीक्षकीत्रयीवार्तादण्डनीतिरूपाश्चतस्रो विद्याः। रा.

**राजसः** - रजोमूलः। गी.

[**राजसत्यागः** - दुःखमित्येव यः कर्म कायक्लेशभयात्त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफं लभेत्॥'' गी.र.]

**राजसम्** - प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम्। परत्वेनावदच्छास्त्रं राजसं परिचक्षते। वेकौ.

**राजसतामसबुद्धी**-अनयोरियान् विशेषः। असमग्रवेदनमन्यथावेदनं च राजस्याम्। यथावन्न जानातीति व्याख्यानात्। तामस्यां तु सर्वं विपरीतं मन्यते। 'सर्वार्थान्' इत्युक्तेः। इत्येके। अन्ये त्वाहुः। प्रकारान्यथात्वं प्रकार्यन्यथात्वं च विशेषः। यद्यप्युभयत्राधिष्ठानभूते धर्मिण्यतद्धर्म एवाध्यस्यते तथापि स्वरूपनिरूपकधर्मवैपरीत्ये

तामसता; यथा शुक्तिरजतभ्रमे। निरूपितस्वरूपविशेषकधर्मवैपरीत्ये तु राजसता; यथा पीतशङ्खभ्रम इति। ता.

**राजसा भावाः** - अतुष्ट्यादयः। ता.

**राजा** - क्षत्रियः प्रभुः। रा. दीप्तिगुणोपेतः। बृ. दीप्तिमान्। छा. नियन्ता। बृ. रक्षिता। तै. राज्यस्य कर्ता। भाव. सोमराजः। रा.

**राज्यम्** - पृथिवीलोकप्राप्तिफलम्। छा.

**रातिः** - धनम्। बृ.

**रात्रिः** - रात्र्यभिमानिनी आतिवाहिकदेवता। बृ.

[**रात्रिसत्रम्** - यागविशेषः। या.]

**राद्धः** - सिद्धः। 'राध संसिद्धा''विति धातुः। उपायैस्सिद्धः। बृ.

**राधसा** - तेजसा। भा.

**रामः** - परं ब्रह्म। रमयति सर्वान्गुणैरिति रामः। रामो रमयतां वरः। 'रमन्तेऽस्मिन् योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इति रामपदेनासौ परमात्माऽभिधीयते' इत्यगस्त्यसंहिता। रमयिता। विक्रमैः रञ्जनीयः। रा. सर्वैर्गुणरूपवशीकृतैः रम्यते अनुरजयते अस्मिन्निति वा, तद्वशीकृतेष्वयं रमते रज्यतीति वा। ''रम्यतेऽस्मिन् सदा सर्वैर्गुणरूपवशीकृतैः''। सह.

**रामम्** - अभिरामम्। रा.

**रायः** - सुवर्णानि ऐश्वर्याणि वा। पा.

**रावणः** - असत्प्रलापकारी अविवेकः। रावयति असत्प्रलापान् कारयति, इति। रा. कैलासतोलनसमये स्तुतिप्रीतेन शिवेन तथोक्तो दशग्रीवः। रा.

**राशिः** - गणितम्। छा.

**राशित्वम्** - एककालावच्छिन्नैकदेशवृत्तित्वादिरूपम्। न्यासि.

**रासः** - अन्योन्यव्यतिषिक्तहस्तं गायतां स्त्रीपुंसानां मण्डलीभूय भ्रमणनृत्तम्। ''अनेकनर्तनीयोज्यं चित्रताललयान्वितम्। आचतुष्षष्टियुगलात् रासकं मसृणोद्धतम्''। वि. रासक्रीडा। अति. शब्दः। पा.

**रासलीला** - उभयतो वनिताकरग्रहसाध्यमण्डलनृत्तविशेषः। रा.

**रासि** - ददासि। भा.

**रिङ्खणम्** - सञ्चारः। सुन्दर. स्खलनम्। दशा.

**रिष्टम्** - नाशम्। ''ऋष हिंसायां'' इति धातोः भावेक्तः। बृ.

**रिष्यति** - नश्यति। ''रिङ् क्षये''। बृ.

**रिष्यसि** - हिंस्यसे। छा.

**रुक्मम्** - स्वर्णम्; भोग्यम्। वै.

[**रुक्मी** - वैदर्भस्य भीष्मकस्य सुतो रुक्मिण्या भ्राता। या.]

**रुक्मवर्णः** - देदीप्यमानदिव्यमङ्गलविग्रहयुक्तः। मु.

**रुक्माभम्** - आदित्यवर्णम्। वे.

**रुचिरः** - प्रियः। प्रियतरः। रा.

**रुचिराङ्गदः** - आत्मलाभवर्द्धयः स्वं रुचिरं अतिमनोहरमनुभवयोग्यं अङ्गं ददातीति। सह.

**रुद्रः** - जनार्दनः। रुजं द्रावयते यस्मात् इति निरुक्तेः। वेकौ. नारायणः संसाररुग्द्रा-

वकः । तै. भगवता प्रसादाच्चतुर्मुख इव क्रोधात्सृष्टः शिवः । न्यासि. रोदनहेतुः । प्र. रोदनात् द्रवणात् तथा कथितः । वि. रोदयिता । तै. विविधचेष्टितद्रुतहृदयान् भक्तान् आनन्दबाष्पयन् रोदयतीति । सह. संसाररुजं द्रावयतीति, संसारमोचक इत्यर्थः। श्वे.

**रुद्रतनुः** - दीक्षितः । तस्य स्वस्मिन् ब्राह्मणत्वाभिमानवत्त्वात् (अहङ्कारित्वात्)। सुबा.

**रुद्रा** - गरुडस्य पत्नी । गरु.

**रुद्राः** - (एकादश) एकादशेन्द्रियाणि । म्रियमाणं पुरुषं रोदयन्तीति रुद्राः। बृ. देवविशेषाः । रा.

**रुमा** - लवणाकरः । सर्वा (आ).

**रुरुः** - निर्बिन्दुः स्थूलकायो विकटश्रृङ्गो मृगः । रा. महान् कृष्णसारः । वि.

**रुरुवहः** - शिवः । पा.

[**रुशती** - ''रुशती वागकल्याणी'' इत्यमरः । या.]

**रूक्षाः** - शोषकराः । गी.

**रूपम्** - अनिमेषद्विपदचतुष्पदशाखित्वादिकम् । वि. अपृथक्सिद्धविशेषणम् । श्रु. अप्राकृताखिलजगन्मातृत्वाभिव्यञ्जकदिव्यविग्रहः । अस्मदादिचक्षुरिन्द्रियैकग्राह्यविसजातीयव्यावृत्तमद्रव्यम् । न्यासि. आकारः । श्रु.वि. जातिः । 'जातिगुणौ च रूपिणां रूपे' इति वचनात् । वे. तेजः । वै. दिव्यविग्रहः । ता. निरूपकधर्मः । गद्य. रूपशब्दोऽत्र निरूपकधर्मपरः । त. रूप्यत इति रूपं दृश्यं वस्तु । बृ. विग्रहः । सुन्दर. वपुः, स्वरूपम्; स्वरूपरूपादिसमस्तासाधारणाकारपरो वा रूपशब्दः, रूपं प्रकार इति । ता. विष्णुपदम् । वेकौ. शरीरम् । रा. श्रु. अधि. श्री. शरीरभूतम् । बृ. रूप्यत इति रूपम्; वस्तु । रा. रूप्यत इति,भावना । भाव. लक्षणम् । रा. स्वरूपम् । वि. वर.

**रूपंरूपम्** - रूपे रूपे । क.

**रूपकम्** - दृष्टान्तः । रूप्यतेऽनेनेति रूपकम् । श्रु. रूपवत्करोतीति । भाव.

**रूपतन्मात्रम्** - वायुजन्यं तेजोद्रव्योपादानभूतं तत्त्वम् । सुबा.

**रूपतन्मात्रत्वम्** - रसशून्यत्वे सति रूपवत्तन्मात्रत्वम् । वा.

**रूपत्वम्** - रूपप्रतीतिविषयत्वम् । विषयतासम्बन्धेन रूपप्रतीतिः। न्यासिटी. रत्न. नियाम्यत्वलक्षणविभूतित्वम् । (द्वे वाव ब्रह्मणो रूपे इत्यत्र) । श्रु. रूपलक्षणमेवेदम् नातिरिक्ता जातिः । न्यासि.

**रूपपरिकल्पनम्** - यथेष्टरूपग्रहणम् । रा.

**रूपभिदाः** - सितरक्तकृष्णपीतरूपेण चतस्रः । पीतरूपमपि रक्तावान्तरभेदं केचिदिच्छन्ति । न्यासि.

**रूपवर्जितः**-कर्मनिमित्तप्राकृतरूपरहितः। वि.

**रूपवान्** - दृष्टशरीरः । रा.

**रूपशोभाः** - शरीरशोभा । रा.

**रूपसम्पन्नौ** - सम्पन्नरूपौ । आहिता-

न्यादित्वात्परनिपातः। रा. सौन्दर्ययुक्तौ। रा.

**रूपसंहननम्** - सर्वाङ्गानां संश्लेषौचित्यम्। वे.

**रूपस्कन्धः** - भूतेन्द्रियविषयाः (बौद्ध-मते)। श्रु.

**रूपाजीवा** - वेश्या। रा.

**रूपाणि** - नामवाच्यानि, जातिगुण-क्रियाश्रयभूतानि रूपाणि च। अधि. वेषाः। धर्मा इत्यर्थः। श्री.

**रूपान्तरम्** - आकारान्तरम्। श्रु.

**रेचकः** - अपानस्य प्राणे होमः। गी. अधस्स्थितस्य वायोः ऊर्ध्वप्रवर्तनम्। ता. वायोः बलात् निस्सरणम्। वि.

[**रेचकम्** - औदरवायोर्बहिर्निष्कासनम्। ई.]

**रेतः** - इन्द्रियम्। तै. जगद्बीजभूतम् अव्यक्तम्। छा. प्रजननेन्द्रियम्। बृ. बीजम्। कारणम्, इदमित्थं कर्तव्यमिति निश्चया-त्मकम्। बृ.

**रेमे** - रतिं लब्धवान्। बृ.

**रेरिवा** - क्षपयिता। तै.

[**रेवती** - दुष्टग्रहविशेषः। सच्च.]

**रेवत्यः** - रेवत्याख्यं साम। (नित्यबहुवच-नम्)। छा.

**रैः** - अलौकिकं धनम् (परं ब्रह्म)। ई.म.

**रैक्वपर्णाः** - ग्रामविशेषाः। छा.

**रैतसः** - रेतसोऽन्तर्वर्ती; रेतोन्तर्यामी। बृ.

**रोगः** - दुःखसाधनम्। छा.

**रोचकः** - कुड्यवेदिकादिषु कान्त्यु-त्पादकः। रा.

**रोचना** - गोरोचना। रा.

**रोचिष्णुः** - भ्राजमानः (स्वच्छः)। बृ.

**रोधः** - (सकारान्तः) तटम्। रा. उपरोधः। (रुध्यतेऽस्मिन्निति) निरोधस्थानम्। वि.

**रोमन्थः** - गोमहिष्यादीनां निगीर्णस्य पुनः पुनरुद्गीर्य भक्षणम्। या.

**रोरवीति**-व्यवहरति, नामरूपवत्करोति। तै.

**रोषितः** - सञ्जातरोषः। रा.

**रोहितः** - कमलगर्भाभत्वात् रोहितः। सह.

**रोहितोच्छिष्टः** - उच्छिष्टः अवशिष्टः। "रोहितश्चोच्छिष्टश्च रोहितोच्छिष्टः"। म.

**रोक्ष्यम्** - क्रोधः। जिहासा। दुःखम्। स्नेहप्रतिद्वन्द्वि। न्यासि.

**रौद्रम्** - दुस्सहम्। रा.

**रौद्रव्रतम्** - रुद्रप्रसादजनकं केदारव्रतम्। रा.

**रौरवः** - नरकविशेषः। वि.

[**रौहिणेयः** - रोहिण्या अपत्यं बलदेवः। या.]

## ल

**लक्षः** - व्याजः। या.

**लक्षम्** - लक्ष्यम्; पात्रम्। वै.

**लक्षणम्** - अध्यायः। श्रु.त. अनुमानम्। सर्वा. अनुमापकम्। मा(कू). 'अर्थासाधा-रणाकारप्रतिपत्तिनिबन्धनम्। सजातीय-

विजातीयव्यवच्छेदेन लक्षणम्' ॥ (तत्त्वरत्नाकरे) । असाधारणधर्मोपस्थापनेन व्यवहारव्यवस्थापकमाप्तवाक्यादिकमेव लक्षणम्। यद्वा अन्वयव्यतिरेकिविशेष एव लक्षणम् । असाधारणो व्यापको धर्मो लक्षणमिति वा लक्षणम्। न्याप. असाधारणधर्मः । त. च. श्रीत. नयानाद्यवयवसौष्ठवम् । रा. निर्दिष्टव्यापित्वे सति तदन्यवृत्ति (रहितत्वं) विरहः । सर्वा. लक्ष्यतेऽनेनेति लक्षणम्, प्रमाणम् । रा. व्यावर्तकम्। श्रु. शुभाशुभनिमित्तम्। रा. स्वरूपम्। श्रु. स्वेतरसमस्तव्यावर्तकम्। ता.

**लक्षणत्वम्** - असाधारणत्वम्। श्री.

**लक्षणा** - मुख्यार्थबाधे सति तत्सम्बन्धवति प्रवृत्तिः । यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्दस्य प्रवाहविशेषरूपवाच्यसम्बन्धिनि तीरे। न्याप.

**लक्षणिनः** - षडुत्तरषष्टिलक्षणसामुद्रिकशास्त्रज्ञाः। रा.

**लक्षणी** - सामुद्रिकलक्षणज्ञः। रा.

**लक्ष्म** - लक्षणम्। इतरव्यावर्तकोऽसाधारणो धर्मः। पदभेदः। त. लक्षणम्। नि.

**लक्ष्मणः** - कैङ्कर्यलक्ष्मीयुक्तः। रा.

**लक्ष्मीः** - (आत्मलाभवतां) सर्वा सम्पत्। सह. जगत्तया लक्ष्यमाणा। रत्न. जगद्रूपतया लक्ष्यमाणा (अहिर्बुध्न्यसंहि-तायां) श्रीत. समृद्धिः । तेजः । रा. सर्वसुरासुरमनुजमुनीन्द्रादिभिः लक्षणीया प्रार्थनीया। सर्वैश्वर्यनिमित्तभूतदिव्यलक्षणसम्पन्ना वा सुरासुरप्रार्थनीयो विभवः। श्रीसू.

**लक्ष्मीनारायणैक्यम्** - तयोरत्यन्तसमत्वम्, एकशेषित्वाश्रयत्वम्, आत्महविरुद्देश्यत्वरूपदेवतात्वैक्यं वा। न्यासि.

**लक्ष्मीवान्** - लक्ष्म्या नित्ययोगवान्। सह.

**लग्नम्** - राश्युदयः। वि.

[**लघिमा**- शरीरतः लघुभवनम् (अष्टैश्वर्येष्वन्यतमम्')। र.]

**लघुः** - अल्पबुद्धिः। रा.

**लघुता** - पञ्चदश काष्ठाः। भा.

**लघुविक्रमः** - शीघ्रगमनः। रा.

**लघुहस्ताः** - शिक्षितास्त्राः। रा.

**लघ्वाशी** - अत्यशनानशनरहितः। गी.

**लंडम्** - पुरीषम्। भा.

**लब्धात्मा** - वस्तुभूतमात्मानं मन्यमानः। गी.

**लब्ध्वा** - ज्ञात्वा। अत्र च श्रवणमनन श्रद्धादेः प्रागेव सुखप्राप्त्यसम्भवात् प्राप्त्यर्थस्यापि लभतेर्ज्ञानमेवार्थः । ज्ञानस्यापि प्राप्तिरूपत्वात्। छा.

**लम्भुकः** - लब्धा। छा.

**लभ्यः** - ज्ञेयः। वै.

**लयः** - उपादानीभूतस्यापादानेन संसर्गः। सच समानाकारयोर्निरन्तरसंश्लेषरूपत्वादैक्यमित्युच्यते। शुक्लगोक्षीरे कपिलादिगोक्षीरं संसृष्टमेकीभूतमिति व्यपदिश्यते। सुबा. कार्यस्य कारणस्य (णे?) संस्थितिः।

वि. कार्यस्य नामरूपप्रहाणेन कारणावस्थानम्। सुबा. तद्विविक्ततया दर्शनाभावः। बृ. तालमानम् । रा. नामरूपप्रहाणेन सत्तामात्रम् । श्रु. नीडम्; लीयते अस्मिन् पक्षीति । बृ. नृत्तगीतवाद्यानामेककाल विरामः । रा. पूर्वावस्थाप्रहाणेनकारणसंसर्गो लयः । लीङ् श्लेषण इति हि धातुः । सुबा. (सङ्गीतशास्त्रे) साम्यम् । पा. संश्लेषविशेषः । ता.

**लयम्** - सायुज्यम्। सूक्ष्मता (न नाशः)। वि.

**लयात्मा** - लयस्याऽऽत्यन्तिकप्रलयस्य मोक्षस्यात्मा, सत्ताहेतुः । सुबा.

**ललनामोलिः** - विलासिनीश्रेष्ठा । अशोकद्रुमः । वि.

**ललितम्** - (व्रजामीति) सुकुमाराङ्ग विन्यासो मसृणो (ललितं) भवेत् । वि. 'विन्यासभङ्गिरङ्गानां भ्रूविलासा मनोहराः। सुकुमारा भवेयुश्चेत् ललितं तदुदीरितम्॥' गी. सविलासम् । वि.

**लवः** - कनिष्ठो रामपुत्रः, लवनिर्मृष्टतया तथोक्तः । लूनकुशानामधोभागः । रा.

**लवणः** - नारकयातनाविशेषः यत्र छित्वाच्छित्वा क्षारोत्क्षेपणम् । वि. मधोः कुमारोऽसुरः । रा.

**लाङ्गली** - जलपिप्पली । गो.

**लाघवम्** - उद्गमनहेतुः गौरवप्रतिद्वन्द्वी धर्मः । भाव. शैघ्र्यम् । रा.

**लाभः** - प्राप्तिः । श्रु.

**लालनम्** - विशिष्टान्नभोजनाच्छादना भरणप्रदानादिरूपसत्कारः । रा.

**लालप्यमानः** - पुनः पुनः कथनशीलः । रा.

**लालसः** - साभिलाषः । रा.

**लावण्यम्** - चक्षुरानन्दजनकस्तेजोविशेषः । ता. समुदायशोभा । श्रीस्त. वे. ता. [''मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदंगेषु तल्लावण्यमिहोच्यते ॥'' इत्युक्तलक्षणः अन्तश्चलन् प्रभाविशेषः । या.]

**लिङ्गम्** - अनुग्राहकम्। चिह्नम्, ज्ञापकम्। श्रु. ज्ञापकहेतुः । श्वे. लक्षणम् । गी. लिङ्ग्यते अनेनेति लिङ्गम्, गमकम् । बृ. वस्तुसामर्थ्यम् । भाव. सामर्थ्यम् । छा. भाव. स्मृतिः । श्रुतेरनुमापकत्वात् स्मृतिर्लिङ्गशब्देनोच्यते। श्री. [वेषः। र. शरीरम्। ई.]

**लिङ्व्यापारः** - शब्दभावना । सर्वा.

**लिन्दु** - स्त्रीव्यञ्जनम्; योनिः । छा.

**लीला** - अनायासः । रा. आनन्दजनको व्यापारविशेषः। अभी. 'प्रियानुकरणं लीला मधुराङ्गविचेष्टतैः' (भरतः) । वि. स्वबुद्धिपूर्वकस्वप्रीत्यर्थव्यापारः । त. स्वयंप्रयोजनररूपव्यापारः। श्रु. [गमनादिक्रिया। या.]

**लीलाविभूतिः** - प्राकृतलोकः । वे.

**लुण्टाकः** - तस्करः । रघु.

**लुब्धः** - कर्मापेक्षितद्रव्यव्ययस्वभावरहितः । गी.'

**लुंपसि** - संहरसि। भा.
**लेपः** - सम्बन्धः। गी.
**लेपभुजः** - प्रपितामहात् परे त्रयः। वि.
**लेपितम्** - अङ्गरागीकृतम्। वि.
**लेलायति** - स्वयं चलति। बृ.
**लेलिहानम्** - पुनः पुनः जिह्वया लेहनं कुर्वन्तम्। रा.
[**लैङ्गम्** - पुराणविशेषः। सच्च.]
**लोकः** - असव्द्यावृत्तं प्रमाणप्रतिपन्नं वस्तुजातम्। लोक्यत इति लोकः। श्री. आश्रयः। बृ. ज्ञानम्। बृ.श्रु. लोक्यत इति लोकः परमात्मा। बृ. लोक्यत इति, फलम्। श्रु. लोक्यत इति, प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः। श्रु. (लोक्यः) भोग्यः। (तद्यथेह कर्मचितो लोकः ...) त. लोक्यतेऽनेनेति लोकः दर्शनसाधनम्। बृ. (लोक्यते अनेन वेदार्थः) स्मृतिः। (नात्र लोकशब्दो भुवनविषयो जनविषयो वा, तत्र प्रकृतनिरुक्ति विवक्षाप्रमाणत्वाभावात्। न च काव्यादिप्रयोगवरता; तत्राप्यतितरां स्वारस्याभावात्। अतो वेदसहपाठात् तदनुवर्तिस्मृतिपरोऽयम्। गी. विभूतिद्वयम्। श्रीसू. शरीरम्। भा. सुखम्। वा. स्थानम्। श्रु.
**लोकम्** - फलम्। लोक्यत इति लोकः। बृ.
**लोकक्षित्** - लोकनिवासः। (व्यधिकरणबहुव्रीहिः)। छा.
**लोकत्रयम्** - कृतकं अकृतकं कृतकाकृतकमिति लोकत्रयम्। लोक्यतेऽनेन प्रमाणान्तराप्राप्तार्थ इति; वेदत्रयम्। ता. 'प्रतिकूलानुकूलमध्यस्थरूपं लोकत्रयम्'। गी. 'नात्र पृथिव्यादिकं विवक्षितम्, प्रव्यथितत्ववचनायोगात्। अतो मञ्चाः क्रोशन्तीतिवत् .... लक्षणातो लोकशब्दस्यैव मुख्यत्वेन जनविषयत्वं वरम्। जनस्य त्रित्वञ्च शत्रुमित्रोदासीनरूपेण सुप्रसिद्धम्''। ता.
**लोकत्रयाश्रयः** - सह तया जगन्मात्रा पितृवत् सर्वाश्रयः। सह.
[**लोकद्वारम्** - सुदर्शनम्। सच्च.]
**लोकनाथः** - लोकानां नाथः स्वामी। सह. लोकैः सर्वब्रह्मादिगणैः स्वस्वपदप्राप्तये याच्यमानः। नाथृ याच्नायां इति। रा.
**लोकबन्धुः** - लोकानां स्वजनः। यथा 'माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः' 'पितामहस्य जगतः' इत्यादि। सह.
**लोकभावनः** - लोकत्राता। लोकान् भावयति त्रायत इति। भा.
**लोकम्पृणा** - एतत्पदघटितमन्त्रोपधेया इष्टका। 'लोकं पृणतीत्येतस्मिन्नर्थे मूलविभुजादित्वात् कप्रत्यये 'लोकस्य पृणे मुम् वक्तव्य'मिति मुमागमे स्त्रीत्वाट्टापि रूपमिदम्'। कौ.
**लोकमहेश्वरः** - लोक्यत इति लोकः कार्यकारणावस्थोऽचेतनः; बद्धमुक्तादि चेतनश्च। तस्य महेश्वरः। महत्त्वमखिलहेय-

प्रत्यनीकानवधिकातिशयासङ्ख्येय-कल्याणगुणैकतानता। ईश्वरत्वं नियमनैक-स्वभावत्वम्। ता.

**लोकविद्विष्टम्** - शिष्टाचारबहिष्कृतम्। नि.

**लोकवृत्तम्** - लौकिकाचारः। रा.

**लोकसङ्ग्रहः** - लोकसमूहः। वि.

**लोकसारङ्गः** - लोके यत्सारं न्यायादनपेतं भोगमोक्षवर्त्म तद् गच्छति जानातीति। सह.

**लोकस्वामी** - लोकानां अशेषाणां स्वशेषाणां भुवनानां स्वामी निरुपाधिकः शेषी। सह.

**लोकस्य द्वारम्** - जनस्य पुरुषार्थप्राप्त्यु-पायभूतम्। भगवल्लोकप्राप्त्युपायभूतम्। सच्च.

**लोकाः** - आराध्यक्षयित्वेन क्षयस्वभावा लोकाः। (परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो ....)। त. आलोकनानि, संविदः। ज्ञानम्; विषयो वा। श्रु. ज्ञानानि। कौ. समूहाः। गी.

**लोकाकाशः** - उपर्युपरिस्थितानां आलोकानां (?) अन्तर्वर्ति। भाव. जन्तु-संचरविशिष्टाकाशः (जैनमते)। सर्वा.आ

**लोकाधिपतिः** - लोकस्वामी। श्रु. लोकस्वामी। पा रक्षण इति पतिशब्दः। अथाप्यत्र न रक्षकार्थकः। लोकपाल इति पृथगुक्तेः। शेषिणि पतिशब्दो रूढः, अन्यथा पितुस्संरक्षके पुत्रे पतिशब्द व्यवहारप्रसङ्गात्। कौ.

**लोकाधिष्ठानम्** - 'अनुत्तमेषूत्तमेषु लोकेषु' इति श्रुताना मुक्तभोग्यानां (लोकानां) नित्याश्रयः। सह.

**लोकाध्यक्षः** - धर्माधिकारिणा अकृता-भ्यागमकृतविप्रणाशपरिहारेण फलं दातुम-नुसन्धाता (अनिरुद्धः)। सह. (लोका-ध्यक्षः सुराध्यक्षो धर्माध्यक्षः) लोकाः धर्माधिकारिणः, सुराः तदाराध्यदेवताः, धर्मः तत्साधनं वैधं, तेषां अध्यक्षः अकृताभ्यागमकृतविप्रणाशपरिहारेण फलं दातुं अनुसन्धाता। सह.

**लोकान्** - उपायान्। लोक्यन्ते उपायत्वे-नाध्यवस्यन्त इति लोकाः उपायाः। भा. सुखानि। अनुकूलं वा लोक्यन्त इति लोकाः आनंदाः। भा. प्राणिनः। रा.

**लोकान्तः** - प्रलयः। रा.

**लोकापकृतः** - सर्वलोकैस्त्यक्तः। रा.

**लोकायतम्** - आयतं अन्तर्गतम्, लोक्यतेऽनेनेति लोकः प्रत्यक्षम्। तत्रान्त-र्गतमनुमानमित्यर्थः। तस्मादागतं फल-तया, प्रत्यक्षगृहीतव्याप्तिकमनुमानमपि प्रमाणमेव। लोकस्यायतं विस्तारः इति केचित्। तथा च अनुमानादेरपि प्रत्यक्षान्त-र्भाविण प्रामाण्यम्। सर्वा (आ). चार्वाक-शास्त्रम्। सर्वा (आ).

**लोकायतमतम्** - लोकेष्वायतं मतं चार्वाकम्। श.

**लोकायतिकः** - नास्तिको बौद्धादिः। रा. [चार्वाकः। ई.]

**लोकिनः** -लोकवासिनः। मु. उत्तमलोकः (कं?) प्राप्तः। छा.

**लोकी भवति** - ब्रह्मलोकं प्राप्नोति। ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकं प्राप्नोतीति वा। छा.

**लोकेषणा** - अनेन जायावित्तकर्मसाध्यसकललोकेच्छोच्यते। बृ.

**लोक्यम्** - लोकसाधनम्। बृ.

**लोध्रः** - वृक्षविशेषः। रा.

**लोभः** - देयस्यादित्सा निषिद्धलिप्सा च। विपरद्रव्याभिलाषः। अच्यु. पुष्टेः पुत्रः। वि. लब्धस्यार्थस्यपात्रप्रधान प्रतिबन्धकोऽर्थाभिनिवेशः। वर. लब्धवस्तुत्यागासहिष्णुता। रा. व्ययपराङ्मुखता। भा. स्वकीयद्रव्यस्य अत्यागशीलता। गी.

**लोमशा** - बहुला। तै.

**लोलुपता** - अत्यन्तेच्छा। वि.

**लोलुपत्वम्** - विषयेषु स्पृहावत्त्वम्। र.

**लोष्टः** - पांसुपिण्डः। बृ.

**लोहमणिः** - सुवर्णपिण्डविशेषः। छा.

**लोहितपिङ्गलाक्षिः** - लोहितपुण्डरीकवत् पिङ्गले अक्षिणी यस्य सः। तै.

**लोहितशुक्लकृष्णा** - रजस्सत्त्वतमोमयी प्रकृतिः। रत्न.

**लोहितशुक्लकृष्णाम्**-तेजोऽबन्नलक्षणविकारगतलोहितशुक्लकृष्णरूपयुक्ताम्। श्वे.

**लोहिताक्षाः** - रक्तराजीवनयनः। सह.

**लोहितोष्णीषन्यायः** - "लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ पूर्वप्राप्तऋत्विगुष्णीषोद्देशेन यथा लोहितत्वरूपविशेषणमात्रविधानं तथा अन्यत्रापीत्यभिप्रायको न्यायः।" सच्च.

**लोहिताङ्गः** - अङ्गारकः। रा.

**लोहिन्यः** - लोहिताः। बृ.

**लौकिकः** - आचारप्राप्तः। भा.

**लौल्यम्** - तृष्णा। या.

**लौहित्यम्** - नगरविशेषः। रा.

## व

**वंशः** - वंशब्राह्मणम्। बृ. [पृष्ठास्थिदेशः। सच्च.]

**वंशवर्धनः** - वंशं स्वसन्तानभूतं नित्यसिद्धवर्गं वर्धयतीति। सह.

**वः** - परमात्मा। 'वसन्ति सर्वभूतानि' इति निरुक्ते। वेकौ. सर्वत्र वसतीति। वसतेर्डः। सह.

**वकुलः** - वृक्षविशेषः। रा.

**वकुलधरसरस्वती** - द्रमिडोपनिषत्। सुन्दर.

**वक्रम्** - नायकरत्नं अभितोलग्नमुक्तामणिमण्डलम्। रा.

**वक्रता** - स्वांशस्य ? स्वांशस्थितिः। न्यासि.

**वक्रतुण्डः** - कुटिलचञ्च्वग्रः। गुरु. वक्रनासिकः। तै.

[**वक्रोक्तिः** - सचमत्कारवाक्यम्। या.]

**वचनम्** - परेभ्यो भगवद्गुणानां प्रतिपादनम्। वे.

**वचनक्रिया** - उक्तकरणम् । रा.

**वचनीयम्** - जुगुप्सनम् । रा.

**वञ्चनपरत्वम्** - परद्रव्यापहाराद्यर्थं दम्भवृत्या स्वदोषापह्नवेन विप्रलब्धुकामत्वम् । स्तो.

**वज्रम्** - आयुधविशेषः । श्रु. वज्रायुधम् । अति.

**वज्राङ्कुशः** - ऐरावतः । वज्रं अङ्कुशं यस्य सः । रा.

[**वञ्चकः** - क्रोष्टा । "क्रोष्टुधूर्तौ तु वञ्चकौ" इति यादवः । या.]

**वञ्चसि** - सञ्चरसि । श्व.

**वञ्जुलकः** - कर्णवालाख्यः पक्षिविशेषः। 'वञ्जुलः कर्णवालः स्यात्' । रा.

**वत्सः** - वत्सवत् पोष्यः । तै.

**वत्सरः** - सर्वान्तश्चारी। "वसेश्च" इति सरन् प्रत्ययः । सह.

**वत्सलः** - स्वोत्सुककामनावान् । "वत्सांसाभ्यां कामबले" इति लच्-प्रत्ययः। सह.

**वत्सलत्वम्** - वत्सं लालयतीति वत्सल इति निर्वचनानुगुण्येन 'दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्' इति सदोषेष्वपि समाश्रितेषु प्रीतिमत्त्वम् । रा.

**वत्सला** - वत्से स्नेहवती धेनुः । रा.

**वत्सी**-नित्यपोष्यात्मवर्गवत्सभूयस्त्वात्। सह.

**वदाताः** - शुभ्राः । रा.

**वदान्यः** - दानशीलः । दशा. वल्गुवाक् । रा. [अर्थिनः प्रतिनन्द्य द्रव्यप्रदः । ई.]

**वदान्यत्वम्** - प्रियवाक्दानशीलत्वम् । स्तो.

**वदेत्**-कुर्यामिति वदेत् । कुर्यादिति यावत् । छा.

**वधाशङ्कम्** - वधस्य आशङ्का यस्मात् तत्, चोरव्याघ्रादि । बृ.

**वध्यघातकभावः** - निवर्त्यनिवर्तक-भावः । च.

**वनम्** - वन षण संभक्तौ । आत्मनस्सम्भ-जनीयम् (शरीरम्) । सुबा.

**वनमाली** - भूतसूक्ष्ममालाकः । सह.

[**वनस्थः** - वानप्रस्थाश्रमी । सच्च.]

**वनस्पतिः** - अपुष्पफलवृक्षः । भा. वनानां पतिः, सर्ववृक्षसमूहानां अधिपति-त्वेन प्रसिद्धः । श्रीसू. फलपुष्पोपेतो वृक्षः । "वानस्पत्यः फलैः पुष्पात्" इति निघण्टुः। बृ.

**वनानि** - जलानि । रा.

**वनीपकः** - याचकः । पा.

[**वन्दनदामा** - मङ्गलार्थं दर्भपुष्पादिरचिता तोरणग्रथिता माला । या.]

**वन्दनम्** - त्रिभिः करणै प्रणामः । गीसं.

**वन्दिनः** - स्तुतिपाठकाः, सन्तमसन्तं वा कमपि गुणमवलम्ब्य अवश्यं वन्दन्ते स्तुवन्तीति । या.

**वन्दे** - प्रणमामि । या.

**वपुष्मान्** - पुष्कलवपुः । रा. हृष्टपुष्ट शरीरयुक्तः । रा.

**वप्रः** - प्राकारमूलधिष्ण्यम् । वि.

**वयस्यः** - वयसा तुल्यस्सुहृत् । रा.
**वयांसि** - पक्षिणः । वि. मु.
**वयुनम्** - ज्ञानम् (ज्ञातव्योपायः) । ई. ज्ञानम् । श्वे. बृ.
[**वरः** - प्रसन्नाद्देवादेः प्राप्यं ईप्सितं वरः । "वरो ना रूपजामात्रोः देवादेरीप्सितो वृतौ" इति यादवः । या.]
**वरणम्** - (गतिं वृणे) अनिष्टनिवृत्तिपूर्वकेष्टप्रापकोपायाध्यवसानम् । वर. याचनम् । अति. मामयं प्राप्नुयादिति अमोघः सङ्कल्पः । (यमेवैष वृणुते...) त. स्वीकरणम् । अति.
**वरणकम्** - नियमनहेतुः । भा.
**वरणकर्मत्वम्** - भरन्यासोद्देश्यत्वम् । श्रीत.
**वरणीयत्वम्** - प्रियतमत्वम् । भा.
**वरणीयताहेतुविशेषः** - भक्तिः । ता.
**वरदः** - अन्येभ्योपि लोककार्यधुर्येभ्यो देवेभ्यः तांस्तान् वरान् ददातीति । सह. आश्रिताभीष्टदः । सुन्दर. वर. अभीष्टदाता । वे. (आश्रितेभ्यो ब्रह्मादिभ्यः स्रष्टृत्वादि) वरप्रदः । वि. प्रणतजनेष्टदः । वै. भक्तानामभीप्सितप्रदः । या. स्वानुभवरूपवरप्रदः । राः श्रेष्ठमोक्षदः । वै.
**वरदनारायणभट्टारकाः** - विशिष्टाद्वैतिनः प्रज्ञापरित्राणकाराः । न्यासि.
**वरदविष्णुमिश्राः** - विशिष्टाद्वैत मतानुसारिणः । कस्यचिन्महात्मन इदं न मम । जीवात्मनो मोक्षे विभुत्वमेतदुक्तम् । न्यासि.
**वरभुजौ** - सुन्दरभुजौ । रा.
**वरवर्णिनौ** - स्निग्धरूपवन्तौ । रा.
**वरसत्** - वरेषु (देवादिशरीरेषु) वर्तमानः । तै. वरेषु (देवेषु) आत्मतया वर्तमानः । क.
**वराङ्गः** - वरं देवक्या व्रियमाणं अङ्गं औपनिषदं अनिह्नुतदिव्यचिह्नमाविष्कृतं रूपमस्येति । सह.
**वराङ्गम्** - शिरः । रा.
**वरारणिः** - जननी । रा.
**वरारोहः** - (वरः) उत्कृष्टः (आरोहणं तत्कर्तृकस्वप्राप्तिः । अस्य अस्मिन्वेति । सह.
**वरिवस्यन्** - शुश्रूषां कुर्वन् । वै.
**वरिवस्या** - पूजा । "वरिवस्या तु शुश्रूषा" इत्यमरः । या.
**वरिष्ठम्** - वरणीयतमम् । मु.
**वरुणः** - व्रियमाणः । छा. सर्वव्यापी व्रियते आव्रियते सर्वमनेनेति वरुणः । सह.
**वरूधः** - रथगुप्तिः (रथस्थिततिरोधायकः) । वि.
**वरूथः** - रथगुप्तिः । रा.
**वरूधम्** - वरिष्ठम् । तै.
**वरेणीयम्** - उपास्यम् । तै.
**वरेण्यः** - वरणीयः । वि. श्वे.
**वरेण्यम्** - प्रार्थनीयम् । मु.
**वर्चः** - तेजः । रा.
**वर्णः** - अकचटतप यादिप्रकाराभावसमुदायशून्यः । न्यासि. [ब्रह्मणादिः । र.]
[**वर्णकम्** - विलेपनगन्धद्रव्यम् । या.]

**वर्णम्** - शरीरम् । भा.
**वर्णरतिप्रमोदाः** - (वर्णाः) आदित्य वर्णत्वादिरूपविशेषाः । (रतिप्रमोदाः) ब्रह्मभोगादिजनितानन्दविशेषाः । क.
**वर्णसंयोगः** - वयक्रादिरूपः । रत्न.
**वर्ण्यसमः** - जात्युत्तरविशेषः । न्याप.
**वर्णस्थानानि** - 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च' ॥ न्यासिटी.
**वर्तनम्** - अनुवर्तनम् । प्र.
**वर्तनी** - पक्ष्म । बृ. प्रवृत्तिसाधनभूतः वाङ्मनसयोर्मार्गः । छा.
**वर्तमानम्** - प्रारब्धमसमाप्तम् । श्रु.
**वर्तमानकालः** - शब्दप्रयोगाधारकालः। भाव.
**वर्तमानत्वम्** - शब्दप्रयोगाधिकरणकाललसंयोगः । रत्न.
**वर्तमानापदेशः** - वर्तमानव्यपदेशः । श्रु.
**वर्त्म** - स्वरूपम् । भा. स्वभावः । गी. "कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्" इत्यत्र सरणिवाचकमपि पथिन् - शब्दं उपचारात् स्वभावविषयतया प्रयुञ्जते । ता.
**वर्त्मनी ह्येव गच्छति** - पार्श्वद्वयमेव हि गच्छति, न तत्तत्र शिष्यते । (वर्त्म-पार्श्वः?) । छा.
**वर्धनः** - मातृवत् तान् (आराधकान्) उदरे कृत्वा वर्धयतीति वर्धनः । सह.
**वर्धमानः** - तान् (आराधकान्) वर्धयन् स्वयमपि वर्धत इति वा । वर्तमाननिर्देशत् । एवंप्रायैरपर्यवस्यत्समृद्धिरिति वा । सह.
**वर्धमानम्** - दक्षिणद्वाररहितं गृहम् । 'दक्षिणाद्वरहीनं तु वर्धमानमुदाहृत'मिति मात्स्ये । रा.
**वर्धमानगृहम्** - दक्षिणद्वाररहितं गृहम् । 'दक्षिणद्वाररहिता वर्धमानधनप्रदा' इति वराहमिहिरसंहिता । रा.
**वर्म** - कवचम् । ग्र.
**वर्षत्रम्** - छत्रम् । रा.
**वर्षप्रवेगाः** - अतिवेगा वृष्टयः । रा.
**वर्ष्म** - देहप्रमाणम् । रा.
**वलने** - आवृत्तौ । वि.
**वलि** - त्वग्गतरोगः । भा.
[**वलित्रयी** - उदरगतरेखात्रयम् । या.]
[**वली** - जराविश्लथत्वग्विकारः । या.]
**वलेपनम्** - गर्वः । रा.
**वल्लकी** - वीणा । रा.
**वल्लभः** - 'सत्यवागार्जवरतैरुपकुर्वन् प्रियं वदन् । भजते यः स्वयं पूर्णः प्रियः स भवति स्त्रिया ॥' इत्युक्तलक्षणः प्रियः । या.
**वल्लवीजनाः** - वल्लव्य इति जना वल्लवीजना इति कर्मधारयः । या.
**वल्लव्यः** - गोपजातिस्त्रियः । वल्लवशब्दाज्जातिलक्षणो ङीष् । या.
[**वल्गितम्** - ताण्डवितम् । सच्च.]
**वल्गु** - रम्यम् । रा. हृद्यम् । पा.
[**वल्लभशाखा** - भागवतधर्मप्रतिपादको ग्रन्थविशेषः। सच्च.]

**वशः** - इच्छा। प्र. परतन्त्रः। रा.

[**वशिकः** - तुच्छः। ''वशिकं तुच्छरिक्तके'' इत्यमरः। या.]

**वशित्वम्** - स्ववशे वर्तमानत्वम्। अधि. सर्वस्थितिप्रयोजकसंकल्पवत्त्वम्। वा. स्ववशीकृतस्वेतरकत्वम्। अधि. वश्य सर्ववस्तुकत्वम्। भाव. [स्वाधीन-स्वशेषकत्वम्। (अष्टैश्वर्येष्वन्यतमम्)। र.]

**वशी** - अभिमानबलात्काराद्यविषयः। ता. इच्छावान् (वशः इच्छा अस्यास्तीति)। वश्यः। क. नियन्ता। तै. स्वायत्तीकृतेन्द्रियः। रा. स्वगुणेन सर्वेषां वशीकर्ता। वे. वशः प्रभुत्वम् आयतत्वं वा, तद्वान्। तथाच नैघण्टुकाः 'वशो जनस्पृहायत्ने-ष्वायत्तत्वप्रभुत्वयो'रिति। स्तो. सर्वस्वामी। 'सर्वस्य वशी सर्वस्येशानः' इति श्रुतेः। रा. सर्वस्य लोकस्य, सर्वलोकतन्त्रवाही। श्वे. स्वाधीनलीलोपकरणवान्; 'विश्वं वशे यस्य सः' इन्द्रियपराधीनचेष्टारहितो वा। श्रु. [सर्वं वशे यस्य सः। ई.]

[**वशीकरणम्** - (भगवतः) शरणागतिरेव। र.]

**वशीकारसंज्ञा** - स्थितप्रज्ञस्य चतुर्थी अवस्थेयम्। ''उक्तं च हैरण्यगर्भैः, 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्'। ऐहिकामुष्मिकसकलफलविमुखस्य यस्तेषु, फलेषु, सवासनरागत्यागः सा वशीकारसंज्ञेत्युच्यत इत्यर्थः''। ता. इयमेव चतुर्थी अवस्था ''प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥'' इति गीताश्लोकेनोच्यते। या पुनः समस्तवासनाविलयात् औत्सुक्यमात्रस्याप्यसम्भवेन परमवैराग्यदशा, सा वशीकारसंज्ञा, ज्ञाननिष्ठाकाष्ठा, योगाख्यमात्मावलोकनं साधयति। तच्चावलोकनं परम्परया निरतिशयपुरुषार्थभूतामृतत्वाय कल्पते। ता. [दृष्टश्रुतविषयवैतृष्ण्यम्। दृष्टानुश्रविकविषयवैराग्यम्। (सांख्यमते)। र.]

**वश्यः** - वशंगतः। आश्रितपरतन्त्रः। रा. स्वाधीनः। अति.

**वषट्कारः** - अस्तुश्रौषडिति मन्त्रः। वि. ऋषिविशेषः। यागः। वौषडिति यागाङ्गभूतः मन्त्रान्त्यभागः। रा. सर्वं वशं स्वेच्छानुवर्ति करोतीति (वशधातोरुत्पन्नः)। सह.

**वसवः** - अग्निः, पृथिवी, वायुः, अन्तरिक्षं, आदित्यः, द्यौः, चन्द्रमाः, नक्षत्राणि च। यस्मादेतेषु अग्न्यादिषु सर्वमिदं वसुशब्दवाच्यं धनं निहितं तस्मात् ते वसव इत्युच्यन्ते। अत्र अग्निपृथिव्यादिशब्दाः तत्तदभिमानिदेवतापराः। बृ. देवविशेषाः। रा.

**वसिष्ठः** - अतिशयेन वसुमान्। वाक्। वाग्मी हि लोकेऽतिशयेन वसुमान् भवति। अतश्च वसुमत्तासम्पादकसद्व्यवहारजनकत्वं वाचो वसिष्ठत्वम्। छा. धनिकः। रा. श्रेयान्। बृ.

**वसिष्ठत्वम्** - अतिशयेन वसुमत्त्वम्। बृ. कार्यकारणसमर्थत्वम्। "यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि" इत्यत्र। श्रु.

**वसुः** - "वासुदेवस्सर्व"मिति प्रकारेण गरीयसां स्वयमेव धनमिति। क्षीरोदे वसतीति। तेष्वियताप्यतिगीत्यावसतीति। सह. वायुः (सर्वत्र वसतीति)। तै. नृगस्य राजर्षेः कुमारः। रत्नादिकम्। रा. वायुः (वासयतीति)। क.

**वसुदः** - सत्यपि अनभिभवनीये महेन्द्रत्वेन महत्त्वे, लघुभ्यो धनायद्भ्यो वसु धनं ददातीति वसुदः। सह.

**वसुदानः** - वसुप्रदः। बृ.

**वसुधानः** - कर्मफलाख्यवस्वाधारभूतः। (कर्मफलाख्यं वसु धीयते अस्मिन्निति वसुधानः)। छा.

**वसुधाश्रोत्रम्** - वल्मीकम्। 'वामलूरुश्च भूश्रवः' इति वल्मीकपर्यायेषु रत्नकोशः। या.

**वसुधाश्रोत्रजः** - वाल्मीकिः। या.

**वसुप्रदः** - देवकीवसुदेवाभ्यां जगत्पितुः स्वस्य पितृत्वरूपं (वसु) महत्तेजः प्रददातीति। परमनिधिमात्मानं देवकीवसुदेवाभ्यां पुत्रत्वेन प्रददातीति। सह.

**वसुमनाः** - वसुनि निधाविव तेषु मनोऽस्येति। वसौ वसुदेवे मनोऽस्येति। सत्यभामा भामेतिवत् वसुः वसुदेवः। सह.

**वसुरण्यः** - वसुप्राप्यः। वसूपलक्षितसर्वदेवतोपास्यः। तै.

**वसुरुचिः** - कश्चित् गन्धर्वः। वि.

**वसुरेताः** - वसुः रश्मिः स चात्र ज्योतिः तद्रूपं रेतः वीर्यं स्वोपदानद्रव्यमस्येति। नि. दिव्यज्योतिरूपादानदेहत्वात्। सह.

**वसोर्धारा** - सन्तता घृतधारा। रा.

**वस्तिः** - मूत्रस्थानम्। छा. अग्नि.

**वस्तु** - अर्हणम्। भा. परमार्थः। वे.

**वस्तुता** - "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततोविदुः" इत्याद्युक्तरीत्या ब्रह्मास्तित्वज्ञानवत्त्वम्। ता.

**वस्तुतोपरिच्छेदः** - वस्तुनः वस्त्वन्तरेण सह परिगणितत्वम्। वस्त्वन्तरासहत्वम्। (पूर्वपक्षे) नी.

**वस्तुत्वम्** - तुच्छव्यावृत्तत्वम्। श्रु.

**वस्तुपरिच्छेदः** - इदमिदं न भवतीति। ता. इदमिदं न भवतीति निर्देशयोग्यत्वम्। श्र. इयद्गुणकः इयद्विभूतिमानित्येवंविधः (न्यायसुदर्शनोक्तः)। न्यासि. कुतश्चिदपकर्षः। न्यासि. "वस्तुनः परिमाणम्"। न्यासि. वस्तुना परिच्छेदः, गुणैरियत्ता (नारायणार्योक्तः प्रकारः)। वस्त्वन्तरभावः। वस्त्वन्तरसामानाधिकरण्यानर्हत्वम्। वस्तुपरिमाणम् (विवरणोक्तम्)। न्यासि. वस्त्वन्तरप्रतियोगिकापकर्षः। च. वस्तुनः परिमितत्वं, इति केचित्। श्रु.

**वस्तुपरिच्छेदराहित्यम्** - अनन्तगुणवत्त्वसर्ववस्तुसामानाधिकरण्यार्हत्वम्। वा. समस्तवस्तुसामानाधिकरण्ययोग्यत्वादिकम्। ता.

**वस्तुनिर्देशः** - प्रतिपाद्यवस्तुकथनम्। त.

**वस्तुसंस्थानतया**-संस्थानशब्दोऽपृथक्सिद्धधर्मवाची। वस्तुसंस्थानतया वस्तुनः प्रकारत्वात्, अपृथक्सिद्धधर्मत्वेन। वस्तुनो विशेषणत्वादित्यर्थः। वे.

**वस्त्वपरिच्छेदः** - सर्ववस्तुसामानाधिकरण्यार्हत्वम्। न्यासिटी. इदमिदं न भवतीति परिच्छेदानर्हत्वम्; सर्ववस्तुसामानाधिकरण्यार्हत्वम्। श्रु. इदमियमिति वस्तुस्वभावतः परिच्छेदाभावः। श्रु. इदमिदं न, इति परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामानाधिकरण्यार्हत्वम्। तै. इदमिदं भवतीति निर्देशयोग्यत्वं सर्ववस्तुसामानाधिकरण्यार्हत्वम्। श्रु. वस्त्वन्तरप्रतियोगिकापकर्षाभावः। श. समाभ्यधिकराहित्यनिदानभूतः गुणैर्निरतिशयप्रकर्षः। तै. वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः। यथा तुल्यकालत्वेपि तुल्यपरिमाणत्वेपि दशवर्णसुवर्णापेक्षया कलधौतादेरपकर्षः। तद्राहित्यम्। तै. सर्ववस्तुसामानाधिकरण्यार्हत्वम्। वे. सर्ववस्त्वनुवृत्तत्वम्।

**वस्यसः** - (वसीयसः) वसुमत्तराणां मध्ये श्रेष्ठः। (श्रेयान्वस्यसोसानि, इत्यत्र)। तै.

**वस्वोकसारा** - अलका। पूर्वदिगवस्थिता इन्द्रपुरी। 'वस्वोकसारा शक्रस्य पूर्वस्या दिशि वै पुरी' इति पुराणवचनात्। रा.

**वहनोचिताः** - वाहकाः। रा.

**वहामि** - ददामि। ता.

**वह्निः** - देशरूपेण विश्वं वहतीति; (बद्धमुक्तनित्यान्)। "वह प्रापणे"। "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इति निप्रत्ययः। सह.

**वह्नितमः** - हविषां वाहकतमः। प्र.

**वा** - अवधारणे। श्री. वाशब्दश्चार्थे। गी. अत्र विकल्पाद्यसम्भवात् वाशब्दश्चार्थ इत्युक्तम्। ता. वाशब्दः समुच्चये। भाव. वाशब्दः शङ्कानिवर्तकः। च. शब्दोऽयं मतान्तरव्यावृत्त्यर्थः। न्यासिटी.

**वाक्** - वर्णोच्चारणकरणमिन्द्रियम्। य. वर्णोद्देश्यककृतिजन्यव्यापारवदिन्द्रियम्। वा. वर्णोच्चारणकरणमिन्द्रियम्। न्यासि. वागिन्द्रियम्। श्रु. वागिति स्तोभः। छा. वक्तीति वाक् परमात्मा। बृ.वेदः। 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा'। इति वाक्शब्दस्य वेदे प्रयोगात्। रा. व्याकरणम्। 'यश्च व्याकुरुते वाचम्, 'वाग्योगविद्दुष्यति चापशब्दैः' इत्यादौ शिष्टैर्व्याहृतत्वात्। रा. शब्दपरिणामयुक्तपरमात्मनः मुक्तानां च स्थानम्। नी. शब्दः। तै. सरस्वती। रा.

**वाकोवाक्यम्** - तर्कशास्त्रम्। छा.

**वाक्चितः** - वागिन्द्रियव्यापाराः मनश्चिद्वत् विद्यामयक्रत्वङ्गम्। अग्नि.

**वाक्छलम्** - नानार्थेषु शब्देषु अभिधेयान्तरारोपणेन तद्दूषणम्। यथा नूतनकम्बलत्वविवक्षया नवकम्बलोऽयमित्युक्ते सङ्ख्याविशेषमर्थमारोप्य कुतोऽस्य नव

कम्बलाः एक एव हि कम्बलो दृश्यत इति। न्याप.

**वाक्‌दण्डः** - मौनम्। अनृतापरिभाषणं वा। भा.

**वाक्यम्** - अनेकपदार्थसंसर्गविशेषाभिधायि। श्रु. पदसमूहः। च. अनेकपदार्थसंसर्गविशेषाभिधायिपदसंघातः। श्री. पदसमुदायः। त.श्रु. पदसन्दोहविशेषः। न्याप. पदान्तरसमभिव्याहारः। अधि. भाषणम्। रा. शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या रहितपदसमभिव्याहारः। भाव. समभिव्याहारः। श्री.

**वाक्यवित्** - उचितव्यवहारवित्। रा.

**वागुरा**-मृगबन्धनी। पा.रा. [मृगबन्धनी। या.]

**वाग्मी** - वेदात्मकतया जित्वरमधुरगम्भीरप्रियहिततया च प्रशस्यतया वाक् अस्यास्तीति। सह.

**वाचस्पतिः** - पञ्चमवेदवाक्पतिः। षष्ठ्या अलुक्। वाचः वेदवाचः (मात्स्यपुराणोपबृंहणात्) पतिः स्वामी। सह. [वागीश्वरः। या.]

**वाचा** - वाक्येन। सर्वा.

**वाचाधर्मः** - वाचिकधर्मः। रा.

**वाचारम्भणम्** - वागालम्बनम्। अयमर्थः अद्वैतमते। वे.

**वाचो मनसि नियमनम्** - मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम्। श्रु.

**वाचोयुक्तिः** - तिरोधानवाचोयुक्तिः। श.

**वाच्यः** - स्तुत्यः। वि.

**वाच्यम्** - विशेषणसम्बन्धार्हम्। सर्वा.

**वाजश्रवसः** - वाजेन अन्नेन दानादिकर्मभूतेन श्रवः कीर्तिः यस्य सः वाजश्रवाः। तस्यापत्यं वाज श्रवसः)। क.

**वाजसनिः** - नास्तिक्यवादेन ऐहिकमन्नादिकमेव सम्भजतीति वाजसनिः। वन षण सम्भक्तौ। क्षपणकव्रतं हीदं यत् प्रातः प्रातः दध्योदनकबलान् गृह्णत इति। सह.

**वाजसनेयः** - वाजसनेयाख्यशाखाध्यायी। बृ.

**वाजी** - भोक्ता (वाजं अन्नं अस्यास्तीति)। तै.

**वाञ्छा** - (भोक्तुम्) अभिलाषः। अधि. [अपूर्वैश्वर्यकामना। र.]

**वाणिज्यम्** - धनसञ्चयहेतुभूतं क्रयविक्रयात्मकं कर्म। गोरक्ष्यं द्र। गी.

**वाणी** - वचनम्। रा.

**वातः** - कश्चित् राक्षसः। वि.

**वातगतिः** - भूतावेशजनितो भ्रमः। रा.

**वातरशनान्** - नग्नान्। भा.

[**वात्या** - मण्डलवातः। या.]

[**वात्स्यायनम्** - कामतन्त्रम्। ई.]

**वात्सल्यम्** - आश्रितदोषानादरहेतुः स्नेहविशेषः। वै. दया। पा. दोषभोग्यत्वम्। रा. दोषादर्शित्वम्। श्रीस्तु. नि. दोषानादरहेतुः स्नेहः यथा मातुः पुत्रे। श्रु. दोषज्ञाने सत्यपि अनादरस्य प्रतिबन्धकः स्नेहविशेषः। व. दोषानादरहेतुः स्नेहविशेषः।

दोषेष्वपि भोग्यताबुद्धिः । सुन्दर. दोषेष्वपि गुणत्वबुद्धिः । श्रु. वत्से धेनोरिव स्नेहः । या. स्वरक्षणीयतयाऽभिमतेषु दोषदर्शननिरोधिनी प्रीतिः । दया. स्वाभाविकः परदोषतिरस्कारी सम्बन्धविशेषः । ता.

**वात्सीपुत्राः** - वैभाषिकाः बौद्धैकदेशिनः । सर्वा.

**वादः** - कथासामान्यम् । कथाविशेषोऽपि । न्यासि. तत्त्वबुभुत्सुकथा । श. तर्ककौशलम् । रा. वीतरागकथा । न्याप. य. श्रु.

**वादित्रम्** - वीणादिचतुर्विधवाद्यसमूहः । रा.

[**वान्ताशी** - उद्गीर्णभक्षकः । र.]

**वान्यम्** - वनानां समूहो वन्या तत्सम्बन्धि वान्यम् । रा.

**वान्या** - सम्यक् भजनार्हा । पा.

**वापी** - कृत्रिमसरः । रां.

**वामत्वम्** - वक्रत्वम् । रा.

**वामदेवः** - शोभनदेवः । तै.

**वामनः** - गजविशेषः । रा. द्रष्टॄन् स्वकान्त्या वामानि सुखानि नयतीति । सह. वननीयः (भजनीयः) । ह्रस्वपरिमाणः । क.

[**वामनम्** - पुराणविशेषः । सच्च.]

**वामनीः** - स्वाश्रितेषु शोभनधीप्रापकः । (वामानि नयति) । छा.

[**वायव्यस्नानम्** - वपुषि गोरजोधूसरत्वरूपस्नानविशेषः । सच्च.]

**वायुः** - अनुष्णाशीतस्पर्शवत्त्वे सति रूपशून्यत्वं वायुत्वम् । य. अर्चिर्दिनशुक्लपक्षोत्तरायणसंवत्सरानन्तर अतिवाहिकः । कौ. परिशुद्धः प्रत्यगात्मा; (विद्याकर्मानुगुणभगवत्सङ्कल्पवशेन तत्र तत्र गन्ता) । ई. भरद्वाजगुहादिगमनशीलः । सह. रूपशून्यत्वे सति उद्भूतस्पर्शवान् । वा. वायु शरीरकपरमात्मा । प्रक्रमे 'एनं सर्वं तदभिसमेति' इत्यादिब्रह्मविद्याप्रशंसावगमात्, वक्ष्यमाणलिङ्गानुपपत्तेश्च वायुशब्देन वायुशरीरकपरमात्मोच्यते । छा.

**वायुरम्** - वायुमदम्बरम् । बृ.

**वायुलोकः** - वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुरित्यर्थः । श्री.

**वायुवाहनः** - जगत्प्राणं वायुं वाहयति वाहनधर्माणं करोति । प्रबलहेतुभिः (योगात्) पतितानपि वायुनाऽनुपमगत्वरेण पतगपतिना वाहयति उत्तारयतीति । सह.

[**वाराहम्** - पुराणविशेषः । सच्च.]

**वारुणी** - वरुणस्य पत्नी । तै. सुराधिदेवता । रा. [मद्यम् । या.]

**वार्तम्** - असारम् । न्यासिटी.

**वार्ता** - अनिषिद्धकृष्यादिः वृत्तिः । भा. कृष्यादिरूपा जीवनफला । भा. कृष्यादि । वि. क्रयविक्रयात्मकं वाणिज्यम् । रा.

**वार्ध्राणसः** - कृष्णग्रीवः रक्तशिराश्श्वेतपक्षो विहंगमः । (इति नैगमी स्मृतिः) । 'त्रिः पिबन्तं पयः क्षीबं वृद्धं श्वेतमजापतिम् । वार्ध्राणसं तु तं प्राहुः याज्ञिकाः श्राद्धकर्मणि ॥' वि.

**वर्ध्राणसाः** - 'त्रिपिबं त्विन्द्रियक्षीणं यूपस्याग्रचरं तथा। रक्तवर्णं च राजेन्द्र छागं वार्ध्राणसं विदुः ॥' इति स्मृतेः एतादृशरूपश्छागविशेषः । खड्गमृग इति हलायुधः। रा.

**वार्क्षेयी** - वृक्षजाता। वि.

**वालखिल्याः** - ब्रह्मणो वालप्रभवा ऋषयः। रा. लब्धे नवेनवे पुराणत्यागिनः। भा.

**वाली** - किष्किन्धाधिपतिरिन्द्रपुत्रो वानरेन्द्रः। रा.

**वाव** - वावशब्दः, प्रसिद्धौ अवधारणे वा। छा.

**वावदूकः** - महावाग्मी। अधि.

**वावृधे** - निरतिशयदीप्तियुक्ततया वर्धते। तै.

**वाशिता** - करेणुः। गजयुवतिः। रा.

**वासः** - वस्त्रम्। बृ.

[**वासतेयी** - निशा। ''वसतिर्वासतेयी च श्यामा रात्रिश्च कथ्यते'' इति हलायुधः। या.]

**वासना** - अनुभवजा स्मृतिहेतुः। न्यासि. (कर्मवासना) पुण्यापुण्यरूपा। न्यासि. विलक्षणप्रत्ययप्रवाहः। श्री. सजातीय कर्मान्तरारम्भरुचिः। श्रु. पूर्वपूर्वसंस्कारः। सर्वा. संस्कारः। च. न्यासिटी.

**वासनात्यन्तविरामः** - (बौद्धैकदेशिमतो मोक्षः)। विषयवासनोच्छेद इत्यर्थः। न्यासिटी.

**वासरम्** - नित्यप्रकाशरूपम्। छा.

**वासवम्** - वसुदैवत्यम्। छा.

**वासवानुजः** - अमृतार्थिनां वासवमनु तत्संविधानाय जातः (कूर्मावतारः)। सह.

[**वासिष्ठसंहिता**- पाञ्चरात्रसंहिताविशेषः। सच्च.]

**वासुदेवः** - परमात्मा। 'सर्वत्राऽसौ समस्तं च वसत्यत्रेति वै यतः' । वेकौ. वसुदेवापत्यत्व एव द्विषट्काध्यात्मविषयतायां वासुश्चासौ देवश्चेति। वसुदेवापत्यम्। वासुश्चासौ देवश्चेति । विश्वं स्वस्मिन् सवित्रीव वासयन्, पक्षाभ्यामिवाच्छादयंश्च, तस्मिन् वसतीति वासुः। एवं क्रीडति, विजिगीषते, अथ च द्योतते, स्तूयते, गच्छति चेति देवः, अतो वासुदेवः। निरूचुश्च ऋषयः ''छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः। सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः''। सह. (व्यूहः) षाड्गुण्यपरिपूर्णः। य. सर्वेषां भूतानां वासाधिकरणभूतः। वेकौ. सर्वेषु भूतेषु वासकर्ता. (अन्तर्यामीत्यर्थः) वेकौ. [वसति, वासयति इति वासुः, दीव्यति इति देवः, वासुश्चासौ देवश्च वासुदेवः। र.]

**वासुदेवांकनम्** - भगवद्दास्यलक्षणभूतश्रीसुदर्शनपाञ्चजन्यधारणम्। सच्च.

**वास्तवम्** - परमार्थम्। भा.

**वास्तेयम्** - वस्तौ ... भवम्। छा.

**वास्यम्** -' निवासनीयम्। व्याप्यम्। सर्वाधारे स्वस्मिन् स्वेन वसनीयम्। ई.

**त्राहः** - वाहनम् । या.
**वाहम्** - रथम् । श्वे.
**वाहिनीपतिः** - सेनाधिपतिः । रा.
**विंशतिप्रत्यरम्** - द्वादशमास-पञ्चर्तु-अयनद्वय-संवत्सरात्मक-विंशतिप्रत्यर युक्तम् । श्वे.
**विंशतिवर्गः** - असन्धेया बालवृद्धादयो विंशतिप्रकाराः प्रतिपक्ष्याः । रा.
**विकटम्** - विशालम् । रा.
**विकटाः** - स्थूलजङ्घाः । रा.
**विकत्थनम्** - व्यर्थोक्तिः । पा.
**विकरोति** - विनाशयति । भा.
**विकर्ता** - (अत एव) तत्फलभोगेन हर्ष-शोकादिभिर्विकुर्वाणः विकर्ता । स्वार्थहर्ष-शोकाद्यभावेपि परार्थतत्प्रसक्तिरदोषः । अन्यथा परदुःखदुःखित्वादयो गुणाः कथमस्य स्युः । सह. परिणमयिता । विशेषेण कर्ता पोषकः । वि.
**विकर्म** - नित्यनैमित्तिककाम्यरूपेण तत्साधनद्रव्यार्जनाद्याकारेण च विविधता-मापन्नं कर्म । गी.
**विकल्पः** - अयमिति निश्चयः । सर्वा (आ). आत्मनि देवत्वमनुष्यत्वाद्यारोपः । भा. ज्ञानम् । श. कोटिः । च. भेदः । पद. पाक्षिकबाधः । भाव. (सविकल्प) प्रतीतिः। न्यासिटी. प्रतिसन्धानगोचरस्य केनचिदधिकेन विशेषणेन वैशिष्ट्यम् । त. विहितयोर्द्वयोस्तुल्यबलयोः अन्यतर-प्रहाणेनान्यतरस्य परिग्रहः अनुष्ठेयतया । अधि. विविधः कल्पः । न्यासिटी. विविधः कल्पः वैविध्यम् । श्री. शब्दज्ञानानुपाती वस्तुशून्योऽवभासः (अद्वैतिमते) । श्रु. सविकल्पकम् । न्यासिटी. रत्न. सविकल्पकः (सौगतमते) । सर्वा (आ).
**विकल्पत्वम्** - सप्रकारत्वरूपसविक-ल्पकत्वम् । रत्न.
**विकल्पना** - रचना । या.
**विकल्पायोग्यम्** - विकल्पेन दूषयितुम-शक्यम् । भाव.
**विकारः** - अवस्था । श्रु. अवस्था । अवस्थावद् द्रव्यम् । छा.वे. अन्यथाभावः। रा. उत्पत्तिर्विनाशश्च । श्रु. कार्यावस्था । वे. जन्मादिकम् । श्री. नामान्तरभजनार्हा-वस्था । रत्न. परिणामः । सर्वा (आ). संस्थानविशेषः । श्री.
**विकारजननीम्** - एकादशेन्द्रियपञ्चभूता-त्मकषोडशविकारजननीम् । म.
**विकारत्वम्** - कार्यत्वम् । श्रु.
**विकारलोकाः** - कार्यभूतलोकाः । श्रु.
**विकाराः** - जरामृत्युशोकमोहाशनाया-पिपासाः । भा. बन्धहेतुभूता इच्छाद्वेषादयः। गी.
**विकारावर्ति** - निर्धूतनिखिलविकारम् । श्री.
**विकासः** - अवयवोपचयः । च.
**विकिरणम्** - निरसनम् । मु.
**विकीर्णः** - भग्नः । रा.
**विकुर्वन्** - विविधतया कुर्वन् । श्वे.

**विकुक्षिः** - कुक्षिनृपपुत्रः । रा.
[**विकृतयः** - महदादयः पदार्थाः । र.]
**विकृतिः** - कार्यम् । श्रु.
**विकृष्टः** - विशेषेण आकृष्यमाणः, आकर्षणे विशेषो नाम स्वातन्त्र्येण तस्मात् प्रदेशादुपरि उन्मज्जनाभावः । अष्ट. विशेषेण इतस्तत आकृष्टः । वर.
**विकृष्टम्** - विप्रकृष्टम् रा.
**विकृष्टिव्याकृष्टिभ्याम्** - आकर्षणापकर्षणाभ्याम् । सुन्दर.
**विक्रन्दः** - शब्दः । रा.
**विक्रमः** - गमनम् । दण्डः । पराक्रमः । रा. पादः । अति. परान् प्रत्यभिभवः । रा. विना (पतगपतिना त्रयीमयेन सुपर्णेन) क्रमः क्रमणं स्वेच्छाविहारगतागतं अस्येति । सह. विविधपदन्यासः । रा. शत्रुसैन्यप्रवेशसामर्थ्यम् । अति. शौर्यस्य विषयेषु प्रयोगः। 'विक्रमः शौर्यकरण'मिति वैजयन्ती । या. [पराभिभवनसामर्थ्यम् । ई.]
**विक्रमी** - (इच्छाप्रतिहन्तृप्रसक्तिपरि पन्थिस्वभावतया) विक्रमः पौरुषं अस्य अस्मिन् वा अस्तीति । गाम्भीर्यानुकूलविलासः । सह.
**विक्लबः** - अविमृश्यकारी । विह्वलः । रा.
**विक्लबधीः** - विह्वलबुद्धिः । प्रेमान्ध बुद्धिः । अति.
**विक्रान्तः** - पराक्रमशाली । विक्रमवान् । शूरः । रा.
**विक्रिया** - चित्तस्खलनेन अङ्गानामवशादयथायथव्यापारः (सा भ्रान्तिस्सा च विक्रियेत्यत्र) । श्रु.
[**विखनाः** - भगवन्मूर्तिप्रतिष्ठार्चनादिप्रतिपादकसूत्रकर्ता महर्षिविशेषः । सच्च.]
**विक्षरः** - यथोक्तभक्तप्रणयाक्षरणात् विगतः क्षरः प्रणयक्षरणं अस्येति । सह.
**विक्षिपन्** - विविधं प्रेरयन् । रा.
**विक्षिप्ता** - कम्पिता । रा.
**विक्षेपः** - अयथावस्थितप्रतिभानम् । न्यासिटी. कथामवगाह्यैव तद्विच्छेदमिच्छतोऽनावश्यकापसरणव्याजवचनं विक्षेपः । यथा महदिदानीं मे कृत्यमतिवर्तत इत्यादि । न्याप. पिण्डीभूतस्य वस्तुनः सर्वतः सर्पणम् । सर्वा (आ).
**विक्षेपकरणम्** - भ्रमणम् । रा.
**विगर्हितः** - विशेषेण शिष्टैर्निन्दितः । रा.
**विगीतः** - प्रसिद्धः । बृ.
**विगीतम्** - विप्रतिपन्नम् । सर्वा (आ).
**विगीतत्वम्** - विप्रतिपत्तिविषयत्वम् । रत्न.
**विगुणः** - अङ्गवैकल्ययुक्तः । ता.
**विगृह्य कथा** - जल्पो वितण्डा च । रा.
**विग्रहः** - आकारः । रा. [शत्रुभिः कलहः। या.]
**विग्रहवाक्यत्वम्** - समासप्रतिपाद्यार्थप्रतिपादकत्वे सति तत्प्रयुक्तलोपप्रतियोगिविभक्तिघटितत्वम् । वा.
**विग्रहविभुत्वम्** - विभुत्वे हस्तपादादि-

व्यवस्थानुपपत्त्या आपेक्षिकमिदं विभुत्वम्। न्यासि.

**विग्लापनम्** - विग्लानिसाधनम्। श्रमैकफलमिति यावत्। बृ.

**विचक्षणः** - कुशलः। प्र. दूरदृष्टितया युक्तायुक्तविचारपूर्वकं सर्वकार्यकृत्। रा.

[**विचक्षणाः** - भगवच्छेषत्वज्ञानपौष्कल्यवन्तो महान्तः। सच्च.]

**विचक्षते** - पश्यन्ति। भा.

**विचयः** - अन्वेषणम्। रा.

**विचरन्** - भक्षयन्। चर गतिभक्षणयोः। रा.

**विचर्षणम्** - बलारोग्यादिना कान्तिमत्। तै.

**विचालनम्** - प्रतिकूलस्य अवसादस्य प्राप्तिः। ता.

**विचिकित्सा** - सन्देहः। श्रु.

**विचित्रत्वम्** - आश्चर्यत्वम्, अवान्तर विशेषो वा। स्तो.

**विचृत्य** - व्याप्य। तै.

**विचेतसः** - विचाराक्रान्तचित्ताः। भा.

**विचेताः** - विधतयाथात्म्यज्ञानः। गी.

**विच्छाययति** - विद्रावयति। बृ.

**विजयः** - मूर्त्यन्तरयोरपि सृष्टिसंहारादिभिः जगद्विजयः अस्मादिति। सह. शत्रुनिरासः। ता.

**विजानन्** - उपासीनः। छा. मुमुक्षुः। गी. 'विजानत' इति च विशिष्टज्ञानवत्त्वमुच्यते। विशिष्टत्वं च हेयोपादेयविषयतया। तथाविधज्ञानवांश्च मुमुक्षुरेव स्यादिति। ता.

**विजानाति** - अत्र विजानातिशब्दः साक्षात्कारपरः। विज्ञानं ध्यानम्। छा.

**विजायमानः** - विविधं जायमानः। वै.

**विजिगीषुकथा** - जल्पः वितण्डा; इति द्विधा। न्याप.

**विजिज्ञासा** - विचारः। बृ.

**विजिज्ञासे** - उपासितं करोमीत्यर्थः। छा.

**विजिज्ञास्यम्** - विचिन्तनीयम्। बृ.

**विजितात्मा** - प्रवणीकृतमनस्कः (प्रणप्रैः)। सह.

**विजितेन्द्रियः** - विषयचापलरहितः। रा.

**विजिहीते** - छिद्रीकरोति। बृ.

**विजृम्भणम्** - गात्रभङ्गः। रा.

**विज्ञाता** - अध्यवसेयोन्तःकरणविषयसाक्षात्कर्ता। श्रु.

**विज्ञातृ** - अध्यवसेयसाक्षात्कर्तृ। बृ.

**विज्ञातृत्वम्** - (भगवतः) विज्ञानशब्दित निदिध्यासनविषयसाक्षात्कर्तृत्वम्। बृ.

**विज्ञानम्** - अजडस्वरूपम्। तै. आत्मा, विज्ञानगुणसारत्वात्। आत्मा, ज्ञानस्वरूपत्वात्। इन्द्रियाणि, विज्ञानसाधानत्वात्। श्री. उपासनम् (विजानीहि उपास्व)। कौ. चित्ताभिज्वलनम् (**बौद्ध**मते)। जीवात्मा; "यस्य विज्ञानं शरीर" मित्यत्र। श्री. जीवात्मा। बृ. ज्ञानस्वरूपम् आत्मा (सौगतमते)। दर्शनसमानाकारज्ञानम्। तै. धर्मभूतज्ञानम्। रा. ध्यानम्। वि. परतत्त्वगतासाधारणविशेषविषयं ज्ञानम्।

गी. प्रमाणजन्यं ज्ञानम्। छा. बुद्धिः। भाव. विविच्य ज्ञानम्। व्यावृत्ततया ज्ञानम्। ता. विशेषतो ज्ञानम्। रा. विविक्ताकारविषयं ज्ञानम्। गी. विविधविषयज्ञानजनकम्। नि. विभागेन ज्ञानम्। विविधज्ञानम्। श्रु. विज्ञानगुणसारो जीवः। न्यासि. शास्त्र-जन्यज्ञानम्। रा. हय. शिल्पादिज्ञानम्। वि. शिल्पादिषु धीः। "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इति अमरः। वि. संस्कारवशाज्जीवस्य गर्भाशयद्रव्ये वृत्तिलाभः (सौगतमते)। बृ.

**विज्ञानघनः** - जीवः। बृ. रसघनदृष्टान्त-स्वारस्यात् ज्ञानव्याप्त इत्यर्थः। न्यासि.

**विज्ञानघन एव** - कृत्स्नोऽप्यात्मा जड-व्यावृत्तस्वप्रकाशः, नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्यर्थः। श्री. स्वप्रकाशत्वाव्याप्तांशरहितः। छा.

**विज्ञानमयः** - जीवः। तै. जीवात्म-शरीरकः। सुबा. ज्ञानरूपः ज्ञानगुणकः। बृ. विज्ञानप्रचुरः। सि.

**विज्ञानवादिनः** - योगाचाराः। न्यासिटी.

**विज्ञानवृत्तिः** - विज्ञानरूपान्तः - करणवृत्तिः। विज्ञानस्य वा बुद्धितत्त्वस्य विवेकख्यातिरूपा परिणतिः (सांख्यमते)। सर्वा.

**विज्ञानशक्तिः** - विज्ञानगुणकः, विज्ञानं शक्तिः अपृथक्सिद्धविशेषणं यस्येति। भा.

**विज्ञानसारथिः** - समीचीनविज्ञान-मनश्शाली। क.

**विज्ञानस्कन्धः** - तत्तद्विषयग्राहकत्वेना-हमित्यभिमानारूढा ज्ञप्तिः (बौद्धमते)। श्रु.

**विज्ञानस्वरूपत्वम्** - स्वप्रकाश-स्वरूपत्वम्। श्री.

**विज्ञानात्मा** - विज्ञानस्वरूपः। न्यासि.

**विज्ञानादि** - विज्ञानं चादि चेति परब्रह्म। श्री.

**विज्ञापनम्** - सर्वज्ञेपि स्वामिनि दासोचितं स्वकार्यार्थवाक्यम्। स्तो.

**विज्ञापयतु** - विशिष्य ज्ञापयतु। दृष्टान्तै-र्दर्शयतु। छा.

**विज्ञाय** - श्रवणमननाभ्यां ज्ञात्वा। बृ.

**विज्ञेयः** - विविधतया ज्ञेयः। मा (कू).

**विज्ञेयम्** - विविच्य विभज्य ज्ञातुं शक्यम्। श्रु.

**विट्** - क्रव्यादभक्षितं शरीरम्। ई.

**विटङ्कः** - कपोतपालिका। रा.

**विटपावती** - अलका। रा.

**विडम्बनम्** - भ्रूनेत्रादिविकारः। वि.

**विडम्बना** - अनुकारः। अनुचितकृत्यम्। या. अवमानः। वि.

**वितण्डा** - प्रतिपक्षस्थापनहीना विजिगीषुकथा। न्याप. वादिपक्षोपन्यास-तत्प्रतिक्षेपमात्रवती कथा। प्रतिपक्षा-प्रामाण्यमात्रनिश्चयार्थो व्यवहारः। न्याप. स्वपक्षस्थापनाहीना विजिगीषुकथा। य.

**विततः** - (वेदान्तेषु) विस्तरेण प्रति-पादितः। बृ.

**विततत्वम्** - पिण्डसंस्थानत्वम्। वि.

[**विततम्** - (सुदर्शनम्)। प्रमाणेषु प्रमातृषु भुवनेषु वा विस्तृतत्वात्। सच्च.]
**वितन्वाना** - वर्धयन्ती। तै.
**वितर्दिः** - वेदिका। रा.
**वित्तसंचयम्** - कोशगृहम्। रा.
**वित्तिः** - बुद्धिः। न्यासिटी.
**वित्तेषणा** - बृहदारण्यके तृतीयाध्याये "वित्तं मे स्यादथकर्म कुर्वीय" इति योक्ता सा वित्तेषणेत्यनेनोच्यते। बृ.
**विदग्धः** - रसिकः। सुन्दर.
**विदथे** - विजाने। श्रीसू.
**विदर्शितः** - विपरीतं बोधितः। रा.
**विदारणः** - राहुमुखादिविदारणकर्ता। सह.
**विदारितम्** - सरन्ध्रीकृतम्। रा.
**विदाहिनः** - तापकराः। गी.
**विदितात्मा** - आत्मज्ञानवान्। रा.
**विदिशः** - अवान्तरदिशः। या. चतुर्मुखमुखानां विनयगद्गदगिरां दूरीभूताः विविधाः दिशाः अनवधिकातिशयस्वरूपरूपगुणविभवानन्तमाहात्म्यसीमा अस्येति। सह.
**विद्धः** - आयुधवेधयुक्तः। छा
**विद्धम्** - कृतरन्ध्रम्। रा.
**विद्या** - उपासनम्। छा.वेकौ.ज्ञानम्। त.श्रु.ज्ञप्तिः। श्रु. तत्त्वज्ञानम्। रा. पुरुषार्थसाधनभूता ध्यानोपासनादिशब्दवाच्या। श्री. राक्षसमायादर्शनहेतुर्मन्त्रः। रा. विमुक्तिसाधक उपायः। वि. वेदविद्या; अध्ययनम्। श्रु. वैराग्यतत्त्वज्ञानमयी। क. शिष्यगतज्ञानम्। तै. शास्त्रजन्यं ज्ञानम्। भा.
**विद्याचितः** - विद्यार्थाश्रितः व्यापारः। अग्नि.
**विद्यात्वम्** - वेदविहितभक्तित्वम्।
**विद्याधिकारः** - विद्याप्रस्तावः। श्रु.
**विद्यानिष्पत्तिः** - विद्यायाः कार्यकरत्वावस्थाप्राप्तिः। श्रु.
**विद्याम्** - उपासनाम्। भा.
[**विद्यावतारः** - विद्याप्रवर्तनार्थः मत्स्यवराहाद्यवतारः। ई.]
**विद्युज्जिह्वः** - शूर्पणखाया भर्ता राक्षसः रा.
**विद्युत्** - कश्चित् राक्षसः। वि. विद्युद्वर्णः पुरुषः। तै. विदानाद्विद्युत् (मेघान्तः स्थितान्धकारखण्डनात् विद्युत्)। बृ.
**विद्युतः पुरुषात्** - विद्युद्वर्णात् पुरुषात्। छा.
**विद्युत्तम्** - विद्योतनम्। द्युतेर्निष्ठा। बृ.
**विद्युद्राशिः** - अशनिः। रा.
**विद्रुतम्** - निर्गतम्। रा.
**विद्वत्तमः** - स्वहस्तसंस्पर्शादिना गजेन्द्रचिकित्सायां अतिशयेन विद्वान्। सह.
**विद्वान्** - सर्वज्ञः। तै. [ब्रह्मविद्याधिकारी। र.]
**विधरणः** - धारकः। बृ.
**विधर्ता** - विशेषेण जगतो धर्ता। तै.
**विधर्मन्** - (विधर्मे) जगद्विलक्षणे। तै.

**विधा** - इतिकर्तव्यता । गी. प्रकारः । ता.

**विधाता** - चित्समष्टिभूतं विरिञ्चाख्यं गर्भं परिणमय्य आविर्भावयतीति । सह. निर्माता । वि. यमादीनामपि हिताहित-नियोगकर्ता । सह. [स्रष्टा । र.]

**विधात्री** - कर्त्री । वि. (श्रुतिः) लिङादि-श्रुतिः । भाव.

**विधानम्** - अज्ञातज्ञापनम् । ता. करण-व्युत्पत्त्या विधानमिह विधायकवाक्यम् । ता. कृत्यम् । विधिः । रा. स्वरूपग्रहणम् । श्रु.

**विधारणम्** - च्यावनम् । रा. विविध-कार्यक्षमतया धारणम् । प्र.

**विधिः** - अज्ञातज्ञापनम् । श्रु. नि. अनुशासनम् । गी. आप्तस्य हितकामस्य नियोगः । नी. अधि. इष्टसाधनत्वम् । इष्टस्य कृत्यधीनत्वम् ; अधि. उपायः । रा. कर्तव्यत्वप्रकारकेच्छा । व. कार्यम् । अधि. दैवव्यापारः । रा. धात्वर्थभावना । अधि. नियोगः । श्रु. प्रवृत्तिहेतुः । नी. भावः । न्यासिटी. विधीयत इति; यज्ञादिः सर्वाश्र-मधर्मः शमदमादिश्च । श्री. विधीयत इति विधिः नित्यनैमित्तिकादिः । मु. रक्षाविधौ संरक्षणकृत्ये । या. विधायकं शास्त्रम् । ता. विधायकवचनम् । नि. शाब्दभावना । अधि. शब्दभावना । नी. सर्वशब्दानां अर्थप्रतीत्युन्नेयोऽभिधाव्यापारः । नी. स्वगृह्योक्तप्रकारः । वि. हितानुशासनरूपं वाक्यम् । य. हितानुशासनं वाक्यम् । न्याप. [अनादिकर्मप्रवाहः । विधीयत इति विधिः धर्मः । र.]

**विधिम्** - चिकीर्षाम् । भा.

**विधिनिर्मितत्वम्** - अनतिक्रमणीयतया दिष्ट्या निर्मितत्वम् । स्तो.

**विधिविलसितम्** - अदृष्टविपाकः । वै.

**विधिहीनम्** - ब्राह्मणोक्तिहीनम् । सदा-चारयुक्तैर्विद्वद्भिर्ब्राह्मणैः यजस्वेत्युक्तिहीन-मित्यर्थः । गी.

**विधुः** - विष्णुः । 'विधुः श्रीवत्सला-ञ्छनः' इत्यमरः । पा.

**विधुरः** - मृतदारः । श्रु.

**विधृतः** - विशेषेण धृतः । बृ.

**विधृतिः** - विधारकः । छा.

**विधेयः** - वश्यः । अति.

**विधेयम्** - अप्राप्तांशः । श. साङ्गं प्रधानं कर्म । श्रु.

**विधेयत्वम्** - नियाम्यत्वम् । श.

**विधेयात्मा** - तेषां (प्रणतानां) 'इहागच्छ इह तिष्ठे' त्यादि विधातुं योग्यं स्वरूप-मस्येति । सह.

**विध्यन्तः** - इतिकर्तव्यता । ता.

**विध्युद्देशः** - विधिवाक्यम् । भाव.

**विध्वंसेत** - चूर्णीभवेत् । बृ.

**विनतः** - विशेषेण नतः प्रह्वीभूतः । श्रु.

**विनतम्** - नगरविशेषः । रा.

**विनयः** - कैङ्कर्यरूपाचारः । 'विनयो धर्म-विद्यादिशिक्षाचारप्रशान्तिषु' इति वैजयन्ती ।

रा. त्रिगुणात्मिकायाः क्रियायाः सत्त्वांशेन लज्जायाः ज़ातः, शारीरश्च। वि. मारीचादयः वीर्यादिना अस्माद्विनीयन्ते दम्यन्त इति विनयः। सह. विपरीतनयः। शिक्षा। शेषत्वज्ञानम्। रा.

[**विनयति** - शिक्षयति। या.]

**विनयिता** - 'णय गतौ रक्षणे च'। विनयते विशिष्य प्राप्नोति रक्षतीति सः। सह.

**विनर्दि** - ऋषभकूजितसमविशिष्टनर्दाख्यस्वरविशेषवत् गानम्। छा.

**विनश्यति** - न पश्यतीत्यर्थः। श्री.

**विनष्टाः** - असत्कल्पाः। वै.

**विनष्टिः** - हानिः। बृ.

**विनायकाः** - विघ्नकरा ग्रहाः। रा.

**विनाशः** - अभावः। रा. उत्तरोत्तरसंस्थानयोगः। श्री. (कर्मणाम्) अन्यसंक्रान्तिः। न्यासि. (जीवस्य) अत्यन्तज्ञानसङ्कोचः। बृ. पूर्वावस्थस्य द्रव्यस्य उत्तरावस्थाप्राप्तिः। गी. लब्धसत्ताकस्य स्वरूपप्रच्युतिः। श. विरोधिवर्जनम्। ई. विध्वंसः। सर्वा (आ). सतो द्रव्यस्य अवस्थान्तरापत्तिः। श्री.

**विनाशमपीतः** - विनष्टप्रायः, विशेष ज्ञानरहितः। छा.

**विनिकृतः** - वञ्चितः। रा.

[**विनिपातः** - विनाशः। या.]

**विनियम्** - मिश्रीकरणम् (परस्परम्)। भा.

**विनियोगः** - अङ्गत्वज्ञापनम्। श्रु. अङ्गाङ्गित्वबोधनम्। सम्बन्ध इति तु न्यायसुदर्शनम्। त. व्यापारणम्। भाव. शेषत्वज्ञापकविधिः। श्रु. शेषशेषिभावसम्बन्धः। भाव.

**विनियोगपृथक्त्वम्** - कर्मणां विनियोगभेदः। श.

**विनियुक्तविनियोगः** - उभयफलार्थत्वम् (साधनत्वम्)। नी.

**विनिवृत्तकामाः** - विनिवृत्ततदितर कामाः। गी.

**विनिश्चरन्ति** - निर्गच्छन्ति। बृ.

**विनिश्चितानि** - निर्णयान्तानि। गी.

**विनिहतात्मानम्** - विशेषेण निहतबुद्धिम्। रा.

**विनीतः** - विद्यासु शिक्षितः। वृद्धैः सुशिक्षितः। शिक्षितः। रा.

**विनीतवत्** - सविनयम्। रा.

**विन्दते** - लम्भयति। बृ.

**विन्यदधात्** - विशेषेण निधानं कृतवती। बृ.

**विपक्तिः** - (कर्मणां) सहकारिलाभः। फलविशेषोद्गतिः। सर्वा.

[**विपक्त्रिमं वालखिल्यसुकृतम्** - तेषां सुकृतविपाकरूपो गरुत्मान्। ब्रह्मणो यज्ञे सर्वैरपि वालखिल्यैरङ्गुष्ठप्रमाणैः एकां समिधं महता यत्नेनानीयमानां वीक्ष्य उपहसितवति शक्रे, तद्गर्वापहारायान्यमिन्द्रं तज्जेतारं स्रक्ष्याम इति प्रतिज्ञाय तदर्थं तपश्चरत्सु तेषु काश्यपेनानुनीयमानेषु कथचित्

प्रतिज्ञानिर्वाहाय गरुडः खगेन्द्रतयाऽवतीर्य शक्रं अमृताहरणे जिगायेति पौराणिकी कथा। या.]

**विपक्षः** - साध्यतज्जातीयशून्यः। यथा महाह्रदादिः। न्याप. साध्यतज्जातीयशून्यः। य.

**विपञ्ची**- सप्ततन्त्री वीणा। रा.

**विपणः** - विक्रय्यं वस्तु। रा.

**विपत्तिः** - स्वरूपनाशः। रा.

**विपन्नः** - शङ्कितापायः। रा.

**विपन्यवः** - विशेषेण स्तुतिशीलाः। "पण व्यवहारेस्तुतौ च। पन च"। ता. स्तुतिशीलाः। वे.

**विपरीतः** - सन्निपातादिना विपरीत-प्रकृतिः। रा.

**विपरीतम्** - प्रतिषिद्धम्। गी.

**विपरीतख्यातिः** - विपर्ययो द्र.।

**विपरीतज्ञानम्** - अज्ञानं द्र. धर्मि-विपर्यासः। य.धर्म्यन्तरज्ञानम्। भाव.

**विपरीतरूपम्** - विरोधिरूपम्। श्रु.

**विपरीतवासना** - तद्धर्मावच्छिन्न-विशेष्यकाभावविषयकसंस्कारः। वा.

**विपरीतसाधनम्** - विपर्ययेणापि व्याप्ति-सद्भावः। श्रु.

**विपर्ययः** - संहारसमयः। रा. नाशः। रा. (अन्यथाख्यातिपक्षे) अन्यस्यान्यथाऽध्य-वसायः। (अख्यातिपक्षे) सामान्यतो धर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधविरुद्ध-विशेषणाध्यवसायः। न्याप. विपर्ययमेव धर्मान्तरधर्म्यन्तरभेदादन्यथाख्याति-विपरीतख्यातिभेदेन क्वचिद् व्यवहरन्ति। यथा पीतशङ्खरज्जुसर्पभ्रमौ।

**विपर्ययम्** - विपरीतम्। गद्य.

**विपश्चित्** - विविधं पश्यन्ती चित् यस्य सः। तै. विविधं पश्यत् चित्। ब्रह्मवित्। वै. हेयोपादेयविभागज्ञः। भा. विविधज्ञा-नोपेतः। रा.

**विपश्चित्त्वम्** - निरुपाधिकानन्याधीनास-ङ्कुचितसर्वविषयकज्ञानवत्त्वम्। तै. विविधं पश्यच्चित्त्वं विवश्चित्त्वम्। "पृषोदरादीनि यथोपदिष्टम्" इति पश्यच्छब्दावयवस्य यच्छब्दस्यलोपः। तच्च बहुज्ञत्वम्। ता. विविधं पश्यच्चित्त्वम्। पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। भाव. शास्त्रजन्यहेयोपादेयविवेकवत्त्वम्। ता.

**विपाकः**-फलार्हदशा। श्रु. फलप्रदानाभि-मुख्यम्। अधि.

**विपाकाः** - जात्यायुर्भोगाः। ता. गद्य. श्रु.

**विपाप्मम्** - निरस्तपापम्। तै.

**विपुलम्** - पृथुलम्। या.

**विपुलाः** - निरन्तराः। स्थूलाः। रा.

**विप्रः** - पुरोहितः। रा.

**विप्रक्रमणम्** - कर्माधीनसर्वसंस्कार-साधनेनाघनाशकेषु विप्रेषु प्रत्युपकाराना-चरणम्। रा.

**विप्रकारः** - परिभवः। पीडा। विपरीत-प्रकारः। रा.

**विप्रकृतम्** - विनाशितम्। वि.
**विप्रकृता** - रोगग्रस्ता। रा.
**विप्रकृष्टः** - विभक्तः। न्यासि.
**विप्रतिपत्तिः**- (संशयहेतुः) अगृह्यमाण-बलाबलतारतम्यविरुद्धानेकज्ञापकोपस्थापनम्। न्याप. विरुद्धार्थप्रतिपादकवाक्यद्वयम्। च. विरुद्धार्थबोधकवाक्यद्वयम्। वे.
**विप्रतिपद्यन्ते** - विशिष्टदेशं प्रतिपद्यन्ते। (विप्रतिपत्तिः विशिष्टदेशप्राप्तिः)। बृ.
**विप्रतिपन्नः** - विशेषतः प्रतिपन्नः। गी.
**विप्रतिषिद्धम्** - विशेषेण प्रतिषिद्धम् विशेषप्रतिषिद्धम्। प्रकरणसमवन्न समबलेन प्रतिरोधः, कालात्ययापदिष्टवत् अधिकबलेन विरोधः। अनेकशास्त्रविरोधादिति भावः। श्रु. विशेषेण प्रतिषिद्धम्। व्र.
**विप्रतिषेधः** - विशेषेण प्रतिषेधः। विविधप्रतिषेधो वा व्याघातः। श्रु.
[**विप्रतिसारः** - पश्चात्तापः। या.]
**विप्रमोक्षः** - विभज्यात्यन्तिकमोचनम्। त.
[**विप्रलम्भः** - वञ्चना। र.]
**विप्रलम्भकत्वम्** - मोहनेच्छा। अधि.
**विप्रस्य** - पूर्णस्य। प्रा पूरणे। श्वे.
**विप्राः** - तत्त्वदर्शिनः (विप्रो विप्रत्वं गच्छते तत्त्वदर्शीति)। श्वे.
**विप्रासः** - मेधाविनः। वे.
**विप्रेक्षिततत्** - वीक्षणम्। रा.
**विप्लवः** - विकारः। श्रु. वर्णलोपविपर्यासाद्यन्यथाभावः। या.
**विप्लुष्टः** - दग्धः। वि.
**विफलः** - विगतवृषणः। रा.
**विबुधाः** - नित्यमुक्ताः, विशेषेण बुध्यन्त इति; ज्ञानाधिकाः।भा.
**विभक्तम्** - विलक्षणम्। ता. वेदितृत्वेन देहादर्थान्तरभूतम् (आत्मस्वरूपम्)। गी.
**विभक्तं तमः** - अक्षरावस्थाप्राप्त्यौन्मुख्यविशिष्टं तमः। सुबा.
**विभजनम्** - विशिष्य व्याख्यानम्। या.
**विभवः** - अवतारः। वै. कल्याणगुणसम्पत्। अति. रामकृष्णादिप्रादुर्भावगणः। श्री. परिजनपरिबर्हादिः। ता. सम्पत्। सुन्दर.
**विभवभेदाः** - वैखानसाद्युक्तपद्मनाभादयः, मत्स्यादयश्च। न्यासि.
**विभवाः** - रघुनाथाद्यवताराः। या.
**विभागः** - अनतिप्रकृष्टसूक्ष्मत्वम्। अवस्थावैषम्यम्। श्रु. उत्पत्तिः। श्री. परस्परसम्बन्धपरिपन्थिधर्मविशेषः। श. संयोगाभावसामान्यमौपचारिकार्थः। संयोगध्वसः, न तु गुणविशेषः। स्वरूपभेदः औपचारिकार्थः। न्यासि. संयोगविशेषः। न्यासिटी. विभाग इह भेदः। त.
[**विभावः** - परिचयः। या.]
**विभावसुः**- अग्निः। ता. प्रकाशकः। तै.
**विभाव्य** - दृष्ट्वा। या.
**विभाव्यम्** - विवेचनीयम्। सर्वा (आ).
**विभीषिका** - भयजनकः कृत्रिमपुरुषविशेषः। रा.

**विभुः**-देशापरिच्छिन्नः। मु. देशपरिच्छेदरहितः। श्रु. (देहेन्द्रियाणां) स्वामी। स्वतः स्वराडिति वा। वि. निखिलजगत्सृष्टिपालनसंहाराकूलविविधशक्तियोगात् निरतिशयवैभवः। या. प्रभुः। श्रु. वैभवशाली। क. समर्थः। रा. मा (कू). सर्वगतः। च. सर्वान्तर्यामी। वेकौ. [स्वाज्ञातिक्रमे दण्डनसमर्थः। र.]

**विभुत्वम्** - व्यापकत्वम्। तै. श्रियो विभुत्वं विष्णुपुराणभगवच्छास्त्रवचनादिसिद्धम्। श्रीत. सर्वद्रव्यसंयोगित्वम्। रत्न. सर्वमूर्तद्रव्यसंयोगित्वम्। न्यासि.

**विभुत्वेन** - व्याप्य आत्मतया। श्वे.

**विभुप्रमितम्** - एकहिरण्मयमण्टपम्। प्रभुविमितमिति उपसर्गव्यत्यासेन छान्दोग्ये। विभुत्वेन विस्तृतत्वेन प्रमितमिति विभु प्रमितपदार्थः। कौ.

**विभुम्** - देशापरिच्छिन्नम्। नी.

**विभूतिः** - (जीवजडात्मना) विविधतया भवनम्। मा (कू). दासभृत्यधनरत्नादिरूपः शेषभूतो नियन्तव्यवर्गः। स्तो. परिजनपरिबर्हाभूषणादिः। ता. पुत्रपशुवित्तादिः। भा. विभूतिर्भूतिरैश्वर्यमिति नैघण्टुकाः। विभुशब्दश्च नियन्तरि प्रयुज्यते। अतो विभूतिर्विभवनं नियमनमैश्वर्यम्। भगवत ऐश्वर्यञ्च सर्वपदार्थोत्पत्तिस्थितिप्रवृत्तिविषयं नियमनमिति सर्वगता तदधीनस्वरूपस्थितिप्रवृत्तितैव तद्विभूतिः। क्वचित् विभूतिशब्दो वस्त्वन्तरसामानाधिकरण्यादिना नियन्तव्यपरः। ता. स्वातिशयाधानार्थं नियन्तव्यद्रव्यम्। सर्वा. सम्पत्। सुन्दर.

**विभूतिमत्** - नियाम्यवत्। विभूतिः नियाम्यम्। श्रु.

**विभूत्या विश्लेषः** - विभूतित्वेनाननुभवः। ता.

**विभ्रमः** - उन्मादादिवैचित्त्यम्। वि. ज्ञानम्। काममोहः। रा. विलासः; प्रयोजनान्तरं विना सन्तोषमात्रपर्यवसितव्यापारः। व.

**विभ्रमाः** - शृङ्गारचेष्टाविशेषाः। या.

**विभ्रान्ताः** - विक्षिप्ताः। यद्वा विपरीतज्ञानवन्तः। ता.

**विभ्वी**- देव्या मुख्येश्वरत्वे विवदमानैरपि, 'नित्या विभ्वी च साध्वी' इत्युक्तत्वात् लक्ष्मीः विभुत्ववति। श्रीत.

**विमत्सरः** - अनिष्टोपनिपातहेतुभूत स्वकर्मनिरूपणेन परेषु विगतमत्सरः। गी.

[**विमथिः** - विपरीतज्ञानम्। र.]

**विमलम्** - हेयप्रत्यनीकम्। सुन्दर.

**विमानः** - सप्तभूमिसदनम्। रा.

[**विमार्जयन्ती** - अलङ्कुर्वती (गङ्गा)। ''मृज शौचालङ्कारयो''रिति चौरादिको धातुः। या.]

[**विमितम्** - विशालम्। ई.]

**विमिश्राः** - आश्लिष्टाः। रा.

**विमुक्तिः** - परिपूर्णब्रह्मानुभवः। अति. विसर्गः। तै.

**विमूढः** - प्रच्युतः। गी.

**विमूढाः** - मनुष्यत्वादिपिण्डात्माभिमानिनः। गी.

**विमूढात्मा** - विमूढः आत्मास्वरूपं यस्य स विमूढात्मा। 'दिशो विमुह्येयुः' इतिवत् विमूढशब्दोऽत्र मोहविषयसमानाधिकरणः। ता.

**विमोकः** - कामानभिष्वङ्गः। श्री.य. तीव्रतमसङ्गजन्यकामप्रयुक्तानुवृत्तदृढग्रहणाभावः। (विमोकः कामानभिष्वङ्गः इति . . . .।) त.

**विमोहः** - मूर्छा। अति.

**वियोगः** - दूरत्वम्। विभागः। न्यासि. वियोगहेतुः। ता. संश्लेषो द्र.

**वियातानुभवः** - प्रगल्भानुभवः। प्रागल्भ्यं विषयसम्बन्धविक्षिप्तत्वाभावात् (जैनमाक्ष एवम्)। न्यासिटी.

**विरक्तः** - विषयविरागयुक्तः। वि.

**विरक्तिः** - (भगवतः) अवाप्तसमस्तकामत्वेऽपितदनादरेणावस्थानसामर्थ्यात्मिका "सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति श्रुत्यवगता। कामानभिष्वङ्गः। विषयेषु निस्पृहता। विषयानाकृष्टचित्तत्वं वा। भा.

**विरजः** - रजोगुणविमुक्तः। तै. विरागः। रागादिदोषरहितः। बृ.

**विरजम्** - निर्मलम्। रा. सत्त्वरजस्तमोऽतीतम्। मु.

**विरजा** - ब्रह्मलोकनदी काचित्। कौ.

**विरजाः** - विधूतपापाः। मु.

**विरजोमार्गः** - एवंपाठे एकं नाम। विरजाः अपांसुलः निर्दोषः तद्दर्शितो मार्ग इति। यथा, "या गातिर्यज्ञशीलानामाहिताग्नेश्च या गति"रित्यादि (मृज्यते परिमृज्यत इति मार्गोऽध्वा)। सह.

**विरतः** - निसर्गनैरपेक्ष्येण कृपणाद्राज्यादेः विरतः। यथा 'न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति'। सह.

**विरलता** - तत्तन्मध्यप्रदेशानां तैस्तैरस्पृष्टता। ता.

**विरलत्वम्**-प्रशिथिलावयवसंयोगवत्त्वम्। रत्न.

**विरहय्य** - पृथक्कृत्य। भा.

**विराजः** विविधदीप्तियोगात् विराट्छब्दवाच्याः सप्त ब्रह्मणो मानसाः पुत्राः। सुबा.

**विराट्** - अन्नम्, विराट्पुरषो वा। छा. ईश्वरः जगत्स्रष्टा विभुः नारायणः। वि. विशिष्य राजतीति। तै.

**विरामः** - विरम्यते अस्मिन् वरप्रदैः ब्रह्मादिभिः, वरैश्चावध्यत्वादिभिः, लब्धवरैश्च रावणादिभिरिति। यथा "ब्रह्मा स्वयंभूरि"त्यादि। सह.

**विरुद्धः** - पक्षविपक्षयोरेव वर्तमानो हेतुः। सर्वा. साध्यविपरीतव्याप्तो हेत्वाभासः। न्याप.

**विरुद्धम्** - विपरीतस्यापि साधकम्। श्रु.

**विरुद्धप्रत्यक्षम्** - ग्राह्याभावावगाहि प्रत्यक्षम्। न्यासिटी.

**विरुद्धयोस्समुच्चयः** - परस्पराभावव्याप्ययोस्साहित्यम्। रत्न.

**विरुद्धविशेषणम्** - विशेष्यभेदको विशेष्यनिष्ठो धर्मविशेषः । अधि.

**विरुद्धाव्यभिचारी** - प्रकरणसममेव विरुद्धाव्यभिचारिशब्देन केचिदुपचरन्ति । न्याप.

**विरूपः** - विविधरूपः । छा.

**विरूपाक्षः** - विरूपे अक्षणी यस्य सः । "तस्य चिन्तयतो नेत्रात् तेजः समभवन्महत् । दक्षिणं वह्निसङ्काशं वामं तुहिनसन्निभ" मिति वाराहे । शीतोष्णत्वेन परमविलक्षणत्वात् विरूपाक्षत्वम् । तै.

**विरोचनः** - द्वाभ्यामयनगतिभ्यां संवत्सरः रथेनादित्यं विरोचयतीति । सह.

**विरोधः** - एककालावच्छेदेन एकाधिकरणावृत्तित्वम् । न्यासि. तर्कप्रकारभेदः । 'स्ववाग्विरोधो यत्र स्याद्विरोधः स प्रकीर्तितः' इति लक्षणम् । 'वन्ध्या मे जननीत्येष विरोधः स्वाक्तिबाधतः' इत्युदाहरणम् । न्याप. परस्परविरहः । न्यासिटी. सहानवस्थानम् । च. सामानाधिकरण्यानर्हत्वम् । श्रु.

**विरोधी** - नाशकः । न्यासि. रत्न.

**विलक्षः** - विस्मयान्वितः । 'विलक्षो विस्मयान्वित' इत्यमरः । लज्जान्वितो वा । 'आत्मनः स्खलिते सम्यक् ज्ञातेऽन्यैर्यस्य जायते । अपत्रपाऽतिमहती स विलक्ष इति स्मृतः' । या.

**विलक्षणत्वम्** - अन्यत्वम् । श्रु.

**विलयः** - नाशः । पद. रा.

**विलेखनम्** - पत्रादिगतावायवविभागभाष्यादिसंयोगान्यतरानुकूलव्यापारः । वा.

**विलोहितः** - नारकयातना, यत्र लोहितस्य रुधिरस्य शोषणम् । वि.

**विवक्तुम्** - विशिष्य वक्तुम् । छा.

**विवक्षा** - उपासनम् । मा (कू).

**विवक्षितः** - तात्पर्यविषयः । भाव.

**विवरणम्** - उपबृंहणं द्र. प्रकाशनम् । मु.

**विवर्चसः** - निस्तेजस्काः । रा.

**विवर्तः** - कार्यात्मकपरिणामाश्रयवस्त्वधिष्ठानत्वम् । पद.

**विवर्तते** - निष्पद्यते । श्वे. विशिष्य वर्तते । तै.

**विवशः** - अस्वाधीनः । रा. मूर्छितः । अति.

**विवशा** - विचेष्टा । रा.

**विवस्वान्** - कश्यपपुत्रः । रा. विवस्ते आच्छादयति तेजोऽन्तरमिति विवस्वान् । स्वभासा सर्वतेजसामाच्छादक इत्यर्थः । रा. तमसो विवासकः । वि.

**विवाक्यम्** - विगतवाक्यम् । श्रु.

**विवादः** - परमतैर्विमतिः तत्प्रसूता वा विरुद्धबुद्धिः । सर्वा.

**विविक्तः** - (विविक्तव्यवहारे) अन्यूनानतिप्रसक्तः । च. सर्वलोकोत्तरस्वैकान्त वृत्तान्तत्वात् विविच्यत इति विविक्तः । सह.

**विविक्तदेशसेवित्वम्** - जनवर्जितदेशवासित्वम् । गी.

**विविक्तप्रतिभासः** - व्यावृत्तप्रतिभासः। श्रु.

**विविष्टिः** - विशेषेण व्याप्तिः । तै.

**विवित्सा** - द्रविणादिलाभेच्छा । दया.

**विविदिषन्ति** - वेत्तुमिच्छन्ति । वा.

**विविदिषा** - उपासनविषयेच्छा । नी.

**विविधुः** - विवेधनं संयोजनम्। संयोजितवन्तः । छा.

**विवृतम्** - प्रकाशितम् । रा.

**विवृतद्वारम्** - प्रवेशार्हम् । क.

**विवृत्तः** - विवृतप्रयत्नोपेतः । छा.

**विवृत्ताक्षः** - भ्रामितनेत्रः । रा.

**विवेकः** - जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिः । श्री.त.य. भेदः । सर्वा. विवेककरणं शास्त्रम् । ता. (विविच्यतेऽनेनेति) व्यावर्तकाकारः । ता.

**विवेचनम्** - परस्परव्यावर्तको धर्मः, तेन वा पृथक्त्वेनानुसन्धानम्। गीसं. विविच्यतेऽनेनेति व्यावर्तकधर्मः । ता.

**विव्यथनम्** - विदारणम् । अति.

**विशति** - विषयीकरोति । भा.

**विशदग्रहणम्** - भूयोधर्मविशिष्टतया ग्रहणम् । सर्वा.

**विशदानुवृत्तिः** - एकान्तभक्तिः । भा.

**विशदावभासः** - यः सांशः सविशेषः प्रकाशविषयस्तस्य सकलावभासः । श्री.

**विशन्ति** - विषयीकुर्वन्ति । भा.

**विशल्यकरणी** - अन्तर्गतशल्यनिर्गमनकारिणी ओषधिः । रा.

**विशसनः** - नरकयातना, यत्र करपत्रादिना तीक्ष्णशस्त्रेण विशसनम् । वि.

**विशारदः** - विद्वान् । रा.

**विशालाक्षी** - दीर्घलोचना । या.

[**विशिखा** - वीथी । र.]

**विशिष्टः** - स्वत एव तदनपेक्ष (विभूत्यनपेक्ष) वैलक्षण्यतया विशिष्यते 'अभ्यधिको भवति' इति विशिष्टः । "विषॢ विशेषणे" विपूर्वः । सह.

**विशिष्टक्रमम्** - नियतक्रमम् । (सङ्गतिविशेषेण विशिष्टक्रमम्) श्री.त.

**विशिष्टज्ञानम्** - विशेषणविशेष्यसम्बन्धविषयकज्ञानम् । भाव.

**विशिष्टनिरावरणत्वम्** - आनन्दप्रकाशरूपविशेषयुक्तं निरावरणत्वम् (जैनमते मोक्षः) । रत्न.

**विशिष्टाः** - ज्ञानाधिकाः । रा.

**विशिष्टाद्वैतम्** - विशिष्टैक्यम् । रत्न.

**विशिष्टैक्यम्** - विशिष्टस्य अशेषचिदचिद्विशिष्टस्य ऐक्यं सजातीयद्वितीयराहित्यम्, साजात्यमशेषचिदचिद्विशिष्टत्वरूपेण । रत्न.

**विशिष्यते** - श्रेष्ठतमः । ता.

**विशीर्यमाणस्वभावः** - कार्याक्षमत्वलक्षणशैथिल्यवान् । ता.

**विशुद्धः** - अकर्मवश्यः । भा.

[**विशुद्धमनः** - विवेकविमोकादिसाधनसप्तकानुगृहीतं परमात्मोपासननिर्मलीकृतं मनः । ई.]

**विशुद्धविज्ञानघनम्** - अपहतपाप्मत्वादिगुणककेवलज्ञानैकस्वरूपम् । भा.

**विशुद्धात्मा** - आश्रितेभ्यः सर्वस्व त्यागात् परिशुद्धस्वरूपः । सह.

**विशुद्धाम्बुजम्** - तालु, मातृकाध्यानश्लोके । न्यासिटी.

[**विशुद्धावतारः** - रघुनाथादिरूपः । या.]

**विशुद्धिः** - रजस्तमोनिवृत्तिः तन्मूलक रागद्वेषादिकषायनिवृत्तिः । ता.

**विशेषः** - अजातिरेकवृत्तिः तार्किकेष्टः । न्यासि. कार्यकारणाकारः । भा. दृश्यपदार्थः । 'विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुति' इति शब्दार्णवः । या. भेदो द्र. । न्याप. विशेषणम् । श्री. विशेष्यत इति । श्रु. भाव.

**विशेषकः** - अलङ्कारः । रा.

**विशेषकम्** - तिलकम् । रा.

**विशेषग्रहः**-अधिष्ठाने अध्यस्तव्यावर्तकधर्मग्रहः । न्यासिटी.

**विशेषणम्** - ज्ञाप्यान्तर्भूतः ज्ञाप्यप्रतीत्युपायः । श्रु. भेदकम् । श. विशिनष्टि इति; व्यावर्तयतीत्यर्थः । भा. विशेष्येण सह कार्यान्वयि । श्रु.

**विशेषणत्वम्** - श्रियः पुरुषकारत्वविलक्षणम् । भासमानवैशिष्ट्यप्रतियोगित्वम् । रक्षासङ्कल्पादिमत्त्वेऽप्यप्राधान्येन कार्योपयुक्तत्वरूपम् । श्रीत. विशेष्यान्वयिधर्मान्वयित्वम् । रत्न.

**विशेषणासिद्धः** - हेत्वाभासविशेषः । न्याप.

**विशेषतोदृष्टम्** - (अनुमानम्) प्रत्यक्ष याग्यार्थम् । च. अस्मदादिप्रत्यक्षयोग्यार्थानुमापकम् । व्याप्तिदशादृष्ट्यैव व्यक्त्या देशान्तरकालान्तरादौ व्यापकतया दृष्टव्यक्तेरेवानुमानं विशेषतोदृष्टम् । यथा कृत्तिकया रोहिण्यनुमानमिति केचित् । न्याप.

**विशेषपृथक्त्वम्**-(द्वित्व)द्विपृथक्त्वादि । न्यासिटी.

**विशेषलक्षणम्** - यावत्स्वरूपस्थाय्यसाधारणधर्मः । च.

**विशेषाः** - स्थूलभूतानि (महदाद्या विशेषान्ता इत्यत्र) । सर्वा (आ).

**विशेष्यम्** - भेद्यम् । श.

**विशोधनः** - स्वक्षेत्रन्यस्तदेहविशोधकः । सह.

**विश्राननम्** - वितरणम् । सुन्दर.

**विश्रान्तिः** - पर्यवसानम् । सर्वा.

**विश्रामः** - पापफलभोक्तृविश्रामस्थानम् । श्रमु तपसि खेदे च विपूर्वः; णिच् उपधावृद्धिः । सह.

**विश्रुतः** - प्रत्यक्षुति सिद्धः ।

**विश्रुतात्मा**- सर्वत्र सर्वदा सर्वैरपि विश्रुतःविस्मयेनाकर्णितः आत्माशैंहापढानस्वभावः अस्य इति । सह.

**विश्लिष्टत्वम्**-सुकरवियोगस्वभावसंयोगस्पर्शत्वम् । न्यासि.

**विश्लोकः** - विविधः श्लोकः स्तोत्ररूपः । श्वे.

**विश्वम्**-विश्वशरीरकम्। तै. व्यष्टितत्त्वम्। छा. स्वाभाविकानवधिकातिशयमाङ्गल्यैकतानैः स्वरूपरूपगुणविभवैः परिपूर्णः। सह.

**विश्वकर्मा** - विश्वं कर्म कार्यं यस्य स तथोक्तः जगत्कर्ता। श्वे. विश्वं जगत् कर्म कर्तव्यं यस्य सः। सर्वजगत्कर्तेत्यर्थः। रा. ब्रह्मसृष्टेः प्राक् ऊर्ध्वञ्च विद्यमानं विश्वं कर्म जगद्व्यापारः अस्यैवेति। सह. सूर्यस्य रश्मिविशेषः। यो बुधं पुष्णाति। वि.

[**विश्वजिन्यायः** - विश्वजिदधिकरणसिद्धो न्यायः। 'अश्रुतफलस्य कर्मणो विधिसामर्थ्यात् उत्तमफलकत्वमाश्रयणीयमित्येवंपरः। सच्च.]

**विश्वजनीनोपनिषत्** - तिरुवाय्मोळि नामकप्रबन्धः। नि.

**विश्वतश्चक्षुः** - अनेकबाहूदरवक्त्रनेत्रमित्युक्तरीत्या अनन्तनयनाननपाणिपादादियुक्तनित्यदिव्यविग्रहतया विश्वतश्चक्षुरपि। श्वे.

**विश्वतोमुखः** - चतुर्मुखः। विश्वत इति दिक्चतुष्टयमात्रं विवक्षितम्। ता.

**विश्वदक्षिणः** - वाजिमेधे विश्वंभरा दक्षिणाप्रदाता। सह.

**विश्वधाम** - विश्वस्याऽऽधारभूतम्। श्वे.

**विश्वनेता** - विश्वेषां यथेष्टं विनियोक्ता। सर्वा.

**विश्वप्रजनकः** - जगत्कारणभूतः सर्वेश्वरः। भधि.

**विश्वप्रबोधः** - विश्वं प्रबोधयति धर्मादिपुरुषार्थतत्साधनप्रकाशकवेदाख्यशास्त्रोपदेशेन वेदयतीति; विश्वोज्जीवयिता। भा.

**विश्वबाहुः** - (भार्गवो रामः) कण्टकोद्धारेण विश्वस्मै सर्वस्मै बाहू यस्य सः। सह.

**विश्वम्भरः** - विश्वं बिभर्ति वैश्वानराग्निरूपेणेति सः, अग्निः। बृ. विश्वं बिभर्ति वैश्वानराग्न्यादिरूपेणेति विश्वम्भरोऽग्निः। कौ.

**विश्वम्भरकुलायः** - विश्वं बिभर्ति वैश्वानराग्न्यादिरूपेणेति विश्वम्भरोऽग्निः; तस्य कुलायो नीडं दारु! कौ.

**विश्वम्भरी**- भारवहा उष्ट्री। सुबा.

**विश्वभावनः** - विश्वं भावयति अभ्यधिकं करोतीति सः। विश्वोत्पादकः। विश्वं भावयति अभ्युदययुक्तं करोतीति सः। भा.

**विश्वभुक्** - सर्वथा परिपालकः। सह.

**विश्वभुग्विभुः** - (ऐकं नाम) विभुः व्याप्नुवन् विश्वं भुनक्ति परिपालयति। सह.

**विश्वमूर्तिः** - विश्वं कृत्स्नमपि प्रपञ्चजातं मूर्तिः शरीरमस्येति। सह.

**विश्वयोनिः** - विश्वेषां भेजुषां स्वेन मिश्रयितेति। ब्रह्मादिमुखतः विश्वस्य कार्यप्रपञ्चस्य कारणम्। सह.

**विश्वरूपः** - प्रणवः (सकलवाक्प्रकृतित्वेन विश्वरूपः)। तै. विश्वशरीरकः। श्वे. पुं. विश्वशरीरकः; 'प्रकृत्यादिकृत्स्नजगदाश्रयभूतं रूपम्; क्ली।

विश्वव्यापिनोऽप्यस्य विग्रहस्य शक्तिविशेषात्सर्वत्राप्रतिघातः । योगिनां 'भूमावुन्मज्जति, निमज्जती'ति सिद्धिविशेषवत्' । ता. 'एकस्मात् कटिप्रदेशादनन्तपरिमाणात् ऊर्ध्वमुद्गतानन्तबाहूदरवक्त्रम् अधश्चानन्तपादम्' । गी. 'श्रीविश्वरूपविग्रहे, शाखामूलनानात्वेऽपि काण्डैक्याद्वृक्षैक्यवत् बाहूदरादिभेदेऽपि कटिप्रदेशैक्यादैक्यम्' । ता. विश्वाश्रयरूपम् । गी. विश्वञ्च तत् रूपञ्चेति विग्रहः, गीता स्वारस्यात् । तत्र विश्वं विश्वात्मभूतमिति भाष्यम् । विश्वव्यापकमित्यर्थ; अचेतनस्य हि नात्मत्वं सम्भवतीति । ता. स्थावरनरपक्ष्यादिरूपयुक्तः । श्वे. विश्वशरीरकः । वि. सर्वशरीरः । प्र. रूप्यत इति रूपम् । विश्वं रूपं प्रकाश्यं यस्य स विश्वरूपः । आदित्यस्य विश्वप्रकाशकत्वाद् विश्वरूपत्वम् । छा.

**विश्वरूपम्** - विश्वप्रकाशकं पुत्ररत्नादिकम् । छा.

**विश्वरूपैकपाशम्** - विश्वरूपो विराट् पुरुषः; स एव एकः मुख्यः; पाशः स्वाश्रितजगन्नैश्चल्यहेतुतया बन्धकपाशवत्; विराट् पुरुषः ब्रह्मचक्रस्य पाशरूपः तम् । श्वे. (विराट्पुरुषरूपब्रह्मेति पाठा.)

**विश्वरेताः** - विश्वं कार्यमस्येति । स हि स्वज्ञानस्थानपरिचरणैदमर्थ्येन प्रजानां ज्ञानकर्मेन्द्रियादिकं विश्वं करोतीति । यथा- 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' । सह.

**विश्ववित्** - सर्वं प्राप्तः । श्वे.

**विश्ववेदाः** - सर्वज्ञः (विश्वं वेत्तीति) । तै.

**विश्वव्यचाः** - सूर्यरश्मिविशेषः, यः पुष्णाति सितं(शुक्रम्) । वि.

**विश्वशक्तिः** - विश्वमेव शक्तिः । तत्तत्कार्योपयुक्तविशेषणभूतं विश्वमित्यर्थः । गी. विश्वरूपा शक्तिः । तत्तत्कार्योपयुक्त विशेषणभूतं विश्वमित्यर्थः । ता.

**विश्वशम्भुत्वम्** - सकलजगत्क्षेमकारित्वम् । तै.

**विश्वसृक्** - विश्वस्रष्टा । तै.

**विश्वसृट्** - गुणदोषानपेक्षः दाक्षिण्यात् विश्वं सृजति । सह.

**विश्वाक्षत्वम्** - सर्वविषयसाक्षात्कारवत्त्वम् । तै.

**विश्वाची** - विश्वं भूतजातं अञ्जसा अञ्चन्ती व्याप्य नियच्छती । लुप्तनकारादञ्चतेर्ङीप् । अञ्चु 'गतिपूजनयोरिति धातुना विश्वगता विश्वपूज्या च । श्रीसू. विश्वमञ्चतीति' विश्वव्यापिनी । तै.

**विश्वात्मा** - ज्ञानशकनाभ्यां विश्वव्यापनात् विश्वस्य सर्वस्य आत्मा अन्तरात्मेति विश्वात्मा । अततेः मनिणि, विशेः क्वनि च । सह.

**विश्वायुः** - विश्वेषामायुस्साधनम् । तै.

**विश्वावसुः** - कश्चित् राक्षसः । वि.
**विश्वे** - देवविशेषाः । रा.
**विश्वैश्वर्यम्** - अपहतपाप्मत्वादिलक्षणं विश्वातिशायि ऐश्वर्यम् । श्वे.
**विषकृतम्** - विषेण पक्वम् । रा.
**विषधरः** - सर्पः । वर.
**विषमः** - ऋजुकुटिलाशयेषु क्षेमङ्कर-भयङ्करवृत्ततया समो नेति । सह.
**विषमत्वम्** - पक्षपातित्वम् । श्रु.
**विषमोदरम्** - निम्नोन्नतोदरम् । रा.
**विषयः** - अवच्छेदकः । श्रु. ग्राह्यः । भाव. देशः । रा. फलम् । श्रु. भासमानः । नी. शब्दादिविषयः । वर. विषिणोतीति विषयः। विशेषेण सम्बध्नातीत्यर्थः । त. विशिंषन् विषयः अवच्छेदकश्च वे.
**विषयकृतं तारतम्यम्** - तद्विषयय-त्किञ्चिदविषयकत्वतदविषयाविषयक-त्वान्यतररूपम् । वा.
**विषयता** - रूपादिषु संयुक्तनिष्ठता, भवि-ष्यद्द्रव्येषु संयुक्तजन्यता, भूतद्रव्येषु संयुक्त-जनकता, भूतभाविद्रव्यगतरूपादिषु संयुक्तजनक(जन्य?) निष्ठत्वादिः । रत्न.
**विषयत्वम्**-ज्ञानसंयोगः स्वगतः स्वाश्रय-गतो वा । न्यासि. तत्संयुक्तचक्षुरिन्द्रिय-जज्ञानव्यावर्त्यत्वम् । नी. प्रतिभासमानत्वम् । भाव.
**विषयनियमनम्** - विषयदूरीकरणम् । विषयसन्निधिपरित्यागः । ता.
**विषयप्रकर्षः** - विषयासंकोचः । भाव.
**विषयप्रवालाः** - शब्दादिविषयपल्लवाः। गी.
**विषयाः** - तत्तदिन्द्रियार्थाः अन्नपानादयः। ता.
**विषयाणां नियमनम्** - विषयासन्निधाप-नम् । श्रु.
**विषयादित्रिकम्** - विषयप्रयोजनसम्ब-न्धाः । त.
**विषयान्तः** - जनपदसीमाप्रदेशः । रा.
**विषयि** - इन्द्रियम् । पा.
**विषयित्वम्** - स्वभिन्नप्रकाशकत्वम् । यद्वा स्वस्वापृथक्सिद्धधर्मव्यतिरिक्तप्रका-शकत्वम् । रत्न.
**विषादः** - क्लेशः । रा. विप्रलापः परस्प-रप्रतिषेधेनविरुद्धकथनम् । भाव. विषाददा-यी विषयः । गी. वृथा वित्तव्ययादिः । ता.
**विषादी** - अतिमात्रावसादशीलः । गी. धातोरेवावसादार्थत्वादुपसर्गेण तत्प्रकर्षः प्रत्ययेन ताच्छील्यं च विवक्षितम् । ता.
**विषासहिः** - सोढुमशक्यश्शत्रुभिः, मर्ष-यितेति वा । कौ. सोढुमशक्यः, मर्षणशील इति वा । बृ.
[**विषुवपुष्पम्** - तुळसी । पाञ्च.]
**विषूची** - भिन्नगतिः । क. विरुद्धगतिः । भाव.
**विष्टभ्य** - अधिष्ठाय । श्रु.
**विष्टम्भनम्** - स्तम्भनम्, स्वैरान्निवारणम् । स्ववशीकरणरूपमधिष्ठानं वा । ता.
**विष्टरः** - पञ्चविंशतिदर्भनिर्मितस्ता-पसासनविशेषः । रा.

**विष्टिः** - कर्म कर्तुः अफलदम्। वि. भृतिं विना कर्मकरः। रा.

**विष्णुः** - उपेन्द्रः। तस्य त्रिविक्रमत्वात् पादेन्द्रियाधिष्ठातृत्वम्। अत्र विष्णाविति उपेन्द्र विग्रहमात्रं विवक्षितम्, न तु तदधिष्ठातृपर्यन्तं तदर्थः। विष्णौ सञ्चरति नारायण इत्युच्यमानार्थोपपत्तये। सुबा. एवं वर्षन् वेवेष्टिव्याप्नोतीति विष्णु., विष्लृ व्याप्तौ "विषेः किञ्च" इति णुः। "न तदस्ति विना यत्स्यात् मया भूतं चराचरम्"। सह. स्वविभूतिभूतं चिदचिदात्मकं सर्वं विशतीति। सर्वव्यापी, व्याप्तिनियमनशक्तिद्वारा सर्वं वेवेष्टि व्याप्नोतीति। सह. सर्वव्याप्तिलक्षणः। वि. सर्वान् व्याप्नोतीति। वेकौ. [विष्लृ-व्याप्तौ; वश-कान्तौ; विश-प्रवेशने; इषुइच्छायां इति धातुभ्यो निष्पन्नोऽयं शब्दः। व्यापनशीलादित्वमर्थः। र. व्यापनशीलो भगवान्। सच्च.]

[**विष्णुकल्पः** - बोधायनमहर्षिणोक्तो ग्रन्थविशेषः। सच्च.]

[**विष्णुतत्त्वम्** - पाञ्चरात्रसंहिताविशेषः। सच्च.]

[**विष्णुतन्त्रम्** - पाञ्चतरात्रसंहिताविशेषः। सच्च.]

[**विष्णुधर्मः**- महाभरतान्तर्गतः प्रबन्धविशेषः। सच्च.]

**विष्णुपत्नी** - देव्याः पत्नीत्वं स्वेच्छयाऽऽहितम्। यथा "लक्ष्मीस्वयंवरसनाथितयौवन --" इति श्रीरङ्गराजस्तवे। श्रीत.

[**विष्णुमन्दिरम्** - श्रीपाञ्चरात्रसंहिताविशेषः। सच्च.]

**विष्णुमयः** - विष्णुप्रचुरः। वि.

[**विष्णुपदी** - द्वारका। "प्रोक्ता विष्णुपदी गङ्गासङ्क्रान्तिद्वारकासु च" इति विश्वः। या.]

**विष्णुमाया** - भगवत्सङ्कल्पः। भा.

[**विष्णुरहस्यम्** - ब्रह्माण्डपूराणान्तर्गतो भागविशेषः। सच्च.]

**विष्णुरूपशक्तिः** - "ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः"। न्यासिटी.

**विष्णुशक्तिः** - विष्णुरूपा शक्तिः। अत्र शक्तिशक्तिमतोरभेदोपचारः। न्यासि. विष्णोर्मुक्तात्मरूपा शक्तिः। न्यासिटी.

**विष्णोः पदम्** - ध्रुवादुपरि स्थानम्। वि.

**विष्वक्** - विततः। क.

**विष्वक्सेनः** - विषूची समन्तात्गामिनी, इनः ईश्वरः तेन सह वर्तत इति सेना सेश्वरा चमूः तदुपलक्षिताः अनेन रक्षकवन्तो जन्तवः अस्येति। सह. विष्वद्रीची सर्वगता सेना यस्य सः। सर्वस्वामीत्यर्थः। रा.

**विष्वक्सेनैश्वर्यम्** - "विष्वक्सेनस्य संकल्पमात्रावकलृप्तजगज्जन्मस्थितिध्वंसादिकत्व व्याहारः। जगत्सृष्ट्याद्यर्थविज्ञापनवाक्यव्याहारस्य तत्कृतस्य श्रवणेन भगवता जन्मादिक्रीडाविधानात्, जगच्छब्दस्य परिमितविषयः। सेनानिर्वहणाद्यर्थाधिकारस्तु तस्मै दत्त इति"। श्रीत.

**विष्वगाविः** - स्वरूपतो गुणैश्च सर्वव्यापकः। विष्वक् सर्वत आविः प्रकाशमानः। भा.

**विष्वञ्चः** - नानागतयः । बृ.
**विसंवादः**-बाधितविषयत्वरूपं भ्रमत्वम् । रत्न. मिथ्यात्वम् । श.
**विसर्गः** - महदादीनां परमेणाहितसृष्टि-सामर्थ्यानां संघातपरिणामः । भा. योषित्संसर्गजः । गी.
**विसर्पः** - प्रसरणम् । व्यापनमिति यावत् । विकारः । सर्वा (आ).
**विसृत्वरी** - विष्वग्व्यापिनी । वर.
**विसृमरः** - व्यापनशीलः । सर्वा (आ).
**विसृष्टिः** - विविधसृष्टिः । बृ. विसर्गः यथा कूर्मादेराकुञ्चितानामवयवानां प्रसारणम् । सर्वा (आ).
**विस्तारः** - त्रिष्वपि दिग्द्वन्द्वेषु यत्र मध्य-मत्वं तत् परिमाणम् । न्यासि. कलिप्रबल-संहारेण कृतं प्रवर्तयतोऽस्माद्वेदमर्यादा प्रथत इति विस्तारः । 'प्रथने वावशब्दे' इति घञ् । सह.
**विस्रम्भणम्** - विश्वस्तकरणम् । अति.
[**विस्रम्भितः**- महाविश्वासं प्रापितः । र.]
**विस्रंसमानम्** - शिथिलीभवत् । क.
**विस्रब्धः** - विश्वस्तः । रा.
**विहापनम्** - वियोजनम् । बृ.
**विहायसगतिः** - निरूढभक्तिपरकोटिभिः विहायसं परं व्योम गम्यतेऽस्मादिति । सह.
**विहारः** - प्रणयनम् । या. सञ्चारः । तन्द्री-परिहारार्थं विनोदः । ता. परिवर्तनम् । श्रु.
**विहितः** - विभक्तः । बृ. विधिः । श्रु.
**विहितम्** - सृष्टम् । वै.
**विहूर्छनम्** - कुटिलीभवनम् । हुर्छा कौटिल्य इति धातुः । छा.
**विहतिः** - विरोधः । पद.
**विहृतिः** - विहारः । वर.
**विह्वदिष्यामि** - विनङ्क्ष्यामि । तै.
**विह्वलः** - परवशः । वि. विवशः । रा.
**वीणा** - षट्तन्त्री । रा.
**वीतः** - अन्वयी (हेतुः), विशेषेण हितत्वात् । अधि.
**वीतभयः** - तत्समागमतुमुलोपलम्भात् वीतं भयं गजेन्द्रस्येति । सह.
**वीतरागव,था** - वाद इति सामान्यशब्दे-नैव विशेषतोऽपि (इयं) निर्दिश्यते । सा चैवं न्यायतत्त्वे संयोगाधिकरणे लक्षिता "परस्य स्वोपदेशन्यायेन निश्चितार्थो व्यवहारो वादः" इति । शिष्याचार्यव्यवहारवत् प्रमाणत्वाभिमानास्पदसाधननिश्चितार्थ-विषयो व्यवहारो वाद इत्यर्थः । न्याप.
**वीतरागाः** - अपगतविषयाशाः । मु.
**वीतावीतः** - अन्वयव्यतिरेकी (हेतुः), अन्वयित्वात् व्यतिरेकित्वाच्च । अधि.
[**वीतिः** - अश्वः । या.]
**वीयाय** - वीतम् । बृ.
**वीरः** - उत्साही । वि. प्रत्युपकारसमर्थः । रा. विविधमीरयति प्राणिनश्चेष्टयतीति वीरः भगवान् इत्यर्थः । रा. विद्यावीर्यसम्पन्नः । छा. शत्रुक्षेपणशीलः अज गतिक्षेपणयोः, भ्वादिः; 'स्फायितञ्चिवञ्चि' इत्यादिना रक्, 'अजेर्व्यघञपोः' इति वीभावः । सह. श्रेष्ठः ।

'वीरस्तु सुभगे श्रेष्ठे' इति विश्वः । या. साधुसन्तापकारिहिंसकः । अजगतिक्षेपणयोः, भ्वादिः; स्फायितञ्चि इति रक् अजेर्व्यघञपोः इति वीभावः । सह.

**वीरबाहुः** - विक्रान्तबाहुः । सह.

**वीरमत्स्याः** - देशविशेषः । रा.

**वीरमार्गः** - युद्धकौशलम् । रा.

**वीरलोकः** - वीराणां लोकः । ब्रह्मलोक इत्यर्थः । रा.

[**वीरव्रणाः**- वीराणां आयुधवेधप्रभवाः व्रणाः । या.]

**वीरशयनम्** - वीराः शेरतेऽस्मिन्निति वीरशयनम्; रणभूमिः । शरतल्पं वा । रा.

**वीरसहः** - सूर्यकुलजः सुदासपुत्रः क्षत्रियः । रा.

**वीरहा** - वीरान् वञ्चकान् पूतनाशकटार्जुनादीन् सुरारीन् समूलघातं हन्तीति । सह. वीरं गजेन्द्रबाधकं हन्ति स्मेति । सह. स्ववेदनविहन्तॄन् हैतुकवीरान् हतवानिति । सह.

**वीराध्वानम्** - महाप्रस्थानम् । वि.

**वीरासनम्** - वामोरूपरि दक्षिणजङ्घां प्रतिष्ठाप्य स्थितिः । रा.

**वीर्यम्**- अश्रान्तिः । श्रु. अविकारित्वम् । य. उत्साहः । वि. कार्यकरत्वसामर्थ्यम् । श्रु. पराक्रमः । रा. पैरनभिभाव्यत्वम् । भा. "प्रकृतित्वेऽपि विकारविरहः" । श्रीत. प्रभावः । युद्धे स्वयमविकृतता । रा. विकारविरहः । रत्न. विकारहेतुष्वप्यविकृतत्वम् । न्याप. शौर्यम्, स्वगृह इव युद्धे प्रवेशसामर्थ्यम् । भा. सर्ववस्तुधारणेऽप्यश्रमवत्त्वम् । न्यावि. सत्यप्यभिभवहेतावनभिभूतत्वम् । भा. सत्स्वपि विकारहेतुष्वविकृतत्वम् । रा. सर्वोपादानत्वे सर्वधारणे सर्वनियमनेऽपि विकारराहित्यम् । दया. सामर्थ्यम् । अति. स्वयमविकृतेन सता परेषां विद्रावणम् । रा.

**वीर्यवत्तरम्** - प्रबलकर्मान्तराप्रतिबद्धफलम् । छा.

**वीर्यवत्तरत्वम्** - क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्धः । क्रतोरविलम्बित फलत्वमित्यर्थः । श्री. प्रबलकर्मान्तराप्रति बद्धफलत्वम् । अधि. (कर्मणः) प्रबलकर्मान्तराप्रतिबद्धफलजनकत्वम् । भाव. कर्मफलस्यैवाप्रतिबन्धः । श्री.

**वृकाः** - ईहामृगाः । रा.

**वृक्णः** - छिन्नः । बृ.

**वृक्षः** - छायातरुवदावृतानां उपजीव्यः तत्कृतोपमर्दसहश्च सहः (वृक्षत इति) सः (वृणीत इति) । सह. गौण्या वृत्त्या योग वृत्त्या वा सति संभवे वृक्षवच्छेदनार्हं शरीरम् । अत्र मन्त्रे, 'वृक्षत्वाद्यध्यवसानलक्षणा रूपकातिशयोक्तिः । योगवशात् शरीरादेरेव प्रतिपत्तिरित्यन्ये । श्वे.

**वृक्षकालाकृतिभिः परः** - वृक्षकालाऽऽकृतिभ्य उत्कृष्टः । वृक्षशब्देन छेदनार्हप्रकृतिप्राकृतमुच्यते । आसमन्तात् कृतिर्यत्नो यस्येति कर्ता जीवः आकृतिः । श्वे.

**वृक्षान्तरविनिःसृतः** - 'ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्' इति वृक्षत्वेनोक्ते संसारमण्डले प्रवृत्तः । रा.

**वृणे** - वरणं ददामि, वरणं नाम मत्प्राप्त्यनुगुणोपासनाविपाकं तद्विरोधिनिरसनं, अत्यर्थमत्प्रियत्वादिकम् । गी.

**वृत्तम्** - आचारः । चरित्रम् । धर्मशास्त्र विहितस्वकुलाचारः । रा. बोधनम् । श्रु. व्यापारः । रा. आश्रमः । बृ. [सदाचारः । र.]

**वृत्तत्वम्** - एकदिक्स्थान्त्यावयवानां विरुद्धदिक्स्थान्त्यावयवदूरत्वसामीप्यसाम्यम् । न्यासि. वर्तुलत्वम्; पूर्वदिगन्त्यावयवानां तद्विरुद्धपश्चिमदिगन्त्यावयवानाञ्च यादृशं दूरत्वं सामीप्यम्, तादृशमेव दक्षिणोत्तरयोः आग्नेयवायव्ययोः नैर्ऋतैशानयोश्च दूरत्वं सामीप्यम् । न्यासिटी.

**वृत्तसादिनी** - कुलोचिताचारनाशिनी । रा.

**वृत्तिः** - (शब्दानामर्थे) अर्थबोधनम् । श्रु. जीवनोपायः । ता. प्रसरणम् । अधि. विकारविशेषः । सर्वा (आ). शक्तिलक्षणान्यतरस्सम्बन्धः । वा. प्रीतिः । रा. व्यापारः । भाव. सूत्रार्थमात्रप्रतिपादको ग्रन्थः । रा.

**वृत्तिस्वास्थ्यम्** - अशनाच्छादनादि सौकर्यम् । सर्वा.

[**वृत्तिहीनम्** - (मनः) बहिर्वृत्तिरहितम् । पाञ्च.]

**वृद्धः** - कूटस्थः । रा.

[**वृद्धजाबालिः** - स्मृतिप्रणेता महर्षिविशेषः । सच्च.]

**वृद्धम्** - वार्धकम् (भावे निष्ठा) । वि.

[**वृद्धवसिष्ठः** - स्मृतिप्रणेता महर्षिविशेषः । सच्च.]

**वृद्धाः** - ज्ञानवयश्शीलसम्पन्नाः । रा.

**वृद्धात्मा** - (इमं) महान्तं महिमानं चुलकयन्निव प्रवृद्ध आत्मा स्वरूपं अस्येति । सह.

**वृद्धिः** - आभ्युदयिकश्राद्धम् । वि.

[**वृन्ताकम्** - श्वेतवार्ताकम् । र.]

**वृषः** - अमृतोपमया स्वकान्त्या वाचा च, सागरोदराटनश्रान्तं (मार्कण्डेयं) आश्वासयन् वर्षति सिञ्चतीति । सह.

**वृषकर्मा** - श्रेयस्करं धर्मरूपं कर्म यस्य सः । सह.

**वृषदंशकः** - मार्जारः । वृषाणां मूषिकाणां दंशकः खादकः । 'वृषो गव्याखुधर्मयोः' इति हैमः । रा.

**वृषपर्वा** - वृषाः वर्णाश्रमधर्माः पर्वाणि तदारोहणसोपानानि अस्येति वृषपर्वा । सह.

**वृषप्रियः** - प्रवर्तकनिवर्तकधर्मौ प्रियावस्येति । सह.

**वृषभः** - अभिगच्छतो भवदग्धान् वर्षतीति । "ऋषिवृषिभ्यांकित्" इति वृषेरभच् प्रत्ययः, किद्वद्भावश्च । सह. अग्निः । तै. श्रेष्ठः । तै. वृषभगिरिः तिरुमालिरुंशोलै इति प्रसिद्धः । सुन्दर.

**वृषभाक्षः** - धर्माक्षः, फलवर्षी धर्मः वृषभः, सोक्षः संसारचक्राधारः यस्मात्। सह.

**वृषा** - कामानां वर्षुकः। तै.

**वृषाकपिः** - (वृषःधर्मः कपिः श्रेष्ठ वराहः) धर्मरूपश्चासौ श्रेष्ठवराहश्च। "कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते। तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः"। सह. वृषः कामाभिवर्षुकः, आकम्पयति विधुनोति क्लेशानिति। भा.

**वृषाकृतिः** - धर्मरूपा आकृतिः यस्य सः (आकृतिश्च तापत्रयनिर्वापणसुधासेकशीतलचेष्टितचारुरूपा)। सह.

**वृषाही** - निखिलमङ्गलाङ्करार्पणदिनत्वात् वृषरूपं धर्मरूपं अहः अस्य प्रथमाभिगमनदिवसं वृषाहः; "राजाहस्सखिभ्यष्टच्" तदस्यास्तीति वृषाही। यथा "अद्य मे सफलं जन्म सुप्रभाता च मेनिशा। यदुन्निद्राब्जपद्माक्षं विष्णोर्द्रक्ष्याम्यहं मुखम्"। वि.। सह.

**वृषोदरः** - आराधकानां यथालब्धहविरादिभिस्सुपूरतया सर्वार्तास्पदतया वा वृषः लक्षणया धार्मिकं उदरमस्येति वृषोदरः। सह.

**वृष्टि न** - वृष्टिमिव। बृ.

**वेगः** - कर्मविशेषः, न त्वन्यो गुणः। न्यासि. कर्मातिशयविशेषः। सर्वा. क्रियागतोऽतिशयः। संयोगकालसामीप्यम्। न्यासि. पराक्रमः। प्रयत्नः। रा. वेगाख्यस्तु संस्कारः तदुत्पादकत्वाभिमतकर्मविशेषातिरिक्तो न दृश्यते। न च युज्यते। न्याप.

**वेगवान्** - मनुष्यधर्मलीले बाल्येऽपि दुर्वारपरमैश्वर्यप्रसरत्वात् वेगवान्, अतिशायने मतुप्। सह.

**वेगितः** - आनीतवेगः। रा.

**वेगी** - साहसिकः। वि.

**वेणुयवाः** - वंशबीजानि। वि.

**वेत्ति** - जानाति। सर्वा.

**वेद** - उपास्ते। उपासनशब्दमध्यपठितत्वात् विदिः उपासनपरः। बृ. उपास्ते। उपासीतेत्यसकृत् वक्ष्यमाणत्वात् सामान्यशब्दस्य विशेषपर्यवसायित्वाच्च-उपासनात्मकं वेदनं विवक्षितम्। सुबा. जानामि। गी.

**वेदः** - निरपेक्षवेदकः। त. वेदयतीति। रा. 'वेदयज्ञाध्ययनै'रित्यत्र वेदशब्दः अर्थवत्तया श्रुतवेदपरः। तेन श्रोतव्य इत्युक्त श्रवणं लभ्यते। ता. सर्वे सृष्टिलम्भितकरणाः शास्त्राणि विन्दन्ति प्राप्नुवन्ति अस्मिन्निति। सह.

**वेदनम्** - असकृदावृत्तज्ञानम्। नि. उपासनम्। त. तै. ज्ञानम्। श्रु. ज्ञानयोगः। वर.

**वेदना** - सुखदुःखादिबुद्धिः (बौद्धमते)। दुःखम्। श्रु. स्पर्शनिमित्ते सुखःदुःखे (सौगतमते)। बृ.

**वेदनानरकम्** - अनृतजम्। अनृतं द्रा.वि.

**वेदनास्कन्धः** - प्रियाप्रियानुभयानुभव

जनितसुखदुःखोपेक्षात्मकश्चित्तस्यावस्थाविशेषः (बौद्धमते)। श्रु.

**वेदनित्यत्वम्** - प्रत्युच्चारणं पूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम्। श्रु.

**वेदनीयम्** - (कर्म) शुक्लपुद्गलविपाकहेतुः (जैनमते)। बृ.

**वेदपरः** - वेदैकशरण । प्र.

**वेदबाह्यत्वम्** - वैदिककर्मानधिकारित्वम्। आ.

**वेदवती** - ब्रह्मर्षेः कुशध्वजस्यवाङ्मयी कन्या। रा.

**वेदवादः** - वैदिकन्यायः। वैदिकवादः। वि.

**वेदवादरताः** - वेदेषु ये स्वर्गादिफल वादाः तेषु सक्ताः। गी.

**वेदवित्** - वेदार्थं अविशयविपर्यासं वेत्तीति। वेदैर्वेद्यत इति वेदः तदर्थो धर्मः। तमनुष्ठापनेन विन्दतीति (प्रद्युम्नः)। सह.

**वेदविहितत्वम्** - वेदतात्पर्यविषयीभूतकृतिसाध्यत्वादिप्रकारकबोधविषयत्वम्। वा.

**वेदव्रतम्** - शिरोव्रतम्। श्रु.

**वेदशिरः** - वेदान्तः। श्रु.

**वेदस्य नित्यत्वम्** - पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्। श्री.

**वेदस्य नित्यार्थसंयोगः** - नित्यार्थप्रतिपादकत्वम्। श्रु.

**वेदस्यापौरुषेयत्वम्** - पूर्वपूर्वोच्चारणच्चमजनितसंस्कारेण तमेव क्रमविशेष स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्। श्री.

**वेदाः** - वेदयन्तीति व्युत्पत्त्या ज्ञान साधनीभूता । वा.

**वेदाङ्गः** - अनन्तशाखा वेदा अस्य अङ्गं शरीरं (अन्तरङ्गव्यञ्जकत्वात्) इति। सह.

**वेदानां वेदम्** - प्रकृतिप्रत्ययविभागावेदकं व्याकरणमित्यर्थः। छा.

**वेदानुवचनम्** - वेदाध्ययनम्। बृ.

**वेदान्तकृत्** - वेदोदितफलप्रदाता। गी.

**वेदान्ताचार्यः** - वेदान्तरहस्यार्थोपदेष्टा। या.

**वेदारण्यकम्** - वेदाश्चारण्याकानि च। श्री.

**वेदिषत्** - वेद्यां वर्तमानः। तै. वेद्यन्तर्वर्तमानः। क.

**वेद्यः** - सर्वैः वेदितुं शक्यः। सह.

**वेद्याः** - शुद्धात्मस्वरूपप्रभृतयः। गीसं.

**वेधः** - तदेकशेषत्वेन तद्ध्यानम्। मु.

**वेधकः** - दारुरत्नादिरन्ध्रकारी। रा.

**वेधाः** - भक्तकल्याणविधाता। सह.

**वेनात्** - व्याप्तिगतः। तै.

**वेला** - अम्बुवृद्धिः। या. शास्त्रीयमर्यादा। नि. [जलवृद्धिः। "वेलाऽब्धिजलवर्धने" इति यादवः। या.]

**वेशान्ताः** - गृहाः यद्वा पल्वलानि। श्रु. पल्वलानि। भाव. (वेशन्ताः) पल्वलानि (दीर्घरछान्दसः)। बृ.

**वेषः** - आकारः। रा. विग्रहः। अति.

तत्तत्स्त्रीपुरुषाद्यनुगुणकृत्रिमशरीरावयवादिसंविधानम्। व.

**वै** - अवधारणार्थकोऽयं शब्दः। एवार्थकोऽयं शब्दः। बृ. [प्रसिद्धताद्योतकमव्ययम्। सच्च.]

**वैकारिकः** - प्रकृतिविकारात्मकाहंकारारब्धः। भा. महत्तत्त्वजन्यः सात्त्विकाहङ्कारः तत्त्वविशेषः। सुबा. सात्त्विक इन्द्रियादिः। श्री. सात्त्विकाहङ्कारः। न्यासिटी.

**वैकारिकः सर्गः** - (इन्द्रियाणाम्)। ऐन्द्रियकः सर्गः। वि.

**वैकुण्ठः** - वायोर्देवलोकत्वप्रसिद्धेः लोकत्वेन वैकुण्ठसादृश्याद्वैकुण्ठत्वम्। कौ. सर्वसंश्लेषयिता। कुठि चेति धात्वर्थः प्रतिघातः स चात्र संश्लेषविघातरूपः। विगतः सः येषां ते विकुण्ठाः, तेषामयमिति वैकुण्ठः। सह.

**वैकृताहङ्कारः** - सात्त्विकाहङ्कारः। सर्वा (आ).

**वैक्लब्यम्** - अधैर्यम्। कातर्यम्। रा. अधाष्ट्र्यम्। भा. दैन्यम्। निष्पौरुषत्वम्। बुद्धिहीनता। रा.

**वैखानः** - दुःखविखननं विखानः; तत्र साधुः वैखानः। सह.

**वैखानसः** - वानप्रस्थः। श्रु. विखननामब्रह्मनखोत्पन्नेन ऋषिणा प्रोक्तो धर्मः। रा.

**वैखानसाः** - अकृष्टपच्याशिनः। भा. ब्रह्मनखजा ऋषयः। रा.

**वैचिन्त्र्यम्** - सामर्थ्यम्। सर्वा (आ).

**वैजयन्तः** - इन्द्रप्रासादः। रा.

**वैजयन्तम्** - अयोध्यापश्चिमद्वारम्। रा.

**वैजयन्ती** - "पञ्चरूपा तु या माला वैजयन्ती गदाभृतः। सा भूतहेतुतन्मात्रा भूतमाला च वै द्विजा"॥ पा. वनमाला उपमर्देऽपि अम्लानस्वभाववती। गो. वनमाला। या. [वनमाला। या.]

**वैतण्डिकः** - वितण्डया कथया प्रवर्तमानः। त.

**वैतरणी** - प्रेतलोके प्रवहन्ती नदी शोणितोदका। रा.

**वैतानकल्पः** - ब्रह्मत्वादि(?)यज्ञविधिः। वि.

**वैतालिकः** - बोधकरः। पा.

**वैदिकः** - वेदाध्यायी। वे. वेदप्रमाणकः। स्तो. अधि.

**वैदिको विधिः** - वेदसम्बन्धिविधिभागः वैदिकानुष्ठानं वा। स्तो.

**वैदिशम्** - शत्रुघ्नकुमारस्य शत्रुघातिनः प्रधाननगरम्। रा.

[**वैदेशिकः** - भिन्नदेशभवः। या.]

**वैदेहः** - जनकः। निमेर्विगतदेहात्सम्भूतः। रा.

**वैद्यः** - वेदान्तविद्यावेदी। रा. वेदितृभवभञ्जनीं विद्यामधीते वेद वेति। सह.

**वैद्युतः** - अमानवनामा आतिवाहिकः। न्यासि. अमानवः आतिवाहिकः। श्री. विद्युदभिमानि देवता। बृ.

**वैधर्म्यम्** - तद्धर्मविसदृशधर्मः। न्यासिटी.

**वैधर्म्यसमः** - जात्युत्तरविशेषः । न्याप.

**वैधव्यम्** - भर्तृविहीनत्वम् । रा.

**वैनाशिकः** - बौद्धः विनाशं व्यवहरतीति ठक् । सर्वा (आ).

**वैनाशिकाः** - द्रव्यविनाशवादिनो बौद्धाः। अधि.

**वैभाषिकः** - माध्यमिकयोगाचारसौत्रान्तिकान् प्रति विभिन्नतत्त्वमार्गोपदेशाद्विरुद्धेयं भाषेति यो बुद्धमुक्तवान्, स वैभाषिकः। न्यासिटी.

**वैमानिकाः** - विमानेन चरन्तः । 'तेन चरती'ति ठकाप्रत्ययः। या. हर्षाद्यभाव इत्यपरे । नि.

**वैमुख्यम्** - भोगाभावः । अभिलाषविरह इति केचित्

**वैयाघ्रः** - व्याघ्रचर्मपरिवृतः । रा.

**वैयाघ्रपद्य** - व्याघ्रपद्गोत्रापत्येत्यर्थः । व्याघ्रपद्यस्यापत्यं वैयाघ्रपद्यः । भाल्लवेरेव वैयाघ्रपद्य इति नामान्तरम् । छा.

**वैयात्यम्** - धाष्ट्र्यम् । पा.

**वैरम्** - अकारणविरोधः । भा. विरोधः । रा.

**वैरयातनम्** - वैरशुद्धिः । रा.

**वेरम्भः** - प्राणापानादिवत् आद्यात्मिको वायुविशेषः । सुबा.

**वैराग्यम्** - अल्पास्थिरत्वादिदोषदूषितेषु स्वर्गस्वाराज्यादिषु स्वात्मानुभवमात्रे च निस्पृहत्वम् । स्तो. ''दृष्टानुश्रविकवितृष्णस्य वशीकारसंज्ञा वैराग्यम्'' (पातञ्जल यागसूत्रम्) । ता. (विरागः) ''दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्'' इति वशीकाराख्यम् । सर्वा (आ). विषयेष्वनासक्तिः । भा. विरक्तिः परिपूर्णत्वादनादरतेत्यर्थः । लोकान्तरजन्मान्तरभोग्य नैरपेक्ष्यम् । इदं ब्रह्मनिष्ठेष्वनुयायि वैराग्यम् । श्रु.

**वैराजः** - विराट् अनिरुद्धः तदंशसम्भूतः पुरुषः वैराजः । भा.

**वैराजः पुरुषः** - अनिरुद्धः । भा.

**वैराजम्** - वैराजाख्यं साम । छा.

**वैराज्यम्** - अन्तरिक्षलोकफलप्राप्तिः । छा. विविधं राजते विराट्; तस्य भावः वैराज्यम् । अणिमादिसिद्धिभाक्तत्वमित्यर्थः । भा.

[**वैरी**- शत्रुः भहवद्वेषी वा । र.]

**वैरूपम्** - वैरूपाख्यं साम । छा.

**वैरूप्यम्** - सामविशेषः । वि.

**वैरोचनी** - कान्तिमती । तै.

**वैवस्वतः** - विवस्वतः सूर्यस्यापत्यं यमः। रा.

**वैवस्वतक्षयः** - यमगृहम् । रा.

**वैवाहिकं पितृकार्यम्** - नान्दीश्राद्धम् । रा.

**वैशद्यम्** - अतिरिक्ताकारप्रकाशः । च. अधिकधर्मभानम् । रत्न. [श्रुतेष्वप्यर्थेषु सम्भावितसंशयविपर्ययादिनिवृत्यर्थो मननादिसाध्यो बुद्धिविकासविशेषः । र.]

**वैशसम्** - दुःखम् । अधि.

**वैशिष्ट्यम्** - अभावसम्बन्धोऽतिरिक्तः संयोगसमवायविलक्षणः। न्यासिटी. रत्न. व्यावृत्तिः । नि. विशेषणम् । अधि. विशेषणविशेष्यभावेन प्रतीतिः। रत्न.

**वैशेषिकाः** - विशेषाख्यातिरिक्तापदार्थवादिनो नैयायिकाः। अधि.

**वैशेष्यम्** - विशेषः। श्रु. विशेषभावः। श्री. विशेषशब्दो विकारशब्दवत् धर्मिपरो धर्मपरश्च। अत्र तु धर्मिपरः विशेषभावो वैशेष्यं आधिक्यरूपम्। श्रु.

**वैश्यम्** - गोरक्ष्यम्। द्र.

**वैश्यत्वम्** - अल्पोद्रिक्तरजस्तमोगुणवत्त्वम्। रत्न.

**वैश्वदेवम्** - विश्वेदेवदैवत्यम्। छा.

**वैश्वरूप्यम्** - विश्वरूपम्। विचित्रसन्निवेशं तनुभुवनादि कृत्स्नं जगत्। श्री. [गीतासु प्रपञ्चितं भगवतस्तत्तदवयवविश्रान्त निखिलचरप्राणिवर्गजगद्व्यापि विश्वरूपत्वम्। या.]

**वैश्वानरः** - जाठराग्निः। महाभूततृतीयः। अग्निरूपदेवता। परमात्मा। श्री. ज्योतिः। रा. विश्वान्नरान्नयतीति। मा (रं). वैश्वश्चासौ नरश्च (विश्यते गम्यते सर्वैः ज्ञायत इति विश्वः; भोक्तृतया तत्सम्बन्धी वैश्वः) न रीयते क्षीनयते इति नरः। मा (कू). जठरानलः। गी. भुक्तान्नादेः परिणामहेतुः तेजोविशेषः। वा. विश्वेषां नराणां नेता। अग्नि. प्र. परमात्मा। वेकौ. विश्वान् नरान् नयति, विश्व एनं नरा नयन्तीति वा विश्वानरः। विश्वानर एव वैश्वानरः, वय एव वायस इतिवत्। छा.

**वैश्वानरविद्या** - परभक्तिविशेषः। न्यासि.

**वैश्वानराग्निः** - भुज्यमानं येनाग्निना पच्यते सः। बृ.

**वैश्वानरे समासत** - तद्विषये एकीभूय विचारं कृतवन्तः। अग्नि.

**वैषम्यम्** - पक्षपातः। श्री.

**वैष्णवः** - यज्ञविशेषः। (गोमेधो वैष्णवस्तथा)। रा.

**वैष्णवसंश्रयः** - भागवतशुश्रूषणादिः। रत्न.

**वैष्णवाध्वा** - अर्चिरादिगतिः। रत्न.

**वैहायसम्** - विमानम्। रा.

**व्यकुरुत** - व्यभजत्। बृ.

**व्यक्तम्** - महदादि। वि. सि. महदादि विशेषान्ततदारब्धदेवतिर्यङ्मनुष्यादिरूपं च कार्यजातम्। गीसं.

**व्यक्तयः** - व्यज्यन्त इति व्यक्तयः देहेन्द्रियभोग्यभोगस्थानरूपाः। गी.

**व्यक्तरूपः** - अभिगच्छतो मार्कण्डेयादेः सुग्रहदिव्यविग्रहतया व्यक्तं रूपं अस्येति। सह.

**व्यक्ताव्यक्तम्** - कार्यकारणात्मकम्। भा.

**व्यक्तिः** - अभिव्यक्तिः, व्यञ्जनप्रकारः। विग्रहेऽपि प्रयोगः, 'किमात्मिकैवेषा भगवतो व्यक्तिः' इति। ता. दृश्यता। व्यक्तिं भजन् दृश्यतां प्राप्तः। या. शरीरम्। न्यासिटी. विशेषः। रा. विशेषज्ञानम्। रा.

**व्यक्तिदर्शनम्** - विशदज्ञानम्। रा.
**व्यक्ते** - देहे। भा.
**व्यग्रः** - अर्जुनवैरिनिग्रहे अर्जुनयुद्धकर्म असहमानः स्वयं बहुव्यापारासक्तः। सह.
**व्यङ्गिनी** - व्यङ्गाख्यदोषयुक्ता। वि.
**व्यञ्जनम्** - शाकादि। वि.
**व्यञ्जनानि** - व्यज्यन्ते एषु वर्णाः इति व्यञ्जनानि, त्रिस्थानानि उरः कण्ठशिरांसि। रा.
**व्यतिकरः** - विप्रकीर्णता। सर्वा (आ).
**व्यतिक्रमः** - अन्यथाभावः। अमर्यादा। रा. विरोधः। श्रु.
**व्यतिक्रान्तपुरस्कृतः** - पुरस्कृतव्यतिक्रमः। अकृत्यकारीत्यर्थः। रा.
**व्यतिभिदुरम्** - परस्परलक्षणासंकरेण भिन्नस्वभावम्। सर्वा. [विविधमत्यन्तभिन्नम्। र.]
**व्यतिरेकः** - धर्मधर्म्यादेः स्वरूपम्। न्यासि. साध्याभावे साधनाभावः। सर्वा.
**व्यतिरेकदृष्टान्तः** - विपक्ष एव हेतुना शून्यो व्यतिरेकदृष्टान्तः। हेतुमानपि हि विपक्षोऽस्त्येव। येन हेतोरनैकान्त्याद्युच्यते। न्याप.
**व्यतिरेकनिर्देशः** - भेदनिर्देशः। वैयधिकरण्यनिर्देश इत्यर्थः। श्रु.
**व्यतिरेकव्याप्तिः** - साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिः। य. साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता (व्याप्तिः) व्यतिरेकव्याप्तिः। यथा योऽनग्निः स निर्धूम इति। न्याप.
**व्यतिरेकसंज्ञा** - स्थितप्रज्ञस्य चतसृष्ववस्थासु द्वितीयावस्थेयम्। एतद्दशापन्नस्य स्वरूपं, "यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्यशुभाशुभम्। नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता" इति गीतायामुच्यते। "अपक्वान् कषायान् पक्वेभ्यः पृथगनुसन्धाय तेषामपि पाकापादनदशा हि व्यतिरेकसंज्ञा"। ता. बलात्संहृतान्यपि बाह्येन्द्रियाणि सावशेषरागद्वेषादिदोषकलुषितं मनः पुनः पुनरवसरे प्रेरयेत्। स्वयं चात्मनि स्थातुं न शक्नुयात्। अतः पक्वावशिष्टराग्द्वेषादीनौदासीन्यानभिनन्दनक्रमेण पचेत्। इयं व्यतिरेकसंज्ञा। ता. [कृतप्रायश्चित्तेभ्यः पापेभ्यः अकृतप्रायश्चित्तानां पृथक्करणम्। (सांख्यमते)। र.]
**व्यतिवर्तनम्** - तरणम्। रा.
**व्यतिवेलखेलम्** - अपरिच्छेद्यलीलम्। अति.
**व्यतिषङ्गः** - मिथः संसर्गः। श्रु.
**व्यतिसन्दहेत्** - व्यत्यस्य सम्यक् दहेत्। छा.
**व्यधिकरणवाक्यम्** - विभिन्नविभक्तिकपदघटितवाक्यम्। श.
**व्यधिकरणासिद्धः** - हेत्वाभासः। यथा-पर्वतो वह्निमान् महानसस्य धूमवत्त्वादिति। न्याप.
**व्यधिकरणासिद्धिः** - स्वरूपासिद्धिः। भाव.

**व्यपदेश्यः** - शिष्टतया व्यपदेश्यः । रत्न.

**व्यपाश्रयः**-आलम्बनम्। रा.स्वीकरणम्। ता.

**व्यभवत्** - विभूतिमानभूत्। भाव. वैभवं प्राप्तम्। बृ.

**व्यभिचारः** - अलक्ष्यगामित्वम्। अधि. फलान्तरसङ्गः । ता.

**व्यम्लास्येताम्** - म्लानौ श्लथौ अभविष्यताम्। छा.

**व्ययः** - व्येतीति। वि.

**व्ययम्** - विशेषं अयति गच्छतीति । जङ्गमम्। वि.

**व्यवच्छेदः** - भेदग्रहणम्। श्रु.

**व्यवच्छेद्यम्** - व्यावर्त्यम्। अधि.

**व्यवदति** - विविधं निन्दितञ्च वदति । अत्र क्षेपार्थो नञो नलोपः । 'तिङि क्षेपे' इति निन्दायां नलोप. । ..... विशब्दो विविधार्थः। नञश्च निन्दितत्वमर्थः। छा.

**व्यवसायः** - अतिशयेन सीयते बध्यते अस्मिन् ज्योतिश्चक्रमिति। सह. अप्रामाण्यशंकाशून्यं ज्ञानम्। च. उत्साहः। उत्साहशक्तिः । कर्तव्यविषयकनिश्चयः । रा. निश्चयः। गी. वपुषः पुत्रः। वि.

**व्यवसायबुद्धिः** - स्वर्गादीनां क्षयिष्णुत्वसातिशयत्वनिश्चयात्मकज्ञानवान्। भा.

**व्यवसायात्मिका बुद्धिः** - मुमुक्षुणाऽनुष्ठेये कर्मणि बुद्धिः व्यवसायात्मिका बुद्धिः। व्यवसायो निश्चयः । साहि बुद्धिः आत्मयाथात्म्यनिश्चयपूर्विका। गी.

[**व्यवस्था** - परस्परपरिहारेण वर्तमानत्वनियमः। र.]

**व्यवस्थानः** - (तन्मूलः) कालः कलामुहूर्ताद्यात्मा तत्रैव व्यवतिष्ठत इति। सह.

**व्यवस्थाम्** - विशिष्टामवस्थितिम्। श्वे.

**व्यवहारः** - अभिज्ञा, अभिलपनञ्च । न्यासिटी. ज्ञानजनकशब्दप्रयोगः । नी. शवृत्त्यादिः । सर्वा (आ). प्रवृत्तिः । न्यासिटी.

**व्यवहारव्यवस्थितिः** - हानोपादानादिनियमः। श्रु.

**व्यवहारस्थितः** - व्यवहारदर्शनाय धर्मासनस्थः। वि.

**व्यवहाराः** - प्रवृत्तयः। श्रु.

**व्यवहारानुगुण्यम्** - इह व्यवजिहीर्षातिरिक्तो व्यवहारहेतुविशेषः। उत्पन्ने हि ज्ञाने विषयस्य षियिणश्च ज्ञानानुत्पत्तिरूपमपि व्यवहारानर्हत्वं निवर्तते। अनेनैव ग्रन्थेन - "चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्" - परोक्तं प्राकट्यमङ्गीकृतमिति केचित्। प्रमेयान्तरविरोधाभावात्। ज्ञानस्य तदनुमेयत्वानङ्गीकारस्तु विशेषः । त. व्यवहारप्रयोजकविषयता। व्यवहारानर्हता निवृत्तिः । व्यवहारानर्हता च व्यवहारविशेषकारणसामान्याभावः, विशेषकारणानि च व्यवहर्तव्यज्ञानं व्यवजिहीर्षा व्यवहारानुकूलप्रयत्नश्च । रत्न. स्वसत्तया स्वस्मै व्यवहारहेतुत्वम्। नी.

**व्यवहारिणः** - कमप्यर्थमुद्दिश्यान्योन्यं विवदमानाः। रा.

**व्यश्नुते** - विशेषेण प्राप्नोति। मा (कू).
**व्यष्टिः** - अण्डादिसृष्टिः। न्यासिटी. (इन्द्रियाणां) तत्त्वोत्पत्तिकाल एव सर्वेषां सङ्घीभूयावस्थितिः। सर्वा (आ). जीवानां करणकलेबरसंयोगकरणम्। अधि. पञ्चीक-रणानन्तरभाविसृष्टिः। रत्न. पञ्चीकृतभूतानि; भौतिकाः पदार्थाः ?। बृ. योगः। कौ.
**व्यष्टिसृष्टिः** - अण्डसृष्टिपूर्वकालीनमहदादितत्त्वसृष्टिः। त. ब्रह्माण्डान्तश्चतुर्दशभुवनसंस्थानतदधिकरणकदेवमनुष्यस्थावरादिविविधविचित्रसंज्ञा मूर्तिसृष्टिः ब्रह्माण्डादिव्यष्टि विश्वम्। न्यासि. समष्टिसृष्टिः द्र.। य.
**व्यसनम्** - अभिमतविषयालाभनिमित्तदुःखम्। भा. इष्टजनवियोगः। कामक्रोधसमुत्थो मनोभङ्गः। दण्डनम्। दुःखम्। भ्रशः। 'व्यसनं विपदि भ्रंशः' इत्यमरः। रा. विस्तरः। अधि.
**व्याकरणम्** - सुशब्दस्वरादिसमर्थनपरं शास्त्रम्। य.
**व्याकरोत्** - विविधमकरोत्। श्रु.
**व्याक्रियत** - नामरूपाभ्यां स्वयमेव व्याक्रियतेत्यर्थः। अत्र कर्मकर्तरिलकारः। तदात्मानं स्वयमकुरुतेत्यनेनैकार्थ्यात्। बृ.
**व्याक्षिप्तः** - व्याकुलचित्तः। रा.
**व्याक्षेपः** - व्यासङ्गः। रा.
**व्याख्यानम्**- "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्"॥ श्रु. प्रतिवचनम्। कौ.श्रु. भाष्यरूपम्। बृ. विशिष्य आख्यायतेऽनेन। मा (कू).
**व्याघातः** - (विविधा अभिव्याप्ता पीडा) स्वारसिकधीविरोधः। (बहुमतिव्याघातदूरस्थिताम्)। त.
**व्याघ्रः** - कश्चित् राक्षसः। वि.
**व्यात्तम्** - विवृतम्। बृ.
**व्याददात्** - विशिष्य परिजग्राह। बृ.
**व्यादितास्यम्** - व्याप्ता(?)स्यम्। रा.
**व्यादिशः** - चतुर्मुखमुखानामभिमतं तत्तत्पदमतिसृजतीति। इगुपधत्वात् कः। सह.
**व्याधिः** - मानसं दुःखम्। छा. शरीरपीडा। वर.
**व्याधीयन्ते** - दुःखिनो भवन्ति। छा.
**व्यानः** - प्राणापानयोः अन्तरालवृत्ति विशेषरूपः सन्धिः। छा. (प्राणभेदः) पायुस्थानः विषवत्सञ्चारी सर्वशरीव्यापकः। सर्वा (आ).
**व्यापकम्** - अन्यूनदेशकालवृत्तिः। व्याप्तिःद्र. न्याप. अन्यूनदेशकालवृत्ति। य. [**व्यापकनामानि**- विष्णुनारायणवासुदेव शब्दाः। ई.]
**व्यापारः** - विद्यासाधनीभूतकर्म। नी.
**व्यापी** - अतिसूक्ष्मतया सर्वाचेतनान्तः प्रवेशस्वभावः। श्रु. त. देवादिव्यापनशीलः। "आप्लृ व्याप्तौ" विपूर्वः "सुप्यजातौ णिनिस्ताच्छील्ये" वेरिकारस्य यण्यकारः। इन्नन्तलक्षणे

दीर्घः । सह. (ज्ञानेन) सर्वव्याप्यः । व्योमादिवद्वितत। वि.

**व्याप्तः** - मुग्धवृद्धभृत्यशत्रुमित्रादि व्यापनशीलः । सह.

**व्याप्तम्** - अधिकरणम् । न्यासिटी. व्यापकम् । कर्तरि क्तः । प्राप्त इतिवत् । श्रु.

**व्याप्तिः**-अत्रेदं तत्त्वम् । यादृग्रूपस्य यद्देश-कालवर्तिनो यस्य यादृग्रूपेण यद्देशकाल-वर्तिना येनाविनाभावः तदिदमविनाभूतं व्याप्यम् । तत्प्रतिसम्बान्धि व्यापकम् इति । तेन 'निरुपाधिकतया नियतः सम्बन्धो व्याप्तिः' इत्युक्तं भवति । न्याप. विभुत्वम् । अधि. निरुपाधिकतया नियतसम्बन्धः । य. अनुप्रवेशः । सर्वतः सम्बन्धो वा । गद्य. विभुत्वम् । सर्वा (आ).

**व्याप्तिमात्रम्** - व्याप्तमेव; असङ्कुचितमेव। मात्रशब्दः अवधारणे । वि.

**व्याप्यम्** - अनधिकदेशकालनियमम् । न्याप. व्याप्तिः द्र. निरुपाधिकसम्बन्धम् । न्याप. अनधिकदेशकालनियमम् । य.

**व्याप्यत्वासिद्धः** - हेत्वाभासविशेषः । न्याप.

**व्याभाषणम्** - अन्योन्यसम्भाषणम् । रा.

**व्यामः** - प्रसारितबाहुद्वयप्रमाणम् । रा. [स्वस्वपार्श्व प्रसारितयोर्बाह्वोरन्तरम् । या.]

**व्यामिश्रकम्** - संस्कृतप्राकृतभाषात्मकं काव्यनाटकादि । रा.

**व्यामिश्रितम्** - सम्मिलितम् । रा.

**व्यामोहः** - अभिनिवेशः । वै.

**व्यायताः** - कृतश्रमाः । वि.

**व्यायामः** - खुरल्यां श्रमजयाय कृतोऽभ्यासः । रा. आयासः । वि. शरीरायासजनकं कर्म । रा.

**व्यालः** - अभयप्रदानप्रस्थानेन प्रबुद्धान् व्यालाति आदत्ते आत्मसात्करोतीति । सह. अजगरः । रा.

**व्यालमृगः** - दुष्टमृगः । रा.

**व्यालाः** - दुष्टसर्पाः । रा.

**व्याली** - पन्नगी । रा.

**व्यावर्तमानत्वम्** - उत्तरोत्तरप्रतीत्य-विषयत्वम् । नी. उत्तरोत्तरप्रतिपत्तिविषयेषु अविद्यमानत्वम् । श्रु.स्वप्रकारकधी-विशेष्यविशेष्यकधीविषयीभूताभाव-प्रतियोगित्वम् । रत्न.

**व्यावर्त्यते** - विमुच्यते । बृ.

**व्यावहारिकः** - आपातप्रतीतिसिद्धः । युक्तिभिर्निरूपितः न तथाऽस्थितः । श्री.

**व्याविद्धाः** - व्यात्यस्ततया न्यस्ताः । रा.

**व्यावृत्तिः** - इतरभेदः । नी. इतरभेदानु-मितिः । वा. उत्तरोत्तरप्रतीत्यविषयता। रत्न. व्यक्त्यन्तरेष्वसम्भावितधर्मयोगः । वा. व्यावर्तकधर्मः । श्रु.

**व्यावृत्तिरूपाः** - अभावरूपाः । भाव.

**व्यावृत्यन्वयरूपाः** - भावाभावरूपाः । भाव.

**व्यासः**-विभक्तवेदः । व्यस्यन्ते (युगानुसार-बोधानामखेदजननाय) विभज्यन्ते वेदाः अनेनेति सः । सह. विस्तरः । सर्वा (आ).

**व्यासवेदः** - महाभारतम् । या.
[**व्यासाम्नायः** - महाभारतम् । र.]
**व्याहतम्** - देशकालवस्तुकृतप्रतिबन्ध सहितम् । श्रु.
**व्याहारः** - अभिलापः । न्यासिटी. उक्तिः । सर्वा (आ).
**व्याहितः** - व्याधितः । बृ.
**व्युच्चरति** - उद्गच्छति । बृ.
**व्युत्पत्तिः** - (व्यवहाराधीन) प्राथमिक-शक्तिग्रहः । रत्न. शब्दस्यार्थविशेषपरत्व-व्युत्पादनम् । च. शक्तिग्रहः । अधि.
**व्युष्टिः** - देहकान्तिः । छा. फलम् । रा.
**व्यूढः** - दृढः । संश्लिष्टो वा । सुन्दर.
**व्यूढम्** - भारसहम् । सुन्दर. विशालम् । रा.
**व्यूदिरे** - विवादं चक्रुः । श्रु.
**व्यूहः** - वासुदेवसंकर्षणप्रद्युम्नानिरुद्ध-रूपः। न्यासि. वासुदेवसंकर्षणप्रद्युम्ना-निरुद्धरूपश्चतुर्व्यूहः । श्री. व्यपोहनम् । ई. उपासनार्थं जगत्सृष्ट्याद्यर्थं च वासुदेव-सङ्कर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्धाऽव-स्थितो नारायणः । य.
[**व्यूहक्रमः** - (सेनायाः) बलविन्यास-क्रमः। (गात्रस्य) तत्तदवयवोचितसंस्थान-सृष्टिः । या.]
**व्यूहाः** - वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः। या.
**व्येति** - विभक्तनामरूपं भवति । तै. वैविध्यमेति । श्वे. देवो विश्वमिति समभि-व्याहारात् अन्तर्भावितण्यर्थोऽयम् । गमयति, नाशयतीत्यर्थः । (अन्यथा नश्यतीति) । श्वे.
**व्योमसत्** - परमपदे वर्तमानः । क.
**व्रतम्** - अनशनादि । नियतं धर्मम् । भा. सङ्कल्पः । गी.
**व्रतचारी** - उपनीतमात्रः पुरुषः । वि.
**व्रतविशेषाः** - सोपाकृतयः प्राजापत्य-सौम्यादयः । त.
**व्रातः** - 'अत्र व्रातशब्दस्य' 'पशुर्मनुष्यः पक्षी' वेत्यादिप्रमाणानुसारेण अनियत-वृत्त्युत्सेधजीववाचित्वं केचिन्मन्यते । उक्तं च काशिकायां वृत्तौ 'व्रातच्फञोरस्त्रिया' मित्यत्र - 'व्राताः अनियतवृत्तय उत्सेध-जीविनः' इति । उत्सेधजीविनः शरीर-प्रयासजीविन इत्यर्थः । भाव.
**व्रात्यः** - संस्कारहीनो ब्राह्मणः । प्र.

## श

**शम्** - सुखकरः । भाव.
**शंयोः** - सुखप्रापकः शं सुखं यौति मिश्रयति इति शंयोः । विच्प्रत्ययान्तः ओकारान्तशब्दः । तै.
**शकलपरिणतिः** - चिदचिदीश्वराकारेण त्र्यंशे ब्रह्मणि अचिदंशस्य शकलस्य परमार्थपरिणतिः । अधि.
**शकुन्तः** - भासः । 'शकुन्तौ भासपक्षिणौ' इति कोशः । रा.
**शक्तयः** - पृथिव्यादयः । प्रकृतिपुरुषमह-दहंकारादयः । भा.

**शक्तिः** - अघटितघटनासामर्थ्यम् । य. अपृथक्सिद्धविशेषणम् । न्यासि. आयुध-विशेषः । रा. कर्म । श्री. कारणस्य कार्योपयोगी सहकारिकलापः । सर्वा. कार्यसमधिगम्यः गुणः द्रव्यगतः केषाञ्चिन्मते । द्रव्यगुणादिसर्वगतः अपरेषां मते । न्यासि. कार्योपयोग्यपृथक्सिद्ध-विशेषणम् । श्रु. कार्यानुमेयगुणविशेष-व्यतिरिक्ते शक्तिव्यपदेशः नानाप्रकारेण लक्षणया । न्यासि. जगत्प्रकृतिभावः । रत्न. "जगत्प्रकृतिभावः" (प्रकृतिभावः उपादानत्वम्) । श्रीत. भगवदपृथक्सिद्ध-विशेषणम् । श्रु. माहात्म्यम् । ऐश्वर्यम् । भा. लक्ष्मीविग्रहपरिजनपरिच्छदादिः विभूतिः । वि. विश्वोपादानतार्हत्वम्, स्वेतरसर्वदुर्घट-घटनशक्तिर्वा । गद्य. "श्रियो भगवच्छक्ति-त्वं तद्विशेषणत्वात्, समानलीलतया प्रेरकत्वेन सहकारित्वाद्वा" । श्रीत. शैवमते 'शिवश्शक्त्या युक्तः' इत्युक्ता, यामन्तरेण निस्सारमखिलं जगत् । न्यासिटी. सर्वैरप्य-शक्यस्य कार्यस्य सङ्कल्पमात्रेण समापन-शीलत्वम् । न्याद. सहकारि । सर्वकारणानां कारणत्वनिर्वाह-कः कश्चिदद्रव्यविशेषः । न्यासि. सामर्थ्यम् । श्रु. या.

**शक्तिम्** - कार्योपयोग्यपृथक्सिद्ध-विशेषणम् । श्वे.

**शक्तित्रयम्** - विष्णोर्मूर्तामूर्तरूपबद्ध मुक्तात्मरूपशक्तिद्वयम् अविद्याख्यकर्म शक्तिश्च । न्यासिटी. [(राज्ञः) उत्साह-प्रभुमन्त्रशक्तयः । (भगवतः) श्रीभूमि-नीलाख्या भार्याः । या.]

**शक्तिमत्त्वम्** - कार्यविशेषानुगुणत्वम् । भा.

**शक्ति विक्षेपः** - तमोऽवस्थायाः प्रकृते-र्विभागः । नी.

**शक्तेः प्राधान्यम्** - शैवमते, विशेषणतया स्फुरन्त्या अपि सर्वोपादानत्वात् प्राधान्यम् । न्यासिटी.

**शक्त्या** - यावच्छक्ति । या.

**शक्रकोपः** - अरुणकीटविशेषः । वि.

**शक्कर्यः** - शक्कर्याख्यं सान । (नित्य-बहुवचनम्) । छा.

**शङ्कुः** - पर्णनालम् । छा.

**शङ्कुकर्णः** - शङ्कुः कीलम् । तत्सदृशकर्णः । रा.

**शङ्खः** - (भगवतः) भूताद्यहंकाराभिमानि-दैवतम् । वि. विद्याकोशः । भगवच्छास्त्रे अस्त्रभूषणाध्याये दर्शनात् । वि.

**शङ्खणः** - कल्माषपादपुत्रो नृपः । रा.

-शङ्खध्मानस्य - शङ्खध्मातुः । नन्द्यादि-त्वात्कर्तरि ल्युः । बृ.

**शङ्खभृत्** - शङ्खं पाञ्चजन्यं बिभर्तिधरति; तं स्वाधरविद्रुमसुधया पुष्णाति चेति । सह.

**शची** - इन्द्रभार्या जयन्तजननी । रा.

**शठः** - अभिचारादिकर्मरुचिः । गी. गूढ-विप्रियकृत्त्वं शठत्वम् । तच्च प्रकरणाच्छा-स्त्रोदिततामसकर्मद्वारेत्याह - अभिचारादि-कर्मरुचिरिति । ता. गूढविप्रियकृत् । पा.रा.

"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्। व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः"॥ वि. श्रुत्यनभिमतार्थवक्ता। गरुद. [वञ्चकः। र.]

**शठबुद्धिः** - वञ्चकबुद्धिः। रा.

**शठा** - गुढविप्रियकारिणी। रा.

[**शठाः** - धूर्ताः, नास्तिकाः, वेदाप्रामाण्यवादिनः। र.]

**शठारिः** - शठकोपमुनिः। कर.

**शणाः** - गोण्युपादानत्वचः। वि.

**शतक्रतुः** - अग्निः। तै.

**शतघ्नी** - आयुधविशेषः। प्राकारस्थ यन्त्रविशेषः। शतसङ्कः अयोगदा; आयुधविशेषः। रा.

**शतद्रुः** - नदीविशेषः।रा अथर्ववेदीयं शतपथब्रह्मणम्। सु.

**शतमूर्तिः** - दिदृक्षवेऽर्जुनाय व्यक्तवैश्वरूप्यः। शतं उपलक्षणतया अनन्ताः मूर्तयोऽस्येति। सह.

[**शताङ्गः** - रथः। या.]

**शताननः** - शतानि अनेकानि आननानि मुखानि अस्येति। सह.

**शतानन्दः** - अपरिमितानन्दः। सह.

**शतावर्तः** - शतमावर्ता अस्येति, आवर्तशब्देनैश्वर्यविजृम्भितानि लक्ष्यन्ते। अतिवेलमप्यनुवेलीक्रियमाणमिदमैश्वर्यं संकटगतिक्षोमसमुद्भवत्सरिदावर्तवत् विजृम्भते। सह.

**शतार्धारम्** - पञ्चाशदरम्। पञ्चाशद्वर्णलक्षणारोपेतम्। श्वे.

**शत्रुकर्शनः** - प्रकृतकार्यविरोधिनिरसन समर्थः। रा.

**शत्रुघाती** - शत्रुघ्नस्य कनिष्ठः पुत्रः। रा.

**शत्रुघ्नः** - आश्रितानां शत्रून् हन्तीति। रा. विषयेषु विक्षेपणात् तेषां (योगिनां) रावणवत् शत्रु इन्द्रियवर्गं विवेकशरैः हन्ति शमयतीति। सह.

**शत्रुजिच्छत्रुतापनः** - शत्रुजिद्भिः ककुत्स्थपुरुकुत्सादिभिः स्वदिव्यतेजसा आप्यायितैः शत्रून् तापयतीति। सह.

**शत्रुञ्जयः** - गजविशेषः। पा.

**शनैः** - क्रमेण। रा.

**शन्तमम्** - मनस्सुखावहम्। तै.

**शन्तमेन** - निरतिशयसुखकरेण। भा.

**शबलम्** - चिदचिद्विशिष्टम्। छा.

**शबलात्** - चिदचिद्विशिष्टमुपास्य, ल्यब्लोपे पञ्चमी। छा.

**शब्दः** - शास्त्रम्। श्रुतिः। श्री. अस्मदादिश्रोत्रग्राह्यः। न्यासि.

**शब्दतन्मात्रम्** - आकाशोपादानद्रव्यं भूतादिजन्यम्। सुबा. तामसाहंकाराकाशयोर्मध्यमावस्थाविशिष्टं द्रव्यम्। य.

**शब्दतन्मात्रत्वम्** - स्पर्शशून्यत्वे सति तन्मात्रत्वम्। वा.

**शब्दब्रह्म** - देवमनुष्यपृथिव्यन्तरिक्षस्वर्गादिशब्दाभिलापयोग्या प्रकृतिः। ता. [आगमोत्थज्ञानम्। र.]

**शब्दवेधी** - शब्देन लक्ष्यवेधनशीलः बाणविशेषः। रा.

**शब्दसहः** - (अथ गजेन्द्रमोक्षणम् ।) अस्पष्टशब्दानां तिरश्चामपि शब्दं आर्तनादं सहते अतिभारमिव वहतीति । सह.

**शब्दसामानाधिकरण्यम्** - भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्विशेष्ये पर्यवसानम् । अधि.

**शब्दातिगः** - अनन्तजिह्वेनानन्तेन अनन्तशाखैराम्नायैः साक्षात्सरस्वत्या च दुरुदाहरमहिमा । सह.

**शब्दानुवेधः** - शब्दाध्यासः । च.

**शब्दैक्यम्** - एकशब्दवाच्यत्वम् । न्यासिटी.

**शमः** - अनर्थावहेभ्यो विषयेभ्यः बाह्येन्द्रियनियमनम् । भा. अन्तःकरणविजयः । वे. अन्तरिन्द्रियजयः । तै. अन्तरिन्द्रिय नियमनम् । बृ. इन्द्रियनिग्रहः । पा. कर्मनिवृ-त्तिः । गी. क्रोधनिवृत्तिः । चित्तप्रशान्तिः । रा. बाह्येन्द्रियनियमनम् । श्रु. गी. मु. बाह्यकरणव्यापारान्तरनिवृत्तिः। (प्रशान्तचित्ताय शमान्विताय) 'प्रशान्तचित्ताय' इत्युक्तत्वात् शम इह बाह्यकरणव्यापारान्तरनिवृत्तिः । त. मनोनिग्रहः । भा. (अनुद्रुतः) शान्त्युपायोपदेष्टा । "शमु उपशमे"; भावे घञ्; तत्करोति तदाचष्ट इति णिच् । सह. सर्वेन्द्रियव्यापारोपरतिः । नी.

**शमीभिः** - किंशुकैः । रा.

**शम्पा** - विद्युत् । वर.

**शम्बरम्** - जलम् । अति.

**शम्बुकः** - शूद्रस्तपस्विविशेषः । रा.

**शम्भुः** - ब्रह्मा । रा. ब्रह्मा । 'शम्भू ब्रह्म त्रिलोचनौ' इत्यमरकोशः । रुद्रः । वेकौ. शं सुखं भवति, सुखरूपो भवतीति शम्भुः नारायणः । न्यासिटी. शं सुखं भवत्यस्मादिति । रा. शं सुखं भावयतीति शम्भुर्नारायण । न्यासिटी. (स्वसौन्दर्यादिगुणाविष्कारेण) शं सुखं सम्यक् भावयति पुंसामिति । सह.

**शम्या** - तालः । रा.

**शयनीयम्** - शयनयोग्यगृहम् । रा.

**शरः** - सारांशः । बृ.

**शरणम्** - अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिसाधनम् । वै. अविशेषेण सर्वेषां रक्षकः; निरूपाधिकः प्रापकः । सह. आवासस्थानम् । रा. इष्टस्य प्रापकतया अनिष्टस्य निवारण(क)तया च समाश्रयणीयः चेतनविशेषः । गी. 'उपाये गृहरक्षित्रोः शब्दः शरण मित्ययम्' इति निघण्टुना गृहम् उपायः रक्षिता । (प्रपत्तिप्रकरणे पठितः शरणशब्दस्तु उपायपरः इति अहिर्बुध्न्यसंहितायाम्) । स्तो. उपायः । गद्य. ता. श्रीस्तु. गृहम् । सि. रक्षकम् । रा. प्राप्यम् । श्वे. रक्षकः गृहम् । वेकौ. रक्षिता । रा. वासस्थानम् । गी.

**शरणत्वम्** - उपायान्तरस्थाननिर्विष्टत्वम् । श्रीत.

**शरणवरणम्** - प्रार्थनान्वितभरन्यासः । न्याद.

**शरणं प्रपद्ये** - निरपेक्षमदभिमतसाधकत्वाध्यवसायपूर्वकं भरन्यासं करोमि। श्रीसू.

**शरणागतः** - अनन्यगतिकतया स्वं उपगतः। रा.

**शरणागतिः** - अनन्यसाध्यस्वाभीष्ट साधनसमर्थवशीकरणम्। नि. [''त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः। शरणागतिरित्युक्ता''। र.]

**शरणान्वेषणम्** - गोप्तृत्ववरणम्। रा.

**शरण्यः** - प्राप्यः। रा. रक्षकत्वेन विश्वसनीयः। भा. शरणार्हः। तदर्हतीति यत्प्रत्ययः। सर्वावस्थास्वपि शरणवरणार्हः। रा.

**शरण्यम्** - रक्षकम्; इष्टफलदम्। वै. शरणार्हम्। रा.

**शरण्यत्वम्** - शरणं(णी?) भवितुमर्हत्वम्। श्रीत.

**शरदण्डा** - नदीविशेषः। रा.

**शरभः** - अष्टपादमृगविशेषः। रा. सिंहहिंसको मृगः। अति. स्वमर्यादातिवर्तिनः शृणाति हिनस्ति इति शरभः। ''कृशृशलि कलिगर्दिभ्योऽभच्'' इति अभच्। सह.

**शरणभृष्टयः** - शरेषीकाः। बृ.

**शरवणम्** - स्कन्दप्रसूतिर्वनविशेषः। रा.

**शरारुः** - घातुकः। रघु.

**शरीरम्** - आधेयम्, विधेयम्, शेषभूतं च। श. आधेयं विधेयं शेषभूतं च वस्तु। रा. आधेयत्व विधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति भाष्यमनेकार्थत्वप्रसङ्गादिना त्रिभिरुपलक्षितस्य चेतनापृथक्सिद्धत्वस्य प्रवृत्तिनिमित्तत्वपरम्। न्यासि. आयतनम्। बृ. ईश्वरतज्ज्ञानव्यतिरिक्तं द्रव्यं शरीरम्। इदं तटस्थलक्षणम्। न्यासि. चेतनं प्रत्याधेयत्वविधेयत्वशेषत्वनियमैरपृथक्सिद्धद्रव्यविशेषः। य. चेष्टेन्द्रियार्थाश्रयश्शरीरमिति न्यायसूत्रम्। अत्र लक्षणं तार्किकेष्टं विशिष्टद्वैतिभिर्दूष्यते। न्यासि. ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धसम्बन्धनिरूपितद्रव्यत्वसमानाधिकरणप्रतियोगित्वावच्छिन्नम्। वा. भोक्तुरात्मनो भोगक्षेत्रम्। गी. यच्चैतन्यसमानाधिकरणं यदपृथक्सिद्धं यद्द्रव्यं तत् तस्य शरीरम्। न्याप. यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तस्य तत् शरीरम्। यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यं, तस्य तत् शरीरम्। श्रु. यस्य चेतनस्य यद्द्रव्यं शेषतैकस्वरूपं तस्य तत् शरीरम्। श्रु. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेषतानर्हं तदवस्थं तस्य शरीरम्। न्यासि. ''यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुञ्च शक्यम् तच्छेषतैकस्वरूपञ्च तत्तस्य शरीरमिति भाष्यम्''। इदमेकं लक्षणमिति केचिद्व्याचख्युः। लक्षणत्रयमित्यपरे। न्यासि. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमसम्बन्धानर्हं स्वशक्ये नियन्तव्यस्वभावम्, तदवस्थं तस्य शरीरमित्येकं लक्षणम्। न्यासि. **यस्य**

चेतनस्य यदवस्थमपृथक्सिद्धविशेषणं द्रव्यं तत् तस्य शरीरमिति। इदं भाष्यकाराभिप्रेतं चतुर्थं लक्षणम्। न्यासि. यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरम्। सर्वा. यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धारयितुं शक्यं तत्तस्य शरीरम्। सर्वा. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यं तदवस्थं तस्य शरीरम्। न्यासि. "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं च शक्यम्" इत्यादि भाव्यम् ... चैतन्यविशिष्टं प्रत्यपृथक्सिद्धविशेषण-भूतं शरीरमिति भाष्याभिप्रेतोऽस्माकं निष्कर्षः। ता. विशरणशीलम्। ई.

**शरीरत्वम्** - अन्तःप्रविश्य नियाम्यत्वम्। श्रु. आधेयत्वं विधेयत्वं शेषभूतत्वम्। इन्द्रियाद्याश्रयत्वम्। नी. चेतनं प्रति अनन्यार्हशेषत्वम्। वे. भोगायतनत्वम्। नी. [(ईश्वरं प्रति जगतः) नियमेन धार्यत्वम्। नियमेन नियाम्यत्वम्। नियमेन शेषत्वम्। र.]

**शरीरपातसमयः** - मनः सम्पत्तेः पूर्वावस्था। गद्य.

**शरीरभूतभृत्** - शरीरभूततत्त्वजातभर्ता। सह.

**शरीरभृत्** - (ईदृशेन) शुभाश्रयेण स्वशरीरभूतमुपासकं पुष्णातीति शरीरभृत्। उपास्यगुणैर्हि तेषां पोषः। उपासको हि तस्यात्मवच्छरीरवच्च। "रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्"। सह.

**शरीरलक्षणम्** - चतुर्विधमिदं न्यायसिद्धाञ्जनोक्तम्। श्रीत.

**शरीरस्थः** - शरीरप्रतिष्ठितः, दृढशरीरः। क.

**शरीरस्य नियमनम्** - सात्त्विकाहारेण परिशोधनम्। श्रु.

**शरीरस्य परत्वम्** - स्वगतगुणोन्मेषानुगुणमात्मज्ञानापादकत्वम्। परत्वमत्र वशीकार्यतायां प्राधान्यम्। श्रु.

**शरीरस्य वशीकरणम्** - रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्ततापादनम्। श्रु.

**शरीरित्वम्** - अन्तःप्रविश्यनियन्तृत्वम्। शरीरप्रेरकत्वम्। श्रु. [(निखिलचेतनाचेतनं प्रति ईश्वरस्य) नियमेन धारकत्वं, नियमेन नियन्तृत्वं, नियमेन शेषित्वम्। र.]

**शरीरिलक्षणम्** - चेतनत्वे सति द्रव्यापृथक्सिद्धविशेष्यता। द्रव्ययावत्सत्तनियन्तृता। श्रीत.

**शरीरे निमग्नः** - शरीरात्मबुध्या तदेकतामापन्नः। श्वे.

**शर्करा** - स्थूलवालुका। रा.

**शर्म** - सुखम्। रा. सुखरूपम्, परमप्राप्यम्। सह.

**शर्मिष्ठा** - असुरराजस्य वृषपर्वणः पुत्री ययातिभार्या। रा.

**शर्वः** - (स्वशरीरभूतानां अशुभं) शृणाति हिनस्तीति। सह.

**शर्वरी** - प्रलयः। भाव.

**शर्वरीकरः** - शर्वरी हिंस्रा परविदारिणी पञ्चायुधी करे अस्येति। सह.

**शलभः** - अभ्यग्निपातुकः कीटविशेषः। रा.

**शल्यम्** - शंकुः। रा.

**शल्यकर्तनम्** - नगरविशेषः। रा.

**शल्यकृन्तः** - नापितः। रा.

**शल्यनिष्कर्षः** - कण्टकोद्धारः। वि.

**शव्यम्**-शवदहनादिकर्म। छा. शवयोग्य-संस्कारः। श्रु.

**शशबिन्दुः** - शशानां कुटिलगतीनां बिन्दुः अपलपितेति। सह. इलस्य ज्येष्ठपुत्रः। रा.

**शशाङ्कः** - भूच्छायमयशशरूपाङ्कः। 'लोकच्छायमयं। लक्ष्म तवाङ्के शशसन्निभम्' इति हरिवंशः। रा.

**शशिसूर्यनेत्रः** - शशिवत् सूर्यवच्च प्रसादप्रतापयुक्तसर्वनेत्रः। गी. श्रीविश्व-रूपस्यानन्तनयनविशिष्टत्वात् साधर्म्यमेव विवक्षितम् तत्रापि सर्वेषामुभयतुल्यत्वम्। ता.

[**शशी**- घनसारः। ई.]

**शश्वत्** - सर्वदा। छा.

**शस्तः** - हिंसितः। रा.

**शस्त्रम्** - अप्रगीतमन्त्रसाध्यगुणिनिष्ठ-गुणाभिधानम्। गानरहितं एकश्रुतिरूपो-च्चारणम्। वे. केवलमेकस्वरोच्चारणम्। श्रु.

**शस्याः** - शस्त्रार्था ऋचः। बृ.

**शाकुनिः** - पक्ष्याजीवः। वि.

**शाखा**-आर्द्रतरतरुभागः। रा.छान्दोग्यादि-भिन्ना शाखा। वर.

**शाखाचन्द्रनयः** - परस्परासम्बन्धवीः। सर्वा (आ).

**शाखानाड्यः** - अप्रधानसिराः। सुबा.

**शाठ्यम्** - गूढविप्रियकारिता। रा.

[**शाड्वला** - शादाख्यतृणभूयिष्ठा (भूः)। या.]

[**शाण्डिल्यः**-साङ्गेषु वेदेष्वलब्धनिष्ठस्सन् अधीतपाञ्चरात्रशास्त्रो महर्षिविशेषः। सच्च.]

**शाणी** - शणविकारः। वि.

**शातकुम्भम्** - सुवर्णम्। रा.

[**शातातपः** - स्मृतिप्रणेता महर्षिविशेषः। सच्च.]

**शातितः** - उत्तेजितः। या.

**शाद्वलः** - बालतृणवत्प्रदेशः। रा.

**शाद्वलम्** - शादैः तृणैः युक्तम्। 'नडशा-दाड्ड्वलच्' इति शादशब्दात् मत्वर्थीयो ड्वलच् प्रत्ययः। या.

**शान्तः** - आत्मानुभवैकसुखः। गी. अनुद्रिक्तः। सह. अशनायाद्यूर्मिषट्क-रहितः। वि. ऊर्मिषट्करहितः। भा.श्रु त्यक्तवैरः। रा. प्रशान्तमनस्कः। न्यावि. विजितमानसः। त.

**शान्तम्** - अशनायाद्यूर्मिषट्करहितम्। श्वे. ऊर्मिषट्करहितम्। प्र.मा.(र).त. सर्वविशेषशून्यम्। अधि. स्वतः ऊर्मिषट्-कप्रतिभटम्। श्रु.

**शान्तरजाः** - विनष्टरजोगुणः। गी.

**शान्तवाक्** - गृहीतमनाः। भा.

**शान्तसङ्कल्पः** - निवृत्तविचारः। भाव.

**शान्तहृदयौ** - निवृत्ताकाङ्क्षौ। छा.

**शान्ताः** - निगृहीतेन्द्रियाः। मु. सात्त्विक्यः। भा.

**शान्तिः** - अन्तरिन्द्रियनिग्रहः। न्यावि. आभ्युदयिकीक्रिया। रा. इन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनम्। निर्वृतिः। निर्वाणम्। गी. अस्मिन् परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्ति इति सः। सह. मङ्गलम्। रा. मनःक्लेशशान्त्यादिरूपं सुखम्। रजस्तमोमूलरागद्वेषादिनिवृत्तिः। ता. शमः। रा. संसारनिवृत्तिः। ता.

**शान्तिम्**-चित्तसमाधिम्। भा.रागाद्युपद्रव-शान्तिम्। श्वे.

**शान्तिकल्पः** - अष्टादशमहाशान्त्यादि-विधिः। वि.

**शान्तिदः**-निष्पन्नभक्तिभ्यः अप्रतिप्रसव-निर्मूलितभवोपप्लवं स्वसायुज्यरूपां शान्तिं ददाति। सह.

**शान्तिसमृद्धम्** - शान्त्या समृद्धम् आत्यन्तिकशान्तियुक्तम्। तै.

**शान्तोदितः** - व्यूहत्रयहेतुभूतवासुदेवः। न्यासिटी.

**शान्तोदितम्** - संहारसृष्ट्युपयुक्तलीला-विभूतिनिर्वाहपरं रूपम्। वर.

**शान्तोदितदशा** - भगवतः शान्तोदित दशा नित्योदितदशेति दशाद्वयमस्ति। तत्र हेयप्रत्यनीककल्याणैकतानस्वस्वरूपानु-भवदशा प्रथमा। इतरा तु विभूत्यनुभवदशा। वर.

**शान्तोदिता** - लीलाविभूतिनिर्वाहक सङ्कल्पविशिष्टदशा। व.

**शाब्दः** - शब्दान्तर्यामी। बृ.

**शाराणि** - चित्राणि। या.

[**शारिका** - पक्षिविशेषः। "वाचाला मुखरा शारी" इति, यादवः। 'सारिका शुकाङ्गना' इत्यप्याहुः। या.]

**शारीरः** - जीवः। भा. जगच्छरीरः परमात्मा। अधि. जीवः, तदन्तर्यामीति यावत्। यद्वा शारीरः जगच्छरीरकः। बृ. प्रत्यगात्मा। श्री. शरीरप्रतिसम्बन्धी आत्मा। तै. स्वव्यतिरिक्तसमस्तचिदचिच्छरीरकः परमात्मा। श्रु.

**शारीरकः** - 'जीवात्मा; शरीरमेव शरीरकं तत्र निवासी' इति वाचस्पतिः। त.

**शारीरकम्** - जगच्छरीरकपरमात्म-प्रतिपादकं शास्त्रम्। अधि. ब्रह्ममीमांसा। जगच्छरीरकपरमात्मा शारीरः। तस्यैष एव शरीर आत्मेति श्रुतेः। तद्विषयं शास्त्रम्। श्रु. शारीरं कायतीति शारीरकम्। कै शब्दे:; अतोऽनुपसर्गे इति के रूपम्। भाव.

**शारीरकभाष्यम्** - ब्रह्मसूत्रभाष्यम्। न्यासि.

**शारीरक मीमांसा** - वेदान्तशास्त्रम्। अनवच्छेदादिह सर्वशरीरः शारीरः तमधिकृत्य प्रवृत्तं शास्त्रं शारीरकम्। सैव मीमांसेति शारीरकमीमांसा। त.

**शारीरके** - ब्रह्मपुरे। भा.

[**शारीरकसूत्रम्**-भगवद्बादरायणानुगृहीतं ब्रह्मसूत्रम्। सच्च.]

**शारीरपुरुषः** - शरीरे अहमित्यभिमन्यमानः पुरुषः । कौ.

**शारीराग्निः** - जाठराग्निः । वि.

**शार्कराक्ष्यः** - शर्कराक्ष्यसुतः (जनः) । छा.

**शार्ङ्गम्** - भगवतः धनुः इन्द्रियाद्यहङ्काराभिमानि दैवतम् । वि. भगवद्धनुः । सामान्यतो धनुश्च । 'शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने' इति विश्वः । या.

**शार्ङ्गधन्वा** - शार्ङ्गं च स्वसदृशं धनुरस्येति । सह.

**शालयः** - श्वेततण्डुला व्रीहयः । रा.

**शालावत्यः** - शालावत्सुतः । शालावच्छब्दात् अपत्यार्थे अणि तदन्तात् स्वार्थे 'अभिजिद्विदभृच्छालावदि' त्यादिना यङ् प्रत्ययः । छा.

**शालिन्**-तान् शलति गच्छति प्राप्नोतीति । 'शल गतौ' इति धातोर्णिनिः । या.

**शालिनी** - गृहिणी । वि.

**शालीनम्** - अयाचितम् । "शालीनकौपीने अधृष्टाकार्ययो" रिति निपातितः शालीनशब्दः । भा. अयाचितवृत्तिः । भा.

**शाश्वतः** - अपक्षयरहितः । बहुकाल स्थायी । रा. प्रवाहरूपेण अनाद्यनन्तः । ता. शश्वत् भवः । अनवरतजगद्व्यापारप्रवाहत्वेन शश्वत् भवः नित्यः । सह.

**शाश्वतशिवः** - अनित्यात् रुद्राख्यात् शिवादन्यो नारायणः । रत्न.

**शाश्वतस्थाणुः**-शाश्वतः स्वयं नित्यश्चासौ स्थाणुः अपुनरावर्तिनां नित्यभोग्यतया स्थिरश्च । सह.

**शाश्वतस्थिरः** - नानाविधस्थिरबिम्बान्तर्वर्ती । सह.

**शाश्वतिकम्** - नित्यसिद्धम् । शश्वच्छब्दात् 'कालाट्ठञ्' इति शौषिकट्ठञ् प्रत्ययः । बहिषष्टिलोपविधानादनित्यः 'अव्ययानां भमात्रे टिलोपः' इति न टिलोपः । या.

**शाश्वती** - सदा स्थिता । वि.

**शासनम्** - प्रवर्तनम् । श्री. रक्षणम् । नि.

**शास्ता** - परेषां निग्राहकः । रा. शासिता। वि. सर्वकण्टकं साधु शास्ति । सह.

**शास्त्रम्** - इष्टानिष्टप्राप्तिपरिहारार्थकर्मविधायि । व. वेदाः । गी. सर्वावस्थसमस्तपुरुषहितानुशासनाच्छास्त्रशब्दो वेदेष्वेव प्रथमं प्राप्तः । तदनुबन्धादन्येषु । ता. शासनाद्धि शास्त्रम् । श्रु.

**शास्त्रविज्ञानम्**- शास्त्रप्रतिपाद्यं विज्ञानम्, मध्यमपदलोपी समासः । अत्र प्रतिपाद्यशब्दः उत्पाद्यपरः । भाव.

**शास्त्रविधिः** - वेदाख्यमनुशासनम् । गी.

**शास्त्रस्य इन्द्रियातीतत्वम्**-इन्द्रियाग्राह्यग्रहणशक्तिमत्त्वम् । भाव.

**शास्त्रार्थः** - शासितुः मतम् । ता.

**शास्त्रीयत्वम्** - शास्त्रतात्पर्यविषयत्वम् । नि.

[**शास्त्रैश्चक्षुष्मन्तः**- शास्त्रविदः । सच्च.]

**शास्त्रोपात्तत्वम्** - शास्त्रजन्यज्ञानविषयत्वम् । नि.

**शिशुमारः** - अम्बुकरी। रा. ध्रुवस्याश्रयभूतः सर्वेषां ताराणामाश्रयभूतः प्रदेशः। वि. नक्रविशेषः। जलकपिः। रा.

**शिक्षा**-अयासः। रा. वर्णनिर्णयात्मिका। य. वर्णानां स्थानकरणप्रयत्नादिबोधको वेदाङ्गविशेषः। या.

**शिखण्डकः** - काकपक्षः। या.

**शिखण्डी** - शिखण्डः अपरिमिताप्रधृष्यैश्वर्यपरमतेजः कलापोऽतिशयेनास्यास्तीति। सह.

**शिखरम्** - दाडिमफलबीजम्। 'शिखरं वृक्षशैलाग्रकक्षाग्रगृह कोटिषु। पक्के दाडिमबीजे च' इति विश्वः। रा.

**शिखराग्रम्** - वृत्ताग्रम्। "शिखरं निस्तुलं वृत्तम्" इत्युपमानमाला। रा.

**शिपिविष्टः** - यज्ञपशुप्रविष्टः भगवान्। शिपिः यज्ञपशुः। भा. शिपयः रश्मयः तैस्सह, तान्वा, आविष्टः संप्रविष्टः। आविष्टो व्याप्तवानिति। "शिपयो रश्मय उच्यन्त तैराविष्टः" इति यास्के। सह.

**शिरस्त्रम्** - उष्णीषम्। पा.

**शिलम्** - कणिकाद्यार्जनम्। भा.

**शिलैः** - स्वामित्यक्तक्षेत्रस्थकणिकादिभिः। भा.

**शिल्पः** - कर्षणादि गोपुर प्राकारादि निर्माणप्रतिपादकः। य.

**शिल्पकल्पः** - शिल्पशास्त्रम्। वि.

**शिलावहाः** - नदीविशेषाः। रा.

[**शिल्पविद्या** - अद्भुतवस्तुनिर्माणकौशलम्। या.]

**शिवः**-भक्तानां शुभावहः। सह. शिवप्रदः। शुभावहः। तै. शुद्धिगुणवान्। ता. अशुभसम्बन्धरहितः (शुभः)। श्वे. मङ्गलभूतः। विष्णुः। न्यासिटी. विष्णुः। "सर्वश्शर्वशिवः स्थाणुः" इति तन्नामसहस्रे पाठात्। सर्वा. सर्वबुभुक्षुमुमुक्षुशिवंकरः। सह.

**शिवम्** - अनवद्यम्। मङ्गलभूतम्। श्वे. कदाचिदुत्पादविनाशाविर्भावतिरोभावगन्धरहिततया मङ्गलम्। मा (रं). निर्दुःखसुखरूपम्। मा (कू). शुद्धम्। रा. माङ्गल्यवान् निर्दोष इत्यर्थः। श्रु. शान्तम्। भा.

**शिवा** - शोभना। प्र.

**शिवाः** - श्रृगालविशेषाः। गोमायवः। रा.

**शिशाधि** - दर्शय। तै.

**शिशिरः** - आर्तशब्दश्रवणसमनन्तरं अतित्वरया तत्र गमनात् शशति प्लवत इति। सह.

**शिशुः** - अतिबालः। अति.

**शिष्टः** - चोदितः। सर्वा.

**शिष्टकृत्** - स्वसम्बन्धेन तान् शिष्टान् स्वानुगुणकल्याणान् करोतीति शिष्टकृत्। सह.

[**शिष्टत्वम्** - श्रुत्यादिविधिनिषेधशास्त्रानुविधायित्वम्। सच्च.]

**शिष्टाः** - परिशिष्टाः। श्री.

**शिष्टिः** - विधानम्। अधि. शासनं, विधानमित्यर्थः। श्री.

**शिष्टेष्टः** - शिष्टानां पण्डिताग्रण्यां मार्कण्डेयादीनां इष्टः परमपुरुषार्थत्वेनाभिमतः। सह.

**शीक्षा** - स्वरवर्णमात्राशिक्षकं शास्त्रम्। पा.

**शीघ्रगः** - अग्निवर्णनृपपुत्रः। रा.

**शीतम्** - हिमम्। वि.

**शीभरः** - स्फारः। रम्यः। 'शीभृ कत्थने' इति धातोरौणादिके अरन्प्रत्यये शीभरशब्दः। 'शीभरः स्फाररम्ययोः' इति नैघण्टुकाः। शीभरितम् शीभरं कृतम्। या.

**शीर्षण्यम्** - तिरश्चीनदारु पर्यङ्कस्य। कौ.

**शीलम्** - महत्तरस्यापि मन्दतरैस्सह नीरन्ध्रसंश्लेषः। स्तो. महतो मन्दैस्सह संश्लेषः। अति. महतो मन्दैस्सह नैरन्ध्र्येण संश्लेषः। सत्स्वभावः। स्वभावः। सदाचारः। रा. सद्वृत्तिः। भा. स्वभावः। अति. (अदुःखशीलाम्) न दुःखं शीलति प्राप्नोतीति। या. [सौशील्यम्। र.]

**शीलवान्** - परिशुद्धस्वभावः। नि. सद्वृत्तवान्। रा.

**शीलव्यसनम्** - सद्वृत्तभ्रंशः। रा.

**शुकः** - रावणसचिवः सारणभ्राता। रा.

**शुक्रः** - अवदातः। स्वप्रकाशरूपः। ई. कुबेरमन्त्री। रा.

**शुक्रम्** - चरमधातुः। मु तेजिष्ठम्। तै. प्रकाशकम्। क. बाह्याशुद्धिरहितम्। भाव. रोचिष्ठं नक्षत्रमण्डलम्। श्वे.

[**शुक्लद्वैविध्यम्**-शुक्लवर्णं वळक्षमिति। शुक्लं शङ्खकुन्देन्द्वादिवर्णम्। वळक्षं स्फटिकवर्णादि। पाञ्च.

**शुक्रियाणि** - शुक्रः तेजिष्ठः परमात्मा स एषां देवतेति शुक्रियाणि। न्यासि. रत्न.

**शुक्रेण** - तेजसा। तै.

**शुक्लम्** - (धनम्) "क्रमागतं पितृदायं प्राप्तं च सह भार्यया। अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्॥" इति विष्णुः। श्रुतशौर्यतपःकन्यायाज्यशिष्याध्यायागतं धनं सप्तविधं शुक्लमिति नारदः। वि. ज्योतिष्मत्प्रकाशकः मन आदिरिन्द्रियवर्गः। बृ. सत्त्वगुणमयम्। भा.

**शुक्ला गतिः** - अर्चिरादिका। गी. अत्र शुक्लपक्षान्वयाद्वा शुद्धिविवक्षया वा अभिमन्तृस्वरूपस्याभिमन्तव्ये आरोपादेर्वा गतेः शुक्लत्वम्। ता.

**शुक्लेन** - शुद्धेन। भा.

**शुङ्गम्** - शुङ्ग ? सदृशम्। छ्र.

**शुचिः** - ऋजुबुद्धिः। रा. पवित्रभूतः। गी. परस्वानाकाङ्क्षी। रा. शुद्धः। अनाधेयदीप्तिः। शिष्टकृच्छुचिरिति एकं वा नाम। अर्थःपूर्ववत्। सह. प्रत्युपकारनिरपेक्षः। शर. शास्त्रविहितद्रव्यवर्धितकायः। गी. सदाचारनिष्ठः। भा. स्वयं कृतोपकारेषु प्रत्युपकारनिरपेक्षः। सह. स्वाहापुत्रः अग्निः। वि.

**शुचिम्** - अपहतपाप्मानं निरवद्यम्। म.

**शुचित्वम्** - अपहतपाप्मत्वादिगुणकत्वम्। भावशुद्धिर्वा। तच्च आश्रित-

संरक्षणे प्रत्युपकारादिनिरपेक्षत्वम् । द्रव्यतारतम्यानादरेण भक्तिमात्रप्रसाद्यत्वं वा । पावनत्वं वा । स्तो. उत्तरकर्मादियोग्यत्वम् । ता.

**शुचिनी** - शौचवती । वि.

**शुचिश्रवाः** - भक्तैरुक्तानि शुचीनि श्रावणीयानि श्रृणोतीति । सह.

**शुचिषत्** - तेजस्वी (शुचौ ग्रीष्मर्तौ सीदतीति) । क. परमात्मा । वेकौ. शुचौ (ग्रीष्मे) सीदतीति सूर्यः । तै.

**शुद्धः** - अनाघ्राताज्ञानादिदोषः । अशनायादिषडूर्मिरहितः । ई (कू). कर्मरहितः । पूयशोणिताद्यसंस्पृष्टः । स्वतो निर्मलः । वि.

**शुद्धम्** - अपापविद्धम् । अविद्यारहितम् । श्रु. अविद्यासाक्षित्वाद्यवस्थायामपि वस्तुतस्तद्रहितम् । त. कर्मरहितम् । वि. क्लेशकर्मादिनिर्मुक्तम् । वि. [नित्यास्पृष्टदोषम् । सच्च.)

**शुद्धचित्** - आरोपाविषयचित् । च.

**शुद्धतत्त्वपञ्चकम्** - शिवतत्त्वं शक्तितत्त्वं सदाशिवतत्त्वमीश्वरतत्त्वं विद्याख्यतत्त्वमिति । वस्तुत एकतत्त्वात्मकमिदमिति च । न्यासिटी.

**शुद्धरूपम्** - भूतप्रधानादिगतविकाराज्ञानादिरहितम् । वि.

**शुद्धसत्त्वम्** - अभिभूतरजस्तमस्कं उपयुक्तप्रकाशादिजनकं सत्त्वम् । त. त्रिगुण द्रव्यव्यतिरिक्तत्वे सति सत्त्ववत् । य. रजस्तमश्शून्यद्रव्यवृत्ति सत्त्वं शुद्धसत्त्वम् । न्यासि. रजस्तमोरहितसत्त्वाश्रयभूतम् । अधि. रजस्तमश्शून्यद्रव्यवृत्ति सत्त्वम् । य.

**शुद्धसत्त्वाः** - परिशुद्धान्तःकरणाः (वेदान्तश्रवणजन्यज्ञानेन ज्ञातपरमार्थ तत्त्वाः) । मु.

**शुद्धसृष्टिः** - रामकृष्णाद्यवतारः । त.

**शुद्धान्तःकरणाः** - अहङ्कारफलसङ्ग हीनाः । वि.

[**शुद्धान्तसिद्धान्तिनः** - शुद्धान्ताः अन्तःपुरस्त्रियः, तेषां सिद्धन्तः पातिव्रत्यम्, पारमैकान्त्यं एषामस्तीति शुद्धान्तसिद्धान्तिनः । अन्तःपुरस्त्रियो हि पातिव्रत्यशालिन्यः पत्यर्थभोगः पत्यधीनभोगश्च । तथा च आत्माधीनभोगात्मार्थभोगरहिताः परमैकान्तिन इति यावत् । र.]

**शुद्धाय** - रागद्वेषादिरहिताय । भा.

**शुद्धिः** - अन्यथाप्रतिपत्त्यादिनिवृत्तिः । रत्न. क्लेशकर्मादिराहित्यम् । वि.

**शुध्यशुद्धिहेतुः** - ब्राह्मणचण्डालादिगतः स्पर्शभेदः । यद्वा स्पर्शभेदास्वीकारेण सत्त्वादितारतम्यं वा शक्तिविशेषो वा । न्यासि.

**शुभम्** - हेयगुणहीनम् । सुन्दर.

[**शुभंयुः** - शुभान्वितो भाग्यशाली । या.]

**शुभत्वम्** - हेयनिवर्तकत्वम् । रत्न. हेयविरोधित्वम् । न तु हेयराहित्यमात्रम् । श्रु.

**शुभा** - मनोज्ञा । या.

**शुभाङ्गः** - अयं परमप्रत्ययित इति असुर-

विप्रलम्भकमायामोहनविग्रहः। सह. स्वयोगक्षेमावहः। शुभानि स्वभक्तिभावनाशोभनानि अङ्गानि यमादिसमाध्यवधीनि अष्टाङ्गान्यस्मादिति। सह.

**शुभार्थे** - शुभाश्रये। भा.

**शुभाश्रयः** - परवासुदेवविग्रहः। भगवदसाधारणविग्रहाणां सर्वेषामेव शुभाश्रयत्वमविगीतम्। रत्न.

[**शुभीभूयं** - शुभत्वम्। ई.]

**शुभेक्षणः** - एवं विधैश्वर्यशीलातिशय पिशुनशीतलविशालोदारदीर्घराजीवलोचनतया शुभं ईक्षणं नयनं अस्येति वा, शुभ ईक्षणं स्वकर्मकं स्वकर्तृकं च दर्शनं अस्येति वा। "सुभ्रूरायतताम्राक्षस्साक्षाद्विष्णुरिव स्वयम्" 'यश्च रामं न पश्येत्तु" इत्यादि। सह.

**शुभ्रः** - निर्दोषः। मु.

**शुभ्रम्** - अनवद्यम्। निर्मलम्। मु. स्वप्रकाशम्। प्र.

**शुम्भत्** - शोभमानम्। सुन्दर.

**शुल्कम्** - मूल्यम्। रा.

**शुल्बम्** - एकसरा रज्जुः। यज्ञकर्म। रा.

**शुश्रूषिता** - रमणीया (वाक्)। बृ.

**शुश्रूषुः** - उदकेन्धनपुष्पादिभिरसकृदाचार्यं तर्पयन्। न्यावि.

**शूद्रः** - शुचा द्रवतीति। भाव. शोचनाच्छूद्रः शोकवान् शोचिता। न्यासि. शोचतीति व्युत्पत्त्या शोकविशिष्टः। शुचेर्दश्चेति रप्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति भवति। श्री. शोचिता। 'स्फायितची' त्यादिना रक्प्रकरणे पठितेन 'शुचेर्दश्चे'ति सूत्रेण रक्प्रत्यये शुचेश्चकारस्य दकारे, 'अमितम्योदीर्घश्चे'ति पूर्वसूत्रेण धातोरुकारस्य दीर्घादेशे च, शूद्रशब्दो निष्पन्नो भवति। अत्र शूद्रशब्दस्य न रूढ्या वर्णविशेषोऽर्थः, चतुर्थवर्णस्य ब्रह्मविद्यायामनधिकारात्। छा. [शोचन्। ई.]

**शूद्रत्वम्** - उद्रिक्ततमोगुणवत्त्वम्। रत्न.

**शून्यः** - मनुष्यत्वेऽपि अशेषदोषैर्विवर्जितः। सह.

**शून्यम्** - निर्जनप्रदेशः। रा.

**शून्यवादः** - माध्यमिकाभिमतसर्वमिथ्यात्ववादः। न्यासिटी. माध्यमिकपक्षः। अधि.

**शूरः** - पराभिभावी। वि. यद्विजिगीषुत्वं तदाह शूर इति। शूरः समर्थः जैत्रः। शुगतौ सौत्रोऽयं धातुः। सह. रणेष्वपरावृत्तः। रा. वीरः सर्वरक्षःक्षयकरः रामः। सह. व्याघ्रादिवत् परबलं तृणीकृत्य निर्भयप्रवेशशीलः। 'शूरं भीरुं कविं जडम्' इति सूरस्य भीरुप्रतियोगिकत्वेन पाठात्। ता.

**शूरजनेश्वरः** - शूरसुग्रीवप्रभृतिनियन्ता। सह.

**शूरसेनः** - असहायशूरत्वेऽपि भूभारावतरणे शूराः विक्रान्ताः सेनाः यादवपाण्डवादिपृतनाः अस्येति। सह.

**शूराः** - ध्रुवसन्धिवनृपसुतभरतपुत्रस्य असितस्य शत्रवः। रा.

**शूलम्** - आयुधविशेषः। रा.

**शृङ्गम्** - प्राधान्यम्। 'श्रृङ्गं प्राधान्यसान्वोश्चे' त्यमरः। रा.

**शृङ्गच्छेदम्** - वृषभभक्षिताग्रतृणम्। रा.

[**श्रृङ्गारगुणः** - (कटाक्षगतः) श्रृङ्गारकार्यः अलसवलितत्वादिरूपो गुणः। या.]

[**श्रृताः** - पक्वज्ञानाः। सच्च.]

**शृङ्गी** - श्रृङ्गमिव अहिंसाविडम्बन पिञ्छिका अस्य करे अस्तीति। सह.

**शृणु** - श्रवणयोग्यमवधानं कुरु। ता.

**शृतः** - पक्वः। तै.

**शेषः** - अनन्ताहिः। वे. अवशिष्टः। रा. दासः। सुन्दर. परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं सः। श्रु.ता.वे. सुन्दर. भगवच्छय्यासनादिरूपः फणिराजः। अधि. [उपसर्जनभूतः। या. अतिशयाधायकः। सच्च.]

**शेषता** - शेषवृत्तिः शेषभावो वा। गद्य. शेषवृत्तिः। ता.

[**शेषता** - कैङ्कर्यम्। ई.]

**शेषत्वम्** - परगतातिशयाधानेच्छया उपादेयत्वं चेतनाचेतनसाधारणम्। शर. [स्वपरमप्रयोजनभूतपरगतातिशयाधायकत्वम्। र.]

**शेषवृत्तिः** - कैङ्कर्यम्। ता.

[**शेषा** - शेषापटी। र.]

**शेषापटम्** - भगवत्प्रसादत्वेन दीयमानवस्त्ररूपशिरोभूषणम्। अधि.

**शेषाशनः** - गरुडः। अधि. विष्वक्सेनः। त्वदीयभुक्तोज्झितेत्यादौ पाञ्चरात्रशास्त्रे च विष्णक्सेनस्य शेषाशनत्व प्रसिद्धम्। पद.

[**शेषाशी** - भगवन्निवेदितशेषभोजी विष्वक्सेनः। सच्च.]

**शेषित्वम्** - उभयाधिष्ठानमेकं शेषित्वमिति भगवति यादृशं तादृशं श्रियामपि। श्रीत. चेतनाचेतनात्मकोभयविभूतिस्थवस्तुजातलब्धलीलाभोगरसात्मकोत्कर्षशालित्वम्। पद. पतित्वम्। गी. चेतनगतं शेषित्वं पतित्वमेवेति भावः। ता. शेषप्रतिसम्बन्धित्वम्। श्रु. [शेषत्वेनाभिमतं प्रति परमप्रयोजनभूतातिशयभाक्त्वम्। र.]

**शेषी** - प्रधानभूतः। या. शेषलक्षणे "पर" शब्देन यः निर्दिश्यते सः। ता. [आधेयातिशयः। सच्च. यं प्रति परमप्रयोजनीभूतस्वातिशयवत्त्वमेव यस्य स्वरूपं स तस्य शेषी। र.]

**शेमुषी** - मोक्षोपयोगिज्ञानम्। श्रु. शमाद्यङ्गिका बुद्धिः। (शेमुषी भक्तिरूपा)। त.

**शेवधिः** - निधिः। क.

**शैलूषः** - भूमिकाधारी। रा.

**शैलेन्द्रः** - हिमवान्। रा.

**शैवलः** - विन्ध्यसमीपस्थो गिरिः। रा.

**शैशिरमासः** - फाल्गुनमासः। रा.

**शोकः** - अभिमताप्राप्तिजन्यं व्यसनम्। इष्टवस्त्वन्तरवियोगजनिता मनसो व्यथा। इष्टवियोगजं दुःखम्। रा. इष्टानिष्टवियोगसंयोगजः चित्तविकारः। बृ. दया। रा. भूतदुःखज्ञानेन चेतश्चलनम्। सि. भूतहेतुजन्यं दुःखम्। सुबा. भूतानिष्टगोचरधीः। त. मानसिकतापः। मुखवैवर्ण्यादिबाह्य-

विकारः । रा. म्रियमाणस्य पुत्रकलत्राद्यभिषङ्गादन्तर्दाहः । बृ. विषयालाभप्रसक्तं दुःखम् । क. शोकदायी विषयः । गी. क्रोधादिमूलबन्धुवधादिः । ता.

**शोकनाशनः** - भक्तानां स्वसम्बन्धव्यतिरेकशोकनाशकः । सह.

**शोकवस्तु** - शोकनिमित्तं वस्तु । शोचत्यनेनेति करणव्युत्पत्त्या वा शोकशब्दः । (...शोकवस्त्वाद्यनुस्मृतेश्च...) । त.

**शोकमोहौ** - अनुशोचनं भ्रमश्च । भा.

**शोकान्तरम्** - शोकबाह्यम् । अन्तरशब्दो बहिर्योगवचनः शोकमन्तरा वर्तमानम् । शोकशून्यमित्यर्थः । बृ.

**शोचति** - सन्तप्यते । छा.

**शोधकवाक्यम्** - कारणत्वशङ्कितदोषव्युदासकं वाक्यम् । भाव.

**शोधनम्** - साधनम् । वि.

**शौचम्** - तीर्थस्नानादिकम् । गी. मृज्जलादिभिः बाह्यम् । विष्णुचिन्तनं आन्तरम् । भा. वैदिककर्मयोग्यत्वं शास्त्रसिद्धम् । तद् बाह्यमान्तरञ्च । गी. बाह्यशौचं अशुचिसंशीलनादिभिरवश्यकर्तव्याकरणाच्च (आसुरेषु) न विद्यते । आन्तरं त्वात्मगुणाभावात् । ता. शास्त्रसिद्धा मनोवाक्कायगता आत्मज्ञानतत्साधनयोग्यता । गी. शास्त्रीयकर्मयोग्यता । भा.गी. सदाचारः । स्नानादिजं शुचित्वम् । हेयप्रतिभटत्वम् । भा. स्नानजन्यशुद्धिः । रा. [बाह्यान्तःकरणानां कृत्ययोग्यता शास्त्रीया । र.]

**शौण्डाः** - धूर्ताः । रा.

**शौण्डिकः** - मद्यकरः । रा.

[**शौण्डिनी** - मद्यविक्रयिणी । ई.]

**शौण्डीर्यम्** - वीरत्वम् । 'शौण्डीरो वीर' इति वृत्तिकारः । शूरता । रा. [सामर्थ्यम् । ई.]

**शौनकः** - शुनकसुतः । छा.

**शौरिः** - शूरस्य वसुदेवस्य अपत्यं शौरिः। यद्विशेषतो भक्तान् गच्छतीति वासुदेवपदे उक्तं तस्य विवरणरूपमिदम् । सह. शूरस्य वसुदेवपितुः अपत्यं शौरिः । 'एको गोत्रे' इति नियमात् व्यवहितापत्येऽपि परमप्रकृतेरेव प्रत्ययः । या उत्पलावर्तके शौरिनामा वसति । शूरस्य वसुदेवस्य अपत्यम् । सह.

**शौर्यम्** - परबलप्रवेशसामर्थ्यम् । य. बलम् । या. युद्धोत्साहः । रा. युद्धे निर्भयप्रवेश सामर्थ्यम् । युद्धेष्ववैमुख्यम् । भा. युद्धे निर्भयप्रवेशसामर्थ्यम् । गी. 'शूरं भीरुं कविं जडम्' इति भीरुप्रतियोगिनि शूरशब्द इत्यभिप्रायः । मानसशारीरसंवलनमिदम् । ता. शत्रुमध्ये स्वगृह इव प्रवेशसामर्थ्यम् । श्रु. शूरस्य भावः । मरणनिर्भयत्वमिति यावत् । साहसिक्यम् । रा. स्वगृह इव युद्धे प्रवेशसामर्थ्यम् । भा. [शत्रुसेनायां सन्निहितायामप्यभीरुत्वम् । ई.]

**शौवः** - श्वदृष्टः । टिलोपश्छान्दसः । छा.

**श्यामा** - यौवनमध्यस्था । रा.

**श्यामाकः** - सशूको व्रीहिः । वि.

**श्यामात्** - श्यामरूपविशिष्टं परमात्म

स्वरूपं प्रपद्य । ल्यब्लोपे पञ्चमी । (श्यामाच्छबळं प्रपद्ये) । छा.

**श्यावदन्तः** - कृष्णदन्तः । वि.

**श्येनकपोतीयम्** - श्येनकपोतयोः कलहः। रा.

**श्रद्धया** - श्रद्धया सह । यद्वा श्रद्धा करणम् । (श्रद्धया देवो देवत्वमश्नुते) । श्रीत.

**श्रद्धा** - आपः (न जलमात्रं किन्तु भूतसूक्ष्माणां सर्वेषां उपलक्षकं श्रद्धापदम्) । बृ. आपः । छा. आपः, 'श्रद्धा वा आपः' इति प्रसिद्धेः । श्री. आपः । 'श्रद्धा वा आपः' इति श्रुतेः । अधि. आस्तिक्यबुद्धिः । प्र.क. मु.छा.तै. कर्तव्यविषया त्वरा । भा. कर्मस्वास्तिक्यबुद्धिः । बृ. चिकीर्षितविषयत्वरा । भा. जीवस्य मनोवृत्तिविशेषः। श्री. त्वरा । श्रु. छा. भूतसूक्ष्माणि । न्यासिटी. भूतसूक्ष्मावस्थाविशेषः । श्रु. श्रीः। श्रीसू. लक्ष्मीः (माधवो मधुसूदन इत्यत्र श्रीसहस्रनामभाष्ये) । श्रीत. विश्वासपरम्परा । अति. विश्वासपूर्विका साधने त्वरा । न्यासि. सगौरव वरा । सर्वा. स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरा । सात्त्विकी - दुःखा सम्भिन्नोत्कृष्टसुखहेतुभूतदेवयागविषया । राजसी- दुःखसम्भिन्नाल्पसुखजननी । तामसी- दुःखप्रायात्यल्पसुखजननी । गी.

**श्रद्धादेयः** - श्रद्धापुरस्सरं देयमस्य । भाव.

**श्रद्धामयः** - श्रद्धापरिणामः । गी. श्रद्धाजन्यफलसम्बन्धी । ता.

**श्रद्धावान्** - अत्यर्थपरमात्मप्रियत्वेन क्षणमात्रविश्लेषासहतया परमात्मप्राप्तिप्रवृत्तौ त्वरावान् । गी. त्वरमाणः । ता.

**श्रद्धासत्यः** - आस्तिक्यबुद्धेः पुरुषस्य सत्यत्वेन प्रतीयमानः । तै.

**श्रमणः** - दिगम्बरः । 'श्रमणा वातवसना' इति निघण्टुः । रा. भोगजन्मभ्यामनुपक्षीणसंस्कारैः समाधिविशेषोऽनायासेन श्रम्यते अभ्यस्यते विषयभूतेऽस्मिन् इति । सह.

**श्रमणाः** - तपश्चर्यादिप्रयुक्तकायक्लेश युक्ताः । भा.

**श्रमणी** - परिव्राजिका । 'चतुर्थमाश्रमं प्राप्ताः श्रमणा नाम ते स्मृताः' इति स्मृतेः । रा. संसिद्धिप्रापकपूर्वाभ्यासशालिनी काचन स्त्री । न्यासि.

**श्रवणम्** - तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम् । वर. श. शब्दजन्यप्रमितिः। श्रु.

**श्रान्तः** - कृतयन्तः । बृ.

**श्रावस्ती** - रामपुत्रस्य लवस्य प्रधाननगरी । रा.

**श्रिय ईश्वरकोटिता** - विभूतिद्वयशेषित्वमात्रेणेश्वरकोटितेति केचित् । श्रीत.

**श्रियःश्रीः** - भगवान् । रा.

**श्रियो गुणभावमुभयेच्छाप्रयुक्तं केचिदाहुः** - केचित् श्रीभट्टपराशरपादादयः । श्रीत.

**श्रियो जीवत्वम्** - अधेयत्वविधेयत्वशेषत्वैरस्याजीवतेति केचित् । श्रीत श्रीयो

भगवत्साम्यम् ज्ञानानन्दाद्यत्यन्तसाम्यं जगज्जनकत्वशेषित्वशरण्यत्वप्राप्यत्वसाम्यञ्च। न्यासि.

**श्रियो भगवदहन्त्वम्** - भगवतस्स्वरूपनिरूपकत्वविशेषः। न्यासि.

**श्रियो भगवदिच्छात्वम्** - प्रणयावनु विधेयत्वम्। न्यासि.

**श्रीः** - ऐश्वर्यम्। कौ.तै. त्रयी। 'ऋचो यजूंषि सामानि। सा हि श्रीरमृता सताम्' इति श्रुतेः। पा. देवस्त्रीविशेषः। रा. भगवद्वक्षःस्थलैकाश्रया लक्ष्मीः। श्रीसू. भोग्यसम्पत्। श्रु. मुखशोभा। तै. या सर्वैः श्रीयते सा। श्रीत. राज्यादिभोग्यसमृद्धिः। ता. श्रीयत इति श्रीः। रत्न. श्रयत इति श्रीः। रत्न. श्रयन्ती वैष्णवं भावम्। रत्न. श्रावयतीति श्रीः। श्रीणातीति श्रीः। शृणातीति श्रीः। शृणोतीति श्रीः। रत्न. शोभा। वर. सम्पत्। समृद्धिः। रा. 'सा हि श्रीरमृता सताम्' इत्यधीता ज्ञानसम्पत्। रत्न. सर्वसमाश्रयणीया। प्राप्यत्वप्रापकत्वोपयुक्तसमस्ताकारवती, शृणोति श्रावयति इति व्युत्पत्या। श्रीसू. [श्रीयते, श्रयते, शृणोति, श्रावयति, शृणाति, श्रीणाति, इति षड्विधव्युत्पत्त्या निष्पन्नोऽयं शब्दः। (लक्ष्मीपरः)। र.]

**श्रीकरः** - श्रियं व्यूहादिष्वपि स्वानुरूपां करोतीति सः। सह.

**श्रीगर्भः** - (एवंप्राय) भोगक्रीडासाहित्येन श्रीः गर्भः तद्वदेव वर्धनीयाऽस्येति श्रीगर्भः। सह.

**श्रीदः** - श्रियोऽपि प्रणयसम्पद्दाता। सह.

**श्रीधरः** - औत्पत्तिकसम्बन्धेन लक्ष्मीधरः। सह.

**श्रीनिधिः** - श्रियः मञ्जूषा। सह.

**श्रीनिवासः** - मथनसमानीतायाः श्रियः लक्ष्म्याः निवासः वक्षोधिरोपणादिना स्थानमिति। श्रियः नित्योपघ्नः। सह.

**श्रीपतिः** - "अत्यन्तसमा समधिका वा मङ्गलदेवताऽपि स्वयं परतन्त्रत्वाभावेऽपि तच्छेषभावाधिकं स्वयमेवाभिलषतीति तादृशश्रीपतिः" (भगवद्गुणदर्पणे)। श्रीत. श्रियः समुचितनित्यस्वयंवरपतिः। सह.

[**श्रीपत्रम्** - बिल्वदलम्। सच्च.]

**श्रीमत्** - भोग्यसमृद्धिमत्। श्रु.

**श्रीमत्त्वम्** - 'अन्तरिक्षगतः श्रीमा'निति-वत् भगवत्सेवोद्यतत्वम्। स्तो.

**श्रीमतां वरः** - श्रियः नान्तरीयककटाक्षशीकरक्षणलक्षीभावसमासादितसाम्राज्यलक्ष्मीकाणां ब्रह्मादीनां वरः श्रेष्ठः। सह.

**श्रीमान्** - अनपायश्रीकः। रा. दिव्यभूषणसम्पद्भिः नित्ययुक्तः। परस्परदुर्घटापूर्वविकृतरूपपरिग्रहादपि सौन्दर्यलावण्यादिभिः अतिमनोहरदिव्यरूपः। सह. भगवद्विभूतिसंवर्धनरूपकैङ्कर्यलक्ष्मीयुक्तः। "लक्षणो लक्ष्मिसम्पन्नः"। पद. नित्ययोगे मतुप्। अनपायिन्या श्रीमहालक्ष्म्या नित्ययुक्तः पुरुषोत्तमः। या. श्रीः कमललोचनतया स्पष्टपरविभूतिः

अस्यास्तीति। सह. श्रिया नित्यसन्निहितः। सुन्दर. सम्पत्तिमान्। छा. साङ्गसशिरस्कवेदत्रयार्थविज्ञानरूपनित्यसम्पद्युक्तः। पद.

**श्रीवत्सः** - रोमावर्तविशेषः। 'श्रीवत्सेनोरपि श्रीमान् रोमजातेन राजते' इति हरिवंशे। लक्ष्मीनिवासस्थानम्। वि. [भगवद्वक्षःस्थलस्थो रोमपङ्क्तिविशेषः। या.]

**श्रीवत्सवक्षाः** - लक्ष्मीवाल्लभ्यसौभाग्यचिह्नं महापुरुषलक्षणश्वेतरोमावर्तविशेषः वक्षसि हृदये अस्येति। सह. श्रीकरो वत्सः श्रीवत्सः स च रक्तवर्णो मत्स्यविशेषः स दक्षिणे वक्षसि यस्य सः। रा.

**श्रीवल्लभः** - श्रियो वल्लभः प्रियतमः। श्रीः वल्लभा यस्येति वा। ता.

**श्रीवासः** - श्रियः नित्यस्वैरनिवासकल्पद्रुमोद्यानम्। सह.

**श्रीविभावनः** - श्रीनिरूप्यः। श्रिया विभाव्यते निरूप्यत इति सः। सह.

**श्रीशः** - श्रियोऽपि श्रीत्वनिर्वाहकः। सह.

**श्रीश्रीशव्यापारभेदः** - पुरुषकारत्वदण्डधरत्वादिमात्रम्। श्रीत.

**श्रीश्रीशस्वरूपभेदः** - स्त्रीत्वपत्नीत्वाप्रधानत्वमात्रं पुंस्त्वपतित्वप्रधानत्वमात्रञ्च तयोरन्योन्यमवान्तरस्वरूपभेदः। श्रीत.

**श्रीसुदर्शनार्यः** - श्रीहरितकुलतिलकवाग्विजयिसूनुः श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयः श्रीवात्स्यवरदार्यशिष्यः श्रुतप्रकाशिकासुबालोपनिषद्विवरणादिकर्ता।

**शृङ्गारगुणः** - (कटाक्षगतः) शृङ्गारकार्यः अलसवलितत्वादिरूपो गुणः। या.

**श्रुतः** - अवधृतः। श्रुतं शास्त्रावधृतयोरित्यमरः। रा. कीर्तिमान्। छा. (पक्वज्ञानाः। सच्च.)

**श्रुतम्** - शास्त्रजन्यं ज्ञानम्। भा. शास्त्रश्रवणम्। रा. शास्त्रज्ञानम्। रा. शास्त्राधिकाराभावे केवलसदुपश्रवणलभ्यम्। भा. श्रवणम्। मु. सर्वशास्त्रार्थयाथात्म्यवित्त्वम्। भा. ((भगवतः) वेदविदेव चाहमित्युक्तो गुणः। शास्त्रीयसर्वविषयज्ञानम्। शास्त्रश्रवणजन्यज्ञानम्। र.)

**श्रुतार्थापत्तिः** - अभिहितापर्यवसानम्। वे.

**श्रुतिः** - एकपदसामर्थ्यम्। श्रु. नित्यं श्रूयत इति; निरपेक्षशब्दः। भाव. श्रूयत नित्यमिति वेदः। वे. श्रूयते नित्यमिति श्रुतिः। ता. श्रवणम्। गी. श्रु. श्रूयते इति श्रुतिः शब्दः। रा.

**श्रुतिपरायणाः** - श्रवणमात्रनिष्ठाः। गी. श्रुतिः परं अयनं निष्ठा येषां ते श्रुतिपरायणाः। ता.

**श्रुतिशिरः** - उपनिषत्। त.

**श्रुतिसागरः** - (एवंप्रकार) गुणप्रवणानां श्रुतीनां, सागर इव सरिदोघानां, परमा पर्यवसानभूमिरिति। "नारायणपरा वेदाः" "वेदैश्च सर्वैरहमेव वेद्यः"। सह.

[**श्रुतिसीमन्तः** - उपनिषत्। या.]

**श्रुतित्वम्** - नित्यं श्रूयमाणत्वम्। स्तो.

**श्रुतिवित्** - वेदान्ततात्पर्यवित्। वै.
**श्रुतेक्षितपथम्** - श्रुत शास्त्रजन्यं ज्ञानं ईक्षितं विवेकादिजन्यं ज्ञानं ते पन्थाः उपायः यस्य प्राप्तौ तम्। भा.
**श्रुत्यर्थापत्तिः** - श्रुत्या भाविता अर्थापत्तिः श्रुत्यर्थापत्तिः। सर्वा.
**श्रेयः** - अभ्युदयः। वि. प्रशस्तम्। ता. प्रशस्तं मोक्षवर्त्म। क. प्रशस्यतमम्। प्रशस्यतरम्। ता. फलम्। नि. श्रेष्ठम्। बृ. सांसारिकफलसाधनम्। श्रु.
**श्रेयःश्रीमान्** - श्रेयोऽर्थं श्रयणीयश्रीकः। सह.
**श्रेयसः** - श्रेष्ठान्। बृ.
**श्रेयोरूपम्** - प्रशस्तरूपम्। भाव.
**श्रेष्ठः** - (नित्यसूरिभिः सदा अनुभवप्रीत्या स्तोत्रैः परिचर्यमाणः) प्रशस्यतमः। सह. प्रशस्ततमः। 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्य श्रादेशविधानात्। प्राणः। इन्द्रियव्यापाराणां सर्वथा प्राणाधीनत्वात् (प्राणस्येन्द्रियापेक्षया) श्रैष्ठ्यम्। छा. "प्रशस्यस्य श्रः" इत्यनुशासनात् प्रशस्यतमः। ता. सर्वकारणकारणम्। वेकौ.
**श्रेष्ठी** - श्रैष्ठ्यवान्। प्रभुः। कौ.
**श्रैष्ठ्यम्** - प्रशस्यत्वम्। 'प्रशस्यस्य श्र' इति प्रशस्यशब्दस्य श्रादेशात् श्रैष्ठ्यम्। श्रु.
**श्रोता** - शब्दसाक्षात्कर्ता। श्रु. श्रवण जन्यज्ञानाधिकारी। नि.
**श्रोतृ** - शब्दसाक्षात्कर्तृ। श्रु.श्रवणजन्य ज्ञानाधिकारी। नि.
**श्रोतृत्वम्** - (भगवतः) शब्दसाक्षात्कारवत्त्वम्। बृ.
**श्रोत्रम्** - शब्दमात्रग्रहणशक्तमिन्द्रियम्। य. शब्दादिपञ्चके शब्दमात्रग्रहणशक्त मिन्द्रियम्। न्यासिं. शृणोतीति सः परमात्मा। बृ.
**श्रोत्रचितः** - वाक्चित इतिवत्। अग्नि.
**श्रोत्रत्वम्** - स्पर्शविषयकसाक्षात्काराजनकत्वे सति शब्दविषयकसाक्षात्कारजनकेन्द्रियत्वम्। वा.
**श्रोत्रियः** - अधीतवेदः। नी. एकां शाखामधीतवान्। वि. एकशाखाध्यायी। 'एकां शाखामधीत्य श्रोत्रियः' इति श्रुतेः। श्रु. ब्रह्मनिष्ठः। श्रु.तै. वेदान्तवेदी। (...समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्) 'एकां शाखां अधीत्य श्रोत्रियः' इत्युक्तस्य अधीतस्वाध्यायमात्रस्य प्रकृतानुपकारकतया 'वेदान्तवेदिनं' इति श्रोत्रियशब्दस्य अत्र अकामहतश्रोत्रियपरत्वं दर्शितम्। त. श्रुतवेदान्तः। मु. श्रु. बृ.
**श्रौतत्वम्** - शाब्दज्ञानत्वम्। न्यासि.
**श्रौतः** - श्रोत्रान्तर्यामी। बृ.
**श्लक्ष्णवादी** - प्रियवचनशीलः। रा.
**श्लक्ष्णा** - अपरुषा। रा.
**श्लोकम्** - पुण्यश्लोकत्वम्। बृ.
**श्लोककृत्** - श्लाघनीयजगद्रक्षणादिकृत्। तै.
**श्वः** - परेद्युः। रा.
**श्वदंष्ट्रः** - त्रिकर्णकाख्यः पुष्पाकारः कर्ण-

पाश्र्वभूषणाविशेषः । 'कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम्' इति सज्जनः । 'त्रिकर्णकः श्वदंष्ट्रश्च' इत्यभिधानरत्नमाला। रा.

**श्वभ्रम्** - अवटम् । रा.

**श्वयितुं** - उच्छूनतां गन्तुम् । बृ.

**श्ववृत्तिः** - नीचसेवनम् । नीचवर्णादि सेवनम् । भा. सेवा । श.

**श्वापदाः** - 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः ।' इति हलायुधः । या.

**श्वेतः** - वैदर्भस्य सुदेवस्य ज्येष्ठः पुत्रः । रा.

**श्वेतम्** - शुक्लधातुम् । सत्त्वगुणम् । छा.

**श्वेतकेतुः** - आरुणिगौतमपुत्रः । कौ.

**श्वेताश्वतरः** - कश्चित् ऋषिः । श्वे.

**श्वोभावाः** - श्वः अभावः येषां ते; दिनद्वयस्थायिनो न भवन्ति ये ते । क.

## ष

**षट्त्रिंशत्तत्त्ववादः** - पाशुपतमतम् (श्रीकण्ठभाष्ये) "पृथ्व्यादिपञ्चभूतानि तन्मात्रापञ्चकं तथा । बुद्धीन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च । मनो बुद्धिरहङ्कारः कलाकालौ(काष्ठा) तथैव च । नियती रागविद्ये च प्रकृतिस्तद्गुणास्त्र(श्र)यः । धर्माधर्मौ तथा जीवः ईशः तत्त्वानि बुध्यतु ॥" सर्वा (आ).

[**षट्पार्श्वसंयोगः** - चतस्त्रो दिशः ऊर्ध्वमधश्च तेषु संयोगः । ई.]

**षडङ्गम्** - प्रपत्तौ षडङ्गत्ववादः योगे अष्टाङ्गत्वव्यपदेशवद् ग्राह्यः । न्याद. सत्यं तपो ब्रह्मचर्यं दानं निर्वेदनमनाशकमित्युपासनाङ्गषट्कम् । सुबा.

[**षडङ्गयोगः** - प्रपत्तिः । र.]

[**षड्गुणः** - षडवयवो गुण इति मध्यमपदलोपिसमासः गुणशब्दस्य गुणसमुदाये लक्षणा च । या.]

**षडरम्** - षट्कोणम् । सुद.

**षडर्थसंक्षेपः** - श्रीराममिश्रकृतो ग्रन्थः । न्यासि.

**षडायतनम्** - इन्द्रियषट्कम् (बौद्धमते) । श्री. नामरूपाभिव्यक्तिक्रमेण षडिन्द्रियायतनशरीरनिर्वृत्तिः (सौगतमते) । बृ. षडिन्द्रियाणि; "चक्षुः श्रोत्रं तथा घ्राणं रसनं स्पर्शनं मनः । रूपादिबोधहेतुत्वादेतान्यायतनानि षट् ॥" सर्वा (आ).

**षडूर्मयः** - अशनायापिपासे शोकमोहौ जरामृत्यू । श्रु. अशनायापिपासाशोकमोहजरामृत्यवः । भा.

**षड्धातुवादः** - षट्तत्त्ववादः । आत्म पञ्चभूतरूपषट्पदार्थवादः । सर्वा (आ).

**षड् भावविकाराः** - जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीत्यचेतनस्य विकाराष्षट् । सुबा.

**षड्विंशः** - पाशविशेषः । बृ. पुरुषोत्तमः। ता. [परमात्मा । र.]

**षड्विंशम्** - 'परमात्मा षड्विंश इत्यर्थः। षड्विंशवादिनाञ्च कालतत्त्वमेष्वेव विशेषणतयाऽन्तर्गतमित्यभिप्रायः' । मा.

**षड्विंशकः** - अव्यक्तोपक्रमसृष्टिविवक्षया जीवस्य पञ्चविंशकत्वात् परमात्मा षड्विंशकः । अक्षरतमसोरन्यतरोपक्रमेण सृष्टिकथने कालस्य पृथग्गणने वा जीवोऽपि षड्विंशकः । न्यासि.

[**षड्विधवलम्** - "मौलं भृत्यः सुहृत् श्रेणिः द्विषदाटविकंबल" मिति । या.]

**षड् विधा** - शरणागतेः षाड् विध्यं अङ्गाङ्गिसमच्चयाद्भवितुमर्हति । न्याद.

**षण्डः** - सङ्घातः । वर.

**षण्डम्** - बृन्दम् । सुन्दर.

**षाडपः** - षड्रससंयोगकृतभक्ष्यविशेषः; "सितामध्वादिमधुरो द्राक्षादाडिमजो रसः। सान्द्रश्चेत् षाडपः" । रा.

**षाड्गुण्यम्** - सन्धिविग्रहादिषट्कम् । रा.

**षाड्गुण्यपूर्णा** - 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजः प्रभावती' । रत्न.

**षाड्गुण्यविग्रहः** - षाड्गुण्यप्रकाशकविग्रहः । रत्न.

**षोडशकलः** - षोडशांशयुक्तमन आदिकलायुक्तः । छा.

**षोडशकलम्** - अण्डकारणं; एकादशेन्द्रियपञ्चभूतात्मकाः कलाः यत्र । भा.

**षोडशकलाः** - भूतानीन्द्रियाणि च । त. भूतेन्द्रियाणि । (पञ्च भूतानि एकादशेन्द्रियाणि); औपाधिकसमुदायैकदेशत्वात् कलात्वोक्तिः । त.

**षोडशवर्णः** - विसर्जनीयः । न्यासिटी.

**षोडशविकाराः** - मोक्षधर्मगतयाज्ञवल्क्यजनकसंवाद वसिष्ठकरालसंवादानुसारात् यमस्मृतिबलात् गीताभाष्यानुरोधाच्च शब्दादयः पञ्च विषयाः एकादशेन्द्रियाणि च क्षेत्राऽऽश्रितानि षोडशतत्त्वानि । सुबा.

**षोडशसंस्काराः** - गर्भादानपुंसुवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचौलोपनयनवेदव्रतचतुष्टयसमावर्तनविवाहाः । वि.

**षोडशान्तम्** - षोडशविकारोपेतम् । श्वे.

**षोडशी** - षोडशलक्षणविकारप्रविष्टः । तै.

## स

**सम्** - उपसर्गोऽयं एकीकरणरूपेऽर्थे प्रयुज्यते । ता.

**संयताञ्जलिः** - बद्धाञ्जलिः । रा.

**संयद्वसुः** - अङ्गारकपोषकः सूर्यरश्मिविशेषः । वि.

**संयद्वामः** - सर्वकल्याणगुणाश्रयः, सत्यसङ्कल्पो वा । (संयन्ति सङ्गतानि वामानि वननीयानि प्रार्थनीयानि यस्मिन् सः संयद्वामः) । छा.

**संयन्ति** - अन्तर्भवन्ति । भाव.

**संयमः** - आम्न्यंतकादिरूपेण संहारः । वि. इन्द्रियनिग्रहः । गी. धारणाध्यानसमाधीनां समुच्चितानां "संयमः" इति योगशासने परिभाषा, "त्रयमेकत्र संयमः" इति । ता. सर्गकालनिरोधः वि. संहारः । वि.

**संयमनम्** - यमशासनम् । श्री. कौ. शब्दादिविषयौन्मुख्यनिवर्तनम् । ता.

**संयानम्** - सम्यग्यानम् । स्वर्गप्रापक क्रियाजातमित्यर्थः । रा.

**संयावः** - यवगोधूमविकारो रज्जुरूपः । वि.

**संयुक्तचेष्टः** - 'युक्ताहारविहारस्य युक्त-चेष्टस्य कर्मसु' इत्युक्तरीत्या मितायासः । श्वे.

**संयुगम्** - युद्धम् । रा.

**संयेतिरे** - युद्धं कृतवन्तः । छा. युद्धं चक्रुः। श्रु.

**संयोगः** - "अत्यन्तसामीप्यम्" । न्यासि. पृथक्सिद्धानामाधाराधेयभावोपपादकः । श्रु. युतसिद्धयोः सम्बन्धः । ता. संयुक्त-प्रत्ययनिमित्तम् ।

**संयोगध्वंसः** - उत्तरसंयोगः । न्यासि.

**संयोगारम्भक्षणः** - उत्पत्तिकालाव-च्छिन्नसंयोगः । न्यासि. रत्न.

**संरब्धाः** - अन्योन्यसंस्पृष्टाः । छा.

**संरम्भः** - अभिनिवेशः । वेगः । रा.

**संराधनम्** - सम्यक्प्रीणनम्, भक्ति-रूपापन्ननिदिध्यासनम् । बृ. सम्यक्प्रीणनम्, भक्तिरूपापन्नं निदिध्यासनम् । श्री.

**संवत्सरः** - अब्दः । उदगयनानन्तर आतिवाहिकः । आदित्यः । आदित्यान्त-र्गतपुरुषः । तै. ध्यानविधिना पाताले सह संहारपरिकरैः कालप्रतीक्षः अनन्ते संवसतीति । वस निवासे । सम्पूर्वः भ्वादिः। प्रबुद्धेषुसमुद्धरणाय संवसतीति सह. प्रजापतिः । "संवत्सरः प्रजापतिः" "प्रजापतिस्संवत्सरो महान्" इति श्रुतेः । बृ. प्रजापतिः । "प्रजापतिस्संवत्सरो महान् कः" । वसन्ति सर्वभूतानि अस्मिन् (परमात्मनि) । तै.

**संवननम्** - कर्मणा वशीकरणम् । रा. वशीकरणम् । पा.

**संवरः** - इन्द्रियनिरोधः समाधिरूपः (जैनमते) । श्री. शमदमादिरूपा प्रवृत्तिः । बृ.

**संवरणम्** - सर्वदुःखनिवारकम् । वि.

**संवर्गः** - संवर्जननामगुणयोगी (संवर्जनं संग्रहणं, एकीकृत्य ग्रहणमित्यर्थः) । छा.

**संवर्तः** - प्रळयः । वै. सुन्दर. सर्वा (आ). प्रलयकालः । रा. बृहस्पतिभ्राता ब्रह्मर्षिः मरुत्तस्य (राज्ञः) याजकः । रा. महायोगी कश्चिदत्याश्रमी । न्यासिटी.

**संवर्तकम्** - संहारकम् । रा.

**संवर्तते** - सम्यग् वर्तते । छा.

**संवलनम्** - काम्यनैमित्तिकाधिकारयोः संसृष्टिः । नि.

**संवादः** - गृहीतार्थविषयं शब्दकारणकं ज्ञानं संवादः न्याप. भावग्राहि प्रमाणम् । भाव. सादृश्यम् । या.

**संवादयते** - संवादं कारयते (संवाद-यिष्ठाः) । कौ.

**संवासः** - अल्पग्रामः । रा.

**संविग्नम्** - कम्पितम् । रा.

**संवित्** - (ह्लादिनी) निरवधिकानन्दरूपा । वि. सङ्कल्पः । तै.

**संविदानः** - सम्यगुपास्यमानः । तै.

**संविभानम्** - सङ्कल्पः । मु.

**संविशति** - शेते । छा.

**संवृतः** - गूढप्रदेशः । रा. तमसः परस्तात्तनतया तामसानां मूढानां संवृतः आवृतः गूढ इति । सह.

**संवृतात्मा** - (तमसा) संवृतचैतन्यः । वि.

**संवृतिः** - मायाविशेषः । अधि.

**संवेगः** - संभ्रमः । रा.

**संवेदः** - प्रबोधः । रा.

**संवेदनम्** - साक्षात्कारः । न्यासिटी. स्वसत्तयैव स्वाश्रयं प्रति कस्यचित् विषयस्य प्रकाशनम् । त.

**संवेदितः** - लब्धसत्ताकः । प्र.

**संशमः** - निश्शेषोपशमः । छा.

**संशयः** - अव्यवस्थितव्यवहारकारणं ज्ञानम् । न्याप. एकस्मिन् धर्मिणि असंसर्गाग्रहसहितसाधारणधर्मप्रकारकविपरीतकोटिद्वयावगाहि ज्ञानम् । व. कोटिद्वयावगाहिसन्देहः । वर. चिन्ता । रा. चैतन्यस्य बहुभिः युगपददृढसंयोगः । सि. धर्मिग्रहणे मिथोविरुद्धानेकविशेषस्फुरणम् । य. सामान्यधर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधप्रतिपन्नमिथोविरोधानेकविशेषस्फुरणं संशयः । न्याप. एकस्मिन् धर्मिणि विरुद्धानेकविशेषावभासः (तत्त्वरत्नाकरे) । न्याप.

**संशयमनाः** - (संशय्यते अनेनेति संशयः संशयकारणम्) संशयहेतुभूतमनाः । संशये मनो यस्य । ता.

**संशितव्रतः** - दृढसङ्कल्पः । गी.

**संशितव्रतौ** - तीक्ष्णव्रतौ । रा.

**संशीलनम्** - अनुकूलतया शीलनम् । (आरम्भणसंशीलनं पुनः पुनरभ्यासः इति..)। त. पुनःपुनः अभ्यासः । श्रु.

**संशोकः** - स्वेदः । श्री.

**संशोकजः** - स्वेदजः (उद्भिज्जान्तर्गतः)। कौ.

**संशोकजम्** - स्वेदजम् । छा.

**संश्रयः** - बन्धः । वि. भोग्यत्वेन स्वीकारः । वै.

**संश्रवः** - दास्यामीति शपथपूर्वकं प्रतिज्ञानम् । रा.

**संश्रिताः** - सम्यगाश्रिताः; निरपेक्षहेतुत्वेनाभिमन्यमानाः । ता.

**संश्लेषः** - संश्लेषोऽत्र मनोवाक्कायसाध्यतदभिमतशास्त्रचोदितसपर्यामुखेन । वियोगोऽपि तद्विच्छेदः । गीसं.

**संसक्ताः** - अविरलाः । रा.

**सञ्जितम्** - संसक्तम् । सुन्दर.

**संसरणम्** - प्रकृतिसम्बन्धनिबन्धनो व्यापारः । व.

**संसर्गः** - अप्राप्तयोः प्राप्तिः । च.

**संसर्गाभावः** - कालविशेषविशिष्टदेशविशेषत्वम् । यथामध्याह्नविशेषितप्राङ्गणत्वम् । श्रु. घटस्याल्पत्वविशेषितदेशान्तरसंसर्गपिण्डत्वकपालत्वेष्वन्यतमः तद्देशापेक्षया संसर्गाभावः । श्रु. संसर्गारोपजन्य ज्ञानविषयाभावः । च.

**संसादः** - पीडा। रा.

**संसाय** - दग्ध्वा। "षो अन्तकर्मणि"। बृ.

**संसारः** - अचिद्भिरेकीकृत्य जन्मादि प्रवाहप्राप्तिः। त. कर्मकृताचित्सम्बन्धः। श्रु. कर्मिणः पुरुषस्य पूर्वपूर्वदेहप्रहाणेनोत्तरोत्तरदेहैरेकीकृत्य अविच्छिन्नसंसरणरूपोऽवस्थाप्रवाहः। जन्मादिचक्रपरिवृत्तिष्वविच्छिन्नतया एकाकारेण सरणात् संसारः। संसरति पुरषोऽस्मिन् इति अधिकरणघञन्तोऽत्र संसारशब्दः। ता. जन्म। च. देहसम्बन्धः। पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वम्। श्री. प्रकृतिसम्बन्धः। श्रु. स्थूलसूक्ष्मरूपेण अनादिकालानुवृत्तः विपरीत (जान?) ज्ञानसंकोचादिहेतुः प्रकृतिसम्बन्धः। व.

**संसारपाशाः** - पुण्यपापकर्ममूलभूता रागादयः। बन्धहेतुभूतपुण्यपापरूपकर्माणि। सच्च.

**संसारस्वरूपयोग्यता** - परतन्त्रचेतनत्वम्। स्वतः पारतन्त्र्यम्; नत्वैच्छिकपारतन्त्र्यम्। श्रीत.

**संसारित्वम्** - कर्मकृतदेहादिसन्ततिमत्त्वम्। त.

**संसारी** - पुण्यपापान्यतरवान्। वा.

**संसिद्धः** - कृतनिश्चयः। रा. सम्यक् योगयोग्यः। ता.

**संसिद्धिः** - परमपदप्राप्तिः। गी. पुरुषार्थः; समीचीनसिद्धिः संसिद्धिः। ता. मुक्तिसाधनम्। मुक्तिः। भा.

**संसृज्य** - सृष्ट्वा। श्वे.

**संस्कारः** - अनुभवस्मृत्यन्तरङ्गत्वात् ज्ञानावस्थाविशेषः। न्यासि. कस्यचित्सतोऽतिशयाधानम्। त. कार्यान्तरयोग्यताकरणम्। श्री. त. धर्मभूतज्ञानस्य द्रव्यत्वं न्यायतत्त्वात्मसिद्धिभाष्यादिसिद्धमनुसरतां तन्निष्ठस्मृत्याख्यविकारोत्पादकः संस्कारोऽपि तन्निष्ठः प्राप्तः। अन्तरङ्गत्वादबाधाच्च। ये तु परपरिभाषामनुसरन्तः तदनुगुणं तस्य गुणत्वं गृणन्ति तेषामात्मन्येव संस्कार इति विशेषः। न्याप. रागद्वेषमोहधर्माधर्माः (सौगतमते)। बृ. वेगो भावना स्थित स्थापक इति त्रिविधोऽयमिति वैशेषिकाः। न्यासि. (वाचः) व्याकरणकृता शब्दशुद्धिः। व्यक्तपदत्वमिति यावत्। रा.

**संस्कारस्कन्धः** - रागद्वेषमोहादयः। (बौद्धमते)। श्रु.

**संस्कृतात्मानः** - तापादिभिः पञ्चभिः संस्कारैः संस्कृताः आत्मानः देहाः येषां ते। भा.

**संस्तरः** - आस्तरणम्। आस्तीर्णं बर्हिः। रा.

**संस्तावः** - एकान्तसम्भोगभूमिः। अधिकरणे घञ्। बृ.

**संस्था**-निरोधः; प्रलयः।अनेनैवात्यन्तिकप्रलयरूपा मुक्तिरपि उक्ता भवति। भा. संस्थिता। गी.

**संस्थाः** - संस्थानानि, रूपाणि। श्री.
**संस्थानः** - सर्वमेतस्मिन् सन्तिष्ठते समाप्यत इति। सह.
**संस्थानम्** - अवयवसंयोगः (पूर्वपक्षे)। वा. आकारः। नी. आकृतिः। न्यासि. आस्पदम्। वि. यः यस्य असाधारणधर्मः सः। भाव. स्वासाधारणं रूपम्। भा. स्वासाधारणं रूपमिति भाष्यम्। न्यासि. विषयतासम्बन्धेन यावद्व्यक्तिषु सम्बद्धं तावद्विषयकज्ञानम्। सि. वा. स्थानीयम्। 'स्थानीयं निगमोऽन्यत्तु यन्मूलनगराद्बहि' रित्यमरः। कौ. संस्थानशब्दोऽत्र तत्तद-साधारणाकारपरः। त. [आकृतिः। र.]
**संस्थानसादृश्यम्** - सदृशसंस्थानम्। न्यासिटी.
**संस्थितम्** - संहृतम्। भा.
**संस्पष्टः** - सम्यग्विद्यया प्रख्यातः। कौ.
**संहतग्रीवः** - निबिडकण्ठः। रा.
**संहतत्वम्** - पृथक्स्थित्यर्हसंयोगवत्त्वम्। श्रु.
**संहतिः** - मेलनम्। वि.
**संहननम्** - शरीरम्। पा.
**संहननोपपन्नः** - समीचीनावयव-संस्थानेन युक्तः। रा.
**संहितम्** - संगतार्थप्रतिपादकम्। वा.
**संहिता** - प्रबन्धः। वि.
**संहिताकल्पः** - मन्त्रभागविधिः। वि.
**सः** - सिद्धान्तिते विशिष्टाद्वैते विभूति-भूतेष्वेषु आकुमारमखिलप्रसिद्ध्या स्वविषयं ज्ञानं स्यति अन्तयति निश्चयीकरोतीति। सह.
**सकर्मकत्वम्** - कर्मसाकाङ्क्षार्थबोधक-त्वम्; तादृशबोधौपयिकसमभिव्याहार-शालित्वम्। रत्न.
**सकला** - सावयवा। न्यासिटी.
**सकाशात्** - काशः ज्ञानम्; सङ्कल्परूप-प्रकाशसहितात्। स्वरूपात्। वि. ससंकल्पात्। काशनं प्रकाशनं सङ्कल्प-रूपज्ञानं तद्वत इत्यर्थः। यद्वा सकाशशब्दः पार्श्ववचनः। श्रु.
**सकृत्** - तन्त्रेण। श्रु.
**सकृत् दिवैव भवति** - सदैव अहर्भवति (सन्ततं सर्वविषयसाक्षात्कारो भवति)। छा.
**सकृद्वृष्टिमयी** - सिद्धिविशेषः, सकृत् वृष्ट्या सस्यनिष्पत्तिः। वि.
**सक्थ्यौ** - ऊरू। सक्थ्याविति छान्दसः प्रयोगः। बृ.
**सखा** - स[illegible]रः। मु.
**सखित्वम्** - समानचित्तवृत्तित्वम्।
**सखी** - सदृशी। वर.
**सख्यम्** - सर्वात्मना आनुकूल्यम्। भा.
**सगरः** - भरतनृपपुत्रस्यासितस्य पुत्रः। रा.
**सङ्कराभ्युपगमः** - संकरस्य जात्यबाधक-त्वाभ्युपगमः। न्यासि.
**सङ्कर्षः** - सङ्कर्षकाण्डः। षोडशाध्यायात्म-के (मीमांसा) शास्त्रे द्वादशाध्यायेभ्य उपरि चत्वारः अध्यायाः। अधि.

**सङ्कर्षणः** - चितचित्कर्षकः । संसारे चिदचितोरात्मनि समं कर्षणात् संसृषतीति; स्वात्मनि कर्षणं नयतीति वा। सह. ज्ञान-बलद्वन्द्ववान् संहारशास्त्रप्रवर्तनकरो व्यूहः। न्यासिटी. ज्ञानबलाभ्यां पूर्णः । य. [जीवाभिमानिभगवद्व्यूहमूर्तिभेदः । सच्च.]

**सङ्कर्षणाय** - जगदुपसंहर्त्रे । समित्येकीकारे। अविभक्तनामरूपत्वेन कर्षणाय। कर्षयत्याकर्षयति स्वस्मिन् जगत् उपसंहरतीति तस्मै। भा.

**सङ्कर्षणात्मकः** - सङ्कर्षणाधिष्ठितः। वि.

**सङ्कल्पः** - इच्छाविशेषः। षोड. इदं कृत्या साधयानीत्याकारकेच्छाविशेषः । रत्न. कर्तव्यताव्यवसायः। सर्वा (आ). प्रकृति-गुणभूतानां सत्त्वरजस्तमसां देवत्वमनुष्य-त्वादिसन्निवेशानां स्थौल्यकार्श्यशुक्ल कृष्णादीनां च स्वात्मानं प्रति गुणत्वेन अनुसन्धानम् । ता. प्रकृत्या तद्गुणैश्च आत्मानमेकीकृत्यानुसन्धानम् । गी. समित्येकीकारे । कल्पः भ्रान्तिज्ञानम् । प्रकृत्येति। देहरूपेण परिणतयेति शेषः। तद्गुणैरात्मनः एकीकरणं नाम गुणहेतुके कर्मविशेषे स्वहेतुत्वानुसन्धानम् । मनोरथविषयीकरणम् । ता. व्यवसायः । बृ. समन्तात्कल्प्यते अनेनेति; दोषः। श्रु. सं एकीकृत्य कल्पः। स च देहात्मगोचरः। ता.

**सङ्कल्पना** - उत्पत्तिः। वि.

**सङ्कल्पते** - सङ्कल्पं करोति । सम्यक् कल्पते, स्वकार्यसमर्थं भवति। समृद्ध्यति। छा.

**सङ्कल्पयते** - इदं कर्तुं युक्तमिति सङ्कल्पयति। छा.

**सङ्कल्पसिद्धिः** - सिद्धिविशेषः। सङ्कल्पे-नाभिमतसिद्धिः। वि.

**सङ्कीर्णम्** - विप्रकीर्णम्। भाव.

**सङ्कुचितः** - नष्टः। रा.

**सङ्क्लृप्ताः** - सङ्कल्पसिद्धाः। छा.

**सङ्केतः** - वाच्यवाचकभावः। श.

**सङ्कोचः** - अवयवापचयः। च. एकदेश-बाधः। भाव. प्रकाशो द्र.

**संक्रमः** - दारुफलकनिर्मितसञ्चारमार्गः। रा.

**संक्रमणम्** - तृणजलूकान्यायेन देहा-द्देहान्तरप्राप्तिः। रा.

[**सङ्क्रान्तिपुष्पम्** - नन्द्यावर्तकम्। पाञ्च.]

**संक्लिष्टधर्मा** - धर्मविलोपकृत् । अकृत्यकारीत्यर्थः। रा.

[**संक्षिप्तः** - सङ्क्षिप्तदेहः । "विभक्तधनेषु विभक्तशब्दवत् सङ्क्षिप्तदेहे संक्षिप्तशब्दः उत्तरशब्दलोपेन द्रष्टव्यः । गम्यमानस्या-प्रयोगो लोप" इति कैयटः। या.]

**संक्षुब्धदुग्धोदधिः** - सङ्गतः क्षुब्धः मन्थाचलः यस्मिन्। या.

**संक्षेप्ता** - तत्र (संसारे) प्रवृत्तान् संकुचित-स्वाभाविकज्ञानप्रभावान् कर्तुं शीलमस्येति। सह.

**सङ्खिदेत्** - उत्पाटयेत्। छा.

**सङ्ग्यम्** - युद्धम्। रा.

**सङ्ख्या** - एकादिप्रत्ययव्यवहारविषयः। न्यासि. ज्ञानम्। वेकौ. रा. "तत्तद्वस्तु-स्वरूपम्" (न्यायतत्त्वे)। न्यासि. बुद्धिः। भाव. गी. "संयोगः"। बुद्धिविशेष-सम्बन्धो हि संयोग एव। यद्वा संघातैकत्वं संयोगः (न्यायतत्त्वे)। न्यासि.

**सङ्ख्याकृततारतम्यम्** - एकत्र पर्याप्त-संख्याव्याप्यत्वव्यापकत्वान्यतरावच्छेदक-संख्याविभाजकधर्मवत्संख्यापर्याप्त्यधि-करणत्वमन्यस्य। वा.

**सङ्गः** - कर्मणि ममता। पुत्रमित्रादिषु सम्बन्धिषु संश्लेषस्पृहा। गी. विषयसङ्गः। वि. सम्बन्धः; अनुभवः। इच्छा। ता.

**सङ्गम्** - विषयासक्तम्। सज्जत इति। भा.

**सङ्गतम्** - सत्सङ्गमः। क.

**सङ्गतिमाला** - श्रीविष्णुचित्तविरचितो ग्रन्थः। न्यासि.

**सङ्गतिविशेषः** - हेतुहेतुमद्भावादिः सम्बन्धः। (सङ्गतिविशेषेण विशिष्टक्रमम्)। त.

**संगमयिता** - संहर्ता। श्रु.

**संगवः** - उदयानन्तरकालः। भा.

**सङ्गसीय** - सङ्गतो भूयासम्। वै.

**सङ्गीतम्** - वाद्यगीतनृत्तत्रिकम्। "गीतं नृत्तं च वाद्यं च त्रयं सङ्गीतमुच्यते" इति सङ्गीतरत्नाकरे। या.

**संक्षिप्तः** - सङ्क्षिप्तदेहः। "विभक्तधनेषु विभक्तशब्दवत् सङ्क्षिप्तदेहे संक्षिप्तशब्दः उत्तरशब्दलोपेन द्रष्टव्यः। गम्यमानस्या-प्रयोगो लोप" इति कैयटः। या.

**सङ्गृहीताः** - अवच्छिन्नाः। सर्वा (आ).

**सङ्ग्रहः** - अग्निसाक्षिकपाणिग्रहणम्। आर्जनम्। रा. परिग्रहः। सर्वा. भक्तैरयत्नेन सङ्गृह्यत इति। सह. व्याडिकृतो ग्रन्थ विशेषः। रा. शब्दः। सङ्गृह्यतेऽनेनेति। क. सङ्ग्रहणम् एकीकृत्य स्वीकरणं, स्वानुष्ठाने समानाभिप्रायतया सयूथ्यतापादनम्। ता. सम्पादनम्। रा.

**सङ्ग्रहाः** - लोकाः। सङ्गृह्यन्ते भोग्यतया परिगृह्यन्ते भोक्तृभिरिति संग्रहाः लोकाः। रा.

**सङ्घः** - केनचिदुपाधिना सङ्गृहीताः (अव-च्छिन्नाः) सम्बन्धिनः (पदार्थाः)। सर्वा.

**सङ्घर्षः** - विरोधः। च.

**सङ्घातः** - अवयविद्रव्यम्। सर्वा. निबिडः सन्निवेशः। रा. संहन्यमानेषु वस्तुष्वेकोपा-ध्यवच्छेदः। न्यासिटी.

[**सचमानः** - अनुप्रविशन्+'षच' समवाये इति धातुः। सच्च.]

**सचिवः** - सहायः। या.

**सच्चित्तः** - सद्विद्यानिष्ठः। वे.

[**सच्छिद्रपञ्चकालज्ञः** - अन्यार्थ-कर्मान्तरितपञ्चकालप्रक्रियानिष्टः। पाञ्च.]

**सजति** - सक्तो भवति। सुन्दर.

**सज्योतिः** - ज्योतिश्चक्रसहितः। वि.

**सञ्चयम्** - यावज्जीवनं वृत्तिः। भा.

**सञ्चरः** - डोलायितः, सन्देहरूपः। छा.

**सञ्चरति** - इदं पदमत्र 'तिष्ठती'त्यर्थे भूयो भूयः प्रयुक्तम्। "सर्वगतस्य परमात्मनो

देशाद्देशान्तर संयोगरूपसञ्चारा सम्भवा''दिति। सुबा.

**सञ्चितसञ्चयः** - सम्पादितधननिचयः। रा.

**सञ्चवनम्** - चतुश्शालम्। रा.

**सञ्चायते** - विभक्तम्। विभागश्च न च्छित्त्वा भित्त्वा क्रियते। किन्तु केनचिदाकारेण व्यावृत्तिः कार्योपयोग्यंशस्य। परब्रह्मप्रकारभूतस्य कार्यानुरूप्यापत्तिर्विभागः। सुबा.

**सञ्जिहानः** - आसनमुज्झन्। उत्तिष्ठन् इत्यर्थः। श्रु. त्यजन्। शयनं परित्यजन्। छा.

**सञ्जीवनम्** - बाह्यकुदृष्ट्यनपहार्यप्राणस्थापनम्। (प्राणात्मसञ्जीवनीम्)। त.

**संज्ञा** - नाम। श्री. श्रु. संज्ञायमानावस्था (सर्गादिक्रियासाधनभूता ब्रह्माद्यात्मिकावस्था)। वि. भूतसङ्घातेन एकीकृत्य ज्ञानम्। बृ.

**संज्ञास्कन्धः** - सविकल्पकप्रत्ययः। (बौद्धमते)। श्रु. भाव.

**संज्ञानविकल्पः** - संज्ञानुविद्धप्रत्ययः। च.

**संज्ञाविपर्ययः** - मूर्च्छा। रा.

**सत्** - अभिव्यक्तनामरूपम्। अग्नि. ईषन्नामरूपकार्याभिमुखम्। छा. चाक्षुषप्रत्यक्षोपलभ्यम्। बृ. चित्। श. चेतनः। प्र. श. जीवान्तर्भूतः। भा. निरुपाधिकास्तित्वयोगि। नी. परं ब्रह्म। पा. परमार्थम्। भा. प्रामाणिकं मुमुक्षोरुपादेयं च। सर्वा. प्रत्यक्षम्। प्र. प्रशस्तधर्मत्वात् सत्। सदिति वेदनार्हम्; 'प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते' इति। सह. प्रख्यातम्। विद्यमानम्। रत्न. प्रमाणसम्बन्धि कालसम्बन्धि वा। च. ब्रह्म। श्री. श्रु. सर्वा. मानसम्बन्धयोग्यम्। ''अत्र सच्छब्दो मानसम्बन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते। छा. मूर्तम्। बृ. मूर्तप्रपञ्चः। श्वे. 'यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत् सत्'। कौ. वर्तमानम्। प्र. विद्यमानम्; साधु, कल्याणम्, पुण्यम्, प्रशस्तम्। गी. विद्यमानम्। शक्तिमत्। नी. सूक्ष्मम्। मु. सूक्ष्मचेतनाचेतशरीरकः परमात्मा। अधि. स्थूलम्। प्र.

**सततम्** - सर्वकालम्। गी.

**सततयुक्तः** - सततयोगायाशंसमानः। नित्ययुक्तः। ता.

**सततयुक्ताः** - सततं योगमाशंसमानाः। त.

**सततयुक्तानाम्** - सततयोगमाशंसमानानाम्। 'आशंसायांभूतवच्च' इति क्तः। (तेषां सततयुक्तानां ....)। त.

**स तन्मयः** - सः परमात्मा तत्प्रचुरः तदात्मक एव, नान्यात्मकः; अनन्यप्रेर्य इति यावत्। श्वे.

**सतां गतिः** - निवृत्तिधर्मनिरतानां प्राप्यः। स्वच्छन्दचेष्टितैरपि प्रणतप्रियङ्करः। सह.

[**सतां दृष्टिः**- भगवान्। 'चक्षुर्देवानामुत मर्त्यानाम्' इति श्रुतेः। चक्षुर्वत् ज्ञानपदः प्रीतिगोचरश्च। या.]

**सतालः** - नरकयातना, यत्र तालद्रुम प्रकाण्डेन छेदनम्। वि.

**सतासती** - (रूपे) चिदचिती। श्रु.

**सति संपत्तिः** - शरीरेन्द्रियाधिष्ठातृत्वादिव्यापारान्तरराहित्येन ब्रह्मणि स्थितिः। श्रु.

**सती** - साध्वी। बृ. [पतिव्रता। र.]

**सतीनकः** - कलायः। वि.

**सत्कर्ता** - सपी(र्वा?)यो दण्डापूपिकान्यायात् ? सज्जनान् सत्करोति पूजयतीति सत्कर्ता। "सज्जनप्रतिपूजकः"। सह.

**सत्कर्म** - फलसङ्गकर्तृत्वरहितं केवलभगवदाराधनरूपं नित्यनैमित्तिकभेदेन वर्णाश्रमविहितं कर्म। वै.

**सत्कारमानपूजार्थम्** - मनसा आदरः सत्कारः। वाचा प्रशंसा मानः। शारीरो नमस्कारादिः पूजा। गी. पुनरुक्तिशङ्कापरिहाराय सत्कारमानपूजाशब्दानां क्रमान्मनोवाक्कायनिष्पाद्यसम्भावनापरत्वोक्तिः। ता.

**सत्कार्यवादः** - (विशिष्टाद्वैतमते) उपादानातिरिक्तं कार्यद्रव्यं नास्ति। तत्र अवस्थाभेदमात्रं स्वीक्रियते। सर्वा. सतो द्रव्यस्यावस्थान्तरयोगः। च.

**सत्कीर्तिः** - (ईदृशप्रणतविधेयत्वरूप) सौशील्यसत्त्वेनास्यातिमहती कीर्तिरिति। सह.

**सत्कृतः** - सज्जनैः श्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेव अप्रतिपन्नप्रत्युपकारितुष्टतया सदकारि पूजितः। सह.

**सत्कृतिः** - सत्यः सकलसंसारनिगलच्छेदिन्यः दधिनवनीतचोरणोलूखलबन्धरिङ्खणरासक्रीडादिका मुग्धकृतयोऽस्येति। सह.

**सत्क्रिया** - यागादिः। वि.

**सत्ख्यातिः** - ज्ञानविषयसत्यत्वम्। य.

**सत्ता** - आद्यक्षणसम्बन्धः। शर. उत्पत्तिः। वै. कालनिष्ठाधिकरणता। वा. तत्तत्प्रमाणयोग्यता। न्यासि. सतां सत्तापि स्वयमेवेति। सह. [स्वरूपानुबन्धिदास्यवृत्तिः। र.]

[**सत्त्वम्** - अर्थक्रियाकारित्वम्। र.]

**सत्ताप्रयोजकत्वम्** - अनित्यपदार्थविषये चेदं स्वरूपोत्पादकत्वरूपम्। श्रीत.

**सत्तामात्रम्** - अपक्षयादिरहितम्। सत्त्वैक गुणकम्। वि. सतो भावः सत्ता सैव सत्तामात्रम्; सच्छब्दः सततैकरूपवस्तुवाची। वृद्धिक्षयादिरहितमित्यर्थः। भा.

**सत्पतिः** - साधुरक्षकः। प्र.

**सत्पथः** - आकाशः। दया.

**सत्पथाचारः** - सत्पथे स्वाभाविकदास्यमार्गे आचरणं भक्तानां प्रवर्तनमस्येति। सह.

**सत्परायणः** - सन्तोऽस्य स्वप्राणभूततया स्वात्मतया च परायणमिति। सह.

**सत्पुत्राः** - सत्त्वं धर्मानुवर्तित्वम्। भा.

**सत्यः** - जीवात्मा (प्रकृत्यादिवत् स्वरूपविकार रहितः)। ई. निरुपाधिकसत्तायोगी। अच्यु. मन्वादिषु तत्कालसमाश्रितेषु (मत्स्यावतारकाले) सत्सु साधुरिति सत्यः।

अस्तेश्शतरि सच्छब्दो व्युत्पादितः, ततः "तत्र साधुः" इति यत्। भत्त्वाज्जश्त्वाभावः। सत्सु साधुः । सह. सात्त्विकशास्त्र-प्रतिपाद्यतया यथार्थवैभवः । सह.

**सत्यम्** - अपरिणामि । अबाधितम् । अबाधितम्; प्रमाणमिति यावत् । भा. अविनाशि । मु. अविपर्यस्तम् । षड्भाव विकारशून्यमित्यर्थः । रा. अव्याकृत-पञ्चभूतात्मकम् । बृ. उत्कृष्टम् । प्र. एकरूपम् । श्री. कैवल्यम् । नि. चेतना-चेतननियन्तृ । छा. चेतनाचेतनयोर्नियन्तृ। श्री. 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इति दहरविद्यायां वक्ष्य-माणत्वात् सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः सत्यशब्दो ब्रह्मपरः । तस्य सततैकरूपत्वेन निर्विकारत्वात् सत्यत्वम् । छा. निरुपाधिकसत्तायोगि । तै.श्री.वा. न्यासिटी. नित्यम् । उत्पत्तिविनाशादि षड्भावविकारशून्यम् । मु. निर्विकारम् । च. तै. बृ. लोकहितम् । तै. सत्यवचनम्। मु. निर्विकारम् । अथ यत् सत् तदमृत-मित्यस्मिन् प्रकरणे सत्यशब्दनिर्वचनरीत्या चेतनाचेतननियामकं वा । छा. परमात्मा (प्रत्यगात्मात्मकः) । बृ. परव्योम । भा. पञ्चीकृतपञ्चभूतात्मकं कार्यमण्डलम् । बृ. परंब्रह्म । श्री. परमार्थः । रा. प्रमाविषयभूतम्। अधि. प्रमाणेनोपलभ्यते (प्रामाणिकम्) । श्री. ब्रह्म । वृ. श्री. छा. भूतहितं यथार्थं च वाक्यं सत्यम् । (सत्यार्जवदयादानाहिं-सानभिध्याः कल्याणानि ....) । त. भूत-हितवचनम् । मु. भूतहितकारित्वविशिष्टा-नृतावदनम् । भूतहितवहं वाचिकं वा । भूत-हितावहं वचः । भा. भूतहितं यथार्थं वाक्यम् । त. भूतहितम् । श्रु. यथादृष्टार्थ-गोचरभूतहितवाक्यम् । गी. यथाज्ञानं भूतहितरूपभाषणम् । गी. यथादृष्टविषयं भूतहितरूपवचनम् । भा. यथार्थं भूतहित-वचनम् । सुबा. यथादृष्टविषयभूतहित-रूपवचनम् । गी. क्वचित् विपरीतदर्शिना यथादृष्टवचने नासत्यवादीति दूषण-प्रसक्तिः; न तत्र वक्तुरपराधः; भ्रमस्य दैवागतत्वात् यथार्थ विषयभूतहितवचनमेव तु सत्यम् । परमार्थत्वेऽपि परानर्थहेतुर्वचनं न सत्यम् । ता. विकाररहितम् । श्रु. 'सत्यं भूतहितं प्रोक्तमार्जवं समचित्तता । दया भूतहितैषित्वं क्षमा द्वन्द्व-सहिष्णुता ॥' इत्यादि प्रमाणं द्रष्टव्यम् । भाव. सततैक-रूपम् । निर्विकारमित्यर्थः । दया. स्वरूप-स्वभावविकाररहितम् । अधि. गुणतोऽप्य-विकारम् । मु. स्वभावान्यथाभावरहितम् । भा. स्वभावान्यथाभावलक्षणविकाररहितम्। तै. स्वरूपान्यथाभावशून्यं चेतनजातम् । तै. [अविकारि । ई. सततैकरूपम् । निर्विकार-त्वेन निरुपाधिकसत्तायोगीत्यर्थः । र.]

**सत्यकामः** - अत्र सत्यकामशब्दो न कामनायाः सत्यत्वपरः । अमोघाशत्वस्य सत्यसङ्कल्पशब्देनैव सिद्धत्वात् । नापि काम्यत इति व्युत्पत्त्या गुणमात्रपरः ।

कतिपयगुणान्तराणां पृथगुक्तेः । अतो भोग्यभोगोपकरणभोगस्थानरूपा नित्याः कामाः सन्तीत्युच्यते। तदक्षरे परमे व्योमन्नित्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इति व्यासार्यैरुक्तम् । छा. अपूर्णकामत्वरहितः। ता. अवितथकामः। भाव. नित्यभोग्यानन्तकल्याणादिविशिष्टः। गद्य. स्वतः सत्यं परं ब्रह्मैव कामयमानः । मु.

**सत्यकामत्वम्** - 'तदक्षरे परमे व्योमन्नित्युक्तनित्यविभूति विशिष्टत्वम्। श्रु. नित्यभोग्यवत्वम्। गद्य.

**सत्यजित्** - कश्चित् यक्षः । वि.

**सत्यत्वम्** - अमोघत्वम् । गद्य. चेतनाचेतनयोः नियन्तृत्वम्। निर्विकारत्वम्। श्रु. निरुपाधिकसत्तायोगित्वम्। अधि. यथावस्थितार्थकथनरूपमर्थसत्यत्वम् । तै. विद्यमानत्वम्। च.

**सत्यधर्मः** - सत्यं ब्रह्म धर्मः आश्रयः साधनं यस्य सः, ब्रह्मैकनिष्ठः ब्रह्मदर्शनार्थी। बृ.

**सत्यधर्मपराक्रमः** - सत्याः अवितथाः धर्माः कल्याणगुणाः पराक्रमाः चेष्टितानि च यस्य सः। सह.

**सत्यधर्मपरायणः** - निरुपाधिः सात्त्विकचोदनाधिकारिधर्मफलकः उत्तमधर्मोऽस्य परायणं परमप्रीणनमिति। सह.

**सत्यधर्मा** - सत्यवृत्तः। आर्जवात् सत्यः अकुटिलः धर्मः वृत्तं यस्येति सः। सह.

**सत्यनामा** - यथार्थनामा। वि.

**सत्यपरम्** - चिदचिदात्मकजगत् सत्यं ततः परं विलक्षणम्। भा.

**सत्यपराक्रमः** - आश्रितेषु सत्यः अकैतवः पराक्रमः वृत्तिः अस्येति। सह.

[**सत्यमनोरथः** - सत्यसङ्कल्पो भगवान्। या.]

**सत्यमेधाः** - सत्या नटनमात्रत्वाभावादवितथा मेधा वल्लववसुदेवादिसाजात्याभिमानिनी बुद्धिरस्येति। सह.

**सत्ययज्ञः** - कश्चन ऋषिः । छा.

**सत्यवचाः** - सत्यं वचो यस्य सः । तै.

**सत्यवादी** - अतिसंकटावस्थायामपि सत्यवचनशीलः। रा.

**सत्यविक्रमः** - शत्रुनिबर्हणक्षमः। रा.

**सत्यव्रतम्** - सत्यसंकल्पम्। भा.

**सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पः। छा. श्रु. प्रतिहतसङ्कल्परहितः । गी. अमोघ संकल्पः। गद्य.

**सत्यसङ्कल्पत्वम्** - अप्रतिबद्धसंकल्पत्वम्। भाव. अमोघाशत्वम्। श्रु.स्वावतारपर्यन्तापूर्वभोग्यसृष्ट्यादौ अमोघसङ्कल्पत्वम्। गद्य.

**सत्यसत्यम्** - जीवः सत्यं, तस्मादपि सत्यं धर्मतोऽपि निर्विकारम्। "प्राणा वै सत्यं तेषामेष सत्यं "इति श्रुतिः। भा.

**सत्यसन्धः** - अकैतवप्रतिज्ञः; सत्या अकैतवा सन्धा प्रतिज्ञा यस्य सः । सह. सत्यप्रतिज्ञः। रा.

**सत्यसन्धाः** - सत्ये सन्धा अभिसन्धिः येषां ते। भा.

**सत्यस्य सत्यम्** - ब्रह्म; (प्राणा वै सत्यं तेषामेष सत्यम् इति श्रुतिः) । श्री.
**सत्याः कामाः** - भगवद्गुणाः । न्यासि.
**सत्यानृतम्** - वाणिज्यम् । भा.
**सत्याभिध्यायी** - सत्यसङ्कल्पः । वि.
**सत्याभिसन्धः** - सत्याभिसन्धिः । छा.
**सत्योपयाचनः** - शरदण्डानदीपश्चिम-कूलस्थः पुण्यवृक्षः । रा.
**सत्रम्** - आसनोपायचोदनाचोदितो यागः। वि. प्रवृत्तिधर्मनिष्ठानां गतिः । सह.
**सत्रायणम्** - गवामयनादि सत्रम् । छा.
**सत्त्वम्** - अन्तःकरणम् । भा.गी. ज्ञान विशेषः, व्यवसायः । ता. अन्तःकरणं सत्त्वगुणो वा । त. अर्थक्रियाकारित्वम् । सर्वा. भा. अबाधितत्वम् । नी. अविनाश-स्वभावः । यथोक्तं पराशरेण "तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् किञ्चित् कदाचिद्द्विज वस्तुजातम्" "सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यम-सत्यमन्यत्" । गी. असद्व्यावृत्तिः । नी. अस्तीति प्रतिपन्नत्वम् । श्रु. कालसम्बन्धः। रत्न. जन्तुः । ता. प्रकाशसुखहेतुभूतः कश्चन गुणविशेषः । स्तो. प्रकाशसुखलाघवादि-निदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यम् । न्यासी. प्रतिपन्नदेशकालादौ अनिवर्तत्वम्। न्यासि. प्रमा विषयत्वम् । रत्न.प्रमायाः सम्बन्धयोग्यत्वम् । नी. प्रमाण-सम्बन्धार्हत्वम् । श्रु. प्रशस्ताध्यवसायः । रा. प्राणिजातम् । गी. प्राणः । प्राणी । रा. प्रामाणिकत्वम् । सर्वा. बद्धजीवः । च. बद्धजीवः । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इति नामानुशासनात् । श्रु. बुद्धिः। क. ब्रह्मज्ञानम् । च. श. मनोबलम् । रा. मानसम्बन्धयोग्यत्वम् । श्रु. धैर्यम् । भा. धैर्यम् । सत्त्वगुणः । वि. लघुत्वप्रकाशादि-हेतुभूतपृथिव्यादिस्वभावविशेषः । श्री. व्यवसायः । शारीरः सारः । रा. शेषभूतस्व-रूपस्य 'नाकिञ्चित्कुर्वतश्शेषत्वम्" इति न्यायसिद्धं कैङ्कर्यरूपं सत्त्वम् । यद्वा स्वाभाविकरूपम्, गुणाष्टकाविर्भावः । यद्वा सत्त्वम् ब्रह्मज्ञानम् । "अस्ति ब्रह्मेति चेद्वेद" इत्याद्यनुरोधात् । च.
**सत्त्वादिकार्यविभागः** - 'सर्वद्वारेषु' 'लोभः प्रवृत्तिः', 'अप्रकाशोप्रवृत्तिश्च' इति गीतोक्तः । न्यासिटी.
**सत्त्वादेरनुद्भवः** - उद्भूतगुणान्तरसामा-नाधिकरण्यम् । रत्न.
**सत्त्वादेस्साम्यम्** - उद्भवरहितत्वे सति उद्भूतगुणान्तरसामानाधिकरण्याभावः । रत्न.
**सत्त्वाद्युद्भवः** - सत्त्वादिषूद्भवश्च तत्त-त्कार्योपधायकशक्तिविशेष एव । अद्रव्येषु शक्त्यनभ्युपगमे तत्तद्द्रव्यनिष्ठतादृशशक्ति-सामानाधिकरण्यम् । तत्तत्कार्योप-धायकत्वप्रकारकभगवदिच्छाविषयत्वमेव वा । रत्न.
**सत्त्वप्रवर्तकः** - मोक्षार्थज्ञानहेतुसत्त्व गुणोन्मेषहेतुभूतकटाक्षशाली । श्वे.

**सत्त्वप्रवर्तनकरः** - सत्त्वकार्यपालनकरः। वै.

**सत्त्वभृत्** - अप्राकृतं शुद्धसत्त्वगुणं-बिभर्तीति। वि.

**सत्त्वयुक्ताः** - व्यवसायवन्तः। रा.

**सत्त्वयोगः** - बलयोगः। रा.

**सत्त्ववान्** - निर्मलमनस्कः। रा. परम प्रकाशलाघवसुखसम्पदा मोक्षमूलं सत्त्वं साक्षादधिष्ठेयमस्येति। सह.

**सत्त्ववन्तः** - महात्मानः। सात्त्विकाः। रा.

**सत्त्वशुद्धिः** - अन्तःकरणनैर्मल्यम्। छा.

**सत्त्वसंशुद्धिः** - सत्त्वस्यान्तःकरणस्य रजस्तमोभ्यामस्पृष्टत्वम्। गी.

**सत्त्वस्थः** - सत्वगुणायत्तसम्यक्-ज्ञानपूर्णः। न्यावि. हृदयस्थः। सह.

**सत्त्वस्थाः** - रजस्तमोभ्यामस्पृष्टविशुद्ध-सत्त्वाः। म.

**सत्सि** - सीदसि (वर्तसे)। तै.

**सदक्षरम्** - (अक्षरसत्) अपक्षय-विनाशादिरहितसत्तावान्। सह.

**सदसत्** - चिदचिदधिष्ठातृ। वि.

**सदसस्पतिः** - नित्यसूरिपरिषन्नायकः। तै.

**सदसद्भावभावनः** - सद्भावे साधुभावे च सदिति; वस्तूनां सदसद्भावौ करोति जानातीति वा। वि.

**सदसद्रूपः** - भावाभावरूपः। वि.

**सदसद्रूपी** - मूर्तामूर्तस्वरूपवान्। वि.

**सदसद्विलक्षणम्** - सद्वैलक्षण्य-मसद्वैलक्षण्यञ्च यस्य। नी.

**सदसदात्मकः** - चेतनाचेतनात्मकः। भा.

**सदा** - यावत्कल्पम्। वि.

**सदामर्षी** - संसारसागरादुत्तार्य आत्म-प्रापणात् प्रभृति सर्वकालं तेन कृतप्रतिकृतं मर्षितुं निर्वोढुं शीलमस्येति। सह.

**सदायोगी** - सततजागरूकत्वात् सदा योगः अस्यास्तीति। सह.

**सदाशिवः** - सर्वदा निरवद्यः। तै.

**सदास्फुटः** - अतिरोहितस्वरूपः। वि.

**सदाशान्तम्** - नित्यानुकूलम्। भोग्यमिति वा। वर.

**सदृशदरिद्रम्** - सदृशवस्त्वन्तररहितम्। वर.

**सदेशकेशम्** - समानकेशम्। सुन्दर.

**सदैकम्** - जन्मवृद्ध्यादिरहितम्। श्रु.

**सदैकरूपरूपः** - प्रथमो रूपशब्दः स्वभाववाची एकस्वभाव इत्यर्थः। श्रु.

**सदैकरूपरूपाय** - सदैकरूपं तुल्यप्रकारं हेयप्रत्यनीकतया कल्याणैकस्थानतया च स्वरूपतुल्यं रूपं विग्रहः यस्य सः (तस्मै)। वि.

**सदोषम्** - सदुःखम्। गी.

**सद्गतिः** - उत्पन्न एव असुरकृतापदपनो-दनः सतां गतिः प्राप्यः। सह.

**सद्भावः** - सत्यम्। सत्पदार्थः। वि.

**सद्भूतिः** - सतां भूमिः; पुत्रमित्रबन्धुदूत-सारथ्यादिबहूभवनेन विभूतिरिति। सह.

**सद्वर्त्म** - नक्षत्रपथः । पा.

**सद्वृत्तः** - परसमृद्ध्येकप्रयोजनः । रा.

**सद्विद्या** - जगज्जन्मस्थितिलयहेतुत्वादिगुणप्रकारकसच्छब्दवाच्यपरब्रह्मविशेष्यकोपासनम् । वा. परभक्तिविशेषः । न्यासि.

**सधस्थात्** - सह तिष्ठत्यस्मिन्निति सधस्थं स्थानम् (तस्मात्) । तै.

**सन्** - पण्डितः । नी. प्रामाणिकतमः । अधि. ["अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इत्युक्तप्रकारेण श्रीभाष्यपरिचयशाली । र.]

**सनकगुरुः** - ब्रह्मा । बृ.

**सनन्दनः** - ब्रह्मपुत्रः । पा.

**सनात्** - मुक्तानां भोग्यसम्भजनकृत् । सह. सनातनः । तै.

**सनातनः** - नित्यः । रा.गी. सदाऽस्तित्वयुक्तः । रा. अप्रच्युतस्वभावः । श्रु.

[**सनातनधर्मः** - सिद्धोपायः । (परमात्मा)। र.]

**सनातनम्** - नित्यम् । रा.

**सनातनं बीजम्** - प्रकृतितत्त्वम् । ता.

**सनातनतमः** - पुराणतमः; पुरापि नवः पुराणः; सदातनत्वेऽपि तदातनवन्नित्यं नूतनभोग्यः । सह.

**सनातनधर्मः** - 'यागदानादयो हि देशकालादिपरिमितफलदायिनः स्वयञ्चानित्याः, अयं (कृष्णः) तु नित्यनिरतिशय फलदायी नित्यश्चेति सनातनधर्मः (सिद्धोपायः) । ता.

**सनातनपुरुषः** - 'येनाक्षरं पुरुषं वेद सत्य' मित्युक्तसत्यपुरुषः । ता.

**सनातनभावः** - परवासुदेवस्वभावः । रा.

**सनिः** - भजनीयः (वन षण संविभक्तौ इति धातोरुत्पन्नः) । तै.

**सन्तः** - अधिगतपरमात्मयाथात्म्या भागवताः । पा. सात्त्विकाः । या. स्वाश्रितान् सन्तनोतीति । "तेषामस्तीति वा सन्तो वचनव्यत्ययः स्मृतः । तेभ्य इष्टं दत्तवान् वा सनोतेः सन्त उच्यते" । (निरुक्तम्) । सह. साधुकर्मकारिणः । रा. [वेदान्तश्रवणेन स्वपरस्वरूपविवेकवन्तः । र.]

**सन्ततम्** - व्याप्तम् । रा.

**सन्ततिः** - व्याप्तिः । रा. समन्तात् ततिः सन्ततिः विभुत्वम् । श्रु.

**सन्तरणम्**-पारभूतदेशगत्यनुकूलव्यापारविशेषः । व.

**सन्तानः**-वर्णपदसंहितादिः । तै. वासना । अधि.

**सन्तापः** - कायिकव्यथा । शरीरपीडा । रा.

**सन्तारः** - सेतुः; सन्तार्यते अनेन इति सन्तारः । रा.

**सन्तृणणम्** - व्याप्तम् । छा.

**सन्तोषः** - कर्हिचिदपि क्लेशराहित्यम् । भा. तुष्टेः पुत्रः । वि. तुष्ट्यभिव्यक्तसुखम् । वि. दैवाल्लब्धान्नादिना अलम्बुद्धिः । भा. [अल्पसन्तुष्टता । ई.]

**सन्त्यागः** - उपेक्षा। तच्च प्रीतिकोपविरहेणावस्थानम्। सम्यक् त्यागः सवासन परित्यागः।

**सन्त्रासः** - देहप्रयुक्त आगामिदुःखविषयकज्ञानरूपभयम्। भा.

**सन्दर्भः** - मृदुपरुषाक्षरसमभिव्याहार विशेषः सौकुमार्योद्धतत्वादिलक्षणः।

**सन्दितः** - बद्धः। न्यासिटी.

**सन्दितम्** - बद्धम्। रा.

**सन्देशः** - चोदना। नियमनम्। रा.

**सन्देहः** - मध्यकायः। मध्यकायोह्युत्तरापरकाययोः क्वानुप्रविष्ट इति सन्दिह्यमानत्वात् सन्देह इत्युच्यते। छा. मध्यकायः। श्री.

**सन्धा** - प्रतिज्ञा। भाव. कौ.

**सन्धाता** - प्रणेयान् (प्रह्लादप्रभृतीन्) सन्दधाति संश्लेषयति (विष्णुः)। सह. संयोजकः। तै. [समित्येकीकारे, एकीकृत्य धाता, संहारकः। र.]

**सन्धानम्** - अन्वयः। तै. मृदुतापादनम्। (क्षाररसस्य सम्पर्कपूर्वकतापेन हि सुवर्णस्य परस्परसन्धानयोग्यमृदुता भवति)। छा.

**सन्धिः** - अन्तरालकालः। या. सम्बन्धः। श्रु. [अरीणां सन्धानम्। या.]

**सन्धिपञ्चकम्** - मुखप्रतिमुखगर्भावमर्शनिर्वहणात्मकम्। न्यासिटी.

**सन्धिनी** - अविच्छेदवती। वि.

**सन्धिमान्** - प्रणेयैः सन्धिः नित्योऽस्येति (नित्ययोगेमतुप्)। सह.

**सन्ध्यक्षराणि** - ए.ओ.ऐ.औ.। न्यासिटी.

**सन्ध्यम्**-सन्धौ भवं सन्ध्यम् स्वप्नस्थानम्। "मृतः परलोकं पश्यति जाग्रत्पुरुषस्त्विममेव लोकं पश्यति। स्वप्नावस्थस्तुकदाचिदिमं लोकं पश्यति, कदाचित्परलोकं स्वर्गनरकादिकं पश्यति। अतः स्थानद्वयदर्शनयोग्या विलक्षणेयं स्वप्नावस्था"। बृ. स्वप्नस्थानम्। श्री. स्वप्नः। श.

**सन्नः** - विकारी। भा.

**सन्नतिः**-विनयः। रा. सत्सु नतिः शुश्रूषा। वि.

**सन्निकर्षः** - सन्निधानम्। रा.

**सन्निकृष्टः** - प्रत्यासन्नः। रा.

**सन्निगच्छति** - सङ्गतो भवति। बृ.

**सन्निधिः** - अन्वयप्रतियोग्युपस्थितिः। श. धीस्थत्वम्। श्रु.

**सन्निपत्योपकारी** - करणशरीरनिष्पादकः। सर्वा.

**सन्निपत्योपकारकम्** - करणशरीरे सन्निपत्य निष्पादकमङ्गम्। श. द्रव्यदेवताद्यतिशयमुखेनोत्पत्त्यपूर्वनिष्पादकम्। न्यासिटी.

**सन्निपत्योपकारकसंस्कारः** - तत्तद्देवताभिमतिविषयत्वम्, सत्त्वादिगुणोद्बोधेन यागयोग्यत्वं वा। न्यासि.

**सन्निपातः** - अन्योन्यहस्तसङ्घर्षः। वि. द्वन्द्वयुद्धम्। रा. महामोहः। अधि.

**सन्निभः** - तुल्यः। रा.

**सन्निरुद्धः** - स्वाभाविकसर्वज्ञत्वनिरतिशयानन्दाद्याविर्भावरहितः । ता.

**सन्निवासः** - मनुष्यधर्मशीलत्वेऽपि सतां सनकादीनां निवासः विश्रान्तिभूमिः । सह.

**सन्निविष्टः** - आत्मतया सन्निविष्टः । गी.

**सन्निवेशः** - स्थानम् । सर्वा (आ).

**सन्निहितत्वम्** - सन्निधानम् । श्री.

**सन्निहिताः** - बुद्धिस्थाः । श्रु.

**सन्न्यस्तकर्मा** - ज्ञानाकारतापन्नकर्मा । गी.

**सन्न्यस्य** - तिरस्कृत्य । रा.

**सन्न्यासः** - ज्ञानयोगः, त्यागः । गी. न्यासिटी. फलत्यागः । भा.

**सन्न्यासकृत्** - सात्त्विकन्यासकृत्तरजस्तमस्कः । सन्न्यासेन सात्त्विकत्यागेन रजस्तमसी कृन्ततीति सः । सह.

**सन्न्यासी** - ज्ञानयोगनिष्ठः । गी.

**सन्मतीनाम्** - विदुषाम् । सर्वा.

**सन्मार्गः** - शिष्टाचारः । वि.

[**सन्मार्गदीपिका** - वरदराजपण्डितप्रणीतो ग्रन्थविशेषः । सच्च.]

**सपक्षः** - सिषाधयिषितसजातीधर्मवान् । यथा महानसादिः । न्याप. सिषाधयिषितधर्मसजातीयधर्मवान् । य.

**सपत्नाः** - अरातयः उत्कटद्वेषयुक्ताः । तै.

**सप्तजिह्वः** - अग्निजिह्वाः देवाप्यायि(य?)काहुतिग्रहणवहनाधिकाराः कालीकरालीप्रभृतयः सप्त अस्येति । सह.

[**सप्ततन्तुः** - यज्ञः । "सप्ततन्तुः क्रतुर्मखः" इत्यमरः । या.]

**सप्तदशस्तोमः** - सामवृत्तिविशेषः । वि.

[**सप्त पदार्थाः** - (रहस्यशास्त्रे) भगवान्, विद्या, कर्म, कालः, कर्तव्यता, इतिकर्तव्यता, समयः, इति । र.]

**सप्तपर्णः** - वृक्षविशेषः । रा.

**सप्तभङ्गी** - स्यादस्ति; स्यान्नास्ति; स्यादस्ति च नास्ति च; स्यादवक्तव्यम्; स्यादस्ति चावक्तव्यम्; स्यान्नास्ति चावक्तव्यम्, स्यादस्ति च नास्तिचावक्तव्यम्, इति तरङ्गवज्जृम्भमाणसप्तधर्मरूपसप्तभङ्गसमाहारः जैनैरभिहितः । रत्न.

**सप्तवर्गः** - स्वाम्यमात्यादिः । रा.

**सप्तवाहनः** - गायत्र्यादिच्छन्दस्कवैदिकमन्त्राभिमानीनि रविरथधुर्याणि सप्त वाहनान्यस्येति । सप्त वायुस्कन्धान् वहतीति वा । सह.

**सप्तविंशम्** - सप्तविंशः परमात्मेति कालपार्थक्यवादिनः । मु.

**सप्तविंशकः** - जीवस्य षड्विंशकत्व विवक्षायां परमात्मा सप्तविंशकः । न्यासि.

**सप्तीकरणम्** - पञ्चीकरणं द्र. "महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते इति' भगवत्पराशरवचनात् महदादिपृथिव्यन्त तत्त्वमयतापादनम् । न्यासि. रत्न. स्वसजातीयधर्मषट्कविशिष्टधर्मवत्त्वम् । वा.

**सप्तैधाः** - इन्धनानि पाकहविस्सोम संस्थानि प्रत्येकं सप्तसङ्ख्यानि इष्टापूर्त-

रूपाणि सप्त वानस्पत्याः समिधो (वा)ऽस्येति। सह.

[**सभाः** - आस्थानमण्टपाः। र.]

**सभागः** - भागः पूजा तेन युक्तः। अर्घ्यादिभिः पूज्यमानः। सभागे सभां गते। छा.

**सभाजनम्** - कुशलप्रश्नाधीनप्रीतिजननम्। रा.

**सभाज्य** - संपूज्य। रा.

**समः** - अन्यूनानतिरिक्तदेहप्रमाणवान्। रा. कृत्स्नं जगत् ब्रह्मात्मकं पश्यन्। भा. परिचितापरिचिततीव्रमन्दसंवेगित्वाद्यविगणय्य गौरवे सम इति। सह. स्वपरसमदृष्टिः। भा.

**समम्** - युगपत्। रा.

**समंदिवा** - स्वर्गेण समं दिवसेन सममिति वा। श्रु.

**समकालः** - अदूरविप्रकृष्टः कालः। ता.

**समक्षम्** - प्रत्यक्षम्। रा.

**समगणि** - अभाणि। सर्वा.

**समग्रम्** - सकलम्। गी. समधिकम्। गीसं. संपूर्णावयवम्। रा.

**समग्रान्** - (युद्धाय) समवेतान्। ता.

**समचित्तः** - शीतोष्णसुखदुःखादिषु तुल्यचित्तः। भा. सर्वस्य ब्रह्मात्मकत्वदर्शनः। भा.

**समञ्जसः** - स्वारसिकः। श्रु.

**समता** - सममतित्वम्। आत्मनि सुहृत्सु विपक्षेषु चार्थानर्थयोस्सममतित्वम्। गी.

**समतिसृष्टाः** - सम्यक् प्रसन्नेनानुज्ञाताः। छा.

**समत्वम्** - अविकृतस्वभावत्वम्। भा. जातिगुणवृत्ताद्यनादरेण कृत्स्नेऽपि आदरवत्त्वम्। वर. जातिगुणवृत्तादिवैषम्यवतामपि शरण्यत्वे विशेषरहितत्वम्। श्रूयते हि 'सर्वस्य शरणं सुहृत्' इति। स्तो.

**समदर्शनः**-सर्वस्य ब्रह्मात्मकत्वं पश्यन्। भा.

**समदर्शिनः** - कृत्स्नजगत् ब्रह्मात्मकत्वेन पश्यन्तः। भा.

**समदर्शी** - समं द्रष्टुं शीलं यस्य सः। गी.

**समदुःखसुखः** - सुखदुःखयोः समचित्तः। गी. हर्षोद्वेगरहितः। गी.

**समदृशः** - जातिगुणादितारतम्यानादरेण सर्वस्य भगवदात्मकत्वदर्शनाः। भा.

**समदृक्** - सर्वस्य ब्रह्मात्मकत्वानुसन्धानरूपसमदृष्टिमान्। भा.

**समनन्तरप्रत्ययः** - अनन्तरपूर्वक्षणप्रत्ययः। श्रु. पूर्वज्ञानम् (सौगतमते)। बृ. संस्कारः, तस्मात्प्राचीनज्ञानोद्बोधः (सौगतमते)। सर्वा (आ).

**समन्तभद्रः** - बौद्धः। नि.

**समन्वयः** - सम्यगन्वयः। श्री. परमपुरुषार्थतया अन्वयः। श्री.

**समन्विच्छितम्** - अनुमतम्। वि.

**समभवत्** - क्रमेण स्थूलं अभवत्। छा. उत्पन्नः। मैथुन्यमुपगतवान्। बृ.

सम्भावितवान्। पर्यालोचितवान् इत्यर्थः। बृ.

**समयः** - आचारः। निश्चयरूपः सिद्धान्तः। मर्यादा। रा. सङ्केतः। च. सङ्केतः। 'समयः कालसिद्धान्तप्रतिज्ञाशपथेषु च। सङ्केताचारयोश्च' इति रत्नमाला। रा. [सिद्धान्तः। सच्च.]

**समयज्ञः** - अग्न्यादीनां ऊर्ध्वज्वलनादिसमयमधिकारनियमं जानातीति। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति। यद्वा भक्तेभ्यः स्वात्मदानावसरः समयः तदभयदानव्रतं वेति। सह. आचारज्ञः। रा.

**समयाविषितः** - उदितानुदितः। भाव.

**समयाविषिते** - समया उदित इत्यर्थः। श्रु.

**समरम्** - युद्धम्। रा.

**समराहित्यम्** - स्वावधिकापकर्षानाश्रयराहित्यम्। स्वेतरत्वव्यापकस्वावधिकापकर्षकत्वम्। रत्न.

**समर्थः** - देशकालोचितकृत्यचतुरः। सर्वकार्यधुरन्धरः। रा.

**समर्थम्** - जगत्सृष्ट्यादाविव आश्रितानां साम्यभोगप्रदाने तद्विरोधिनिरसने च प्रतिबन्धकैः प्रतिहन्तुमशक्यम्। स्तो.

**समर्थानि** - हितानि। रा.

**समर्पणम्** - कस्यचिद्वस्तुनः ससमकालापाद्यपरसम्बन्धविषयीकारि ज्ञानम्। न्याद. (रहस्यार्थसमर्पणम्); उपदेशः। नि.

**समवहारम्** - समाहृत्य। छा.

**समवायः** - अपृथक्सिद्धानामाधाराधेयभावोपपादकः। श्रु. अयुतसिद्धयोर्नित्य सम्बन्धः (न्याये)। न्यासिटी. नित्यसम्बन्धस्समवायः। न्यासि.

**समवेतः** - विशेषणतैकस्वभावः। श्रु.

**समवेतम्** - युक्तम्। सर्वा.

**समवेतानि** - समुदितानि। रा.

**समष्टिः** - अपञ्चीकृतभूतानि। बृ. (इन्द्रियाणां) तत्तच्छरीरेषु पृथगवस्थानम्। सर्वा (आ). सामान्यम्। भाव. व्यष्टेः पूर्वसृष्टिः। रत्न. महदादिसृष्टिः। न्यासिटी.

**समष्टिसृष्टिः** - अण्डोत्पादात् पूर्वसृष्टिः समष्टिसृष्टिः। अनन्तरसृष्टिर्व्यष्टिसृष्टिः। य.

**समसनम्** - सङ्ग्रहः। अधि.

**समस्तः** - उपसंहृतकरणग्रामः। छा.

**समहन्यत** - सङ्घातभावमापद्यत। बृ.

**समाख्या** - यौगिकी संज्ञा। भाव.

**समागतत्वम्** - पृथक्स्थित्यनर्हसंश्लेष विशेषः। श्रु.

**समाचारः** - समाचाराख्यो ग्रन्थः। श्री.

**समाजः** - धर्मनिर्णयार्था सभा। रा.

**समात्मा** - गुणादिभिः निम्नोन्नतेष्वपि समः अनालोचितविशेषः आत्मा मनः अस्येति। सह.

**समाधिः** - अनुसन्धाता। ब्रह्मरूपं कर्म समाधत्ते अनुसन्धत्ते। ता. मनः, समाधीयते अस्मिन्नात्मज्ञानमिति। गी. निधीयते अस्मिन्निति निधिरितिवत्। ता. अनुसन्धानम्। ब्रह्मात्मके कर्मणि समाधिः अनुसन्धानम्। ता. चित्तसमाधानम्। रा.

ध्यानम् । नि. भा. मनोवृत्तिसन्ततेः विजातीयप्रत्ययान्तराव्यवहितत्वम् । भा. सम्बन्धः । रा. लक्ष्यम् । सम्यगधीयते अस्मिन्निति । रा. [भगवत्स्वरूपग्रहणम् । ई.]

**समानः** - समं नयतीति । प्र. साधारणः । श्रु. (प्राणभेदः) उत्क्रमणवायुः शरीरमध्यगः (मध्यावयवनाभिस्थानः) शीतपित्तादि समीकरणपरः । सर्वा (आ).

**समानम्** - एकम् । श्वे.

**समानाधिकरणः** - समानविभक्तिः । न्यासिटी.

**समापिपयिषेत्** - समापनं कर्तुं इच्छेत् । बृ.

**समाप्तसर्वार्थम्** - प्रयोजनान्तरानपेक्षम् । अवाप्तसमस्तकामं वा । भा.

**समाभ्यधिकवर्जितः** - वस्तुपरिच्छेद-रहितः । वै.

**समारताः** - उपरताः । छा.

**समालम्भः** - संस्पर्शः । 'आलम्भः स्पर्शहिंसयोः' । रा.

**समालम्भनम्** - अनुलेपनविशेषः । रा.

**समावर्तः** - सदा सर्वत्र समन्तात् आवर्तः वैयूहवैभवावर्तनमस्येति । सह.

**समावेशः** - संघीभावः । रा.

[**समाशत** - प्राप्नुयुः । सच्च.]

[**समाश्रयः** - प्रबलेन बाध्यमानस्य इतरसमाश्रयः । या.]

**समासः** - समुदायः । छा.

**समासम्** - सम्पूर्वात् क्षेपार्थात् अस्यतेर्ण-मुलन्तोऽयं शब्दः । (शूलेन) सम्यक् प्रक्षिप्य । छा.

**समासते** - निरस्तप्रतिकूलास्सुखमासते । श्वे.

**समासन्नदेशसंयोगः** - तत्तत्संयोगा-वच्छिन्नसंयोगप्रतियोगित्वम् । रत्न.

**समासस्य सामर्थ्यम्** - समर्थपदाश्रित-त्वम् ।

**समाहारः** - अनुवृत्तिः । समाधानम् । श्रु. समच्चयः । या.

**समाहितः** - ऋजुः । रा. समाहितचित्तः । बृ. समाधिनिष्ठः । वर. ब्रह्मण्येकाग्रधीः । त. नियतमनस्कः । रा. सम्यक् आहितः । गी. विशदानुसन्धानयोग्यो जातः । ता.

**समाहितम्** - समाधानम् । रा.

**समाहितत्वम्** - अन्तर्वर्तित्वम् । श्री.

**समाहिताः** - एकाग्रचित्ताः । विभक्त धनेषु 'विभक्ता भ्रातरः' इतिवत् समाहित-चित्तैरित्यर्थे समाहितैरित्युत्तर पदलोपेन प्रयोग इत्याहुः । या. अनन्यमनस्काः । समर्पिताः । रा.

**समाहितात्मा** - अप्रमत्तचित्तः । रा. सम्पन्नपरलोकसाधनः । बृ.

**समिङ्गितम्** - आहृतम् । अति.

**समितः** - प्राप्तः । सुन्दर.

**समितिङ्गमः** - सभां गन्ता । बृ.

**समितिञ्जयः** - समितिं युद्धं जीवानां

स्वदास्यविवादक्लेशं जयति अभिभवतीति। सह.

**समित्पाणिः** - ब्रह्मविद्याश्रवणार्थोपनयनान्तरवान् इत्येके। अरिक्तपाणिः इत्यपरे। त. समिद्भारहस्तः। कौ.

**समिद्धः** - अग्निः। बृ.

**समिद्धम्** - ज्वलितम्। रा.

**समीक्षया** - सङ्कल्परूपया दृष्ट्या। भा.

**समीक्ष्य** - आलोच्य। या.

**समीचीनन्यायमार्गः** - साङ्गपञ्चकतर्कप्रतिपादकविद्यास्थानम्। त.

**समीरणः** - समीर्ते इष्टचेष्टो भवतीति। ''ईर गतौ कम्पने च'' सम्पूर्वः। ''भक्तेष्टचेष्टाशीलत्वात् समीरण उदाहृतः'' (निरुक्तिः)। सह.

**समीहनः** - सृष्टौ सर्वान् सर्वदा स्वेषु अधिकारेषु समीहयति, प्रेषयति इति। सह.

**समच्चयः** - अनेकक्रियाव्याहारः। भाव.

**समुच्छ्रयः** - औन्नत्यम्। रा.

**समुत्थाय** - उत्क्रम्य। छा.

**समुदपारयत्** - उत्पूरितवान्। बृ.

**समुदयः** - उत्पत्तिः। वा.

**समुदीषति** - उद्गच्छति। 'ईष गतिहिंसादर्शनेषु' इति हि धातुः। छा.

**समुद्यमः** - उत्साहः। रा.

**समुद्रकः** - सम्पुटः। वि.

**समुद्रः** - जगत्कारणम्। सम्यगुद्रवति उत्पद्यते जगदस्मादिति। तै. [समुद्रिक्तः। सच्च.]

**समुद्रेन्तः** - परमात्मा। क्षीरसमुद्रशायी। वेकौ. समुद्रे अन्तःस्थानं यस्य सः। तै.

**समूढम्** - सङ्गृहीतम्। न्यासिटी.

**समूहः** - समूहीकुरु। ई.

**समूहत्वम्** - एकोपाधिगृहीतत्वम्। श्रु.

**समृद्धिः** - कर्मनिष्पत्तिः। छा. समृद्धिहेतुभूतानि। छा.

**समेताः** - मिलिताः। या.

**समेति** - एकीभवति। तै.

**सम्पत्** - अतिशयः। अधि. भोग्यभूतम्; प्राप्यम्। वै. येन अग्निहोत्रादीनां फलवत् कर्मणां अन्तवत्फलाय संपादनं, सा संपत्। बृ. शोभा। 'शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिसम्पदः' इति हलायुधः। या. श्रोत्रम्। 'श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः' इति बृहदारण्यके समानप्रकरणे श्रवणात् सम्पद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसम्पादकत्वमेव श्रोत्रस्य सम्पत्त्वम्। छा.

**सम्पत्तिः** - मरणम्। श्री. संयोगः। श्री. पृथग्भावानर्हसंसर्गविशेषलक्षणाविभागः। छा.

**सम्पदः** - भोग्यभोगोपकरणभोगस्थानादयः। भा.

**सम्पदम्** - सम्बन्धम्। सम्पच्छब्दः प्राप्तिवाची। वे.

**सम्पन्नः** - सङ्गतः। छा.

**सम्परिक्रमः** - प्रदक्षिणीकरणम्। रा.

**सम्परिग्रहणम्** - मननादिकरणम्। क.

**सम्परिवर्तते** - अविच्छेदेनानुवर्तते। रा.

**सम्पातः** - कर्म। सम्पतत्यनेन स्वर्गमिति व्युत्पत्त्या। श्रु. फलप्रदानप्रवृत्तं कर्म। अधि. सम्पतत्यनेनेति सम्पातः कर्मशेषः। छा. सम्पतन्त्यनेन स्वर्गं लोकमिति सम्पातः कर्म उच्यते। श्री. हुतशेषः। छा.

**सम्पादयाञ्चक्रुः** - निश्चितवन्तः। भाव. छा.

[**सम्पुटप्रणामः** - "प्रणामस्सम्पुटस्स स्यात् हृदयेऽञ्जलिमर्पयेत्"। पाञ्च.]

**सम्पूज्य** - श्लाघयित्वा। रा.

**सम्पृक्तम्** - संयुक्तम्। रा.

**सम्प्रक्षालाः** - सदा शरीरं प्रक्षालयन्तीति। रा.

**सम्प्रतिष्ठा** - लयः। श्वे.

**सम्प्रतिमध्यन्दिनम्** - ऋजुमध्यन्दिनम्। छा.

**सम्प्रदानम्** - देयद्रव्यम्। रा. प्रतिगृहीताः, कर्मणा यमभिप्रैति सः। भाव. ["दीयमानार्थशेषित्वं सम्प्रदानत्वमिष्यते"। र.]

**सम्प्रदायः** - उपदेशादिपरंपरा। नि. गुरुपारम्पर्येणावस्थितयाथार्थ्यविशेषः। श. [अविच्छिन्नोपदेशः। र.]

**सम्प्रधर्षणम्** - आक्रमणम्। रा.

**सम्प्रमर्दनः** - (संवरणं तमः) स्वविद्यया संप्रमर्दयतीति। "तमेवं विद्वानमृत इह भवति"। सह.

**सम्प्रश्नः** - परीक्षणम्। रा.

**सम्प्रसन्नः** - बाह्यविषयसम्पर्कजनित कालुष्यरहितः। छा.

**सम्प्रसादः** - जीवः। सर्वा. जीवः। सम्प्रसादशब्दः सुषुप्तिस्थानवचनः सन् तत्सम्बन्धाज्जीवं लक्षयति। छा. जीवात्मा। सुबा. प्रत्यगात्मा। 'एष सम्प्रसादोऽस्माच्छरीरा' दित्युपनिषत्प्रसिद्धेः। श्री. सम्प्रसीदति अस्मिन् (जीवः) इति सम्प्रसादः स्वप्नस्थानम्। जागरिते देहेन्द्रियादिव्यापारशतसन्निपातजन्यं कालुष्यमस्ति, स्वप्ने तु तेभ्यो विप्रयुक्तः ईषत्प्रसीदति। बृ.

**सम्प्रास्रवत्** - सारत्वेन निष्पन्नोऽभवत्। (सम्प्रस्रावः सारत्वेन निष्पत्तिः?)। छा.

**सम्प्लवः** - प्रलयः। भा. रा. सम्प्राप्तिः। नि. सञ्चारः। छा.

**सम्प्लवनम्** - सञ्चारः। छा.

**सम्प्लवाम्भः** - अभिषेकजलम्। वि.

**सम्बद्धः** - दृढबद्धः।

**सम्बाधः** - अन्योन्यपीडा। छा.

**सम्भरणम्** - एकीकरणम्। रत्न.

**सम्भर्ता** - (भगवच्छब्दविवरणे) संभरणम् उपकरणसंविधानम्। श्रु.

**सम्भवः** - प्रादुर्भूतः। भवतेः पचाद्यच्। या. समन्तात् भवो यस्य सः (सं सनन्तात् तत्र तत्र देशकालादिषु भवः मत्स्यकूर्मादिरूपैः अभीक्ष्णमाविर्भावोऽस्येति)। सह. सम्भवोऽप्यनुमानमेव। न्याप.

**सम्भवे** - समित्येकीकारे। लयापरपर्याय एकीभावे। श्वे.

**सम्भाराः** - उपकरणानि । रा.
**सम्भावना** - आदरः । रा.
**सम्भाषा** - समीचीनवचनम् । रा.
**सम्भिन्नम्** - युक्तम् । श.
**सम्भूतः** - उत्पन्नः । श्रु.
**सम्भूतिः** - अर्चिरादिगतिः । न्यासि. प्रपञ्चात्मना उत्पत्तिः । भाव. प्राप्तिः । ब्रह्मप्राप्तिः । न्यासि. ब्रह्मप्राप्तिरूपा अनुभूतिः । समाधिरूपब्रह्मानुभूतिः । ई. सत्ता । वि. सम्यगभिवृद्धिः । सम्भूतिफलिका विद्या (नारायणार्याः) । न्यासि.
**सम्भूय** - मिलित्वा । या.
**सम्भूयकारि** - परस्परसहकार्यसहकारण (?)भावेन मिलित्वा कार्यनिष्पादकम् । च.
**सम्भृतम्** - धृतम् । बृ.
**सम्भ्रमः** - आदरः । रा. त्वरा । रा. पुत्रजन्मादिनिमित्तसंतोषः । भा. भयम् । 'सम्भ्रमोऽत्यादरे भये' इति कोशः । रा. ससम्भ्रमावेगम् । सम्भ्रमो बहिस्त्वरा, आवेगः तद्धेतुः .... मनोविकारः तदुभयसहितम् । या. व्यग्रता । संशयकृतचाञ्चल्यम् । सन्नाहः। भाववृत्तिः । रा.
**सम्मद्रम्** - प्रच्छायम् । द्र.
**सम्मर्शिनः** - विचारकुशलाः । तै.
**सम्मितः** - भक्तैः सम्यक् मितः परिमितः अस्मत्करस्थ इति परिच्छिन्न इति । सह.
**सम्मितम्** - समम् । तै.
**सम्मूर्छनम्** - विरुद्धगतिमतोः (आभिमुख्येन) समूहीभावः । सर्वा (आ).
**सम्मूर्च्छितः** - अभिव्याप्तः । रा.

**सम्मोहः** - अभोग्ये भोग्यताबुद्धिः । अद्वेष्ये द्वेष्यताबुद्धिः । ता. कृत्याकृत्यविवेकशून्यता । गी. विच्छेदः । नि.
**सम्यक्** - सोपपत्तिकम् । रा.
**सम्यग्युक्तिः** - कल्पकहेत्वन्यथासिद्धिः । श्रु.
**सम्यङ्न्यायः** - प्रमाणानुगुणन्यायः । श्रु.
**सम्राट्** - सम्यक् राजतीति । तै. सार्वभौमः। बृ. शरीरस्वामिभूतः पुरुषः । सुबा.
**सयुक्** - समानगुणकः । मु.
**सयुक्त्वा** - गुणश्रेष्ठः । श्री. यद्वा युक्त्वा शकटम्, तद्वानित्यर्थः । श्रु.
**सयुजा** - सयुजौ । युज्यत इति युक्शब्दो गुणपरः । समानगुणकस्सयुगिति । श्वे.
**सयूथ्याः** - समानयूथे भवाः । एकजातीयाः । या.
**सरमा** - विभीषणभार्या । 'सरोमा वर्धयस्वेति मात्रोक्ता सरमाऽभवत्' । रा.
**सरस्वती** - नदीविशेषः । नि.रा. लक्ष्मीः। 'मेधा श्रद्ध सरस्वती' इति सरस्वतीशब्दस्य लक्ष्मीनामत्वेन परिगणनात् । श्रीसू.
**सरुः** - दर्पः । 'सरुर्दन्ते हरे दर्पे' इति विश्वः। या.
[**सरोजनाभिः** - विष्णुः । ''सरोजनाभेरित्यत्र सामसान्त विधेरनित्यत्वात् योगविभाग सिद्धोऽचूप्रत्ययो न कृतः । तथा माघप्रयोगश्च । प्रजा इवाङ्गादरविन्दनाभेः'' इति । या.]

**सरोधः** - नरकयातना; यत्र तालद्रुमात्पतनम् । वि.

**सर्गः** - कार्यवस्तुजातुम्; सृज्यत इति । श्रु. जन्मकालः । गी. (त्रिविक्रमक्रमणसुग्रहपादपद्मो ह्यसौ) सुहृत्सु निसृष्टात्मतया ब्रह्मादिभ्यः सृज्यत इति । सह. संसारः । गी.

**सर्पविद्या** - गारुडविद्या । छा.

**सर्वंसहः** - शान्तियुक्तः । अधि.

**सर्वंसहत्वम्** - सर्वविषयत्वम् । अधि.

**सर्वः** - सर्वनिर्व्यपेक्षोऽपि अनुपेक्षमाणः स्वनिर्वाह्यतया अवयवान् सरति गच्छति अनुसन्धत्त इति । चराचरशरीरेषु व्याप्तिमान् । सह. सर्वस्वरूपधरः१ वि.

**सर्वम्** - कृत्स्नम्, न तु कतिपयम् । श्रीत. पूर्णम् । मा(कू). समष्टितत्त्वम् । छा.

**सर्वकर्मसमाराध्यत्वम्** - सर्वकर्मजन्यप्रीत्याश्रयत्वम् । वा.

**सर्वकर्मा** - क्रियत इति कर्म सर्वं जगत् यस्य कर्म, सर्वा वा क्रिया यस्य । श्री. (क्रियत इति कर्म) सर्वं जगत् यस्य कर्म असौ । सर्वा वा क्रिया यस्य आराधनं असौ । सर्वजगत्कर्ता, सर्वकर्मसमाराध्यः । छा. सर्वं जगत् यस्य कर्म सः । वे.

**सर्वकामः** - काम्यन्ते इति कामाः, भोग्यभोगोपकरणादयः ते परिशुद्धाः सर्वविधाः तस्य सन्तीत्यर्थः । भाव. काम्यन्त इति कामाः भोग्यभोगोपकरणादयः ते परिशुद्धास्तस्य सन्ति । परिशुद्धभोग्य भागोपकरणादिमान् । छा. भोग्यभोगोपकरणादिकाम्यवस्तुसमृद्धः । वे.

**सर्वकामदः** - योगस्खलितेभ्योऽप्यणिमादिकामान् अन्तरायतया ददातीति । सह.

**सर्वकामदुघा** - लीलारसदोग्ध्री । श्रु.

**सर्वकामदुघा विभोः** - ईश्वरस्य लीलारसदोग्ध्री । म.

**सर्वकार्यहेतुत्वम्** - श्रियो व्यष्टिसंहारादिविषये स्वरूपयोग्यत्वमात्रं नित्यानां संसारस्वरूपयोग्यतावत् फलोपधानाभावेपि प्रमाणबलात्स्वीकार्यम् । श्रीत.

**सर्वकारणम्** - श्रीश्रीपती मिलितौ । श्रीत.

**सर्वगः** - धारणसामर्थ्यलक्षणेन बलेन आत्मवत् धारयन् संहतान् सर्वान् गच्छतीति । सह.

**सर्वगतः** - नाशकानां अग्निजलादीनां सौक्ष्म्येण व्यापकः । वि. सर्वत्र (अन्तः प्रविश्य) अवस्थितः । मु.

**सर्वगतम्** - सर्वदेशव्यापिनम् । व. सर्वैर्वस्तुभिः संयुक्तम् । गी.

**सर्वगतत्वम्** - सर्वस्य जगतो व्याप्तत्वम् । श्री. सर्वस्य व्याप्तत्वम् । श्वे. सर्वसंयुक्तत्वम् । वा.

**सर्वगन्धः** - अप्राकृतस्वासाधारणनिरवद्यनिरतिशयकल्याणस्वभोग्यभूतसर्वविधगन्धविशिष्टः । 'अशब्दमस्पर्श' मित्यादिना प्राकृतगन्धनिषेधादेवम् । छा.

**सर्वचित्साक्षिकाः** - प्रत्यक्षेण सर्वैरुपलभ्यमानाः । सर्वा.

**सर्वजीवसाम्यम्** - स्वरूपतस्सर्वदा, गुणतो मुक्त्यवस्थायां समानत्वम्। न्यासि.

**सर्वज्ञः** - भक्तानां शक्याशक्यसाध्यासाध्यादिकमनुसन्धत्त इति। सह. सर्वप्रकारप्रकारिज्ञानवान्। वेकौ. सर्वमिदं स्वरूपतः प्रकारतश्च जानाति वेत्ति इति। मा (कू). सर्वविषयकज्ञानवान्। वि. सर्ववस्तुसाक्षात्कर्ता। सुबा. (सर्वज्ञः सर्ववित् इति श्रुतौ) सर्वं स्वरूपतो जानाति। सर्वविदित्यस्य सर्वं प्रकारतो जानातीति व्युत्पत्त्या न पुनरुक्तिः। सर्वविदित्यस्य सर्वं विन्दति प्राप्नोति इति वा अर्थः। ता. सर्ववित् सर्वं स्वरूपतः प्रकारतश्च वेत्तीत्यर्थः। श्रु. सर्वश्चासौ ज्ञश्च। वि. सर्वात्मना स्वात्मज्ञानवान्। सह.

**सर्वतः** - सर्वदेशावच्छेदेन। मु.

**सर्वतन्त्रसिद्धान्तः** - यमन्तरेण वादव्यवहारोऽपि न घटते स सर्वाभ्युपगतः सर्वतन्त्रसिद्धान्तः। यथा प्रमाणात् प्रमेयसिद्धिरित्यादि। न्याप.

**सर्वतन्त्रस्वतन्त्रः** - सर्वेषु तन्त्रेषु सिद्धान्तेषु न्यायवैशेषिकपूर्वोत्तरमीमांसासाङ्ख्ययोगशैववैष्णवादिषु स्वतन्त्रः स्वेच्छया कञ्चिदर्थं स्थापयितुं दूषयितुं वा शक्तः। या. सर्वेष्वपि तन्त्रेषु स्वातन्त्र्यं तन्त्रयन्। सर्वा.

**सर्वतीर्थम्** - ग्रामविशेषः। रा.

**सर्वतः पाणिपादम्** - सर्वतः पाणिपादकार्यशक्तम्। गी.

**सर्वतःपाणिपादम्, सर्वतोऽक्षिशिरोमुखम्, सर्वतः श्रुतिमत्** - अपाणिपादादिकमपि ब्रह्म सर्वतः पाणिपादादिकार्यकृत्। श्वे.

**सर्वतश्चक्षुः** - सर्वेषां चक्षुः अस्मिन्निति। सह.

**सर्वतोऽक्षिशिरोमुखम्, सर्वतः श्रुतिमत्** - सर्वतश्चक्षुरादिकार्यकृत्। गी.

**सर्वतोभद्रसंस्थाविशिष्टगृहम्** - चतुश्शालं चतुर्द्वारं गृहम्। "चतुश्शाला चतुर्द्वारा सर्वतोभद्रसंज्ञिका" इति वराहमिहिरसंहिता। रा.

**सर्वतोमुखः** - भक्तानां अनेनैव मुखेन सुग्रहः नान्येनेति नियमं निर्धूय येन केनापि व्याजेन सुप्रवेशः। (सर्वाण्यपि मुखान्यस्येति)। सह.

**सर्वदर्शनः** - युगपत्सर्वार्थसाक्षात्कर्ता। भा. सर्वं सह महिम्ना आत्मानं दर्शयतीति। सह.

**सर्वदर्शी** - सर्वदा धर्माधर्माध्यक्षः धर्माधर्मौ अध्यक्षयितुं शीलमस्येति सः। सह.

**सर्वदृक्** - सर्वं दर्शयतीति। मा (कू). सर्वद्रष्टा (करणैस्स्वतश्च ज्ञाता)। वि. सर्ववैभवद्रष्टा। सह. सर्वान् अनुकूलप्रतिकूलतटस्थान् यथार्हं नियन्तुं पश्यतीति; सर्वस्मिन् दृगस्येति वा। "दृशेश्चेति वक्तव्यं" इति क्विन्, क्विन् प्रत्ययस्य कुः, सर्वतोमुखः। (विष्णुः) सह.

**सर्वदृक्सर्ववेत्ता** - स्वरूपतः प्रकारतश्च सर्वं जानातीत्यर्थः; यद्वा विश्वतश्चक्षुः इत्यादिश्रुतिप्रक्रियया सर्वतोदृग्भवन्सर्वं वेत्तीत्यर्थः यद्वा सर्वेषां दृक् सर्ववेत्ता च। चक्षुर्देवानामुत मर्त्यानामिति श्रुतेः। श्रु.

**सर्वधातमम्** - सर्वधारकम्। छा.

**सर्वनयनः** - सर्वकार्याणां नेता निर्वोढा। सुबा.

**सर्वपाप्मोदितः** - कर्मवश्यतागन्ध-रहितः। 'कृतानामपि कर्मणां फलजनन-शक्तिप्रतिभटत्वलक्षणः कश्चित् ऐश्वर-स्वभावविशेषोऽपहतपाप्मत्वाख्यस्सर्व-पापोदितशब्दार्थ इति द्रष्टव्यम्।

**सर्वपाशापहानिः** - 'उपसनावसाने क्षमिष्ये' इति पुण्यापुण्यात्मककर्मणाम-श्लेषविनाशरूपहानिः। श्वे.

**सर्वप्रशासितृत्वम्** - सर्वचेष्टाप्रयोजक-सङ्कल्पवत्त्वम्। वा.

**सर्वप्रहरणायुधः** - उपासकानां सर्वेषां सर्वाणि यान्यनिष्टानि तेषां प्रहरणानि सवा-सनमुन्मूलयितृणि अन्यान्यपि दिव्यायुधा-न्यस्येति। सह.

**सर्वफलप्रदत्वम्** - सर्वकर्मफलोत्पादक-संकल्पवत्त्वम्। वा.

**सर्वभावाः** - सर्ववस्तूनि। मा (कू).

**सर्वभावाय** - सर्वपदार्थशरीरकाय। सर्वे भावाः पदार्था यस्य शरीरत्वेन। भा.

**सर्वभावेन** - उपयोपेयभावेन। भा. सर्वात्मना। गी. भावशब्दोऽत्र मनोवृत्तिपर इत्याह - सर्वात्मनेति। सर्वप्रकारेणेति वाऽर्थः। ता.

**सर्वभूतः** - (बहु स्यामिति सर्वरूपेण परिणतः। वि. सर्वभूतात्मभूतः। स्वेतर-सर्ववस्तुशरीरः। वि.

**सर्वभूतम्** - सर्वभूतात्मभूतम्। वि. सर्वान्तर्यामितया सर्वशरीरम्। ता.

**सर्वभूतमयः** - सर्वसमष्टिव्यष्टिरूपः। श्रु.

**सर्वभूतमैत्रः** - द्विषत्स्वपकुर्वत्सु च मैत्रीं मतिं कुर्वन्। गी.। मैत्रीं हितैषिणीम्। ता.

**सर्वभूतहितरतः** - सर्वभूताहितर-तत्त्वान्निवृत्तः। गी.

**सर्वभूतस्थः** - सर्वभूतेषु आत्मतया अवस्थितः। वि.

**सर्वभूतात्मकम्** - सर्वजीवशरीरकम्। वि.

**सर्वभूतात्मभूता** - सर्वभूतव्यापिनी। वि.

**सर्वभूतानामीश्वरी** - सर्वभूतेशनकर्त्री। अन्यथा षष्ठ्यन्वयवैघट्यात्। 'अस्येशाना जगत' इति मन्त्राच्च। श्रीत.

**सर्वभूताद्वेष्टा** - विद्विषतापकुर्वतामप्य-द्वेष्टा। गी.

**सर्वभूतेश्वरः** - अत्र सर्वशब्दः न भगवद्-व्यतिरिक्तसर्वपरः। देवीं प्रति भगवतः स्वत ईश्वरत्वाभावात्। अतो देवीविषयक-सर्वभूतेश्वरीत्ववचनइव ईश्वरव्यतिरिक्त विषयः। श्रीत.

**सर्वभूषणभूषार्हाः**-भूषणान्यपि भूषयितु-मर्हाः। रा.

**सर्वभृत्** - देवादिसर्वदेहभरणसमर्थम्। गी.

[**सर्वमेधः** - सर्वभूतहविष्कः क्रतुविशेषः। र.]

**सर्वयोगविनिस्सृतः** - सर्वैरपि शास्त्रलक्षणैः स्वमनीषिकापरिकल्पितैरपि योगैः उपायैः विशेषेण वेदपरमगुह्यैरिव प्राप्तुं योग्यः सुग्रह इति वा। सह.

**सर्वरसः** - अप्राकृतस्वासाधारणनिरवद्यनिरतिशयकल्याणस्वभोग्यभूतसर्वविधरसविशिष्टः। ('अशब्दमस्पर्श' मित्यादिना प्राकृतरसनिषेधादेवम्)। छा.

**सर्वलक्षणलक्षण्यः** - साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्यसूचकैर्लक्षणैर्लक्षणे ज्ञाने साधुः। 'तत्र साधु'' रिति यत्। सह.

**सर्वलोकलोचनम्** - सूर्यः। श.

**सर्वलोकेश्वरः** - सर्वलोकानां नियन्ता, अनिष्टनिवृत्तीष्टप्रापणयोः कर्ता। रा.

**सर्ववागीश्वरेश्वरः** - वादित्ववाग्मित्वयोः पारं गतः; यथा ''उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा'' इति। सह.

**सर्ववाच्यः** - सर्वप्रकारेण निन्द्यः। रा.

**सर्वविज्जयी** - सर्वविदः सर्वज्ञान् जेतुं शीलमस्येति। सर्वज्ञा अपि हि जय्या अस्येति। सह.

**सर्वविज्ञानमयम्** - सर्वस्य विज्ञानप्रचुरम्; सर्वज्ञम्। वि.

**सर्ववित्** - अत्र विदिः लाभार्थकः। वेकौ. वस्तुगतसर्वप्रकारज्ञानवान्। मु. (सर्वज्ञः सर्वविदिति श्रुतौ) सर्वं प्रकारतः जानाति। सर्वज्ञः इत्यस्य सर्वं स्वरूपतः जानातीत्यर्थान्न पुनरुक्तिः। सर्वं विन्दति प्राप्नोतीति वा सर्ववित्। ता. संहतान् सिसृक्षुः प्रद्युम्नः सर्वकार्यं विन्दति सृष्ट्या लभत इति। सह. 'मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद''। गी.

**सर्वविद्यः**-सर्वज्ञानप्रकारवान्। सर्वविद्याप्रवर्तकः। श्वे.

**सर्ववेत्ता** - सर्वं विन्दतीति, अवाप्तसमस्तकाम इत्यर्थः। श्रु.

**सर्ववेदान्तप्रत्ययम्** - सर्वेषु वेदान्तेषु प्रतीयमानम्। श्रु.

**सर्ववेदनम्** - सर्वस्वदक्षिणं सत्रम्। तै.

**सर्ववैनाशिकाः** - बौद्धाः।

**सर्वशक्तिः** - सम्पूर्णशक्तिः। वि.

[**सर्वशक्तित्वम्** - अघटितघटनासामर्थ्यम्। र.]

**सर्वशक्तित्वात्** - सर्वं शक्तिः यस्य तत् सर्वशक्ति तत्त्वात्। भाव.

**सर्वशस्त्रभृतां वरः** - नरकजरासन्धादि समरेषु क्षिप्रमनेकशस्त्रमोचनात् सर्वशस्त्रभृतां वरः श्रेष्ठः। सह.

[**सर्वशाखप्रत्ययन्यायः** - ''सर्वशाखोक्तमेकं कर्म'' इति, अनेकशाखासु प्रत्यभिज्ञायमानानां कर्मणां ऐक्यं प्रतिपादयन्न्यायः। सच्च.]

**सर्वसंस्थितिः** - सर्वाधारः। वि.

**सर्वसंस्थे** - सर्वेषां संस्था प्रलयो यस्मिन्, तस्मिन्। श्वे.

**सर्वसहः** - स्वशासनेन सर्वं देवतान्तरमपि

'मन्दाधिकारिणामाराध्यतया सहते बिभर्तीति। सह.

**सर्वस्वामित्वम्** - प्रमेयत्वव्यापकस्वत्वनिरूपितत्वम्। वा.

**सर्वस्वामी** - सर्वकृतातिशयभाक्। अधि.

**सर्वस्वारः** - यागविशेषः। नि.

**सर्वहुतः** - आत्मीयं सर्वमस्मिन् यज्ञे पुरोडाशादिरूपेण हुतमिति। वि.

**सर्वाजीवे** - सर्वान् आजीवयतीति सर्वाजीवे। श्वे.

**सर्वातिथिः** - सर्वेऽतिथयो यस्य सः सर्वातिथिः। सर्वरक्षक इत्यर्थः। रा.

**सर्वात्मभावेन** - सर्वप्रकारेण। सर्वप्रकारबुद्ध्या; अत्र आत्मशब्दः स्वभावपरः, भावशब्दश्च बुद्धिपरः। सर्वान्तर्यामिभूतेन; अत्र भवतेः गत्यर्थत्वेन बुद्ध्यर्थत्वात्। नि.

**सर्वात्मा** - वायुः। सर्वं आप्नोतीति सर्वात्मा। रा.

**सर्वादिः** - परावरसर्वपुरुषार्थमूलम्। सह.

**सर्वाधारत्वम्** - सर्वद्रव्यपतनप्रतिबन्धकसङ्कल्पवत्त्वम्। वा.

**सर्वाधिपतिः** - सर्वस्वामी। न रक्षकत्वमात्रमधिपतिशब्दार्थः, मातापितृसंरक्ष्यस्य पुत्रस्य तत्पतिकत्व व्यवहाराभावात्। सुबा.

**सर्वाधिपतित्वम्** - सर्वनिष्ठस्वत्वनिरूपकत्वम्। वा.

**सर्वाध्यक्षाय** - सर्वपुरुषार्थाधिपतये। भा.

**सर्वाननशिरोग्रीवः** - भगवान्, सर्वशरीराणामपि तच्छरीरत्वात्। श्वे.

**सर्वानुभूः** - सर्वज्ञः बृ.

**सर्वान्नीनः** - छा.

**सर्वा भूतानि** - कार्यजगदन्तर्गताः अचित्संसृष्टाः चेतनाः। छा.

**सर्वामरत्वम्** - सर्वस्मिन् समये सर्वस्मादपि निमित्तान्मरणराहित्यम्। रा.

**सर्वारम्भपरित्यागी** - देहित्वप्रयुक्तसर्वारम्भपरित्यागी। गी.

**सर्वी भवति** - सर्वकामयुक्तो भवति। प्र.

**सर्वेन्द्रियगुणाभासम्** - सर्वाभिः इन्द्रियवृत्तिभिः विषयान् ज्ञातुं समर्थम्। गी. सर्वेन्द्रियजन्यज्ञानैराभासः प्रकाशो यस्य तत् तथोक्तं ब्रह्म। इन्द्रियवृत्त्या विज्ञातुं समर्थमिति। सर्वेन्द्रियवत्त्वमप्यैच्छिकमेव। श्वे.

**सर्वेन्द्रियविवर्जितम्** - विनैव इन्द्रिय वृत्तिभिः सर्वं जानाति। गी.

**सर्वेशः** - सर्वनियन्ता। श्रु.

**सर्वेशानत्वम्** - सर्वोपात्तिप्रयोजकसङ्कल्पवत्त्वम्।

**सर्वेश्वरः** - पुरुषोत्तमः नारायणः। समाख्या चैषा सार्था भगवतः "अजस्सर्वेश्वरः सिद्धः" इति तन्नामपाठात्। गी. समर्थानामसमर्थानां च सर्वेषां शरणागतानां विलम्बनं वैक्लब्यञ्च परिहर्तुं आशु तान् सर्वान् अश्नुते व्याप्नोतीति। अश्नोतेराशुकर्मणि वरट्। उपधाया ईकारश्च। सह. सर्वनियन्ता। बृ. सर्ववस्तुशेषी। मा(कू).

**सर्वेश्वरत्वम्** - अव्याहतेच्छं सर्वनियन्तृत्वम् । श्रीसू.

**सर्वौषधम्** - ग्राम्यारण्यौषधानि । छा.

**सलिलम्** - सलिलकार्यत्वाच्छरीरं सलिलम् । सुबा.

**सलिलाशयाः** - सरांसि । रा.

**सवः** - अनुज्ञा । श्वे.

**सविकल्पकम्** - एकजातीयद्रव्येषु द्वितीयादिपिण्डग्रहणम् । त. जात्याद्यनेकपदार्थविशिष्टविषयकं द्वितीयादिपिण्डग्रहणम् । श्री. च. सप्रत्यवमर्शं प्रत्यक्षम् । न्याप. सप्रत्यवमर्शं गुणसंस्थानादिविशिष्टद्वितीयादिपिण्डग्रहणम् । य.

**सविकल्पकत्वम्**- संस्कारजन्यत्वे सति इन्द्रियजन्यज्ञानत्वम् । वा.

**सविकल्पकसमाधिः** - अधिकाकारविषयकसमाधिः । च.

**सविकासम्** - असम्बाधम् । अति.

**सविता** - (जगत्) स्रष्टा । जगत्कारणभूतः । तै. परं ब्रह्म । वेकौ. प्रेरकः । श्वे.वि. सर्वेषां साक्षाज्जनयिता । सह. सूर्यद्वारा वृष्टिसस्यादिकं सूत इति । सह. सूते जगदिति सविता जगत्कारणभूतः परमात्मा । रा.

**सवितुः** - (सवितृसम्बन्धि) सवितृमण्डलमध्यवर्ति । श्वे.

**ससम्बन्धिकत्वम्** - सम्बन्धिविषयकाकाङ्क्षोत्थापकत्वम् । वा.

**ससाम** - सान्त्वयुक्तम् । रा.

**ससामानः** - सामगानसहिताः । सान्त्ववादयुक्ताः; आतिवाहिका इत्यर्थः । श्रु.

**सह** - युगपत् । रा.

**सहः** - यशोदाबन्धनतर्जनादिकं सहत इति सहः । सह. सदृशः । भाव. धारणसामर्थ्यम् । प्राणादिस्वाभाविकसामर्थ्यम् । मनःशक्तिः । मनोबलम् । वेगः । भा. सामर्थ्यम् । तै.

**सहकारि** - आलोकादिकम् (सौगतमते) । बृ.

**सहकारिता** - तत्तत्कर्मानुगुण्येन सर्वं करोतीति; तत्त्वम् । अधि.

**सहकारी** - आलोकादिः (बौद्धमते) । श्रु. सर्वा (आ).

**सहजः** - स्वभावसिद्धः । या.

**सहजकारुण्यादेः प्रपन्नेऽतिशयितत्वम्** - उपायनिरपेक्षं सर्वनिर्वाहोपयुक्ततया कार्येऽत्यन्तप्रावण्यम् । न्याद.

**सहजारिः** - दायादः । वि.

**सहजा सिद्धिः** - औत्पत्तिकज्ञानम् । वि.

**सहभावः** - अङ्गभावः । श्री.

**सहभावनियमः** - अङ्गत्वम् । श्रु.

**सहशयनम्** - एकपर्यङ्कोपवेशनम् । छा.

**सहसा** - अतर्कितम् । या.

[**सहस्रकलशाप्लवः** - सहस्रकलशाभिषेकः । पाञ्च.]

**सहस्रम्** - अनन्तम् । शतं सहस्रमिति पाठात् ।

**सहस्रजित्** - शयानोऽयं सहस्रं सहस्रयुगसंख्यं कल्पान्तं जयतीति । सह.

**सहस्रपात्** - अनन्तशक्तिकः। वि. सहस्रं पादाः चरणाः अस्येति। पादशब्दः कर्मेन्द्रियोपलक्षकः। सह.

**सहस्रमूर्धा** - सहस्रं असंख्येयाः मूर्धानः शिरांसि अस्येति। सह.

**सहस्रयुगपर्यन्तम्** - सहस्रयुगानि पर्यन्तं यस्य तत्सहस्रयुगपर्यन्तम्। ता.

**सहस्ररश्मिः** - नानाविधविषयविषयकज्ञानवान्। प्र.

**सहस्रशीर्षः** - अनन्तज्ञानशक्तिकः। शीर्षशब्दः शिरसः ज्ञानकर्मेन्द्रियाणामाधारतया तत्कार्याणां ज्ञानशक्तीनामुपलक्षकः। वि.

**सहस्रशीर्षपुरुषः** - विराड्रूपी। श्वे.

**सहस्रशीर्षा सहस्राक्षस्सहस्रपात्**

**सहस्रबाहुः** - सर्वज्ञत्वात् सर्वशक्तित्वाच्च सर्वत्र शिरश्चक्षुः पादकार्यबाहुकार्यकरण समर्थः। सुबा.

**सहस्रशीर्षः** - परमपुरुषः परमात्मा पुरुषसूक्ते दृश्यते। वेकौ.

**सहस्रांशुः** - अपरिमितज्ञानवान्। सह.

**सहस्राक्षः** - अनन्तज्ञानकः। वि. सहस्रं अक्षीणि चक्षूंषि अस्येति। अशेः स्कौ अक्षिशब्दः। अत्र अक्षिशब्दः ज्ञानेन्द्रियनिदर्शकः। सह.

**सहस्राक्षरा** - परमव्योम्नि सहस्राक्षरत्वाम्नानं तु तत्रैव वर्णान्तरसद्भावेन वा मातृकावर्णानामेव सन्दर्भसंयोगादिविशेषेण सहस्राक्षरत्वायुताक्षरत्वादिभेदेनोपपत्तेर्वा। न्यासि. मातृकाध्यानश्लोकोक्ते भ्रूमध्यादूर्ध्वस्थिते द्वादशान्ते सहस्राक्षरत्वम्। न्यासिटी.

[**सहस्राक्षरी** - मन्त्रविशेषः। ई.]

**सहस्रार्चिः** - पाचनशोषणप्रतापनप्रकाशनधर्माणि अध्यक्षेणोपकारीणि सहस्रमर्चींषि अनेन सूर्ये निषिक्तानीति। सह.

[**सहस्रांशुः** - श्वाश्रितगुणविषये सर्वज्ञः। ई.]

**सहायः** - किङ्करः। रा.

**सहायाः** - सह अयन्ते गच्छन्तीति सहायाः सहयात्राः। 'सहायास्तु सयात्राः स्युः' इति शब्दार्णवः। या.

**सहायिनी** - सहचारिणी। अयतेस्ताच्छीलिको णिनिः। सहायभूता। सहोपपदादयतेस्ताच्छीलिको णिनिप्रत्ययः। या.

**सहितः** - स्नेहातिरेकेण अन्योन्ययुक्तः। संहितः। 'समो वा हिततयोः' इति मलोपः। रा.

**सहिष्णुः** - ब्रह्मापराधादिसहनशीलः। सह. सहनैकस्वशीलः; "बुद्ध्या अबुद्ध्या च सकलकरणैः सर्वदा सर्वथा च सञ्चितान् प्रचीयमानान्, विधिनिषेधशासनोल्लङ्घनात्मनः स्वविषयान् साधारणान् असाधारणांश्च अवज्ञानिन्दादीन् सर्वसहेन स्वेनापिदुस्सहान् स्वभक्तविषयान् अनवधिकानपि अपराधान् सोढुं शीलमस्य इति"। सह.

**सहृदयाः** - सारासारविवेचनार्ह-हृदयवन्तः । सर्वा.

**सहोपलम्भः** - सहैव प्रकारतयोप-लम्भः(?) । भाव.

**सहोपलम्भनियमः** - अयं गुणगुण्यादेर-भेदसाधक इति बौद्धमतम् । 'नायं सर्वत्र, क्वचित्तन्नियमोऽप्येकसामग्रीवेद्यत्वादिति सिद्धान्तः'। न्यासि. देशतः कालतश्च उपलम्भनियमः । श्रु. स्वोपलम्भत्वनिता-न्योपलम्भसाहित्यकत्वम् । रत्न.

**सह्यसिन्धुः** - कावेरी । पा.

**सांवृती**-(बुद्धिः) दोषसिद्धा (माध्यमिक-मते) । सर्वा (आ).

**सांसिद्धिकत्वम्** - स्वाभाविकत्वम् । नि.

**सांस्पर्शिकाः** - स्रक्चन्दनादयः । ता.

**साकल्येन संयोगः** - ययोस्संयोगे सन्धिबन्धो न दृश्यते, तयोः संयोगः । इदमेवैक्यम् । न्यासिटी.

**साक्षाज्ज्ञातृत्वम्** - साक्षात्काररूप-ज्ञानाश्रयत्वम् । श्रु.

**साक्षात्** - अव्यवधानेन । अगौणम्; मुख्यमिति यावत् । बृ.

**साक्षात्त्वम्** - जातिरूप उपाधिरूपो वा कश्चित् ज्ञानस्वभावविशेषः स्वात्म-साक्षिकः । न्याप. लैङ्गिगिकत्व शाब्दत्व स्मृतित्वरहितज्ञानत्वम् । सर्वा.

**साक्षात्सङ्गतिः** - उभयापेक्षया अन्यतरा-पेक्षया वा सङ्गतिः । श्रु.

**साक्षात् ब्रह्म** - परमात्मा । ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि क्वचिदुपचरितप्रयोगदर्शनात् तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं साक्षादिति विशेषणम् । श्री.

**साक्षित्वम्** - साक्षाद्ज्ञातृत्वम् । सि. श्री.

**साक्षी** - ज्ञानाश्रयः । भा. अहङ्कारे व्याप्रियमाणेऽयं साक्षिमात्रतया अवस्थानान्न भोक्तेत्यर्थः । श्रु. मुक्ताना-न्दयन् स्वयमपि तृप्यन् तान् साक्षात्करोति इति भक्तवृत्तसाक्षात्कारवान् । सह. सर्वावस्थायां सर्वद्रष्टः । अधि. साक्षाद्द्रष्टा । गी. स्वरूपेणानुसन्धाता । श्रु.

**सागरम्** - सगरसुतैः वर्धितम् । वि.

**साग्रः** - सम्पूर्णः । रा.

**साङ्कर्यम्** - परस्परपरिहारवतोः धर्मयोरेकत्र समावेशः । च.

**सांख्यः** - ज्ञाननिष्ठः । सांख्यं आत्मज्ञान-शास्त्रं, तद्वेदिन इह सांख्याः । यद्वा संख्या बुद्धिः ज्ञानयोगः तन्निष्ठाः सांख्याः । आत्मा तद्वेदिनः साङ्ख्याः । आत्मज्ञानशास्त्रवित् । ता. अथवा सांख्यं आत्मा तद्वेदिनोऽपि सांख्याः । यथावस्थिततत्त्वविषयया वैदिक्या बुद्ध्याऽनुसंहितः (कृतान्तः) । गी.

**साङ्ख्यम्** - ज्ञानयोगः । भा. श्री. संख्यया बुद्ध्या अवधारणीयम् आत्मतत्त्वम् सांख्यम्; तदवधारणरूपं साङ्ख्यम् । आत्मज्ञानशास्त्रम् । ता. संख्या बुद्धिः, बुद्ध्या अवधारणीयमात्मतत्त्वं सांख्यम् । गी. "बुद्धिर्मतिश्च मेधा संख्या संवित्तिरुप-

लब्धिः'' इति नैघण्टुकाः । ''पुरुषं निर्गुणं सांख्यम्'' इत्याद्यौपनिषदप्रसिद्ध्या परमात्मवदात्मन्यपि सांख्यशब्द उपपन्नः । ता. प्रकृतिविविक्तात्मोपासनम् । भा. परिशुद्धात्मचिन्तनरूपज्ञानयोगप्रदर्शनाधिकृतं शास्त्रम् । न्याप. मुमुक्षूपास्यं स्वात्मानम् । संख्या बुद्धिः तया गम्यम् । भा. संख्यया तत्त्वावधारणम् । सह.

**साङ्ख्यधीः**-संख्यया बुद्ध्या अवधारणीयमात्मतत्त्वं सांख्यम् । तद्विषयबुद्धिस्सांख्यधीः । नित्यात्मविषया बुद्धिः । गीसं.

**साङ्ख्ययोगम्** - सांख्यश्च योगश्च । श्री.

**साङ्ख्ययोगाधिगम्यम्** - सांख्ययोग शास्त्रयोस्तात्पर्यविषयभूतम् । श्वे.

**साङ्ख्याः** - ज्ञानयोगिनः । न्यासिटी. संख्या बुद्धिः, तद्युक्ताः सांख्याः, आत्मैकविषयया बुद्ध्या सम्बन्धिनः सांख्याः । गी.

**साचि** - तिरश्चीनम् । यादृच्छिकं वा । अति.

**सात्यम्** - सत्यफलभूतं सुखादि । बृ.

**सात्वतः** - 'वपञ्चमस्सात्वतो नाम विष्णोरायतनानि सः । पूजयेदाज्ञया राज्ञां स तु भागवतस्स्मृतः'' ॥ आ.

**सात्वतम्** - (पञ्चरात्रम्) सत् सत्त्वं गुणप्राधानत्वात् तद्वान् सत्वान् परमपुरुषः तेन प्रोक्तं शास्त्रं सात्वतम् । अधि.

**सात्वताः** - भगवच्छास्त्रनिष्ठाः । वि. भक्ताः । भा.

**सात्त्वताम्** - भक्तानाम् । भा.

**सात्त्वतां पतिः** - भागवतेश्वरः । सह. [सात्त्वततन्त्रप्रवक्तॄणां पालकः । सात्त्वतशब्दात् ''तदाचष्टे'' इति णिचि टिलोपे क्विपि णिलोपे च सति सात्त्वच्छब्द उक्तार्थवाचकः । या.]

[**सात्वन्तः** - सात्वतं वैष्णवतन्त्रं, तदाचक्षत इति, वैष्णवतन्त्रप्रवक्तारः । या.]

[**सात्त्वतविधिः** - श्रीपाञ्चरात्रोक्तविधिः। सच्च.]

**सात्त्विकः** - धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन सत्त्वमर्हतीति । सह. सत्त्वमूलः । गी.

**सात्त्विकम्** - ''यानि सत्त्वपदं विष्णुं वदन्ति परमेश्वरम् । तानि शास्त्राणि सर्वाणि सात्त्विकानि मतानि वै'' ॥ वेकौ.

**सात्त्विकता** - 'नित्यसत्त्वस्थः' इत्युक्तसत्त्वनिष्ठता । गद्य.

[**सात्त्विकत्यागः** - ''कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ।'' गी. र.]

**सात्त्विकांशः** - सात्त्विकतनुः । वि.

**सात्त्विकादिकर्मविभागः** - 'यजन्ते सात्त्विका' इत्यादिना गीतोक्तः । न्यासिटी.

**सात्त्विकादिगतिविभागः** - 'ऊर्ध्वं गच्छन्ती'त्यादिना गीतोक्तः । न्यासिटी.

**सात्त्विकादिदानविभागः** - 'दातव्यमिति' इत्यादिना गीतोक्तः । न्यासिटी.

**सात्त्विकाद्याहारविभागः** - 'आयुस्सत्त्व' इत्यादिना गीतोक्तः । न्यासिटी.

**सात्त्विकाः भावाः** - प्रहर्षादयः। 'प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता'। ता.

**सात्त्विकी** - शुद्धसत्त्वमयी। वि.

[**सात्यकिः** - भगवतः श्रीकृष्णास्यान्तरङ्गभूतो यादवविशेषः। या.]

**सादृश्यम्** - इदं द्विविधम्। (संस्थानादि) धर्मसादृश्यं स्वरूपसादृश्यञ्चेति। गुणविशेष इति वरदविष्णुमिश्रमतम्। न्यासि. तत्तद्वस्तुसंस्थानविशेषः। न्याप. 'भूयोऽवयवसामान्यमेव प्रतियोग्यपेक्षया सादृश्यशब्दवाच्य'मिति श्रीविष्णुचित्ताः। न्यासि. 'भूयोवयवसामान्यं सादृश्यं बहवो विदुः। पृथक्प्रमेयं त'दिति भट्टपराशरसूक्तिः, प्रमेयनिरूपणविच्छेदादव्यक्तमेतत्। न्यासि. सदृशव्यवहारासाधारणहेतुर्विषयधर्मः। श्रु.

**सादृश्यापत्तिः** - पृथङ्निर्देशानर्हस्संसर्गः। श्रु.

**साधकतमम्** - अतिशयितसाधकम्। अतिशयितं यस्मिन् सति अविलम्बेन ज्ञानं उत्पद्यते तत्। य.

**साधकतमत्वम्** - अव्यवहितसाधनत्वम्। श्रु. करणान्तरनिरपेक्षत्वम्। वे.

**साधनम्** - अनुमानोद्बोधकं पञ्चावयवं वाक्यम्। न्याप. प्रतिपादनम्। सर्वा (आ). सहकारी। रा.

**साधनचतुष्टयम्** - नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्र च फलभोगविरागः, मुमुक्षुत्वं च। त. नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्र फलभोगविरागः, मुमुक्षुत्वम्। अधि.

**साधनजातिः** - महाविद्या। सर्वा.

**साधनविकलः** - हेत्वभाववान्।

**साधनवैकल्यम्** - दृष्टान्ते हेत्वभावः। न्यासि.

**साधनालम्बनज्ञानम्** - योगशास्त्रजन्यं प्राणायामादिसाधनविषयं ज्ञानम्। वि.

**साधयितुम्** - हिंसितुम्। या.

**साधयेत्** - पूजयेत्। भा.

**साधर्म्यम्** - तद्धर्मसमानधर्मः। न्यासिटी. साम्यम्। गी.

**साधर्म्यसमः** - जात्युत्तरविशेषः। न्याप.

**साधवः** - अनुकूलाः। उपासकाः। जिज्ञासवः, कैवल्यकामाः। रा. 'न चलति निजवर्णधर्मतो यः' 'वर्णाश्रमाचारवता' इत्यादिषूक्ताः धर्मशीलाः वैष्णवाग्रेसराः; भगवद्भक्तवर्याः। ता. परकार्यसाधकाः। परोपकारपराः। भा. मित्रसमानसुखदुःखाःसुहृदः। रा. साधु कुर्वन्ति परकार्यं इति। स्वार्थनिरपेक्षपरकार्यप्रसाधनस्वभावाः। भा.

**साधारणः**- अनैकान्तिकभेदः हेत्वाभासविशेषः। न्याप.

**साधिभूतम्** - सर्वभूतस्थं सर्वशरीरकम्। भा.

**साधिष्ठम्** - साधुताम्। भाव. साधुतमत्वम्। छा.

**साधु** - सम्यक् । रा. साधुकर्म । छा.

**साधुः** - उचितः । रा. धर्मशीलः । गी. ब्राह्मणादिरमणीयशरीरयुक्तः । बृ. भक्तापेक्षितदूत्यसारथ्यादि साध्नोति साधयतीति साधुः । "राध साध संसिद्धौ" । सह. शोभनः । छा.

**साधुकारः** - साधुसाध्विति सम्भाषणम् । रा.

**साधुयुवाध्यायकः** - यथाविधि सम्यक् सम्प्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं अविस्मरणान्नित्यं नवं यथा भवति तथा अध्ययनवान् । तै.

**साधुवादः** - साध्विति वादः । रा.

**साधुसेवी** - भागवतानाचार्यत्वेन ज्ञात्वा तत्सेवापरः । न्यावि.

**साध्यम्** - पुरुषार्थः । तत्साधनम् । नी. साधयितुमभिमतम् । वि.

**साध्यत्वम्** - उत्पत्ति, प्राप्ति, विकृति, संस्कृति, भेदेन चतुर्विधम् । श्री.

**साध्यभक्तिः** - प्रपत्तिः; तत्प्राप्तौ स एव साधनमिति मतिः । न्यासि.

**साध्यविकलत्वम्** - दृष्टान्ते साध्याभावः । रत्न.

**साध्याः** - देवविशेषाः । रा. नित्याः । "यत्र पूर्वे साध्याः" इति श्रुतेः । रा.

**साध्यात्मम्** - आत्मनि अध्यात्मं तेन सहितं शरीरावयवाक्षिहृदयादिषु वसन्तम् । भा.

**साध्याविशिष्टः** - साध्यस्यैव हेतुतया प्रयोगे साध्याविशिष्टाख्यः स्वरूपासिद्धभेदः । न्याप.

**साध्याविशिष्टत्वम्** - असिद्धत्वमित्यर्थः । भाव.

**साध्योपायः** - भक्तिः । श्रु. [भक्तिः प्रपतिश्च । र.]

**सानुः** - पर्वतानां समभागः । 'सानुः समा गिरेः क्षितिः' इति कोशकाराः । या.

**सानुक्रोशः** - सदयः । रा.

**सान्तानिकः** - अयोध्यावासिभिः प्राप्तः पुण्यलोकविशेषः । रा. लोकविशेषः । पा.

**सान्त्वम्** - समीचीनभाषणम् । रा.

[**सांदीपनिः** - भगवतः श्रीकृष्णस्य धनुर्वेदोपदेष्टा महर्षिः । या.]

**साम** - क्रुष्टप्रथमादिलक्षणाः सप्त स्वराः । तै. गीतिः । ता. दुःखितानां स्वजनानां सान्त्वनम् । सान्त्वनम् । रा. स्वगायककालुष्यनाशकः । स्वगायकानां पापं स्यतीति साम । सह. सगानो मन्त्रः । वि.

**सामगः** - साम स्वानुभवप्रीत्या स्वयमेव गायतीति सः । सह.

**सामगायनः** - हाव् हाव् हाव् इति सामानि गायन्तीति सामगायनाः मुक्ताः; तेऽस्य सन्तीति । सह.

**सामग्री** - कारणस्य सहकारिसम्पत्तिः । अधि.

**सामन्तः** - सन्निहितदेशवार्ती राजा । पा.

**सामर्थ्यम्** - कुर्वत्स्वभावत्वमिति बौद्धः । सहकारिसन्निधौ कुर्वत्स्वभावत्वं सहकार्य-

भावप्रयुक्तकार्याभाववत्त्वं वा तु तत्। न्याप. लिङ्गम् । श्रु. वृत्त्यघटकीभूतपदार्थान्वितार्थकत्वम्। वा. शक्तिः विक्रमो वा। रा. ''सामर्थ्यं नाम प्रतिपादितार्थाविरुद्धार्थान्तराक्षेपकत्वम्। तत् शब्दार्थयोरुभयोरपि सम्भवति । वै. [कार्यकरणशक्तिः । ई.]

**सामवेदः** - गीतिप्रधानो वेदः। 'सामवेदस्योत्कर्षो गीतिप्रधानत्वादिभिः'। ता.

**सामानाधिकरण्यम्** - प्रवृत्तितिनिमित्तभेदेन एकार्थवृत्तित्वम्। श्री. भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्नर्थे वृत्तिः। श्री. श. श्रु. भिन्नविशेषणाभिधायिशब्दानां एकविशेष्यवृत्तित्वम् । श्रु. भिन्नप्रवृत्ति निमित्तानां एकस्मिन्नर्थे वृत्तिः । अधि. विशेष्यवाचकपदप्रकृतिकविभक्तिसजातीय विभक्त्युपस्थितिद्वारा अभेदप्रकारकशाब्द बोधजनकत्वम्। वा.

**सामानि** - साममन्त्राः। छा.

**सामान्यः** - समान एव। वि.

**सामान्यम्** - जातिः। भाव. 'नित्यमेकमनेकसमवायि' इति वैशेषिकादयः। नित्यमेकमनेकानुगतमिति तार्किकलक्षणम्। न्यासि. समानत्वम्। श्री.

**सामान्यच्छलम्** - तात्पर्यान्तरारोपणेन तद्दूषणं सामान्यच्छलम्। यथा 'अयमहो ब्राह्मणोऽनूचानः' इत्यत्र सुक्षेत्रे शालिसम्पत्तिवत् सम्भावितत्वविवक्षया 'किमाश्चर्यम्' इत्युक्ते ब्राह्मणत्वसामान्ये व्याप्यत्वं आरोप्य? अनूचानत्वे च व्यापकत्वमविवक्षितमारोप्य ब्राह्मणत्वहेतोर्व्रात्यैरनैकान्तिकत्व कथनमिति । न्याप.

**सामान्यतोदृष्टम्** - अस्मदादिप्रत्यक्षायोग्यार्थानुमापकम् । किञ्चिज्जातीयात् तद्व्यापकजातीयस्यानुमानं सामान्यतोदृष्ट (म्। यथा धूमादग्नेः) इति केचित्। न्याप. (अनुमानम्) प्रत्यक्षायोग्यार्थम्। श.

**सामान्यशब्दः** - विशेषनिर्धारणानर्हशब्दः। न्यासिटी.

**सामान्यविशेषन्यायः** - क्वचित्प्रयुक्तस्य सामान्यशब्दस्य अन्यत्र श्रुते विशेषे पर्यवसानम्। वे. सामान्यशब्दस्य उपात्तविशेषविषये सङ्कोचः। श्रु. सामान्यशब्दस्य विशेषपदोपस्थापिते पर्यवसानम्। भाव.

[**सामिधेनी** - अग्निसमिन्धने विनियुक्ता ऋक्। या.]

**सामीप्यम्** - समीपदेशसंयोगः। न्यासि. [भगवत्सायुज्यान्तर्गतो धर्मविशेषः । सच्च.]

**साम्परायः** - अन्तिमदशा। पा. देहापक्रमणम् । कौ. परलोकसाधनव्यापारः । पारलौकिकम्। क. [युद्धम्। या.]

**साम्पराये** - देहादुत्क्रमणकाले। श्री.

**साम्परायिकः** - युद्धे साधुः। रा.

**साम्परायिकम्** - परलोकहितम्। भा.

**साम्पादिकम्** - सम्पादमर्हतीति। भाव.

**साम्यम्** - अभिजनवृत्तगुणाद्यनपेक्षया

सर्वाश्रयणीयत्वम् । य. अभिजनविद्या-वृत्तानादरेण सर्वसमाश्रयणीयत्वम् । सुन्दर. अशनायादिराहित्यम् । भा. जातिगुण-वृत्तादिनिम्नोन्नतत्वानादरेण सर्वैराश्रय-णीयत्वम् । गद्य. श्रियो भगवत्साम्यं जगज्जनकत्व शेषित्वशरण्यत्वप्राप्यत्वा-दिभिः । श्रीत. समदेशवर्तित्वम् । सर्वा. समानम् । श्री. सर्वैरप्याश्रयणीयत्वे समत्वं, स्वतोऽपक्षपातित्वं वा । गद्य.

**साम्राज्यम्** - उत्तमस्वर्गफलम् । छा.

**सायुज्यम्** - सयुजोर्भावः; अत्र सालोक्यादिनयात् भुज्यमानं युक्शब्दार्थः। ... न हि सयुक्छब्दः एकशब्दपर्यायः । सर्वा. (सार्ष्टित्वम्) समानात्मगुणत्वम् । संश्लेषम् । भा. समानभोगत्वम् । ता. समानगुणत्वम् (युज्यत इति युक् गुणः) । तै. समानभोगः वेकौ. जगद्व्यापारादि-भगवदसाधारण धर्मव्यति रिक्तज्ञानानन्द-सत्यसङ्कल्पत्वादिगुणात्यन्तसाम्यम् । न्यासि. सयुग्भावः । "भिन्नयोरेकत्र साधारणयोगं दर्शयति सयुक्छब्दः" । समानात्मगुणयोगित्वम् । न्यासि. समानेन गुणेन युक् सयुक् ब्रह्मणा समानगुणः; तस्य भावः सायुज्यम्, ज्ञानानन्दाद्याविर्भावः । वि. मोक्षः । सुन्दर. युज्यत इति युक्; समानगुणकः सयुक्; तस्य भावः । श्रु. समानभोग्यत्वम् । छा. समानगुणयोगः । बृ. [समानभोगादियुक्तत्वम् । सच्च. "सायुज्यमुभयोरत्र भोक्तव्यस्या-विशिष्टता" । र.]

**सारः** - स्थिरांशः । सर्वा. उत्कर्षः । रा. आनन्दरूपः । मा.

[**सारकैङ्कर्यम्** - "कृतकृत्यस्य कैङ्कर्यं यदनन्यप्रयोजनम् । गुर्वादिरक्षणर्थं वा तत्सारं सम्प्रचक्षते" ॥ र.]

**सारम्** - प्रधानम् । श्रु.

**सारघाः** - मधुमक्षिकाः । सारं पुष्पादिगतं घ्नन्ति गच्छन्तीति; (अत्र सारघशब्दः तदुपार्जितमधुनि लाक्षणिकः) । भा.

**सारङ्गः** - चातकः ऋश्यः । वि.

**सारणी** - केदारकुल्या । पा.

**सारथिः** - रथाश्वनियन्ता । रा.

**सारूप्यम्**- समानवेषता । भा. [भगवत्सायुज्यान्तर्गतो धर्मविशेषः । सच्च.]

**सार्थः** - सहायभूतपथिकसंघः । रा.

**सार्ष्टिता** - समानऋद्धित्वम् । छा. ["सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता । र.]

**सालकटङ्कटा** - विद्युत्केशस्य राक्षसस्य पत्नी माल्यवतः पितामही । रा.

**सालक्षण्यम्** - वस्तुनो वस्त्वन्तराद् व्यावृत्तिहेतुभूतस्याकारस्यानुवृत्तिः । श्री.

**सालज्यम्** - सालेषु प्राकारेषु ज्या युद्धसाधनं यस्य तत् सालज्यम् । स्थानीयम्, 'स्थानीयं निगमोऽन्यत्तु यन्मूलनराद्बहिः' । इत्यमरः । कौ.

**सालपोतः** - बालतरुः । वि.

**सालावृकः** - वनश्वविशेषः । कौ.

**सालावृकाः** - वनश्वानः । भाव.

**सालोक्यम्** - भगवता सह समानलोकावस्थायित्वम् । भा. [भगवत्सायुज्यान्तर्भूतो धर्मविशोषः । सच्च.]

**सावकाशत्वम्** - विषयान्तरलाभः अप्रमाणकोटिनिवेशो वा । श्रु.

**सावधानाः** - अवहितबुद्धयः । अधि.

**सावर्णिकाः** - चत्वारो मनवः; "ब्रह्मसावर्णो रुद्रसावर्णो धर्मसावर्णो दक्षसावर्ण इति दक्षस्य दुहितरि तैश्चतुर्भिर्मनसा जनिताः" । ता.

**सावित्रः** - अष्टवसुष्वन्यतमः । रा.

[**सावित्री**- गायत्री । सच्च.]

[**सावित्र्यनुवचनम्** - उपनयनसंस्कारः । पाञ्च.]

**साशनानशने** - धूमार्चिरादिमार्गौ । साशनं भोगार्थः अनशनं अपवर्गार्थः । भा.

**साहसम्** - अविमृश्यकारित्वम् । नि. सहसा शास्त्रार्थाविमर्शेन कृतं साहसम् । कामचार इति यावत् ।भा.

**साहचर्यम्** - सहपाठः । श्रु.

[**साहायकम्** - सहायता । या.]

**साहित्यम्** - समानकालिकत्वम् । सामानाधिकरण्यम् । रत्न.

**साह्यम्** - उपकारः । सहकारित्वम् । रा.

**सिंहः** - महानृसिंहसंहननः । सिञ्चति हिनस्तीति वा सिंहः । "षिच क्षरणे" षस्सः । "सिचस्संज्ञायां हनुमौ कश्च" । अन्यत्र हिंसि हिंसायां पचाद्यच् पृषोदरादित्वात् व्यत्यये सिहः । इदित्वान्नुम् नस्यानुस्वरः; स्वभक्तप्रधर्षकहिंसकः (विष्णुः) । सह.

**सिंहसंहननः** - रमणीयावयवसन्निवेशवान् । रा.

**सिंहाद्रिः** - वनाद्रिः । सुन्दर.

**सितम्** - सत्त्वम् । भाव.

**सिता** - सत्त्वमयी । श्रु.

**सितासितरक्ता** - तेजोबन्नद्वारा लोहितशुक्लकृष्णरूपयुक्ता । म.

**सिद्धः** - अयत्नसाध्यः । न ह्यस्य गोप्तृत्वमौपाधिकम् । स्वत एव सर्वगोप्तृत्वात् । सह. ज्ञानाद्यतिशयसम्पन्नः । सिद्धसमीहित इति वा । ता. नोपायैस्साध्यः; स्वरूपेणैव भक्तानां सिद्धः । सह. प्रसिद्धः । या.

[**सिद्धयः** - ऐश्वर्यादिफलानि । र.]

**सिद्धसंकल्पः** - स्वतन्त्रस्वेच्छासाधितसर्वार्थतया सिद्धः संकल्पः अस्येति । सह

**सिद्धसाधनम्** - इष्टप्रसङ्गः । च.

**सिद्धाः** - अणिमाद्यैश्वर्ययुक्ताः । योगसिद्धाः । नी. युक्ताः । सिद्धसाधननिष्ठाः रा. [सिद्धिकामाः । आदिकर्मणिक्तः आशंसायां वा । सच्च.]

**सिद्धाञ्जनम्** - मोहजनकपटलरोगदूषितनेत्रस्य यथावस्थितपदार्थनिरीक्षणसाधनम् । न्यासिटी. वस्तुतत्त्वज्ञानप्रतिबन्धकनिवर्तकम् । व. श्येनादिनामवत् तद्व्यपदेशन्यायेन ग्रन्थनाम । रत्न.

**सिद्धान्तः** - प्रामाणिक इत्यभ्युपगतोऽर्थः ।

स त्रिविधः । सर्वतन्त्रप्रतितन्त्राभ्युपगमसिद्धान्तभेदात् । प्रामाणिकत्वाभिमतैः परिगृहीतोऽर्थः । न्याप.

**सिद्धान्तबाधः** - अपसिद्धान्तः । सर्वा (आ).

[**सिद्धान्तसारपद्धतिः** - शैवसमयाचारप्रतिपादको ग्रन्थविशेषः । सच्च.]

**सिद्धार्थः** - स्वत एवावाप्तसमस्तकासतया सिद्धोऽर्थोऽस्येति । सह.

**सिद्धार्था** - सिद्धनिवृत्तिः । रा.

**सिद्धिः** - असिद्धिः द्र. न्याप. अनुभवः । श्रु. उत्पत्तिः । गी. उपायैरयमेव साध्यत इति । सह. कार्यसाधनम् । कौ. परिज्ञानम् । रा. पूर्वसंचितसुकृतविशेषवशात् जन्मप्रभृति-सिद्धाणिमाद्यैश्वर्यम् । ता. प्रकाशः । श्रु. याथात्म्यावबोधः । आचार्य.

**सिद्धिदः** - अणिमगरिमाद्याः सिद्धीः साधकेभ्यो ददातीति । सह.

**सिद्धिसाधनः** - यस्य साधनमपि "ये तु धर्म्यामृतमिदं" इति न्यायेन अनुष्ठानवेलायामपि प्रियंकरत्वात् सिद्धिरूपं सः । सिद्धिः साधनं यस्येति विग्रहः । सह.

**सिद्धोपायः** - ब्रह्म । श्रु. श्रीः तत्पतिश्च । श्रीत. [कृपाविशिष्टेश्वरः । "कृष्णं धर्मं सनातनम्" इति वचनात् । र.]

**सिनीतः** - बध्नीतः । भाव.

**सिनीवाली** - अङ्गिरसः स्मृतौ भार्यायां जाता । वि.

[**सिलम्** - विकीर्णधान्यम् । र.]

**सिलिन्ध्रः** - कदली । 'कदल्यां तु सिलिन्ध्रः स्यात्' इति शब्दार्णवः । या.

**सिन्धुः** - नदी । बृ.

**सीता** - अनादिभगवत्परतन्त्रचेतना; अयोनिजा वा । रा. सीतोत्पन्नतया तथोक्ता रामभार्या । रा.

[**सीमन्तः** - वनिताकेशमध्यरेखा । या.]

**सुकरत्वम्** - दुःखरहितत्वम् । नि.

**सुकीर्तिः** - गरुडस्य पत्नी । गरुद.

**सुकृतः** - सुष्टुकृतः । रा.

**सुकृतम्** - इष्टफलदित्सारूपपरमात्मप्रीतिः । कौ. सुखेन कृतं (कार्यं) यस्य तत् । तै.

**सुकृतत्वम्** - अनतिक्लेशरूपत्वम् । तै.

**सुकृती** - पुण्यकर्मा । गी.

**सुखम्** - अनुकूलानुभवः । गी. अनुकूलत्वमात्रमेव सुखलक्षणम् । मनोवृत्तिप्रकरणात्तु क्वचिदनुकूलानुभवेत्युक्तिः । ता. आनन्दः । श्रु. आत्मधर्म इति प्रज्ञापरित्राणकृद्भिरेव न्यायसुदर्शने उक्तम् । न्यासि. आनन्दरूपम् । पद. इन्द्रियसौष्ठवं सुखमिति कश्चित् पक्ष आत्मसिद्धाविति । न्यासि. तत्तद्विषयेषु पुण्यजन्यमनोवृत्तिः । यत्र विषयज्ञाने पुण्यं आनुकूल्यं जनयति तत् सुखम् । वि. देहधर्मविशेषः एवं दुःखमपीति प्रज्ञापरित्राणकृन्मतम् । परमते सुखजनकतयाऽभ्युपगतं ज्ञानमेवैतन्मते सुखम् । न्यासि. प्रीतिरूपज्ञानविशेषः । वे. यदनुभूयमानं पुरुषानुकूलं भवति तत् । श्री. विषयानुभव-

दशा । वि. विषयभोगः । भा. वैषयिकसुखत्वं ज्ञानस्य विषयाधीन मित्यनुकूलत्वाविशेषात् विषयोऽपि सुखशब्दवाच्य एव । न्यासि. सुखदुःखेच्छाद्वेषप्रयत्नाः पञ्च तत्तदुत्पादकतयाऽभिमतबुद्धिविशेषानतिरिक्ता वेदार्थसंग्रहे समर्थिताः । न्याप. सुखादिर्मनोवृत्तिभेद इत्यात्मसिद्धिग्रन्थोऽन्याभिप्रायक इति । न्यासि. सुखकरम् । रा.

**सुखदः** - अमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य स्वाप्तिसुखं ददातीति । समाधिनिष्ठसुखप्रदः । सह.

**सुखदुःखानां भोक्तृत्वे हेतुः** - सुखदुःखानुभवाश्रयः । गी.

**सुखरूपत्वम्**-अनुकूलत्वम् । निरपेक्षत्वमित्ययुक्तम् । नी.

**सुखी** - पुत्रजन्मादिसुखयोगी । ता.

**सुग्रीवः** - वालिभ्राता सूर्यपुत्रो वानरेन्द्रः। रा.

**सुघोषः** - स्वाध्यायघोषवान् । सह.

**सुजातम्** - सुन्दरम् । रा.

**सुतम्** - एकाहगतमभिषवणम् । छा.

**सुतजनिम्** - पुत्रजनिम् । सर्वा.

**सुतन्तुः** - शोभनो न प्रतिलन्घ्यः तन्तुः कृत्रिमशान्तिभावनादिरूपः तद्ग्रहणवागुरागुणोऽस्येति । सह.

**सुतपाः** - संहृतसाक्षितया शोभनं तपः ज्ञानं अस्येति । सह.

**सुतरसि** - सम्यक् तारयसि । तै.

**सुतेजाः** - वैश्वानरात्मनश्चक्षुषो नामैवम्; शोभनं तेजो यस्य स सुतेजाः । आदित्यो हि अस्यात्मनश्चक्षुः । अग्नि. शोभनं तेजो यस्य स सुतेजाः । द्युलोको हि सूर्यचन्द्र तेजोयुक्ततया सुतेजा भवति । छा.

**सुदर्शनः** - शुभदर्शनः । गुणप्रभावानभिज्ञानामपि दर्शनमात्रमेवास्य शोभनम् । सह. शंखणनृपपुत्रः । रा.

[**सुदर्शनम्** - भगवच्चक्रम् । तदुक्तं पौष्करे 'प्रणतानां च भक्तानां यस्माच्च सुलभं सदा । ददाति दर्शनं तेषां स्मृतं तस्मात्सुदर्शनम् ।' इति । सच्च.]

**सुदामा** - नदीविशेषः । रा.

**सुदुर्लभः** - दुर्लभतरः । गी.

**सुदूरगः** - परिच्छिद्य ज्ञातुमशक्यः । वर.

**सदृढमुपपन्नम्** - निपुणतमप्रतिपादितप्रक्रियया प्रमाणतर्कैरबाध्यत्वेन निश्चितम् । ता.

**सुदेवः** - वैदर्भः क्षत्रियविशेषः । रा.

**सुधन्वा** - भरतस्य धनुर्वेदाचार्यः । रा. शोभनधनुः। सुधानिमित्तसुरासुरसमरसंहारिशरासनत्वात् । सह.

**सुधा** - सुखं धीयते पीयत इति । वि.

**सुधाकारः** - प्रासादादिलेपनकारः । रा.

[**सुधिता** - शोभनबुद्धिमत्ता । सच्च.]

**सुधिताः** - सुप्रतिष्ठिताः । सुखिताः । सच्च.

**सुनीधा** - मृत्युदुहिता । वि.

**सुन्दरः** - सौन्दर्येण असुरमनांसि सुष्ठु उनत्ति आर्द्रयतीति । विप्रलब्धव्यानां दृष्टिमनोहरः। सह.

**सुपर्णः**-गौण्या वृत्त्या जीवः, योगेन वा। श्वे. प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा तमसः पारं नयतीति । सह. ब्रह्ममेतुमामित्यनुवाकत्रयाध्यायां तद्व्रतश्च । वि. शोभने पर्णे (पक्षौ) यस्य। सुष्ठु पारं संसारपारं नयतीति। सह. समीचीनवाहनम्। बृ.

**सुपर्णा** - सुपर्णौ गमनसाधनत्वेन सुपर्णशब्दितपक्षसदृशज्ञानादिगुणवन्तौ।

**सुपर्णौ** - जीवेश्वरौ; जीवस्य पुण्यपाप रूपपर्णद्वयत्त्वात्, ईश्वरस्य निग्रहानुग्रहरूपपर्णद्वयवत्त्वाञ्च। च.

**सुप्तः** - अज्ञानावृतः। सुखरूपं प्राप्तः। मा (कू). लुप्तप्रकाशः। बृ.

**सुप्तजनः** - अर्धरात्रः। रा.

**सुप्तशक्तिः** - सूक्ष्मावस्थचिदचिदाख्यस्वशक्तिः। भा.

**सुप्रसादः** - सम्मुखेषु शोभनः प्रसादः अस्येति। "तमक्रतुं पश्यति वीतशोकः धातुः प्रसादात्"। सह.

**सुप्रापः** - अकृच्छ्रेण प्राप्यः। 'इषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनुशिष्यते। ता.

**सुबाहुः** - शत्रुघ्नस्य ज्येष्ठः पुत्रः। रा.

**सुब्रह्मण्यः** - उद्गातृगणप्रविष्टः कश्चित् ऋत्विक्, नायमन्यवत् सदसि स्थितः। श्वे.

**सुभगः** - चक्षुष्यः, कान्तः। या.

[**सुभागाः** - भगवत्समाश्रयणौपयिकभग्यविशेषभाजः। सद्भिरानन्दनीयाः। वल्लभाः। सच्च.]

**सुभगत्वम्** - अतिशयितकान्तिमत्ता। शर.

**सुभिक्षा** - लब्धान्ना। छा.

**सुभुजः** - प्रपन्नभरधौरेयतया शोभनाः भुजा अस्येति। सह.

**सुमनसः** - सारासारविवेकज्ञाः। श्रु.

**सुमनस्यमाना** - सर्वप्रजासु शोभनमनोयुक्ता। तै. सुमनोभावमात्मन इच्छतीति क्यच्। क्यजन्तात् ताच्छील्ये चानश्। श्रीसू.

**सुमन्त्रः** - राघवसूतः। रा.

**सुमुखः** - सुप्रसन्नमनोहरमुखः। ध्यात विषये प्रसन्नमुखः। सह.

**सुमेधाः** - आराधकेषु सुशोभना मेधा धारणावती धीरस्येति। सह.

**सुमेरुः** - सूर्यदत्तवरेण स्वर्णमयतां प्राप्तः पर्वतविशेषः। रा.

**सुयामुनः** - शोभनं पावनं मनोहरं यमुनासम्बन्धिजलक्रीडापुष्पापचयरासक्रीडादि अस्येति। सह.

**सुरथः** - वैदर्भस्य सुदेवस्य कनिष्ठः पुत्रः। रा.

**सुरभिः** - वरुणालयस्था काचिद्धेनुः। रा.

**सुरानन्दः** - आपत्सखत्वेन सुरा आनन्दन्ति अस्मादिति। सह.

**सुराध्यक्षः** - धर्माधिकारिभिः लोके आराध्यानां देवतानां अकृताभ्यागमकृतविप्रणाशपरिहारेण फलंदातुमनुसन्धाता (अनिरुद्धः)। सह. लोकाध्यक्षो द्र.

**सुरारिहा** - सुरारिं हिरण्यकशिपुं उरोविदारं हतवान् इति। सह.

**सुरुचिः** - सूर्योदयाद् रोचत इति रुचिः अहः; साऽस्य शोभनेति । अर्चिषोऽहः । सह.

**सुरेन्द्रः** - विष्वक्सेनः । रा.

**सुरेशः** - फल्गुपदलिप्सूनां ब्रह्मादीनामपि संविधाता । सह.

**सुरेश्वरः** - ऋजुगतीनां सुराणां देवानां ईश्वरः निर्वाहकः । सह.

**सुलभः** - अनर्घोऽपि मूल्याभासेन स्वीकर्तुं शक्यः । यथा अङ्गरागदायिनी नैकवक्रा 'वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै' इति स्वाधीनं चकार । सह. प्राप्यः । गी.

**सुलभा** - लब्धुमर्हा । रा.

**सुलोचनः** - हृदयालुचोरलोचनः । सह.

**सुवः** - स्वर्गलोकः । तै.

**सुवर्णज्योतिः** - कमनीयदेदीप्यमान-शरीरो भवति । तै.

**सुवर्णबिन्दुः** - सुवर्णैः सुशोभनैः वर्णैः पटुतरपदकवर्णैः बिन्दति आस्तिक्यमत-मपलपतीति; बिदि अपलापे । सह.

**सुवर्णरजतस्रजाम्** - स्वसौन्दर्य-लावण्यानुगुणनित्यनिर्मलविराजमान-स्रग्वस्त्राभरणोद्भासिताम् । श्रीसू.

**सुवर्णवर्णः** - कनकनिकषनिर्दोषो-ज्ज्वलदिव्यवर्णः । सह.

**सुवर्त्मा** - सदाचारसम्पन्नः । रा.

**सुवानः** - दाता । तै.

**सुविभूतिभिः** - पुष्कलोपचारैः । भा.

**सुविरूढमूलं** - सुष्ठु विविधं रूढमूलम् । गी. सुष्ठुत्वं दृढनिरूढवासनत्वेन अन्यैश्छे-त्तुमशक्यत्वम् । विविधत्वं प्रायश्चितादिभिः एकैकस्य कर्माख्यमूलस्य च्छेदेऽपि अनादिकालं मनोवाक्कायैर्बुद्धिपूर्वकं अबुद्धिपूर्वकञ्च विधिनिषेधविषयविचित्र-कर्मणां अनन्तप्रकारसंभृतत्वम् । ता.

**सुवीरः** - आत्मलाभवतां विनिपात-प्रतीकारपरतया सुतरां वीरः । सह.

**सुवीर्यम्** - स्वरक्षणेन परपराभवः । रा.

[**सुवेलाः** - शान्ताः । ''सुवेलः प्रणते शान्ते, सुवेलः पर्वतान्तरे'' इति विश्वः।या.]

**सुव्रतः** - नाभागनृपपुत्रः । रा. यथा-कथञ्चित् प्रविष्टानां सर्वथा परिपालन-दृढव्रतः । यथा 'सकृदेव प्रपन्नाय' इति । सह. शोभनव्रतवान्, भक्तानुकम्पया व्रताचरणवान् । सह.

**सुशकत्वम्** - अनिर्वेदेन प्रवृत्तिविषयत्वम् । ता.

**सुशीलम्** - महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वम् । श्रु.

**सुश्लोक्यः** - अतीव वर्णनीयः । भा.

[**सुषणम्** - सुव्यक्तं भिद्यमानं बाधमानं पापादिकम् । सुसहनीयम् । सच्च.]

**सुषुप्तम्** - यत्र स्थाने जीवस्सुप्तस्सन् रागादिदोषानुपहतः स्वप्नं च न पश्यति तत्स्थानम् । मा.

**सुषुप्तस्थानः** - सुषुप्तमेव स्थानं यस्य सः । मा(कू).

**सुषुप्तिः** - इन्द्रियव्यापारोपरतिः । कौ. (निद्रायां) मनसोऽप्युपरतिः । गी. सकलबाह्यान्तःकरणोपरतिः । श्रु.

**सुषेणः** - कश्चित् यक्षः । वि. पञ्चोपनिषत्कायः । सुशोभना सेना बद्धमुक्तनित्यविजयोपकरणः शुद्धसत्त्वमयो पञ्चोपनिष्वत्कायः यस्येति, सः । सह.

**सुसन्धिः** - मान्धातृनृपपुत्रः । रा.

**सुसुखं कर्तुं** - सुसुखोपादानम्; कर्तुं सुसुखं, करणेए सुसुखमित्यर्थः । ता.

**सुसूक्ष्मम्** - सर्वगतत्वेऽपि सर्वान्तःप्रवेशनसमर्थम् । व.

**सुहृत्** - प्रियोपदेष्टा । वेकौ. निरवधिकवात्सल्यशालि । श्वे. वयोविशेषानङ्गीकारेण स्वहितैषी । गी. शोभनहृदयवान् । सह. शोभनहृदयः । अनुकूलहृदय इत्यर्थः । रा. हितैषी । गी.

**सुहृदः** - वयोविशेषानपेक्षया हितैषिणः । ता.

**सूकरः** - नरकविशेषः । वि.

**सूक्तम्** - ऋक्समूहविशेषः । वि.

**सूक्ष्मः** - निरुपाधिकसमाधिसाक्षात्कृत सूक्ष्मरूपः । सह. सूक्ष्मार्थविवेचनशक्तः । क. अतीन्द्रियः । रा.

**सूक्ष्मम्** - आकाशादिन्यायेन स्पर्शवत्सु प्रतिघातरहितम् । केवलषाड्गुण्यविग्रहं वासुदेवाख्यम् परब्रह्म । श्री. नामरूपविभागानर्हम् । वे. पररूपम् । न्यासि. सर्वान्तःप्रवेशयोग्यम् । भा.

**सूक्ष्मत्वम्** - व्याप्त्यर्हत्वम् । श्रु.

**सूक्ष्ममूर्तिः** - व्यूहः । वि.

**सूक्ष्मरूपम्** - देहादिपरिणामरहितांशः ।

**सूक्ष्मातिसूक्ष्मम्** - सूक्ष्मवस्तुष्वन्तःप्रवेशयोग्यम् । श्वे.

**सूचकः** - पिशुनः । रा.

**सूची** - राजगामी पिशुनः । वि.

**सूतः** - पुरावृत्तकथाशंसी । ब्राह्मण्यां क्षत्रियाज्जातः सारथ्ये स्तुतिकर्मणि च नियुक्तः । रा.

**सूताः** - पौराणिकाः । रा. वर्णसङ्करविशेषाः । बृ.

**सूतिः** - पुत्रादिः । सूयते सोमोऽस्यामिति, सोमाभिषवभूमिः । सन्तानः । वि.

**सूत्रम्** - संक्षिप्तं लक्षणादिवाक्यम् । न्याप. महत्तत्त्वम् । भा (११-१२-१९).

**सूददोहाः** - सूददोहपदघटितमन्त्रोपधेया इष्टकाः । अग्नि.

**सूदाः** - पाचकाः । रा.

**सूनृतम्** - सुशीलो भवेत्याद्यभिहितहितसत्यवाक्यम् । वि.

**सूनृता** - सत्यप्रियवाक् । क.

**सूनृताम्** - मधुरां हितां च । भा.

**सूरयः** - तत्त्वत्रयविवेचनचतुराः । भा. संसारात्यन्ताभाववन्तो नित्या । श.

**सूरिः** - ज्ञानवान् । भा. नित्यसूरिः गरुडादिः । अति.

**सूर्यः** - कश्चित् राक्षसः । वि. चन्द्रः । 'नवो नवो भवति' इतिश्रुतौ अह्नाङ्केतु सूर्यः

चन्द्राप्यायकत्वात् चन्द्रमा इत्युच्यते । तद्वच्चन्द्रोऽपि सूर्यकिरणानुप्रवेशायत्त-प्रकाशविशेषवत्त्वात् सूर्यशब्देनाभिधीयते। रा. जनकः । वि. वायुः सदा सरत्यस्मादिति। सह. सुवति प्रेरयति जनान् कर्मणीति। 'षू प्रेरणे' 'राजसूये'त्यादिना क्यप्प्रत्ययान्तो रुडागमश्च । रा. सुष्ठु ईरयति रश्मीन् इति सूर्यः । बृ. सूर्यन्तु प्रकाशः (परमात्मा) । स्वभक्तबुद्धीनां सुष्ठु प्रेरकः । ई.

**सूर्यवर्चाः** - कश्चित् गन्धर्वः । वि.

**सूर्या** - नवोढा । भा.

**सृक्क** - ओष्ठप्रान्तः । अति.

**सृङ्का**-कुत्सितगतिः । शब्दवती रत्नमाला । क.

**सृज्यम्** - शरीरम् । भा.

**सृज्यशक्तयः** - कर्माणि । बृ.

**सृतिः** - गतिः । बृ. श्री. भाव. मार्गः । बृ. गी.

**सृप्तः** - निर्गतः । बृ.

**सृप्ताः** - सम्बद्धाः । श्रु.

**सृमरः** - गवयः । र.

**सृमराः** - स्त्रीणां केशसहा(?) योगयुक्त-विनीलदीर्घवाला मृगाः । रा.

**सृष्टिः** - जगत् । सृज्यत इति सृष्टिः । बृ.

**सृष्टिचिन्तकाः** - सृष्टिविषयविचारवन्तः। मा (कू).

**सेतुः** - असङ्करकारी । बृ. (परमात्मनि) **अमृतस्य प्रापकः**, सिनोतेः बन्धनार्थत्वात् । **सेतुरिव वा सेतुः** । संसारार्णवपारभूतस्या-मृतस्य प्रतिलम्भक इत्यर्थः । श्री. आधार-भूतः । क. कूलस्य प्रतिलम्भकः । मु. कूलान्तरप्राप्तिहेतुः । श्री. (नारायणः) 'षिञ् बन्धने' इति धातौ निष्पन्नः । स्वस्मिन्नाधारे विश्वमसङ्कीर्णं सिनोति बध्नातीति सेतुः । सर्वा. नियमेन धारकः । अधि. परमात्मा । संसारजलधिसंतरणोपा-यभूतः । यथो. मर्यादा । रा. लोकानामसंकरकारित्वात् सेतुरिव सेतुः । न पुनरिह प्राप्यान्तर-प्रापकत्वंसेतुत्वम् । श्वे. सिनोति बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातम-सङ्कीर्णमिति सेतुरुच्यते । श्री. सिनोति बध्नाति स्वस्मिन् चिदचिद्वस्तुजातम-सङ्कीर्णमिति सेतुरुच्यत इति सामान्या-त्त्विविसूत्रे भाषितम् । छा.

**सेतुम्** - परां काष्ठाम् । सर्वा.

**सेनाग्राणि** - सेनाग्रेसरान् । सेनानेतॄ-नित्यर्थः । रा.

**सेवनम्** - आफलोदयं सादरं निरन्तरपरि-ग्रहोऽत्र सेवनम् । गीसं.

**सेवा**- अनुभवः । अति. चिरानुवर्तनम् । गी. भक्तिः । ता. सेव्यं प्रति करणत्रयस्य निरन्तरानुकूलवृत्तिः । ता.

**सैनिकाः** - सेनायां समवेताः । रा.

**सैन्धवम्** - लवणम् । भाव.

**सैन्धवखिल्यः** - लवणखण्डः । खिल एव खिल्यः । स्वार्थे यत् । बृ.

**सैन्धवघनः** - लवणखण्डः । वे. बृ.

**सैन्याः** - सेनायां समवेताः । रा.

**सैरन्ध्रिका** - अलंकारशिल्पकारिका। पा. प्रसाधनकर्त्री शिल्पिका। भू.

**सोपाधिकसत्ता** - केनापि परिणामविशेषेण तत्तदवस्थस्य सत्ता। श्रु.

**सोमः** - अमृतम्। भा. (चन्द्र इव) आनन्दयिता। तै. चन्द्रनाम्नाऽनेन प्राणग्रहणं प्राणस्य सप्तान्नब्राह्मणे चन्द्रसम्बन्धप्रतीतेर्लक्षणया सोमेति प्राणसम्बोधनम्। कौ. चन्द्रवदानन्दयिता। तै. मुक्तामृतम्। सह. लताविशेषः। वेकौ. उत्पादकः। सौति उपादयतीति। तै. हिमम्; (लक्ष्यार्थः)। श्वे.

**सोमपः** - हयमेधे सोमपानकर्ता। सह.

**सोमराजानः** - दिव्यदेहाः। श्रु.

**सोमसंस्थाः** - (सप्त) अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशिवाजपेयातिरात्राप्तोर्यामाः। वि.

**सोमसवनः** - सोमसवननामाऽश्वस्थः। चन्द्रवदाह्लादकत्वात् सोमसवनत्वम्। छा.

**सोमाधारः** - (पितृगणः) अधिकारिदेवताः अग्निष्वात्ताद्याः वसुरुद्रादित्यरूपाः। वि.

**सोमो राजा** - देवभोग्यदिव्यदेहयुक्तः। बृ.

**सोम्य** - प्रियदर्शन। प्र. सोमार्ह। प्रियदर्शनेति वाऽर्थः। छा.

**सोम्यः** - सोमार्हः। बृ.

**सोष्यन्ती** - प्रसवाभिमुखी। बृ.

**सोस्मया** - उत्स्मयसहिता। तकारलोपश्छान्दसः। भगवत्संश्लेषजन्यमहानन्दनिमग्नतया सर्वदा स्मयमाना (श्रीः)। श्रीसू.

**सौकुमार्यम्** - महाबलत्वेऽपि "पुष्पहासः" इति नाम दुहानं मार्दवम्। यथोक्तं "सुकुमारौ महाबलौ" इति। ता. मार्दवम्। सुन्दर.

**सौत्रान्तिकः** - सूत्रस्यान्तं बुद्धं पृष्टवान्, तत एव सौत्रान्तिक इति तेन व्यपदिष्टः बुद्धशिष्यः। न्यासिटी.

**सौदामनी** - सुदामनामकपर्वताभिमुख्येनोत्पन्ना विद्युत्। व.

**सौनिकः** - पशुमारकः। रा.

**सौन्दर्यम्** - अवयवशोभा। श्रीस्त. ता. वे. वै. आभिरूप्यम्। सुन्दर. [सामुद्रिकोक्तावयवसंस्थानविशेषः। या.]

**सौभगम्** - सौभाग्यम्। तै.

**सौम्यम्** - अनुग्रम्। या. आह्लादकरम्। रा.

**सौम्यत्वम्** - परेषामभ्युदयप्रावण्यम्। गी. हिताभिप्राययोगः। ता.

**सौम्यस्वरूपः** - अन्तस्स्थाच्यततया सम्यक् प्रेक्ष्यः। वि.

**सौम्या** - मनोज्ञा। या.

**सौलभ्यम्** - अतीन्द्रियस्यापि आश्रयणयोग्यविग्रहपरिग्रहः। वर. लब्धुं सुशकत्वम्। सुखेन सन्निधानदातृत्वम्। या. स्वतो वाङ्मनसागोचरस्य सकलमनुजनयनविषयतां गतत्वम्। भा.

**सौवरः** - स्वरे भवः। द्वारादित्वादैजागमः। बृ.

**सौशील्यम्**-मन्दैस्सह संश्लेषशीलत्वम्। शर. महतो नीचैस्सह नीरन्ध्रेण संश्लेषः। नि. रा. सुन्दर. व.य. महत्त्वाप्रतिरुद्धा मन्दैस्सह निरन्तरसंश्लेषरसिकता।ता. महतो मन्दैस्सहनीरन्ध्रसंश्लेषरसिकत्वम्। गद्य. महतो मन्दैस्सह नीरन्ध्रेण संश्लेष-रुचिः। रघु. महतो मन्दैस्सह नीरन्ध्र-संश्लेषस्वभावः। या. महतो मन्दैस्सह नैरन्ध्र्येण संश्लेषस्वभावत्वम्। भा. सुस्वभावत्वम्। रा.

**सौषुम्णम्** - सोमपोषकममृतम्। वि.

**सौसादृश्यम्** - अत्यन्तसादृश्यम्। सर्वा. अन्ततः स्वरूपविशेषः। न्यासि. समान धर्मातिरेकः, समानधर्मभूयस्त्वम्। रत्न.

**सौस्नातिकः** - स्नानसौष्ठवानुयोक्ता। पा.

**सौहार्दम्** - आनुकूल्यम्। भा. परहितैक-प्रवृत्तचित्तत्वम्। वर. आश्रितानाश्रितवि-भागाभावेन सकलहितैषत्वम्। सुन्दर. स्वतः सर्वहितैषित्वम्। गद्य. स्वसत्तान-पेक्षतद्रक्षापरत्वम्। य. हितैषित्वम्। ता.

**सौहृदम्** - सुहृत्कर्तव्यम्; हितोपदेश इति यावत्। रा. सुहृदयशब्दस्य युवादित्वाद् भावेऽण् प्रत्ययः। 'हृदयस्य हृल्लेखयदण्-लासेषु' इति हृद्भावे आदिवृद्धौ सौहृद-शब्दः। ...... या.

**स्कन्दः** - स्वयमसुरादीन् स्कन्दयति शोषयतीति। सह.

**स्कन्दधरः** - सुरसेनान्यं स्कन्दं गुहं धरति (विभूतितया) इति। सह.

**स्कन्धः** - आश्रमः। भाव.

**स्तनयित्नुः** - मेघगर्जनम्। बृ.

**स्तब्धः** - अनारम्भशीलः। गी. स्तिमित-स्वभावः। ता. अप्रणतस्वभावः। श्वे. अविनयोद्धतः। वि. परिपूर्ण इव तृणीकृत-जगत्त्रयः। छा. मूर्खः। भा.

**स्तब्धम्** - अविनीतम्। भा.

**स्तब्धाः** - परिपूर्णं मन्यमानाः न किञ्चित् कुर्वाणाः। गी. स्तब्धताहेतुः परिपूर्णं मन्यमाना इति। न किञ्चित्कुर्वाणा इति तु शब्दार्थः। किञ्चित् गुरुवन्दनादिक-मपीत्यर्थः। ता.

**स्तम्बः** - तृणादिः। या.

**स्तम्भः** - गर्वः। भा. ''स्तम्भुर्गत्यर्थो हिंसार्थो वा''। म.

**स्तवः** - गुणिनिष्ठगुणाभिधानम्। शर.

**स्तवप्रियः** - यथाकथंचित् स्वविषय-स्तोत्रप्रियः। सह.

**स्तव्यः** - स्तवार्हः। सह.

**स्तिमितम्** - प्रतिबद्धम्। श्रु.

**स्तुतः** - तत्तदिष्टसिद्धये सर्वदा सर्वैः स्तूयत इति। सह.

**स्तुतशस्त्रैरेति** - स्तुतशस्त्रैः साम्यमेति। स्तुतशस्त्रदृष्टिः कर्तव्येत्यर्थः। छा.

**स्तुतिः** - (अभ्युदयकालेषु) गानसहिता प्रशंसा। वि. गुणकथनम्। गीसं. गुणिनि-ष्ठगुणाभिधानम्। भाव. गुणख्यापनम्। ता. गुण्यवच्छिन्नगुणाभिधानम्। श. गुणिनिष्ठ-गुणाभिधानरूपं (स्तोत्रम्)। अच्यु. गुणा-

वच्छिन्नगुण्यनसन्धानम्। नि. गुणकथनम्। वन्दिकृत्यं वा। वे. वाचिकपूजा। रा.

**स्तुतित्वम्** - प्ररोचकत्वम्। श्रु.

**स्तोता** - स्वस्तोतृस्तुतिशीलः। सह.

**स्तोत्रम्** - स्वस्तोत्रमपि प्रसन्नेनानेन (परमात्मना) करणभूतेन निष्पाद्यत इति। सह. गानविशेषविशिष्टाच्चारणम्। श्रु. प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्। गानविशिष्टं मन्त्रोच्चारणम्। वे. [भगवद् यामुनाचार्यपादानुगृहीतः स्तोत्ररत्रास्यो भगवत्परः प्रबन्धविशेषः। सच्च.]

**स्तोत्रियाः** - स्तोत्रसाधनभूता ऋचः। बृ.

**स्तोभाः**-सामवेदे ऋगक्षर(ा) व्याप्तसाम-भागपूरणार्थाः 'हा उ हाउ' इत्यादयः शब्दाः स्तोभाः। या.

**स्तोमः** - त्रिवृत्पञ्चदशादिलक्षणः ऋक् संख्याविशेषः। छा.

**स्तोमम्** - स्तोत्रम्। तै.

**स्त्री** - सभर्तृका नारी। रा.

**स्त्रीकृतम्** - स्त्रीनिमित्तम्। रा.

**स्त्रीत्वम्** -स्त्रीत्वाश्रयविग्रहविशेषवत्त्वम्। रत्न.

**स्त्रीधर्मिणी** - रजस्वला। श.

**स्त्रीप्रज्ञा** - स्त्रीणां या उचिता गृहव्यापार-विषया प्रज्ञा तादृक्प्रज्ञावती। बृ.

**स्त्रीसन्निधौ वचनम्** - स्त्रीजनभ्रामकं वचनमित्यर्थः। रा.

[**स्थगयितुं** - आच्छादयितुम्। र.]

**स्थगुः** - उरोनिस्सृत उन्नतो विकृतावयव-विशेषः। रा.

**स्थलस्य रमणीयता** - निम्नोन्नतत्वर-हितकोमलसिकतामयत्वम्। रा.

**स्थविरः** - सर्वं कालं तिष्ठतीति। सह.

**स्थविष्ठः** - स्थूलः; ताराशिंशुमाराकारेण स्थौल्यात्। यथासङ्कल्पं बहुभवन् सूक्ष्मा-वस्थस्य स्थूलावस्थतया विस्तारवत्त्वा-दतिशयेन स्थूलः। सह.

**स्थाणुः** - उमापतिः। वेकौ. दृढानुग्रहः तिष्ठतीति। सर्वमशिवं संशमय्यापि, शिवं बहु विश्राण्यापि स्वयं न विश्राम्यति यः, सः। सह.

**स्थाणुमती** - नदीविशेषः। रा.

**स्थानम्** - अवस्था। श्रु. अवस्थानम्। रा. आलम्बनम्। वि. फलम्। गी.

**स्थानक्रोधी** - स्वसमस्थाने क्रोधवान्। रा.

**स्थानदः** - "परमपदप्राप्तिहेतवे" इति मन्त्रवर्णात् स्थानं परं पदं ददातीति। सह.

**स्थाने** - उचितम्। 'स्थाने स्यादुचितेऽ-व्ययम्' इति रत्नमाला। या. युक्तम्। रा.

[**स्थावरप्रतिष्टा** - निरन्तरस्थितिः। ई.]

**स्थावरम्** - स्थिरम्। रा.

**स्थितम्** - अव्यापकम्। बृ.

**स्थितधीः** - ज्ञानयोगः; स्थितप्रज्ञता। ता.

**स्थितधीलक्षा**-स्थितधीः लक्षं यस्यास्सा स्थितधीलक्षा ज्ञानयोगाख्यस्थित प्रज्ञता-साधनभूतेत्यर्थः (कर्मनिष्ठाः)। ता.

**स्थितप्रज्ञः** - ज्ञाननिष्ठानिष्ठः । अस्य चतस्रोऽवस्थाः - यतमान संज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकार संज्ञेति । एताश्चतस्रोऽवस्थाः गीतायां द्वितीयाध्याये, ५८, ५७, ५६, ५५, श्लोकेषु क्रमेणोच्यन्ते । ता.

**स्थितस्थापकः** - नातिरिक्तसंस्कारः वैशेषिकवत्, किन्तु संस्थानविशेषः । न्यासि. स्थितस्थापके तु कर्मनिवृत्तावपि तदविनाभूतसंयोगविशेषत्वं वक्तुं युक्तम् । न्याप.

**स्थितिः** - अप्रच्युततया अवस्थानम् । ता. उत्तरक्षणानुवृत्तिः । शर. येन जातानि जीवन्तीत्युक्तरूपेण प्राणनलक्षणं अन्तरात्मतया स्थानम् । लोकपालसोम सूर्यादिरूपेण बहिः पोषकत्वरूपं स्थानम् । वि. कालान्तरेऽपि विद्यमानता सा । च द्रव्याणां स्वरूपेण सर्वकालनुवृत्तिरूपा । गद्य. द्वितीयादिक्षणसम्बन्धः । श्रु. [वर्तनम् । अनुष्टानमिति यावत् । र.]

**स्थितिपालनम्**- लोकमर्यादास्थापनम् । वि.

**स्थितिहेतुभूतः** - स्थावरत्वहेतुभूतः । अप्रवृत्तिहेतुरित्यर्थः । (जैनमते) । श्रु.

**स्थिरः** - प्रणयसन्धाने तदपचारदुर्विचाल्यत्वात् स्थिरः । सह.

**स्थिरम्** - नाशरहितम् । श्री. त. (पुरुषसूक्तम्) सर्ववादिभिरपि भगवत्परतया अङ्गीकृतम् । वै.

**स्थिरचित्तः** - अतिसंकटेऽपि अङ्गीकृतविषयपरित्यागरहितमनस्कः । रा.

**स्थिरत्वम्** - आश्रितापराधैः तत्प्रदर्शकैरपि अक्षोभ्यत्वम्; तथा हि 'मित्रभावेन सम्प्राप्त'मिति । स्तो. चलनानाश्रयत्वम् । न्यासिटी.

**स्थिरधीः** - ज्ञातव्यार्थेषु निश्चितबुद्धिः । न्यावि. ज्ञाने स्थिरत्वं च संशयविपर्ययराहित्यम् । न्यावि. स्थितप्रज्ञस्य या तृतीया दशा एकेन्द्रियसंज्ञाख्या; तद्दशापन्नः 'स्थिरधी' रित्युच्यते । यथा गीतायाम् - 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते'' । इति ।

**स्थिरबुद्धिः** - स्थिरे आत्मनि बुद्धिर्यस्य सः । ता.

**स्थिराः** - स्थिरपरिणामाः (आहाराः) । गी.

**स्थूलः** - एकत्र स्थित्वा सर्वमव्यवहितं स्प्रष्टु भूमिष्ठस्य च चन्द्रमसं परिमार्ष्टुं शक्तिः प्राप्तिः । तयाऽतिप्रकृष्टया विशिष्टः । सह.

**स्थूलभुक्** - स्थूलं रूपादिकं भुङ्क्ते । मा (रं). स्थूलान् भोगान् भुङ्क्त इति, भोजयति इति च । मा (कू).

**स्थूलसूक्ष्मप्रकटप्रकाशः** - स्थूलत्वात् प्रकटः, सूक्ष्मत्वात् अप्रकाशः .... (स्थूलसूक्ष्मप्रकटाप्रकाशः इति च पाठः) । वि.

**स्थेमा** - उत्पत्तिलब्धाकृतेः अर्थस्य आप्रणाशसमग्रयाः स्थितिः । त. स्थितिः ।

श्रु. त. स्थिरशब्दात् 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच् । 'प्रियस्थिर' इत्यादिसूत्रेण स्थिरशब्दस्य स्थाशब्दे 'प्रकृत्यैकात्' इति प्रकृतिभावे च सति स्थेमेति रूपम् । या. स्थितिः । श्रु. स्थेमा स्थितिरिति । न स्थिरत्वमित्यर्थः । अयमाशयः । यद्यपि स्थिरशब्दादिमनिच् न सम्भवति, पृथ्वादिष्वस्य पाठाभावात् । .... तथापिप तिष्ठतेरौणादिक इमनिन् प्रत्ययः । भाव. स्थितिः । औणादिके मनिनूप्रत्ययान्तः । श्रीस्तु.

**स्थेयः** - विवादपदनिर्णेता । तिष्ठत्यत्र विवाद इति । या.

**स्थैर्यम्** - अकम्पनीयत्वम् । य. अध्यात्मशास्त्रोदिते अर्थे निश्चलत्वम् । बाह्यकुदृष्टिभिरक्षोभणीयत्वं, निस्सन्देहत्वम् । ता. गी. उपाश्रितसंग्रामे आत्ममरणनिश्चयेऽपि पलायनादिराहित्यम् । भा. क्रोधनिमित्तैरविकारः । भा. जितेन्द्रियत्वम् । रा. निश्चलत्वम् । ता.

**स्थौल्यम्** - तिर्यग्दूरत्वम् । न्यासि.

**स्नपनम्** - स्नानानुकूलव्यापारः । सर्वेभ्यो धातुभ्यः स्वार्थे णिजिति केषाञ्चिन्मतात् स्नानमात्रे वा स्नपन (पद) प्रयोगः । या.

**स्नातकः** - समाप्ताध्ययनवान् । सकलब्रह्मचारिवृत्तिशून्यः । नी.

**स्नातकाध्वर्यवः** - स्नातका अध्वर्यवो येषां ते । स्नातकव्रतयुक्ततया समीचीनयाजकानुष्ठपितयज्ञविशुद्धान्तःकरणाः । म.

**स्नानम्** - ''मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च । वारूणं मानसं चेति सप्त स्नानान्यनुक्रमात् ॥'' इति स्नानं सप्तविधम् ॥ ''आपो हिष्टादिभिर्मान्त्रं मृदालम्भस्तु पार्थिवम् । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् । यत्तु सातपवर्षेण दिव्यं तत् स्नानमुच्यते । वारुणं चावगाहस्तु मानसं विष्णुचिन्तनम् ॥'' इति तल्लक्षणानि । र.

**स्नापकः** - तैलाभ्यङ्गादिस्नानकारी । रा.

[**स्नापनाध्यायः** - भगवदादिमूर्त्यभिषेचनप्रकारप्रतिपादकः पाञ्चरात्रसंहिताध्यायविशेषः । सच्च.]

**स्नाव** - (नान्तं नपुंसकम्) सिरेत्यर्थः । बृ.

**स्निग्धः** - तत्कालोचितप्रियपरः । रा. दोषानवेक्षणेन प्रीतिपूर्वमनुवर्तनशीलः । भा.

**स्निग्धम्** - आर्द्रम् । रा. स्नेहवत् मृदादि । न तु जलम् । न हि कश्चिदपि सलिलं स्निग्धमिति जानाति । न्यासि.

**स्निग्धाः** - स्नेहयुक्ताः । गी.

**स्नेहः** - उपादित्सा । प्रीतिः । न्यासि. प्रीतिः तैलं च । रा. भक्तिः । श्रीस्त. अति. रूपस्पर्शादिविशेषः । वैशेषिकमत इव गुणः कश्चिदिति केचित् । न्यासि.

**स्पन्दनम्** - ईषच्चलनम् । सुन्दर.

**स्पर्धा** - पराभिभवेच्छा । वेकौ. परसुखासहिष्णुता । भा. [गर्वप्रयुक्ता पराभिभवेच्छा । परस्परसङ्घर्षः । र.]

**स्पर्शः** - अस्मदादिस्पर्शनेन्द्रियग्राह्य विजातीयव्यावृत्ताद्रव्यम् । न्यासि. दानम् ।

रा. निर्वृत्तशरीरेन्द्रियस्य गर्भगतविषयेन्द्रिय-संसर्गजं ज्ञानम् (सौगतमते)। बृ.

**स्पर्शजाः** - (कामाः) शीतोष्णादयः। गी.

**स्पर्शतन्मात्रम्** - आकाशजन्यं वायूपादानद्रव्यम्। सुबा.

**स्पर्शतन्मात्रत्वम्** - रूपशून्यत्वे सति स्पर्शवत्तन्मात्रत्वम्। वा.

**स्पर्शनम्** - त्वगिन्द्रियम्। रत्न.

**स्पर्शाः** - कादयो मावसानाः (वर्णाः)। छा.

**स्पर्शितम्** - दत्तम्। पा.

**स्पष्टाक्षरः** - (प्रतिपाद्यया चानया ऋद्ध्या) स्पष्टीकृतवेदाक्षर इति। सह.

**स्पृणोतु** - उज्जीवयतु। तै.

**स्पृहा** - विषयेच्छा। सन्निहितेषु रागः। गी.

[**स्फातिः** - उज्जृंभणम्। र.]

**स्फारः** - विस्तीर्णः। दशा.

**स्फिग्देशः** - वालमूलप्रदेशः। रा.

**स्फुटः** - विभवः (अवतारः)। वि.

**स्फुटावभासः** - अनेकविशेषणविशिष्टावभासः। श्रु.

**स्फुटीकारः**-आकांक्षितविशेषप्रदर्शनम्। श्रु.

**स्फुरणम्** - (ज्ञानस्य) भासमानताव्यवहारानुगुण्यम्। श्रु.

**स्फोटः** - प्रणवरूपशब्दः। भा. नादैः स्फोट्यत इति व्युत्पत्त्या एकरूपशब्दः। श्रु. स्फोट्यतेऽर्थोऽनेनेति व्युत्पत्त्याऽर्थ-प्रकाशनवर्णशक्तिः। न्यासिटी.

**स्मयः** - अनादरः। "ष्मिङ् अनादरे" इति धातुः। रा. गर्वः; महद्विषये निकृष्टबुद्धिः। भा.

**स्मरः** - स्मरणम्। छा. ज्ञानवासनानुसारेण संश्लेषः। सि.

**स्मरणम्** - सानुग्रहया बुद्ध्या विषयीकरणम्। ई.

**स्मरति** - निरतिशयप्रियां स्मृतिं करोति। गी.

**स्मरपरवशत्वम्** - धर्मविरुद्धकामोपभोगश्रद्धाविह्वलत्वम्। स्तो.

**स्मारम्** - निरन्तरस्मरणम्। तै.

**स्मार्तम्** - (स्मृत्युक्तं) प्रधानम्। बृ.श्री.

**स्मेरः** - हर्षविकासी। या.

**स्मृतयः** - स्मृतयस्त्रिविधाः धर्मशास्त्रपुराणेतिहासभेदात्। तत्राद्यन्त्ययोररदूरविप्रकर्षात् एकविद्यास्थाननिवेशः। न्याप.

**स्मृतिः** - अङ्गिरसः पत्नी। तस्याः सिनीवाली, कुहूः, राका, अनुमतिः इति कन्यकाः। वि. अनुभूताविस्मरणम्। भा. अनुभूतार्थाविस्मरणम्। ज्ञातार्थविषय विस्मरणाभावः। रा. पूर्वानुभूतविषयं, अनुभवसंस्कारमात्रजन्यं ज्ञानम्। त. पूर्वानुभूतविषयं अनुभवसंस्काररमात्रजन्यं ज्ञानम्। त. पूर्वानुभूतविषयं अनुभवसंस्कारमात्रजं ज्ञानम्। गी. पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानम्। य. भक्तिः। भा. यथावस्थिततत्त्वज्ञानम्। गी. अर्जुनेना-

स्यार्थस्येतःपूर्वमनवगमात् वाक्येन प्रथमं स्मृतेरनुदयात् तन्मूलभूतशब्दजन्योऽनुभव इह स्मृतिशब्देन लक्ष्यत इत्याह - स्मृतिः ........इति। ता. संस्कारमात्रजं ज्ञानम्। न्याप. [अतितविषयज्ञानम्। ई.]

**स्मृतिप्रमोषः** - अनुभूतैकदेशविषया स्मृतिः। न्याप. तत्तानवगाहिस्मृतिः। सर्वा (आ). विस्मृतिः। त.

**स्मृतिलम्भः** - आत्मध्यानलाभः। छा. आहारशुध्द्यादिक्रमेण ध्रुवानुस्मृतिसिद्धिः। 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'। त.

[**स्मृतिसंग्रहः** - वरदराजकृतः सर्व-स्मृत्यर्थसंग्राहकः प्रबन्धविशेषः। सच्च.]

**स्मृतिसन्तानम्** - तेन(?) स्मृतिः सन्तन्यते यत्रेति क स्मृतेः सन्तानो यत्रेति वा व्युत्पत्त्या नपुंसकत्वमत्र नेतव्यम्। ततश्चित्तैकाग्र्यं शब्दार्थः। ता. स्मृतिः सन्तन्यते यत्र, स्मृतेः सन्तानो यत्रेति वा स्मृतिसन्तानशब्देन प्रकृतं वेदनमुच्यत इति नपुंसकत्वोपपत्तिः। पुल्लिङ्गतया वा पठितव्यम्। ता.

**स्रक्तिः** - कोणः। छा.

**स्रग्वी** - (दिव्यमीनतनुः) तिर्यक्त्वेऽपि परत्वसूचनी वैजयन्ती स्रगस्य नित्ययोगिनीति। सह.

**स्रवन्त्यः** - नद्यः। बृ.

**स्रष्टा** - सृजति विश्वमिति। कर्मवैचित्र्यानु-गुण्येन जगत् सृजतीति। सह.

**स्रामः** - नासिका यस्य सदा स्रवति, सः। छा.

**स्रुग्भाण्डम्** - यज्ञोपकरणम्। रा.

**स्रोतांसि** - इन्द्रियाणि। रा.

[**स्यमन्तकम्**- मणिविशेषः। या.]

[**स्यात्** - कथंचित् (जैनमते)। ई.]

[**स्रक्** - बहुगुणा (माला)। पाञ्च.]

**स्वः** - आत्मभूतः। बृ. भगवल्लोकः। छा. स्वस्य; आत्मनः। विभक्ति-व्यत्ययच्छान्दसः। बृ.

[**स्वतःप्राप्तम्** - स्वरूपानुबन्धि। र.]

**स्वम्** - धनम्। बृ. स्वतस्सिद्धम्। सुन्दर

**स्वकर्म** - देवमनुष्यादिभावः। वि.

**स्वकृपा** - स्वतस्सिद्धा कृपा। सुन्दर.

**स्वक्षः** - तत्सौ (लक्ष्मी) न्दर्यसुधोदधि-पारीणदिव्यकरणः। सह.

**स्वगोष्ठीनिष्ठः** - लौकिकपरीक्षकसन्निधौ दुर्वचः। त.

**स्वङ्गः** - लक्ष्मीस्पृहणीयदिव्यदेहः। सह.

**स्वच्छत्वम्** - निर्मलत्वम्। श्रु.

**स्वच्छद्रव्यत्वम्** - गतिनिरोधकत्वाभावे सति चाक्षुषविषयद्रव्यत्वम्। वा.

**स्वतन्त्रः** - स्वं तन्त्रं प्रयोजकं यस्य सः। च. स्वसङ्कल्पमात्राधीनप्रवृत्तिनिवृत्तिकः। शर.

**स्वतन्त्रत्वम्** - इतरनियोगानर्हत्वम्। रघु.

**स्वतः** - (स्वतः श्रीस्त्वं विष्णोस्स्वमसि) कर्मरूपोपाधिं विनेति यावत्। श्रीत.

**स्वतःप्रकाशत्वम्** - स्वतःसिद्धप्रकाश-धर्मत्वम्। त.

**स्वतःप्रयोगः** - मुख्यप्रयोगः। भाव.

**स्वतःप्राप्तः** - ऐच्छिकविभागकृतः । न तु स्वरूपप्रयुक्त इत्यर्थः 'श्रीश्रीशयोर्विशेषः स्वतः प्राप्तः' इति श्रीरहस्यत्रयसारोद्धृत वाक्ये । श्रीत.

**स्वतस्सिद्धम्**- कारणान्तरोत्पत्तिशून्यम् । हय.

**स्वतः सिद्धसर्वोत्कृष्टत्वम्** - इदञ्च भगवति न परेच्छाऽप्रयुक्तसर्वोत्कर्षरूपम् । लक्ष्मीच्छाप्रयुक्तत्वात् । किन्तु परेच्छामात्राप्रयुक्तसर्वोत्कर्षवत्त्वरूपम् । तस्य भगवदिच्छयाऽपि प्रयुक्तत्वात् । श्रीत.

**स्वतःसिद्धः** - सृज्यत्वसंहार्यत्वरहितः । न्याति.

**स्वदृक्** - करणनिरपेक्षं सर्वद्रष्टा । स्वप्रकाशः । स्वयंप्रकाशज्ञानस्वरूपः । भा.

**स्वधा** - पितरः । वेकौ. श्रीः । श्रीत. ''स्वधा त्वं लोकभावनी''ति स्मृत्या लक्ष्मीः । श्रीत.

**स्वधाभोजिनः** - पितरः । रा.

**स्वधितिः** - छेत्ता । तै.

**स्वधृतः** - ऐश्वर्यमस्य न समाध्याद्युपाधिकम् । किन्तु स्वभावतो धृतमिति स्वधृतः । सह.

**स्वनवेक्षणीयम्** - सुतरामदर्शनीयम् । जुगुप्सितमित्यर्थः । रा.

**स्वनिर्वृतिः** - आत्मानुभवजं सुखम् । भा.

**स्वनिष्ठम्** - (अन्यं प्रति) अपृथक्सिद्धिरहितम् । त. स्वतन्त्रम् । सर्वा.

**स्वपक्षविहतिः** - अपसिद्धान्तः । अधि.

**स्वपरनिर्वाहकः** - निर्वाहकान्तरनिरपेक्षः । च.

**स्वप्नः** - निद्रा । गी. निद्रायां (पुरुषस्य) बाह्येन्द्रियप्रवर्तनोपरमः । गी.

**स्वप्नधीगम्यम्** -स्वप्नकल्पबुद्धिप्राप्यम् । विशदतमप्रत्यक्षतापन्नानुध्यानैकलभ्यमित्यर्थः । वे.

**स्वप्नस्थानः** - यत्र स्थित्वा जीवः स्वप्नपदार्थान् पश्यति तत् स्वप्नस्थानम् । तदेव स्थानं यस्य सः । कण्ठदेशस्थः । मा (कू).

**स्वप्नाध्यायविदः** - स्वप्नवाचिवेद वाक्यविदः । श्रु.

**स्वप्नान्तः** - सुषुप्तिः । च. छा.

**स्वप्नान्तम्**-स्वप्नमध्यम् । स्वप्नस्थानम् । बृ.

**स्वप्नाभावः** - सुषुप्तिः । श्री.

**स्वप्न्या** - स्वप्नावस्था । बृ.

**स्वप्रकाशता** - अनन्याधीनप्रकाशत्वम् । श्रु.

**स्वप्रकाशत्वम्** - दीपस्य हि स्वप्रकाशत्वं स्वीयतमोनिरासकत्वं वा स्यात् स्वविषयज्ञानोत्पादकत्वरूपं वा स्यात् । ज्ञानस्य स्वप्रकाशत्वं च स्वविषयव्यवहारोत्पादकत्वमेव । भाव.

**स्वप्रतिष्ठाक्षरम्** - 'स्वे महिम्नि प्रतिष्ठित', इति स्वप्रतिष्ठिताक्षररूपं ब्रह्म । श्वे.

**स्वप्रभत्वम्** - स्वयंप्रकाशत्वम् । अधि.

**स्वभावः** - अपर्यनुयोज्यः अनादिसिद्ध

आकारः। न्याद. ईश्वरः; स्वस्मिन् भवतीति। रा. नियतसम्बद्धम्। ता. निरुपाधिकधर्मः। श्रु. प्रकृतिः। भा. गी. प्रकृतिवासना। गी. प्रामाणिकं रूपम्। सर्वा. प्रकृतिः, भूतसूक्ष्मतद्वासनादिकम्। गी. यावदात्मभाव्याकारः। गद्य. शब्दः (?)। वि. स्वासाधारणो भावः। न्यासि. गीसं. स्वासाधारणो भावः, प्राचीनवासनानिमित्तस्तत्तद्रुचिविशेषः। गी. स्वकीयो भावः, ब्राह्मणादिजन्महेतुभूतं प्राचीनं कर्म। गी.

**स्वभावम्** - वस्तूनामुष्णानुष्णस्वभावम् (तत्तद्वस्त्वसाधारणधर्मम्)। श्वे.

**स्वभावजम्** - स्वभावसिद्धम्। रा.

**स्वभावतः** - स्वेच्छातः। श्वे.

**स्वभावनिह्नवः** - स्वासाधारणधर्माप्रतीतिः। च.

**स्वभावविजयः**- क्षुत्पिपासानभिभूतत्वम्। भा.

**स्वमतम्** - स्वेच्छा। रा.

**स्वमतविरोधः** - अपसिद्धान्तः। सर्वा (आ).

**स्वमपीतः** - स्वस्मिन् प्रलीनः। श्रु.

**स्वमाया** - स्वासाधारणशक्तिः। रा.

**स्वमृतम्** - अतिशयेन भोग्यः। तै.

**स्वयम्** - स्वतन्त्रेण आत्मना। या.

**स्वयञ्जातः** - प्रार्थनानैरपेक्ष्येण स्वयमेव जातः प्रादुर्भूतः। सह.

**स्वयंज्योतिः** - यः स्वात्मानं अन्यांश्च प्रकाशयति सः। भा. स्वयंप्रकाशः। त. स्वयंप्रकाशः। ज्योतिश्शब्दस्य प्रकाशे स्वरसत्वात्। न्यासिटी.

**स्वयम् प्रकाशत्वम्** - अनन्याधीनप्रकाशत्वम्। श्रु. स्वसत्तयैव व्यवहारयोग्यत्वम्। नी. स्वस्य (स्वनिष्ठ) व्यवहारानुगुण्ये निरपेक्षहेतुत्वम्। न्यासि.

**स्वयंप्रकाशता** - स्वसत्तयैव स्वाश्रयाय प्रकाशमानता। श्री. त.

**स्वयंप्रभः** - स्वयंप्रकाशः। न्यासि.

**स्वयंप्रभुः** - स्वयं प्रभवतीति स्वयंप्रभुः। अनियाम्य इत्यर्थः। रा.

**स्वयंभु** - स्वतः सर्वज्ञम्।

**स्वयंभुः** - स्वयमेव भवतीति, नारायणः। बृ.

**स्वयम्भूः** - जन्मरहितो विष्णुः। रा. नारायणः, अवयवार्थपौष्कल्यात्। श्रु. परमकारणभूतो नारायणः; अवयवार्थ पौष्कल्यात्। वेकौ. स्वतन्त्रः, ईश्वरः। क. स्वेच्छामात्राधीनप्रादुर्भावकः। वेकौ. विष्णु। श्रु. स्वलीलादिप्रयोजनाय स्वेच्छया स्वासाधारणीं परमसत्त्वमयीं प्रकृतिमेव सुरनरसजातीयसन्निवेशामधिष्ठाय स्वयमेव भवतीति। सह.

**स्वरः** - अच्। छा. अनुज्ञाकरणम् (स्वरन् अनुज्ञां कुर्वन्)। छा. ओङ्कारः। छा. कण्ठध्वनिः। बृ. गन्ता। 'स्वृ शब्दोपतापयोः' इत्यस्मात् धातूनां अनेकार्थत्वात् कर्तर्यचि रूपम् छा.। निषादादिः। सुन्दर. स्वर इति

स्तोभः । छा. [प्रणवाख्यो मन्त्रः । स्वरप्रधानत्वात् । सच्च.]
**स्वरम्** - ओङ्कारम् । भा.
[**स्वरसादः** - स्वरस्य ह्रासः । ई.]
**स्वराट्**-अकर्मवश्यः कर्मवश्यानां प्रेरकश्च । भा. अकर्मवश्यः । श्री. अकर्मवश्यः (जीवः) । श. केवलात्मप्राप्तः सोऽक्षरः परमस्स्वराट् इति विशेषणात् । वि. स्वतन्त्रः, अकर्मवश्यो वा । स्तो. स्वयमेव राजत इति । तै. स्वतन्त्रः,
स्वेनैव राजते प्रकाशते सर्वं विषयीकरोतीति । भा. स्वतन्त्रः, अकर्मवश्यः । श्रु. अकर्मवश्यः । तै. स्वयमेव राजा; अकर्मवश्यः । विधिनिषेधकिङ्करो न भवतीति यावत् । छा.
**स्वराह्वयः** - शनैश्चरस्य पोषकः कश्चित् सूर्यरश्मिविशेषः । वि.
**स्वरूपम्**-इतरव्यावृत्तस्वासाधारणरूपम् । न्यासि. तत्त्वम् । वि. धर्मी । श्रु. मिथोव्यावर्तकरूपम् । (विवेकादीनां स्वरूपञ्चाह ....) त. रूपम् । विग्रहः । स्वस्य रूपम् । वि.स्वासाधारणधर्मः । भाव.स्वासाधारणधर्मविशिष्टम् । रत्न. स्वं रूपं असाधारणधर्मः । निरूपकधर्म इत्यर्थः । श्रु. स्वासाधारणधर्मः देहादिः । नि. स्वासाधारणं शरीरम् । स्वाभाविकं रूपम् । श्रु.
**स्वरूपतः** - असाधारणाकारेण । श्रु.
**स्वरूपकृततारतम्यम्** - परस्परासमानाधिकरणवैजात्यवत्त्वम् । वा.
**स्वरूपगुणाः** - स्वरूपप्रतीत्यनुबन्धि गुणाः । श्रु.
**स्वरूपनियमः** - सक्चन्दनादिषु अस्येदमेव भोग्यं नान्यदिति नियमः । श्रु.
[**स्वरूपनिरूपकधर्माः** - (भगवतः) सत्यत्व, ज्ञानत्व, अनन्तत्व, आनन्दत्व, अमलत्वानि । धर्मिस्वरूपप्रतिपत्त्यर्थाः धर्माः, यथा पृथिवीत्वघटत्वादयः । र.]
**स्वरूपभागासिद्धः** - यथा घटव्यतिरिक्तं सर्वमनित्यं कार्यत्वाद् घटवदिति । न्याप.
**स्वरूपाज्ञानम्** - कर्मणा तिरोधानात् स्वरूपगोचरज्ञानप्रसराभावः । त.
**स्वरूपादिसमर्पणम्** - स्वरूप-भर-फल-समर्पणम् । श्रीत.
[**स्वरूपान्तर्गतम्** - स्वरूपानुबन्धि । ई.]
**स्वरूपानुबन्धिनः** - निरुपाधिकाः । ता.
**स्वरूपाविर्भावः** - धर्मभूतज्ञानविकासः । श.
**स्वरूपासिद्धः** - हेत्वाभासविशेषः । न्याप.
**स्वर्गः** - परमं पदम् । 'तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषा वृतः', इति वचनात् । रा. मोक्षः । क. श्रु. निरतिशयसुखम् । रा.
**स्वर्गपराः** - स्वर्गपरायणाः । गी. स्वर्गः परः परायणं परमप्राप्यं येषां ते स्वर्गपराः; मोक्षविमुखा इति भावः । ता.
**स्वर्गम्** - निरतिशयसुखरूपतया स्वर्गाख्यं अप्राकृतं मुक्तिस्थानं भगवल्लोकः । बृ.

**स्वर्गलोकः** - भगवल्लोकः । कौ.

**स्वर्गलोकाः** - (बहुव्रीहिः) निरतिशयसुखरूपपरमव्योमस्थाः । श्रु.

**स्वर्गसंस्तावम्** - स्वर्गत्वेन स्तूयमानम् । छा.

**स्वर्गयाय** - स्वर्गशब्दितभगवल्लोकसाधनाय । श्वे.

**स्वर्गो (लोकः)** - भगवल्लोकः । छा. बृ.

**स्वर्ग्यम्** - मोक्षप्रयोजनम् । क.

**स्वर्भानुः** - राहुः । रा.

**स्ववचनविहतिः** - प्रतिज्ञाहानिः । अधिं.

**स्ववशः** - तेषु (नष्टशिष्टेष्वसुरेषु) सुप्तेषु स्वकीयैस्सह स्वैरविहारवान् । सह.

**स्वविलक्षणात्मने** - स्वेन स्वासाधारणास्वभावेन सर्वस्माद्विलक्षण आत्मा स्वरूपं यस्य तस्मै । भा.

**स्ववेक्षितम्** - सुष्ठु निरूपितम् । रा.

**स्वव्याघातः** - या परपक्षप्रतिक्षेपार्था युक्तिः प्रसज्यते तस्याः प्रयोजकाकारेण तत्सजातीयस्वविषययुक्त्यन्तरक्रोडीकारः स्वव्याघातः । न्याप.

**स्वशक्त्या** - स्वांशभूतमायया । भा.

**स्वसंविदे** - स्वासाधारणापरिच्छिन्न निरूपाधिकनित्या संकुचित धर्मभूत ज्ञानाश्रयाय । भा.

**स्वसंस्थया** - स्वनिष्ठया; निरतिशयानन्दस्वात्मानुभवनिष्ठया । भा.

**स्वसत्ताकालभाव्याप्तिः** - स्वसत्ताकाले प्रकाशनियमः । रत्न.

**स्वस्ति** - आशीः । क्षेमकरम् । 'स्वस्त्याशीः क्षेमपुण्यादौ' इति कोशः । अधि. शुभम् । रा. स्वयमेव महन्मङ्गलम् । सह.

**स्वस्तिकः** - जय जयेति मङ्गलं प्रयुञ्जानः । रा.

**स्वस्तिकम्** - फणिस्थरेखाचिह्नविशेषः । वि. फणोपरि दृश्यमानं अर्धचन्द्रकम् । रा. [व्यत्यस्तविन्यासः । या.]

**स्वस्तिकाख्यगृहम्** - प्राग्द्वार रहितं गृहम् । 'प्राग्द्वाररहिता स्वस्तिकाख्या पुत्रधनप्रदा' इति वराहमिहिरसंहिता । रा.

**स्वस्तिकृत्** - स्वस्ति स्वभोगाशिषं करोतीति । सह.

**स्वस्तिदः** - महन्मङ्गलं ददातीति । सह.

**स्वस्तिदक्षिणः** - स्वस्ति स्वपरिचरणानुगुणदिव्यशरीरशक्त्यादिदक्षिणा स्वात्मदानदीर्घसत्रे ऋत्विग्भ्यो देयांशः अस्येति । सह.

**स्वस्तिभुक्** - स्वस्ति मङ्गलं भुनक्ति सदा पालयतीति । सह.

**स्वस्तिमन्तम्** - जीवन्तम् । भा.

**स्वस्त्ययनम्** - मङ्गलाशीर्वचनम् । शोभनप्राप्तिप्रार्थनम् । रा. क्षेमप्रापणकर्म । वि.

**स्वस्थः** - प्रकृतिस्थः । ता. स्वे महिम्नि स्थितः । भा. स्वस्मिन् स्थितः स्वभावे स्थितः यथावस्थितस्वात्मानुभवपरः । श्रु.

**स्वस्वभावः** - स्वस्याकर्मवश्यावतारत्वादिस्वभावः । गी.

**स्वा:** - ज्ञातय: (बन्धव:) । कौ.

**स्वागतम्** - कुशलम् । 'स्वागतं कुशलम्' इति शब्दार्णव: । कुशलप्रश्न: । या.

[**स्वागतसूक्ति:** - कुशलप्रश्न: । या.]

**स्वाङ्ग:** - स्वासाधारणच्छत्रचामरादि सर्वाधिराज्यपरिबर्हणजात: । सह.

**स्वाच्छन्द्यम्** - (आगमस्य) साधक-बाधकप्रमाणाभावे विशिष्टार्थबोधन-सामर्थ्यम् । सर्वा. स्वतन्त्रत्वम् । नि.

**स्वातन्त्र्यम्** - अकर्मवश्यस्याप्रतिहते-च्छत्वम् । सर्वा. (कर्तृत्वे) अपरप्रेर्यत्वम् । श्रु. रुच्या बुद्धिपूर्वप्रवृत्तिशक्ति: ।रत्न. शक्तिविशेष: स्वेच्छाधीनप्रवृत्तिर्वा । सि. स्वेच्छानु गुण प्रवृत्ति सामर्थ्ये सत्यनिवार्यत्वम् । श्रु.

[**स्वातन्त्र्यनिवृत्ति:** - (चेतनस्य) निरपेक्षकर्तृत्वानर्हता । र.]

**स्वातीपथ:**-छायापथ: । स्वातीवीथिर्वा । रा.

**स्वात्मतृप्त:** - परमानन्दरूपस्वात्मानु-भवनित्यतृप्त: । अधि.

**स्वात्मा** - स्वरूपम् । गद्य.

**स्वादु** - परिपक्वम् । मु. भुज्यमानं आसक्तिप्रदम् । च. रसवत् । रा.

**स्वाधिष्ठानम्** - लिङ्गम् (मातृकाध्यान-श्लोके) । न्यासिटी.

**स्वाधीनत्वम्** - स्वरूपाधीनत्वमिच्छा-धीनत्वं च । गद्य.

**स्वाधीनपतिका**-नित्यं प्रियोपलालिता । श्रीत.

**स्वाध्याय:** - जप: । रा. यथोचितमन्त्र-जप: । भा. वेद: । 'स्वाध्यायो वेदतपसो' रिति वैजयन्ती । वेदाध्ययनम् । रा. तै. सविभूतेर्भगवत: तदाराधनस्य च प्रतिपादक: कृत्स्नो वेद इत्यनुसन्धाय वेदाभ्यासनिष्ठा । गी. सशिरस्कवेद: । अधि. [श्रुतिस्मृतीतिहासपुराणमन्त्र-जपसत्सं वादाध्यात्म सास्त्रश्रपण-प्रवचनाद्यात्मा, अनन्तरभावियोवियो गोपकारकज्ञानसन्धुक्षणप्रयोजनक: । "श्रवणं चिन्तनं व्याख्या तप: पाठसवन्विता । स्वाध्यायसंज्ञं तद्विद्धि कालाशं . . . ॥" पाञ्च. स्वकीय-शाखाध्ययनम् । ई.]

**स्वाप:** - स्वप्नसुषुप्तिसाधारणी निद्रा । सुबा.

**स्वापन** - नष्टशिष्टानपि चारुचतुरस्मित-मधुरकटाक्षभ्रूविलासै: स्वापयति परवशयतीति । "ञिष्वप् शये" षस्स: । सह.

**स्वाप्नम्** - स्वप्नसिद्धम् । सर्वा.

**स्वाप्यय:** - सुषुप्ति: । श्री.

**स्वा प्रकृति:** - यथावस्थितशुद्धस्वरूपम् । स्वकीयशुद्धभाव: । रा.

**स्वाभावसादेश्यम्** - स्वाभावाधिकरण-वृत्तित्वम् । रत्न.

**स्वाभाविकम्** - अकर्मोपाधिकम्। भाव. यावत्स्वरूपभावि। च.

**स्वाभाविकत्वम्** - अनन्याधीनत्वम्। स्तो. ता.

**स्वाभाव्यः** - स्वैः स्वामित्वेन आभिमुख्येन अवश्यंभावनीयः। स्वैः आभाव्यत इति। सुतरां आभाव्यत इति वा। सह.

**स्वाभाव्यम्** - स्वस्य भाव इव भावः येषां ते स्वभावाः सदृशाः तद्भावः स्वाभाव्यम् सादृश्यम्। भाव.

**स्वामित्वम्** - चेतनाचेतनसर्ववस्तुनिष्ठशेषतानिरूपितशेषित्वम्। अच्यु. दासत्वप्रतिसम्बन्धित्वम्। श्रीसू. ममेदमिति प्रतिपत्त्यर्हत्वे सति शेषित्वम्। श्रीसू. स्वकीयत्वाभिमानः। या. [शेषत्वेन अभिमतं प्रति परमप्रयोजनभूतस्वपुरूषार्थरूपातिशयभाक्त्वम्। र.]

**स्वायम्भुवः** - आत्मसंभूतत्वात् तथा संज्ञा। वि. नारदः। भा.

**स्वाराज्यम्** - अकर्मवश्यत्वम्। भा. रघु. तै. आधिपत्यम्। वि. अप्रतिहतः सङ्कल्पः। वा. ऐन्द्रपदं कैवल्यं वा। भा. यौवराज्यम्। रा. स्वराट्त्वम्, अकर्मवश्यत्वम्। स्वाधीनत्वम्; सत्यसंकल्पत्वम्। कौ. स्वर्गलोकः। छा. स्वाधीनत्वम्। श्रु. [इन्द्रता। स्वः स्वर्गे राजत इति स्वाराडिन्द्रः। या.]

**स्वार्थः** - प्राप्यः। भा.

**स्वाश्रयम्** - स्वाधिकरणम्। सुन्दर.

**स्वास्थ्यम्** - धैर्यम्। रा. मनसः क्षोभाभावः। वि.

**स्वास्यः** - आस्या आसनम्। सा शोभना अस्येति। मुक्तस्य हि आविर्भूतस्वाभाविकैश्वर्यरूपमासनं दुष्टम्; पूर्वमविद्यातिरोहितत्वात्। नैवं भगवतः। सर्वदा आविर्भावात्। सह.

**स्वाहाकरः** - स्वाहेतिदर्विहोमसाधनमन्त्रः। रा.

**स्विष्टम्** - सुष्ठु पूजितम्। भा.

**स्वेच्छामयः** - स्वेच्छात आगत "तत आगत" इत्यधिकारे मयश्चेति मयट्। भा.

**स्वेदते** - प्रस्विद्यते। छा.

**स्वेन रूपेण** - आत्मना रूपेण। 'स्वशब्दो नात्मीयवचनः। अपि त्वात्मवचन एव'। छा.

**स्वे महिम्नि प्रतिष्ठितः** - अनन्याधारः। भाव.

**स्वैरचारिणी** - स्वतन्त्रा। रा.

**स्वैरिण्यः** - कामिन्यो द्र.। छा.

## ह

**ह** - प्रथमषोडशवर्णयोर्विपर्यस्तसंहितायां हत्वम्। न्यासि.

**हः** - विष्णोर्वाचकतया प्रमाणभूते क्वचित् तन्त्रे परिगृहीतः। न्यासि.

**हंसः** - कृतयुगे ब्राह्मणवर्णसंज्ञा। ज्ञानाभ्यासनिष्ठः। भा. देवताविष्टः हंसः। छा. नानादेहसञ्चरणजङ्घालः। पक्षिसंघे राजहंसवत् विराजमानः। श्वे. मनोहरं हन्ति

गच्छति स्मयते इति। सह. सूर्यः। क. तै. हन्ति गच्छति, अनेकजन्मसंसरणशील इति हंसो जीवः। श्वे.

**हंसम्** - हंसवदाश्चर्यभूतम्, दीप्यमानत्वाद्वा विवेचकत्वाद्वा हंससदृशम्। म.

**हंसाः** - अन्नदानादिगुणैस्तोषिता भूत्वा हंसरूपाः सन्तो राज्ञो दर्शनगोचरे आगताः केचन महात्मानः। छा.

**हंसाय** - शुद्धाय। भा.

**हतचेताः** - मूढः। रा.

[**हतम्** - (गणितशास्त्रे) गुणितम्। या.]

**हत्या** - हननम्। 'हनस्त च' इति हन्तेर्भावे क्यप् तादेशश्च। या.

**हनु(नू)मान्** - सुग्रीवसचिवो वायुजो वानरवीरः। रा.

**हन्त** - उपालम्भसूचको हन्तशब्दः। वे.

**हन्तकारम्** - 'मनुष्येभ्यो हन्ते'ति मन्त्रेण श्रोत्रियाय देयमन्नम्। वि.

**हन्तुम्** - हन्तारं; सेतुशब्दवत्। श्रु.

**हरः**-जीवः। स्वभोग्यतया प्रधानं हरतीति। ई. जीवः। भाव. प्रलये संहर्ता। रा. भोग्यमात्मनो भोगार्थं हरतीति हरो जीवः। श्वे. यः प्रधानं आत्मनो भोग्यत्वेन हरति सः। गी.

**हरिः** - आश्रितबन्धहरः। भा. आश्रितानां दुरितं हरतीति। भाव. भक्तदुःखापहर्ता; हरतीति। क्रतौ इडोपहूतं भागं हरतीति। हरितवर्ण इति वा। सह. स्वाश्रितदुरितहरः। अभी. [''ब्रह्माणमिन्द्रं रुद्रञ्च यमं वरुणमेव च। प्रसह्य हरते यस्मात् तस्माद्धरितीर्यते॥'' पापं तद्विपाकरूपं सर्वमनिष्टं हरतीति। पाञ्च. (अश्वः) ''त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु। हरिस्स वर्णतोऽऽश्व-स्स्यात् पीतकौशेयसुप्रभः॥ या.]

**हरिकेशः** - सूर्यस्य रश्मिविशेषः यो नक्षत्राणि पुष्णाति। वि.

**हरिणम्** - हरिमित्यर्थः। हरिशब्दस्य नान्तत्वं छान्दसम्। प्र.

**हरिणी** - सर्वपापहरणशीला। ताच्छील्ये णिनिः। वृद्ध्यभावः छान्दसः। श्रीसू. कृष्णमृगी। सा मेध्या सर्वयागार्हा सर्वपापहराऽपि च। भगवत्समाश्रयणयोग्य-तापादिनीति यावत्। श्रीसू.

[**हरिदश्वः** - सूर्यः। या.]

**हरिद्वाससः** - नग्नाटाः। सर्वा.

**हरिमेधाः** - दुरितहरमेधाविषयः। भा. हरिः। पापहारी। स्वर्णवत् शुद्धा मेधा यस्य सः। वि.

**हरिराजः** - वानरराजः। रा.

**हरिलोचनः** - कपिलेक्षणः। रा.

[**हरिबाह्याः** - भगवद्वेषशालिनः कलि-बलविलसिततमः प्रायाः। सच्च.]

**हर्म्यम्** - धनिकस्य गृहम्। रा.

**हर्षः** - प्रीतिजन्यो रोमाञ्चादिः शरीर-विकारः। रा. विप्रियलाभप्रसक्तः सन्तोषः। क.

**हर्षनादः** - सिंहनादः। रा.

**हर्षिता** - उत्तरोत्तरहर्षवती। रा.

**हलम्** - 'हलं नामेह वैरूप्यम्' । रा.

**हलहलाशब्दः** - भयादिनिमित्तो ध्वनिः। रा.

**हलायुधः** - उक्तभूतसमृद्धिकृषीवलहल-परिकरः । सह.

**हल्लकम्** - रक्तसंध्यकम्। 'शेङ्गलुनीर्' इति द्राविड्याम् । पा.

**हविः** - कंसाद् गुप्तये नन्दयशोदाभ्यां देवकीवसुदेवसकाशात् आदीयतेति । हु आदाने च । सह. देवताप्रीत्यर्थं प्रदेयं पत्रपुष्पादि चरुपुरोडाशादि वा। आत्मत्मीयं वा। श्रीसू. समयं ज्ञात्वा तेभ्यो (भक्तेभ्यो) दीयते, तैरादीयते च इति हविः । हरिः भक्तविघ्नमपहरतीति। 'हविर्हरिः' एकं वा नाम । क्रतुभागहरतया, हविः उपहृतं हरतीति हविर्हरिः । सह.

**हविर्धानी** - कामधेनुः । भा.

**हविर्धाम** - हविष आश्रयः (सुरभिः) । वि.

**हविर्यज्ञसंस्थाः** - (सप्त) अग्न्याधेयम्, अग्निहोत्रं, दर्शपूर्णमासौ, आग्रहायणी, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणिः । वि.

**हविष्मन्तः** - आज्यादिहविः - प्रदानप्रवृत्ताः । क.

**हव्यम्**- देवार्थं द्रव्यम् । रा. देवार्थमन्नम् । या.

**हस्तपुटः** - अञ्जलिः । या.

**हस्तादानः** - हस्तपतितभोजी । रा.

**हस्तिघ्नः** - हस्तिनं हन्तुं शक्तः । भाव.

**हस्तिनादप्रबोधिनी**- गजेन्द्राद्याश्रितार्तनादे परमकृपाम्भोधेः सर्वेश्वरादपि प्रथम-प्रबोधनशीला। आर्तसंरक्षणे पुरुषोत्तमादपि त्वरमाणा । श्रीसू. पद्मवनवासित्वात् पद्मप्रियाणां गजानां नादैः प्रबुध्यमाना श्रीः। अथवा स्वासनपद्मस्थगुग्गुलुकुरण्टकदम-कशलिलानां तद्भक्तानां निनादैरहरहः प्रबुध्यमाना । तथा मंकणसंहितायाम् 'आग्नेयादिदलस्थास्ते गुग्गुलुश्च कुरण्टकः। दमकश्शलिलश्चेति ख्याताः पुष्णन्तु मे श्रियम्'' । इति ।

**हस्तिपृष्ठकम्** - ग्रामविशेषः । रा.

**हाटकम्** - हिरण्यम् । रा.

**हाठिकः** - हठात्सिद्धः । आपातसिद्ध इति यावत् । अध्यात्मादित्वात् ठञ् । सर्वा (आ).

**हानिः** - इष्टहानिः (''सा हानिस्तन्महत्'' इत्यत्र) । श्रु.

**हारिद्रुमतः** - हरिद्रुमत्पुत्रः । छा.

**हारिभार्याः** - हारिण्यः हृद्या भार्याः येषां ते । वि.

**हारीतः** - किरातजातिविशेषः । रा.

**हारीतकम्** - पक्वलेह्यादिभेदः । वि.

**हारेत्वा** - हारसहितः रथः । इत्वा रथः । छा.

**हार्दम्** - हृदि निहितम् । वे.

**हि** - हिः अवधारणार्थः । च. हीति प्रमाणप्रसिद्धिसूचनम् । ता. हेतौ । श्रु.

**हिंसकः** - सप्राणेषु उपमर्दकारी। श्री.

**हिंसा** - अनर्थप्रापकव्यापारः।'न तावदिह दुःखजननमात्रं हिंसा; रक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वपि प्रसङ्गात्। नापि प्राणवियोजनमात्रम्; अतद्रूपेषु सर्वस्वहरणनरकपीडादिषु हिंसाशब्दप्रयोगदर्शनात्। न चायमुपचारः। नियामकाभावात्, विपरितवर्तस्यापि दुर्वारत्वात्। अतोऽनर्थपर्यवसितस्तात्त्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वमिति। ततश्च 'अन्यत्र तीर्थेभ्य' इत्येतत् पश्चादेर्भाविपुरुषार्थविशेषानभिज्ञमपारदृष्ट्योक्तम्। तस्मिन्नपि वाक्ये हिंसात्वं नास्तीत्येव तात्पर्यम्। उक्तं च मनुना 'तस्माद्यज्ञे वधोऽवधः' इति। तत्रापि वध इति पामरदृष्ट्याऽनुवादः। यद्यपि क्रत्वनुप्रविष्टानां सोमोच्छिष्टभक्षणप्रभृतीनां हिंसालक्षणवत्तल्लक्षणान्तरेण व्यवच्छेदशक्यः; तथापि तेषां प्रत्यवायानाधायकवचनबलादेव तथात्वमङ्गीकुर्मः। न पुनः क्रत्वर्थतया विधानमात्रेण। नन्वेवमुत्सर्गापवादन्यायस्य कीदृशो विषयः? तादृश एव, यत्र निरवकाशविशेषवाक्य विरोधादेव सावकाशसामान्यशब्दसङ्कोच इति निस्तरङ्गमेतत्। ता. अनर्थैकफलपीडारूपो व्यापारः। ता. अनर्थोदर्कव्यापारः। श्रु. द्रोहः। भा. बलवद्धिताजनकत्वे सति वेदनाजनकव्यापारः। छा. प्राणवियोजनफलो व्यापारः। सर्वा. प्राणिपीडा। गी.

**हिंसात्वम्** - मरणोद्देश्यकमरणानुकूलव्यापारत्वम्। भाव.

**हिक्का** - विरम्य विरम्य कण्ठात् पवनोद्गमः। रा.

**हितम्** - अवतीर्णम्। तै. आमुष्मिकम्। उत्तरकालफलवत्। उदर्कसुखकरम्। रा. उपायोपेयौ। वे. यच्च श्रुतिविहितं तदखिलमपि यथाऽधिकारं हितम्। न्याप. सुखकरम्। रा.

**हितकाम्या** - हितप्रापणेच्छा। रा.

**हिततमम्** - मोक्षसाधनम्। कौ.

**हितत्वम्** - अपेक्षितार्थसाधकत्वम्। श्रीसू. 'सौकर्यातिशयलक्षणमिह हितत्वम्, न तु मुख्यत्वादिरूपम्'। ता. (१२-१२).

**हिताः** - आत्मनो हिताऽवहत्वात् 'हिता' इति प्रसिद्धाः हृदयस्य नाड्यः। कौ. एतन्नामका नाड्यः, हृदयान्तः प्रतिष्ठिताः केशसहस्रांशातिसूक्ष्माः। बृ. नाड्यः द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठमानाः। सुबा.

**हिनस्ति** - भवजलधिमध्ये प्रक्षिपति। गी.

**हि नाम** - हिनामभ्यां प्रसिद्धिः प्रतिवाद्यभ्युपगमश्च सूच्यते। अपिचेतिवदनेकाव्ययतुल्यरूप एकशब्दो वा। श्रु.

**हिमान्तः** - वसन्तः। रा.

**हिरण्मयः**-प्रकाशमयः। बृ. हितरमणीयः। वेकौ. रमणीयः। 'दृश्यते त्वग्र्यया बुद्ध्या

सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यैकार्थ्यात्। रूपसामान्याच्चन्द्रमुखवदिति वाक्यकारः। ततश्च हिरण्यशब्दस्य न मुख्यार्थो ग्राह्य इति वाक्यकाराभिप्रायः। ततश्च हिरण्मयत्वं उज्ज्वलत्वमित्यर्थः। ततश्च नीलतोयदा-भस्यापि हिरण्मयत्वे नानुपपत्तिः। यद्वा 'कच्चिन्न तद्धेमसमानवर्णं तस्याननमि'ति श्रीरामायणप्रयोगात् 'पश्यते रुक्मवर्णमि'ति श्रुतेश्च नीलतोयदाभस्यापि रुक्मवर्णत्वं-सम्भवति। तत्र हेतुश्च सम्प्रदायगम्यः। रुक्मवर्णः। छा. श्यामवर्णप्रचुरः। 'मायूर-कण्ठच्छविशुद्धहेम' इति शिल्पशास्त्रानु-सारात् श्यामत्वसिद्धिः। ता.

**हिरण्मयम्** - अतीव रमणीयम्। वि.

**हिरण्मयी** - हिरण्यादिसर्वधनप्रचुरा (लक्ष्मीः)। श्रीसू.

**हिरण्यम्** - परमं धाम। निर्दोषनिरघनित्य-परमसत्त्वात्मकद्रव्यविशेषत्वेन हिरण्यसा-म्यात् हितं, रमणीयमिति वा। सह. ब्रह्माण्डस्य नाम। वेकौ. रजतम्। ''रजतँ हिरण्य''मिति श्रुतेः। रा. रजतम्। 'कृताकृतं हेमरूप्यं हिरण्यमभिधीयते' इति वचनात्। रा.

**हिरण्यकेशः** - रमणीयकेशः। छा.

**हिरण्यगर्भः** - भगवान्। 'हिरण्यगर्भः शत्रुघ्न' इति भगवन्नामसहस्रे पाठः। श्रु. ध्यातृहृदयस्थः। सह. नारायणः। हितरमणीयं हिरण्यमिति निरुक्तात् हिरण्यं परमपदम्, तस्य गर्भभूत इति, हिरण्यं कल्याणगुणाः तत् गर्भे यस्येति वा। ता. (टि. ६४० पु.). परमधाम्नःनित्यनिवासात् गर्भभूतः। सह. विष्णुः; हिरण्यगर्भो लोकेश इत्युक्तेः। वेकौ. हिरण्यं ब्रह्माण्डं गर्भे यस्य सः। ''हिरण्मयस्य गर्भोऽभूत् हिरण्यस्यापि गर्भजः। तस्माद्धिरण्यगर्भं तं पुराणज्ञाः प्रचक्षते ॥'' वि. हिरण्यं हिरण्मयाण्डं तस्य गर्भः। ब्रह्माण्डोदर-वर्तीत्यर्थः। रा. हिरण्यं, हितरमणीयं गर्भमन्तःकरणं यस्य सः। रा. हिरण्यस्य हिरण्मयस्य परमव्योम्नो गर्भभूतः तत्र स्थितः परमपदनिलयः। न्यासिटी.

**हिरण्यज्योतिः** - हिरण्यसमानं ज्योतिर्यस्य स इति। इदमात्मविशेषणम्। अयमात्मा हिरण्यगर्भः। सुबा.

**हिरण्यदंष्ट्रः** - कमनीयदंष्ट्रायुक्तः, हिरण्य-विदारकदंष्ट्रायुक्त इति वा। छा.

**हिरण्यनाभः** - हिरण्यं स्वसङ्कल्प-जनिताष्टदलपद्महिरण्मयकर्णिकात्वापन्न-मेरुरूपं रुक्मम् नाभौ अस्य। सह.

**हिरण्यनाभम्** - हिरण्यश्रृङ्गम्। नाभिशब्दो ह्यध्यक्षवाची। श्रृङ्गं च पर्वतस्याध्यक्षमेव। ''नाभिरध्यक्षकस्तूर्योः'' इति दर्पणः। रा.

**हिरण्यपतये** - धनानां पतये। तै.

**हिरण्यबाहवे** - रमणीयबाहवे। तै.

**हिरण्यबाहुः** - हिरण्यालङ्कृतबाहुः (हिरण्यपाणिः प्रतिगृह्णात्वित्यत्र भट्ट-भास्कर व्याख्यानात्। तै.

**हिरण्यरेताः** - हिरण्यं रेतः अण्डोत्पादक-

द्रव्यं यस्य सः । हिरण्मयब्रह्माण्डकर्तेत्यर्थः । रा.

**हिरण्यवर्णा** - हितरमणीयवर्ण । हितत्वं नाम अपेक्षितार्थसाधकत्वम् । रमणीयत्वं प्रीत्यनुरूपत्वम् । सर्वहितत्वरमणीयत्वाभ्यां देव्या दिव्यरूपमेव परमप्राप्यं परमप्रापकमिति च । श्रीसू.

**हिरण्यश्रृङ्गः** - रमणीयायुधः । तै.

**हिरण्यश्मश्रुः** - रमणीयश्मश्रुः । छा.

[**हीनः**:पुण्ड्रसंस्कारहीनः । स्वसूत्रत्यागी । र.]

**हुतम्** - अग्निहोत्रादि । औपासनम् । बृ. वैश्वदेवम् । भा. होमनिमित्तं धर्मजातम् । होमादिकं कर्म । बृ.

**हुतभुग्विभुः** - अमृतपरिणामं हुतं भुञ्जानः सोमः यस्मिन्; शुक्लपक्षद्वारा विभुः पूर्णो भवति सः । सह.

**हृच्छयः** - कामः । भा.

**हृत्** - भक्तिः । तै. श्रु. वक्षः । चित्तम् । सर्वा. हृत्स्थः । गी.

**हृत्पतिः** - नारायणः; हृदयकमलमध्यावस्थानेन सर्वाणि पातीति । भा.

**हृत्पद्मम्** - हृदयमध्यगतलोहितमांस पिण्डस्थितं पद्मकोशप्रतीकाशं वर्णेन कुमुदसन्निभं (चन्द्रकान्तसमानत्वं हि योगशास्त्रेषूच्यते) प्राणप्रतिष्ठाभूतदशच्छिद्रयुक्तम् । सुबा.

**हृदयः** - जीवः । हृच्छब्दोक्तं स्थानमयतीति हृदयः । तात्स्थ्याद्व असौ हृदयशब्देन लक्ष्यते । (भिद्यते हृदयग्रन्थिः....) । ता. जीवः (हृत्स्थानमयत इति) । मु.

**हृदयम्** - आत्मनः स्थित्यनुगुणः प्रदेशविशेषः । श्रु. अन्तःकरणम् । मु. अन्तरङ्गम् । भा. पद्मकोशप्रतीकाशं मांसम् । रा. बुद्धिः । बृ. वक्षःस्थलोपलक्षितप्रदेशः । सङ्कल्पः । सुबा. हृदयशरीरकम् । हृदयलक्षणपादकमित्यर्थः । छा. [हृद्ययमिति जीवः । ''तातोऽनुम्प्ये पितरि'' इति रत्नमाला । या.]

**हृदयग्रन्थिः** - हृदयस्य मनसः ग्रन्थयः रागादयः । यद्वा मञ्चाः क्रोशन्तीतिवत् हृदयशब्दः तत्स्थानजीवपरः । हृत्स्थानमयतीति व्युपत्तेर्वा । तस्य ग्रन्थिः प्रकृतिसम्बन्धः । हृदयशब्दोपलक्षितं शरीरं वा ग्रन्थिः । श्रु.

**हृदयज्ञः** - मनोज्ञः । हृदयप्रिय इत्यर्थः । छा.

**हृदयबन्धनम्** - प्राणाः । 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतेः । रा.

**हृदयहारिणी** - मधुरा । रा.

**हृदा** - भक्त्या । तै. श्वे. भाव. सङ्कल्पेन । भा.

**हृदिकृतम्** - साक्षात्कृतं । भा.

**हृदि सर्वस्य विष्ठितम्** - मनुष्यादेः हृदि विशेषेण सन्निहितम् । गी. विशेषेण भोक्तृत्वादिरूपेण स्वरूपेण वा अवस्थितम् । ता.

**हृदिस्थः** - सर्वान्तर्यामी । रा.

**हृदि स्थितः** - भगवान्; ध्येयतया हृदये स्थितत्वात्। रा.

**हृदे** - हृद्याय। तै.

**हृद्याः** - रमणीयवेषाः; सन्दर्शनमात्रेणापि प्रीतिजनकाः। ता.

**हृल्लेखा** - ह्रीमिति मन्त्रस्यैवं मन्त्रशास्त्रे संज्ञा। रत्न.

**हृषीकेशः** - इन्द्रियाणां नियन्ता। वेकौ. हृषीकाणां इन्द्रियाणां ईशः नियामकः। सह. परावरनिखिलजनान्तरबाह्यकरणानां सर्वप्रकारनियमनेऽवस्थितः। गी. यद्वा सृष्ट्यादिकं वीर्यादिकं तदुपलक्षितं ज्ञानादिकमपि हृषीकेशशब्दार्थ एव। यथोक्तमहिर्बुध्न्यसंहितायाम् - "क्रीडया हृष्यति व्यक्तमीशः सन् सृष्टिरूपया। हृषीकेशत्वमीशत्वं देवत्वं चास्य तत् स्फुटम्॥ अविकारितया जुष्टो हृषीको वीर्यरूपया। ईशः स्वातन्त्र्ययोगेन नित्यं सृष्ट्यादिकर्मणि। ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते॥ इति। ता. वक्रकेशः। वेकौ. हृषीकाणामिन्द्रियाणां नियन्ता; सर्वेन्द्रियाकर्षकदिव्यविग्रह इत्यर्थः। रा. हृष्यन्ति हर्षयन्तीति वा हृषीकाणि, इन्द्रियाणि तेषामीशः। ता.

**हेतुः** - तद्धेतुः (वाञ्छितार्थहेतुः)। "वाञ्छितार्थनिदानत्वाद्धेतुरित्यभिधीयते"। सह. वर्धकः। वि. लिङ्गवचनम्। रा. साधकत्वप्रकाशकविभक्तिपदान्तरसमभिव्याहारयुक्तं लिङ्गस्य वचनम्। न्याप.

**हेतुत्वम्** - ज्ञापकत्वम्। रत्न. प्रयोजनत्वम्। साधनत्वम्। श्रु.

**हेतुधर्मः** - हेतुरूपो धर्मः। सर्वा (आ).

**हेतुविशेषः** - सर्वाननुवृत्तो हेतुः। हेतुष्वन्यतमः। न्यासि.

**हेत्वन्तरम्** - पूर्वमविशेषितस्य हेतोः पश्चाद्विशेषणम्। च.

**हेत्वाभासाः** - हेत्वङ्गैकदेशविकलाः। न्याप.

**हेमशैलेन्द्रः** - सुमेरुः। रा.

**हेमाङ्गः** - हेम हाटकं दिव्यसत्त्वमयं अङ्गमस्येति। सह.

[**हेयप्रत्यनीकम्** - हेयसम्बन्धानर्हम्। र.]

**हेयप्रत्यनीकत्वम्** - चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्। श्री.

[**हेवाकः** - कौतूहलम्। र.]

**हेवाकघोषः** - स्वच्छन्दस्तुतिघोषः 'हेवाकः स्वाच्छन्द्यम्' इति चक्रवर्ती। या.

**है** - खेदे। वर.

**हैतुकः** - केवलतर्कनिष्ठः। भा. तर्काधीनजयवान्। दृष्टप्रमाणवादी। पा. "सन्देहकृत् हेतुभिर्यस्सत्कर्मसु स हैतुकः"। वि.

[**हैतुकाः** - हेतुभिर्जयन्तः। 'तेन दीव्यति खनति जयति जितं' इत्यादिना ठक् प्रत्ययः। या.]

**हैतुकी** - हेतुरेव (द्यौरस्यखिलहैतुकी)। वि.

**हैयङ्गवीनम्** - ह्योगोदोहोत्पन्नं नवनीतम्। गो.

**हैहयाः** - ध्रुवसन्धिनृपसुतस्य भरतपुत्रस्य असितस्य शत्रवः। रा.

**होता** - दाता। वेद्यां वर्तमान ऋत्विक्। अग्निः। तै.

**होतृषदनम्** - होतृकर्तृकोद्गीथ प्रणवैक्य-ज्ञानम्। छा.

**होमः** - देवतोद्देशेन त्यक्तस्य द्रव्यस्याग्नौ प्रक्षेपः। रा.देशविशेषप्रक्षेपविशिष्टस्त्यागः। भाव.

**होमीयम्** - होमसाधनम्। छा.

**होरा** - लग्नार्धम्। वि.

[**होलाकाधिकरणन्यायः**-होलाकोत्सवस्य प्रत्यक्षश्रुतिस्मृत्याद्यविरुद्धस्य देशाचाररूपस्य उपादेयताप्रतिपादकाधिकरणोक्तन्यायः। सच्च.]

**हौत्रम्** - होतुः कर्म। रा.

**ह्रस्वम्** - द्व्यणुकम्। श्री.

**ह्रस्वत्वम्** - एकदिगार्जवावच्छेदेन न्यूनभावः। न्यासि. दीर्घत्वावधित्वम्। रत्न. (मूलापेक्षयाऽग्रस्य) सामीप्यम्। न्यासिटी.

**ह्रादाः** - स्तनयित्नुशब्दाः। छा.

**ह्रादुनयः** - स्तनयित्नुशब्दाः। बृ. मेघगर्जितानि। छा.

**ह्रीः** - अकार्यात् लज्जा। वि. अनुचिते कर्मणि लज्जा। भा. देवस्त्रीविशेषः। रा. भूमिः। तै. लज्जा। बृ. विष्णुपत्नी। वेकौ. विष्णुपत्नी भूमिः। रा. [अकार्यकरणे व्रीला। र.]

**ह्लादिनी** - नदीविशेषः। रा.

॥ श्री श्रीनिवासपरब्रह्मणे नमः ॥



